# अवतारः

इद मनिवेदितविदितमेव विश्वेषामपि विदुषां यत् धर्मरक्षाबद्धदीक्षं तिरुमल तिरुपति देवस्थानसंस्थानं वेदप्रतिबोधितानां सकलभुवनक्षेमङ्कराणाम् अनादेः काला दनुवर्तमानानाम् आर्षधर्माणां, पुरातन संस्कृतीनाञ्च परिरक्षणाय अविश्रान्त मतन्द्रञ्च प्रयतमान मास्ते इति। इदं संस्थानं, विश्वश्रेयोनिदानस्य वैदिकधार्मिकनैतिकदव्यपथस्य देशे स्थापनाय, सनातनधर्मपुनरुद्धरणाय, भारतीयजनतास्वान्तेषु भक्तिभावजागरणाय, महामनीषिमहर्षिमहनीयसन्देशानां प्रचारेण ख्यापनाय, अनर्घाया भारतीयसंस्कृतेः सर्वजनमानसेषु दृढमूलस्थापनाय, सामान्य जनस्याऽपि हृदये भक्तिभावाविर्भावनाय च धर्मप्रचारपरिषत्, श्रीमद्भागवतशोधपूर्णपरिष्करणपरिषत्, श्रीमदन्नमाचार्यपरिषत्, दाससाहित्यपरिषत्, आळ्वार्दिव्यप्रबन्धपरिषत्, ग्रन्थप्रकाशन परिषत्, वेदस्तोत्रपाठाद्यमूल्यवाङ्मयपट्टिकारोपणपरिषत् (Recording project) इत्याद्या नानाविधाः संस्थाः भक्तजनहिताय स्थापयामासेति निखिलो जनो जानीते।

तथा प्रतिष्ठापितासु संस्थासु मध्ये अन्यतमैषा श्रीभागवत शोधपूर्णपरिष्करण परिषत्। कृष्णद्वैपायन श्रीवेदव्यास प्रणीतस्य श्रीमद्भागवतस्य वाङ्मये लोके च विशिष्टं स्थानं प्रदीयते प्राज्ञैः। तथा हृदयावर्जक मिदं महापुराणम्। विपुले संस्कृतवाङ्मयेऽस्य हि अनितरसाधारणी अर्हणीयता विद्यते। इदं खलु श्रीभागवतोपलब्धं वेदान्तविज्ञानं सर्वसम्मतमतरहस्यं, शास्त्रानुसारिणा पथा सकलसृष्टितत्त्वं, उच्चावचधर्मतत्त्वञ्च बोधयत् नानासम्प्रदायानुगाना मपि अनुकूल मर्थं वितरत् सर्वजनप्रियं सत् राजते। श्रीभागवततत्त्वं जानानो जनः तादृशं हृदयवैशाल्य मश्नुते यतः सर्वजनसौभ्रात्रं लभते। तस्य चेतसि द्वेषलेशोऽपि लब्धपदो न भवति। अत्र कथाः, उपाख्यानानि, धर्मतत्त्वानि च तथा उपदिश्यन्ते यद्वशात् मनुजः संस्कृतः उदारचरितश्च सम्पद्यते। अहो! भागवत मधीत्य बुद्धिमन्तो भागवता भवेयुरिति महापुराणस्य महिमा।

परन्तु अस्मद्दौर्भाग्यवशात् सद्व्याख्यानपरिष्कृतं निर्दुष्टं सुष्ठु मुद्रितं भागवतं अद्यत्वे दुर्लभं भवति। पारायणोपयुक्तः शुद्धो मूलग्रन्थोऽपि दुष्प्रापोऽजनिष्ट। इत्थम्भूते च व्यतिकरे उदारं तिरुमल तिरुपति देवस्थान संस्थानं लोकोपकारचिकीर्षया महाधनसाध्यं बहुश्रमनिर्वाह्यं च श्रीभागवत शोधपूर्ण परिष्करण प्रकाशनकृत्य मुपाददे। ततः पाठकैः बहुदिनप्रतीक्षितं, तच्छ्रद्धानुगुणं ग्रन्थप्रकाशं निर्वर्त्य तान् ग्रन्थप्रतीक्षकान् सन्तोषयितुमैच्छत्। इदं संस्थानं अद्य यावत् विविधागमसम्बद्धान्, भारतीय वेदान्तविषयकान्, समयाचार निरूपकान्, शिल्पशास्त्र निरूपकान् विशिष्टप्रबन्धान्, व्याख्यानग्रन्थान् च बहून् मुद्राप्य प्राचकाशत्। तानि च प्रकाशनानि तज्ज्ञै र्भक्तै र्बहुल माद्रियन्त।

श्रीभागवतप्रकाशने आवश्यकताविज्ञापन मनावश्यकम्, यत इदं महापुराणं सर्वमतसम्मतं विश्वजनसमादृतञ्च। इदं निस्समाभ्यधिकं भक्तिसम्प्रदायविज्ञानसर्वस्वमिति शिरसा श्लाघ्यते। अष्टादशसु पुराणेषु मध्ये अत्युत्कृष्टं स्थानं भजदिदं श्रीभागवतं भृशं प्रशस्यते। "यदिहाऽस्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्" इति, सकलागमविज्ञानसर्वस्वमिति, 'पञ्चमो वेद' इति बहुधा स्तूयमानं, 'महत्त्वा द्भारवत्त्वाच्च महाभारत' मिति च श्लाघ्यमानं लक्षश्लोकात्मकं महाभारताख्य मुत्तमेतिहासं विरचय्याऽपि चित्तशान्ति मलभमानं, सरस्वतीनदीतीरे विषीदन्तं वेदव्यासं वीक्ष्य दिव्यो नारदमहामुनिः 'श्रीकृष्णचरितवर्णनप्रवणं प्रबन्धं निर्माही'ति उपदिदेश। अतः चित्तप्रसत्तिसम्पत्तिप्रद मदः पुराण मित्यवसीयते। इदं सर्वै र्नानाविधवेदान्तसमयज्ञैरपि परमं प्रमाण मित्युररीक्रियते; वेदसम्मित मित्यभिमन्यते। निखिलवेदसागरं मथित्वोपलब्ध मास्वदनीयं नवनीत मित्यभिष्टूयते। लब्धवर्णैः, अतथाविधैरपि आदृत्याऽनुभूयमानं द्वयेषामपि प्राचीनवेदतत्त्वसार मक्लेशेनाधिजिगमिषूणां अभिन्नं ज्ञानविज्ञानसम्भिन्न मानन्द मादधातीति हन्त! श्रीभागवतस्य महिमातिशयः! पुराणमणि रयं चतुर्धा वा नवधा वा बहुधा वा विभक्तायाः, किं बहुना विविधरूपायाः भगवद्भक्तेः सोदाहरण स्वरूपनिरूपण प्रवणस्सन् भक्तिभाष्यनाम्ना कीर्तनीयश्चकास्ति। अत एव 'भक्त्या भागवतं ज्ञेय' मिति गीयते।

अपि च 'राजन्ते तावदन्यानि पुराणानि सतां गणे। यावन्न दृश्यते साक्षात् श्रीमद्भागवतं परम्' इति लिखन् व्याख्याता कश्चित् भागवतभाना वभ्युदिते सति पुराणान्तराणि अन्यानि ज्योतींषीव विच्छायान्यजनिषतेति अभिप्रैति। इदम्पुराणस्य वैशिष्ट्य मेव मुदैरिरत् कश्चित्कविः— 'वेदाः प्रभुसम्मिताः, पुराणानि तु सुहृत्सम्मितानि, काव्यानि च कान्तासम्मितानि वर्ण्यन्ते। परन्तु इदं पुराणं पूर्वोक्तत्रिविधोपदेशप्रकाशकं सत् पुराणान्तराण्यतिशेते इति, "वेदाः पुराणं काव्यञ्च प्रभुर्मित्रं प्रियेव च, बोधयन्तीति हि प्राहुः त्रिवत् भागवतं पुनः" इति श्लोकेनानेन स्वाशय माविश्चकार।

तैलधारावदविच्छिन्नस्मृतिसन्तानरूपायाः विलक्षणगुणानुसन्धानात्मिकाया भक्तेरेव मुक्त्युपायतेति साधारणः प्रत्ययो लोकेऽस्ति। तं प्रत्ययं विष्णुरूपी व्यासः अन्यथयति "कामा द्गोप्यो भयात्कंसो द्वेषाच्चैद्यादयो नृपाः, सम्बन्धा द्वृष्णय स्स्नेहा द्यूयं, भक्त्या वयं नृप!" इति। भगवत्सम्बन्धः यया कयापि विधया विद्यमानः अपवर्गमार्ग बन्धुः बोभोतीति मुक्तकण्ठं सङ्गिरते च। स च सम्बन्धः कामप्रयुक्तः, भयकारणकः, द्वेषजनितः, बन्धुताप्रेरितः, स्नेहपुरस्कृतो वा भवतु, यथाकथञ्चित् भगवत्सम्बन्धमात्रपवित्रितस्सन् मोक्षसाधक स्सम्पद्यते। अय ममोघ उपदेशोऽत्र लभ्यते।

"रामायणं मक्षिकाणां लघु भरो गजस्य तु' इत्याभाणकरीत्या साधारणज्ञानवतां सुलभज्ञेय मिव भासमान मिदं पुराणं सकलागमनिस्यन्दरूपं सत् महाविदुषामपि यत्नसाध्यबोधं भवति। अत एव "विद्यावतां भागवते परीक्षा'

इति कीर्तितम्। 'हेम्न स्संलक्ष्यते ह्यग्नौ विशुद्धिश्श्यामिकाऽपि वा' इत्युक्तदिशा सुवर्ण मनले परीक्ष्यते। शस्त्रभृतां रणे, विपत्तिकाले गृहिण्याश्च परीक्षा विधीयते। तथा विद्यावतां भागवते परीक्षा भवतीति वैदुष्यातिशयमहिम्ना भागवते अर्थविशेषा विदिता भवन्तीति सूरीणामाशय:।

तथा च देवस्थानाधिकृतै: एतादृशस्य पुराणोत्तमस्य परिशोधन प्रतिकर्मितं, प्रकाशनवैविध्यसञ्जातोच्चावच पाठभेदपरिकल्पितान् संशयानपोहितुं समर्थं श्रीमद्भागवतस्य शुद्धं संस्करणं मुद्रणं प्रकाशनञ्च मुख्यकर्तव्यमिति समकल्प्यत। अस्य ग्रन्थस्य प्राधान्यमवबुध्य, विद्वज्जनाभीष्टञ्च विदित्वा अधिकृता: व्याख्यासु प्रधानै र्व्याख्यानै: संयोज्य भागवतं परिष्कर्तुं, पवित्र मिदं कर्म निर्वोढुञ्च भागवतपरिष्करणसंस्थां एकाशीत्यधिक नवशत्युत्तरैकसहस्रतमे (1981) क्रैस्तववत्सरे प्रतिष्ठापयामासु:। तदारभ्य परिशोधनकर्म प्रवर्तमान मास्ते।

आरम्भ एव विज्ञापनीयो मुख्यो विषयोऽस्ति। विशाखपट्टणस्थ 'वरल्ड् टीचर्स् ट्रस्ट्' (World Teachers Trust) नाम्न्या: विश्वाध्यापकोपकारक संस्थाया स्संस्थापकाः श्रीमन्तः (की.शे) डा० कुलपति एक्किराल कृष्णमाचार्याः, तात्कालिक तिरुमल तिरुपति देवस्थान कार्यनिर्वहणाधिकारिणः, ऐ.ए.यस्. उपाधिधारिणः श्रीमन्तः पि.वि.आर्.के. प्रसादसमाख्याः , जिल्लेळ्ळमूडिस्थापितप्राच्यकलाशालायाः तात्कालिकाध्यक्षाः ब्रह्मश्री डा० पन्नाल राधाकृष्णशर्माभिधानाश्चेति विलक्षणविचक्षणमूर्तित्रितयेन सम्भूय कृतेन अविश्रान्तेन प्रयाससहेन श्रद्धासमेधितेन प्रयत्नेन सङ्कल्पबलेन च प्रोत्साहितैः उपकारप्रसितोदारदेवस्थानीयाधिकृतैरियं परिशोधकपरिषत् प्रतिष्ठापिता सती समेधतेतराम्। आर्षधर्म बोधनेन भरतभूमिः पुण्यभूमिः कर्तव्येति पवित्रोद्देशः कलियुगदेवस्य श्रीनिवासस्य निरवग्रहानुग्रहेण फलेग्रहि र्भूयादित्याशास्महे। पुण्यपत्तन (Poona) प्रतिष्ठापितया श्रीभण्डारकर परिशोधकपरिषदा साधितस्य शोधपूर्णमहाभारतप्रकाशनस्य, बरोडानगर प्रतिष्ठितया प्राच्यभाषा परिशोधक परिषदा निर्वर्तितस्य परिमार्जित श्रीमद्रामायणमहाकाव्यप्रकाशनस्य च दर्शनपठने एतादृशानां परिशोधनकार्याणां स्वयमपि सोत्साहकरणे सूरिमुख्यानचूचुदताम्।

"हर्तुं तम स्सदसती च विवेक्तु मीशः मानं प्रदीपमिव कारुणिको ददाति" अन्धतमसे विचरंश्चेतनः सती मसतीं वा सरणि माभिज्ञातु मप्रभविष्णुः दिङ्मूढ आहिण्डमानो विपद्येत! तदा कृपालुः कश्चिन्नरः 'मा भूदेव मय' मिति प्रसृमरस्वप्रभाविसरविध्वस्तदुर्दान्तध्वान्त मेकं प्रदीपं तस्मै प्रवितरति। अध्वनीनश्च त माधिगत्य सुपन्थान मपन्थानञ्च विविनक्ति। अपथे पद मनिधाय, सुपथि तु निधाय गन्तव्यं पद मनपाय मयते। एव मेव परम कारुणिक स्सर्वशक्तो जगत्पिता भगवान् तमो व्यपोह्य सदसद्विवेक मुपजनयितुं देदीप्यमानं मानाख्यं निस्नेहमपि स्नेहसम्भृतं प्रदीप मस्राक्षीत्। मानशब्देनात्र परमप्रमाणभूतः निगमादिशब्दव्यपदेश्यः अपौरुषेयः शब्दराशिरेव बुबोधयिषितः ।

निरुपाधिकवत्सलः शरण्यो नारायणः स्वाज्ञारूपां विविधपुरुषार्थप्रवर्तिनीं दुरन्त सन्ताप सन्तान सन्दातृ संसार निश्शेषनिकृन्तन बद्धपरिकरां अनश्वरीं अनपेक्षरवात्मिकां श्रुतिं लोकोद्दिधीर्षया चतुराननाय चतुराननाय समुपादिशत्। अस्याः पुनः व्याख्यासापेक्षतां निध्याय स्वयं रूपान्तेरणाऽ वतीर्य कांश्चिन्महात्मनोऽनुप्रविश्य च स्मृतीतिहासपुराणागमादीन् तदुपबृंहणान् ग्रन्थान् व्यररचत्। तेषु च "इतिहास पुराणाभ्यां वेदं समुपबृंहयेत्" इत्युक्तरीत्या यथावत् श्रुत्यर्थ बोधने इतिहासपुराणे स्मृत्यागमादीन् अतिशयाते। तयो रपि पुराणं 'यन्न दृष्टं हि वेदेषु तत्सर्वं लक्ष्यते स्मृतौ। उभयोर्यन्न दृष्टं हि तत्पुराणैः प्रतीयते" इति निरूपयता ब्रह्मवैवर्तपुराणवचनेन निगमस्मृत्याद्यदृष्टविषयदृष्टिप्रयुक्तप्रशंसापात्र मिति स्तूयते। तत्राऽपि "कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम्" इत्युपश्लोकितेन व्यासेन ग्रथितम् उपनिषद्व्याख्यानतया जेगीयमानं, "चत्वार एकतो वेदा भारतश्चेद मेकतः" इति च जोघुष्यमाणं महाभारतं महत्वाद्भारवत्वाच्च अनितरसाधारण्या भासा शोशुभ्यते। "यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्" इति शिरसा श्लाध्यमान मेतादृशं लक्षश्लोकात्मकं महाप्रबन्धं विरचय्य कृतमुखोऽपि वेदव्यासः अकृतिनमात्मान ममंस्त। अतृप्यन् विषसाद। ततोऽभ्यर्हिततरं पुराणं किञ्चित् आत्मोद्धरणाय तेन निर्मातव्य मासीत्।

अप्रमेयप्रमेयासङ्ख्येय शाखोपशाखोपेतान्योन्यसङ्कीर्ण नानानिगमविभजन परिष्करणालङ्कर्मीणेन, निखिलश्रेयोनिधानमहाभारतनिर्माणनिपुणेन, तावता अतृप्यता सरस्वती तटिनी तटी विषण्णनिषण्णेन, अत एव अवसादपरिजिहीर्षु नारदमुनिनाथोपदेशप्रेरणानुगुण भगवद्गुणवर्णनप्रवणधिषणेन श्रीकृष्ण द्वैपायनेन श्रीकृष्णपवित्रचरित्रचित्रितं श्रामद्भागवताभिधान मेतत्पुराणरत्नं प्राणायि। इदं सकलोपनिषत्प्रतिपाद्यनिखिल वेदान्तसारपूत मिति निश्शेषप्रेक्षावद्गण प्रतीक्ष्यमिति चाऽत्र नास्ति संशयलेशोऽपि। इदञ्च मात्स्यगारुडपुराणाद्यनेक सद्ग्रन्थवृन्दै रुपश्लोक्यमानं बाभाति। यथा निरुपपदानि गीता सहस्रनाम रामायणादि पदानि भगवद्गीता-विष्णुसहस्रनाम-वाल्मीकि रामायणादीनि बोधयितु मलम्भूष्णूनि भवन्ति, तथैव निरुपपद: केवलो भागवतशब्द: श्रीविष्णु (पारम्यबोधि) भागवतमेव बोधयतीति निखिलशिष्टजनानुभव प्रतीतोऽयं विषयः भागवत प्रशस्तिं पिशुनयति। निखिलमुनिगणपरिचरणार्चितचरणनलिनयुगलेन वीतरागाणा मग्रण्या शुकमहर्षिणा सश्रद्ध मधीत्य, मोक्षशास्त्रमिति निर्णीय तेन मुनिना मुमुक्षवे परीक्षिते महाराजाय उपदिष्टस्याऽस्य पुराणश्रेष्ठस्य माहात्म्य मुद्भावयितुं भाषादेव्यपि न प्रगल्भेत।

पुराणाना माविर्भावकालं प्रति निश्चप्रचं न किञ्चिद्वक्तुं शक्यते। वेदानामिव इतिहासपुराणादीनामपि कालः अत्यन्तं प्राचीनः इत्येव परं वक्तुं पार्यते। पुराणानामद्यत्वे परिदृश्यमानं परिनिष्ठतं रूपन्तु क्रिस्तोः पूर्वं पञ्चमशताब्द्याः षष्ठशताब्द्या वा परत एव निष्पन्न मिति विमर्शका वदन्ति। तेषां मौलिकं रूपन्तु ततो बहुकालात्पूर्वमेवाऽऽसीदिति निर्णीयते। वेद संहिता समकालिका न्येतानीति अनुमीयते। पुराणनिर्देशः अथर्ववेदे उपलभ्यते। तत्र पुराणं ऋक्सामच्छन्दोभिस्सह

यज्ञोच्छिष्टा दुद्भूत मिति वर्ण्यते। शतपथ ब्राह्मणे, गोपथब्राह्मणे बृहदारण्यकोपनिषदि च पुराणपरामर्शोऽस्ति। महाभूतस्य परमात्मनः निश्वसिता देतत् उदभवदिति बृहदारण्यकोपनिषद्वर्णयति। पूर्वोक्तेषु स्थानेषु पुराण मित्येकवचनान्त मेव पदं प्रायोजि। अत एतद्विज्ञायते यत् पुराणमिति व्यवह्रियमाणा वैदिकविज्ञानसम्बन्धिनी एका प्रातिस्विकी शाखा आसीदिति, सा अद्यत्वे इव विविधमत विद्योतक नानाविध ग्रन्थरूपत्वेन नासीदिति च, सृष्टिः, प्राचीनचरितानि, कथाः गाथाः राज्ञां ऋषीणाञ्च वंशानुचरितं, मन्त्राणां यागानाञ्च आविर्भावसम्बन्धिनो वृत्तान्ताश्च यत्र वर्ण्यन्ते तादृशपुराणस्य पारायणं दीर्घकालानुवर्तिसत्रसम्बन्धिधार्मिकानुष्ठानानां मध्ये विरामकाले प्रवर्तित मिति ज्ञायते, विशिष्य अश्वमेधराजसूयादियागाना मनुष्ठानवेलायां पुराणपठनं प्रधानकृत्य मासीत्।

अत्यन्तप्राचीनकाले पुराणपठनं यागानुष्ठानवेलासु ब्राह्मणानामेव पुरोधसां कृत्य मासीत्। ततो गच्छति काले पुराणपठनस्य यागमुख्याङ्गत्व मनङ्गीकुर्वद्भिः वैदिकै रिदं कृत्यं सूतानामेव विहितमभवत्। एतादृशकृत्यविभागस्य सूचिकैषा गाथा परिशील्यताम् - महर्षिर्व्यासः पुराणसंहितासङ्कलनानन्तरं रोमहर्षणाख्यस्य सूतकुलीनस्य शिष्यस्य वशे पुराणप्रवचनकृत्यं समार्पयत्। रोमहर्षणश्च कृत्स्नं पुराणं षोढा विभज्य षड्भ्य श्शिष्येभ्यः प्रायच्छत्। षट्सु एतेषु शिष्येषु त्रय श्शिष्याः तिस्र स्संहिताः पर्यकल्पयन्। एता स्संहिताः रोमहर्षणीया च पुराणवाङ्मयस्य सर्वस्य मूलभूता भवन्ति।

जनश्रुति मनुरुध्य एव मूह्यते। प्रागत्यन्तसङ्कीर्णानां वेदानां परिष्करणं वेदव्यासस्य परमं कर्तव्यमासीत्। तत्परिष्करणानन्तरञ्च वेदतुल्यकक्ष्याणां पुराणाना मपि एकराशीभूय सङ्कीर्णाना मिव स्थितानां परिष्कारोऽपि वेदव्यासेनैव व्यधायि। वेदा स्सर्वे ब्राह्मणपुरोहितेषु निक्षिप्ताः। वेदवाङ्मयापेक्षया पृथक्कृतानि पुराणानि तु सूताधीनानि कृतानि। एते च सूताः कालानुरोधेन प्रजाभिरुच्यनुसारेण च नूत्नै रंशै स्संयोज्य पुराणवाङ्मये महतीं वृद्धि मकल्पयन्त। आपस्तम्बसूत्रकालात्प्रागेव एतानि पुराणानि परिष्कृतरूपाणि विशिष्टस्थानभाञ्जि प्रमाणभूतानि च समपद्यन्त। अतएवाऽऽपस्तम्ब सूत्रे भविष्यत्पुराणात्, अन्यस्मात् कस्माच्चन पुराणाच्च कश्चन ग्रन्थभाग स्समुदधारि। वेदाश्च व्यासेन परिष्कृतास्तदनन्तरं विकृती रभजमाना स्तथैवाऽवातिष्ठन्त। पुराणानि तु प्रातिस्विकेन असाधारणेन मार्गेण वैदिकदर्शनपथ मनुवर्तमानानि क्रिस्तोः पूर्वं पञ्चमशतकात् षष्ठशतकाद्वा आरभ्य, क्रिस्तोः पश्चात् द्वादशशतकपर्यन्तं अतिमात्र मेधमानाकृतीनि समभवन्। भक्तिप्रबोधः, नानाविधा स्समयाः, विज्ञानविषयाः साङ्ख्किाः चरित्रविशेषाः इत्येते चान्ये च बहवोऽपेक्षिताः अंशाः पुराणेषु पदमलभन्त।

# पुराणलक्षणम्

**"सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च**

**वंशानुचरितञ्चेति लक्षणानान्तु पञ्चकम्"**

इति कोशप्रसिद्धं साधारणं पुराणलक्षणम्। एतत् उपपुराणविषये केवल मनुवर्तते इति, महापुराणन्तु दशलक्षणं भवेदिति च ब्रह्मवैवर्ते प्रतिपाद्यते। "एतदुपपुराणानां लक्षणञ्च विदुर्बुधाः। महताञ्च पुराणानां लक्षणं कथयामि ते" इत्यारभ्य सृष्ट्यादि दशलक्षणतां महापुराणस्य न्यरूपयत् ब्रह्मवैवर्तम्।

श्रीमद्भागवते द्वितीयस्कन्धे दशमाध्याये

"अत्र सर्गो विसर्गश्च स्थानं पोषण मूतयः ।
मन्वन्तरेशानुकथा निरोधो मुक्ति राश्रयः ।
दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणम्॥ (श्लो. 1-2)

दशविधानि लक्षणानि निरदिश्यन्त - 1. सर्गः, 2. विसर्गः 3. स्थानम्, 4. पोषणम्, 5. ऊतयः, 6. मन्वन्तरकथा, 7. ईशानुकथा, 8. निरोधः, 9. मुक्तिः, 10. आश्रयः - इति। तेषां विवरणमपि तत्रै वैतैः श्लोकैः क्रियते—

भूतमात्रेन्द्रियधियां जन्म **सर्ग** उदाहृतः ।
ब्रह्मणो गुणवैषम्यात् **विसर्गः** पौरुषः स्मृतः॥ (3)

**स्थिति** र्वैकुण्ठविजयः, **पोषणं** तदनुग्रहः ।
**मन्वन्तराणि** सद्धर्मः, **ऊतयः** कर्मवासनाः ॥ (4)

अवतारानुचरितं हरेश्चास्यानुवर्तिनाम्।
सता **मीशकथाः** प्रोक्ताः नानाख्यानोपबृंहिताः ॥ (5)

**निरोधो**ऽस्यानुशयन मात्मनस्सहशक्तिभिः ।
**मुक्ति** र्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः ॥ (6)

आभासश्च निरोधश्च यतश्चाऽध्यवसीयते।
स **आश्रयः** परं ब्रह्म परमात्मेति शब्द्यते॥ (7)

1. आकाशादीनि भूतानि, शब्दादीनि तन्मात्राणि, ज्ञानकर्मोभयेन्द्रियाणि, अन्तःकरणभूतबुद्धिशब्दवाच्यं महत्तत्त्वम्, महदादिपृथिव्यन्तानि - एषां सर्वेषां तत्त्वानां उत्पत्तिः समष्टिसृष्टिः सर्ग इति व्यपदिश्यते। अयं तृतीयस्कन्धे न्यरूप्यत।

2. परब्रह्मणा प्रयोजितः चतुर्मुखब्रह्मा सत्त्वरजस्तमसां वैषम्याद्धेतोः यत्सृजति स पौरुषः सर्गः विसर्ग उच्यते (व्यष्टिसृष्टिः) अयं चतुर्थस्कन्धस्य विषयः।

3. वैकुण्ठस्य हरेः सर्वोत्कर्षेण वर्तनं स्थानम्। इदं पञ्चमस्कन्धे प्रतिपाद्यते।

4. तादृशस्य वैकुण्ठस्य जगद्रक्षणादिरूपो ऽनुग्रहः पोषणम्। विषयोऽयं षष्ठस्कन्धे वर्ण्यते।

5. संस्कारापरपर्यायाः कर्मवासना ऊतय उच्यन्ते। सप्तमस्कन्धे निरूप्यतेऽय मंशः ।

6. वैकुण्ठानुगृहीतानां मन्वन्तराधिपतीनां धर्ममार्गपालनादि चरितवर्णनं मन्वन्तरकथा अष्टमस्कन्धप्रतिपाद्या।

7. हरे र्विविधावतार दिव्यचरित्रानुवर्णनम्, हर्यनुवर्तिनां पुंसां नानाख्यानोपबृंहितानां कथानां वर्णनं ईशानुचरितम्। हरे स्साक्षाच्चरितम्, तदनुवर्तिनाञ्च चरितम् ईश-अनु-चरितम्। नवमस्कन्धप्रतिपाद्यमेतद्भवति।

8. जीवात्मनः स्वकीय कर्मशक्तिभिस्साकं सूक्ष्मावस्थप्रकृतावववस्थानं निरोधः । अयं दशमस्कन्धस्य वर्ण्यांशः ।

9. जीवात्मनः देवतिर्यङ्मनुव्यादिविध मन्यथारूपं हित्वा आविर्भूतगुणाष्टकस्य स्वस्वरूपेणावस्थानं मुक्तिः । एकादशे स्कन्धे एष बोध्यते।

10. जगत आविर्भावतिरोभावौ (सर्गप्रलयौ) यस्मा त्प्रभवतः इति प्रमाणै रध्यवसीयते ज्ञायते, सः परब्रह्मादिशब्दवाच्यः परमात्मैव सर्वाधारत्वात् आश्रयः कीर्त्यते।

आश्रयाख्यस्य परमात्मनः विशुद्ध्यर्थं, अर्थात् स्पष्टतया स्वरूपप्रतिपत्तये सर्गादीनां नवानां लक्षण मत्र प्रत्यपादि। ततश्च परमात्मस्वरूपनिरूपण मेव परम तात्पर्यविषयीभूत मस्य पुराणस्येति ज्ञायते।

## कृतं परिष्करणं - करिष्यमाणञ्च

अद्य यावत् भागवतशोधपूर्णपरिष्करणपरिषदि श्रीभागवतस्य प्रथमस्कन्धमारभ्य चत्वारः स्कन्धाः निर्दिष्ट व्याख्यात्रितयसनाथाः साङ्गोपाङ्गेन परिष्करणेन संस्कृताः मुद्रणोपयोगिशुद्धलेखनेन सज्जीकृताः। तत्र कश्चिद्विशेषः - प्रथम स्कन्धत्रयस्य चतुर्थी अपि व्याख्या समायोजिता। सुधीसुधानाम्नी सा विवृतिः भागवतपरिष्कारसंस्थायाः भूतपूर्वनिदेशकैः ब्रह्मश्रीमद्भिः डा० पन्नाल राधाकृष्णशर्मभिः नूत्नैर्विमर्शै स्साकं सुलभशैल्या प्रणीता। चतुर्षु केवलं प्रथमःस्कन्धः सव्याख्यः, विपुलाभ्यां संस्कृताङ्ग्लभाषामयपीठिकाभ्यां अध्येतृसौकर्यसम्पादकानुबन्धाभ्यां विषयसूचिकादिभिः निर्दिष्टबहुपाठान्तरानुबन्ध्यधस्सूचिकाभिश्च प्रसाधितः सप्तशत्यधिकपृष्ठपरिमितः नवाशीत्यधिकनवशत्युत्तरसहस्रतमे क्रीस्तुवत्सरे (1989) तिरुमल तिरुपति देवस्थानाधिकृतैः मुद्राप्य पाठकसहृदयाराधनाय

प्राकाश्यत। स च श्रीभागवतप्रथमस्कन्धात्मको भागः हृदयालुभिः पाठकै रतिमात्रं समाद्रियतेति विदित्वा निवेदयितुं मोदामहे। पाठकानां साभिनन्दनप्रोत्साहेन समेधितश्रद्धाः अन्यानपि ग्रन्थभागान् श्रीनिवासस्य कृपया, अधिकृतानाञ्च हस्तावलम्बेन क्रमशः प्रकाशयिष्याम इति कृतज्ञास्सप्रश्रयं निवेदयामः ।

चतुर्षु स्कन्धेषु मुद्रणार्थकहस्तलिखितरूपेषु समार्पितेषु देवस्थानाधिकृताः कृत्स्नस्य श्रीभागवतस्य प्राणभूतः दशमः स्कन्धः, यत्र साक्षात् लीलामानुषविग्रहस्य श्रीकृष्णस्य दिव्यचरितं प्रतिपाद्यते, स एव प्रथमतः परिष्क्रियता मित्यादिदिशुः। पश्चात्तु पञ्चमस्कन्धमारभ्य आनुपूर्व्येण स्कन्धान्तराणां परिष्करणं भवतु इति तेऽभिप्रयन्ति स्म। तदादेशानुरोधेन दशमः स्कन्धः परिष्करणायाऽग्राहि। अयं स्कन्धोऽतिविस्तृतः नवत्यध्यायोपबृंहितः (अधिकपाठात्मकाध्यायैस्सह शताध्यायमितः)। अतोऽयमेक एव स्कन्धः भागत्रयात्मना विभजनीयस्संवृत्तः। तस्य प्रथमभागे अष्टाविंशत्यध्यायाः (1-28) द्वितीयभागे द्वात्रिंशदध्यायाः (29-60), तृतीयभागे त्रिंशदध्यायाश्च (61-90) सङ्कलिताः। एवं दशमः स्कन्धः सम्पाद्य मुद्रणाय सिद्धः कृतः । अद्य प्रथमो भागः साङ्गोपाङ्गपरिष्कारं मुद्राप्य प्रकाश्यते। अपरौ द्वावपि भागौ प्राकाश्यं गमिष्यतः। पञ्चमः स्कन्धः परिष्कृत्य मुद्रणाय सज्जीकृतः। एतर्हि स्कन्धः परिष्क्रियमाणोऽस्ति। तदनन्तरं षष्ठः सप्तमाष्टमनवमैकादशद्वादशस्कन्धानां परिष्करणमुद्रणे क्रमेण भविष्यतः। साम्प्रतं दशमस्कन्धप्रथमभागः सहृदयकोविदेभ्य उपहारीक्रियते। अधिगत्य प्रसीदन्तु॥

## परिष्करणाय पुरस्कृता ग्रन्थाः : तेषां सङ्केतचिह्नानि च

१. **श्रीमद्भागवतमहापुराणम्** - देवनागरी लिपिः। घूर्जरदेशे मुद्रितम्। श्री कृष्णशङ्करशास्त्रिप्रकाशितम्' 'A' इति चिह्नितम्। उपत्रिंशव्याख्यासंवलितम्।

२. **श्रीमद्भागवत पुराणम्** - देवनागरी लिपिः । बृन्दावने मुद्रितम्। इदं 'B' इति चिह्नितम्। नवव्याख्यासनाथम्।

३. **श्रीमद्भागवतपुराणम्** - देवनागरी लिपिः । गोरखपुरस्थ 'गीताप्रेस्' मुद्रणालये मुद्रितम् मूलमात्रम्। अस्य ग्रन्थस्य सङ्केतः 'G' इति।

४. **श्रीमद्भागवतम्** - आन्ध्री लिपिः। श्री पुराणं हयग्रीवशास्त्रि परिष्कृतम्। मद्रपुरीस्थ विवेकादर्शमुद्रणालये मुद्रितम्। 'H' इति चिह्नितम्।

५. **श्रामद्भागवतम्** प्रो०जे.यल्.शास्त्रिपरिष्कृतम् मोतीलाल् बनारसीदाससंस्थया मुद्रिनम्। देवनागरी लिपिः। श्रीधरव्याख्यापरिष्कृतम्। 'J' इति चिह्नितम्।

६. **श्रीमद्भागवतम्** - कविभूषण श्रीकुमार ताताचार्यैः परिष्कृतम्। मद्रपुरीस्थ आनन्दमुद्रणालये मुद्रितम्। देवनागरी लिपिः। श्रीवीरराघवव्याख्योपेतम्, 'K' इति चिह्नितम्।

७. **श्रीमद्भागवतम्** - मध्वसंस्थाप्रकाशितम् विजयध्वजव्याख्यायोजितम्। देवनागरी लिपिः। 'M' इति चिह्नितम्।

८. **श्रीमद्भागवतम्** - इदमपरं माध्वप्रकाशनम्। देवनागर्यां लिप्यां मुद्रितम्। विजयध्वजव्याख्यासङ्कलितम्। अस्य चिह्नम् 'Ma' इति।

९. **श्रीमद्भागवतम्** - आन्ध्रलिप्यां मुद्रितोऽयं ग्रन्थः। श्रीमत्त्रिदण्डि श्रीमन्नारायणरामानुजजीयरस्वामिभिः प्रकाशितः। श्रीवीरराघवव्याख्ययाऽलङ्कृतः। 'T' इति चिह्नितः। आन्ध्रलिप्यामङ्कितः।

१०. **श्रीमद्भगवतम्** - ग्रन्थोऽयं श्री वाविळ्ळ रामस्वामिशास्त्रुलुसंस्थया मुद्रितः प्रकाशितश्च। श्रीधरव्याख्यया संयुतः। आन्ध्री लिपिः । 'V' इति चिह्नितम्।

११. **श्रीमद्भागवतम्** - वनपर्तिसंस्थानाधिपतिना राजा रामेश्वररायेण मुद्राप्य प्रकाशितम्। आन्ध्रलिप्यङ्कितो ग्रन्थः वीरराघवव्याख्याभूषितः। 'W' इति चिह्नितः।

## पाठान्तराणां निर्देशे अवलम्बिता सरणिः

अत्र अधिकपाठानां, अधिकश्लोकानाञ्च सूचने समाश्रिता रीतयोऽधस्तात् निर्दिश्यन्ते सहृदयपाठकानां सौकर्याय।

१. सव्याख्यानं परिष्कृत्य प्रकाश्यमानस्याऽस्य ग्रन्थस्य आधारग्रन्थत्वेन प्रायशः 'A' प्रकाशनमुपादीयते।

२. **प्रकाशान्तरेषु** लक्ष्यमाणानि पाठान्तराणि तत्तत्प्रकाशननामोल्लेखनपुरस्सरं अधोज्ञापिकायां (foot-note) निर्दिश्यन्ते।

३. व्याख्यातृभिः निर्दिष्टानि पाठान्तराण्यपि तत्तद्व्याख्यातृनामनिर्देशपूर्वकं लिख्यन्ते।

४. **कस्मिंश्चन** प्रकाशने अधोज्ञापिकायां सूचिताः पाठभेदाः यदि कुत्रापि व्याख्याने वा, परिशील्यमानमूलप्रकाशने वा लभ्यन्ते. तर्हि तेऽत्र अधोज्ञापिकायां पार्थक्येन न लिख्यन्ते।

५. यदि कुत्रचित् प्रकाशने कश्चिदधिकः श्लोकः (श्लोकौ श्लोका वा) उपलभ्यते, क्वाचित्कत्वेन प्रक्षिप्त इति मन्यमानोऽपि सः मूलपाठः पारायणानुकूल्यमुद्दिश्य मूलग्रन्थे एव पूर्वोत्तरश्लोकसंख्यां निर्दिश्य तन्मध्यपातित्वेन निक्षिप्यते। यदि तादृशस्य श्लोकस्य व्याख्याऽप्यस्ति तदुचितस्थाने साऽपि योज्यते। अधिकपाठतयाऽङ्गीकृतस्य श्लोकस्य क्रमसंख्या तु (serial number) न दीयते।

६. **पदानां वा** वर्णानां वा आधिक्यं न्यूनता वाऽप्यस्ति चेत् आधारग्रन्थानुसारमेव तत्तन्निर्दिश्यते।

७. **श्रीधरीयव्याख्याने** अधिकसंख्याकानां श्लोकानां प्रतीकधारणं दृश्यते। अत इयमेतद्व्याख्यानशैली इति मत्वा, येषां प्रतीकधारणं नास्ति, तेषां तदस्माभिः क्रियते। अन्यव्याख्याद्वितये एवं न क्रियते। यथा मुद्रितग्रन्थे लभ्यते तत्तथैव स्थाप्यते।

८. यत्र तु मूलश्लोकगतानां शब्दानां क्रमे स्वल्पो भेदो लक्ष्यते, यथा — 'यद्बिभेति स्वयं भयम्', (अस्य स्थाने) 'यद्बिभेति भयं स्वयम्' इत्यादिरूपेण, तत्र पाठभेदः अधस्सूचिकायां न लिख्यते, यतोऽत्र अर्थभेदः स्वल्पोऽपि नास्ति (छन्दोभङ्गोऽपि न)। ईदृशस्थाने एकः पाठ उपादीयते, अन्य उपेक्ष्यते।

नियमानामेषां प्रतिग्रहे प्रयोजन मिद मेव — शोधनाय स्वीकृतानां दशानामपि प्रकाशनानां सम्बन्धिन स्सर्वे पाठभेदा विमृश्यन्ते। 'तेषु व्याख्यातृदृष्ट्या, अर्थौचित्येन, सन्दर्भानुरोधेन च य एव उत्तमः पाठः इति सम्पादकैः अभिप्रेयते स एव मूले निक्षिप्यते, शिष्टाः पाठा अधस्तान्निर्दिश्यन्ते। अर्थवन्तः पाठाः सर्व एव लिख्यन्ते। सर्वथा असङ्गता इति मन्यमानास्तु उपेक्ष्यन्ते। ततः पाठकास्सहृदयाः पाठौचित्यं जानन्तु। यदि जातुचित् अधस्सूचितपाठ एव तेषां समुचिततरो भायात् तमेव वा स्वीकुर्वन्तु इति ; अत स्सर्वे पाठभेदाः सश्रद्ध मस्माभिः सूचिता स्सहृदया नाराधयेयुरिति विश्वसिमः ।

## अनुबन्धौ

अन्तत एकं विषयं विज्ञाप्य विरन्तुमिच्छामः । पाठकानां सौकर्याय ग्रन्थान्ते अनुबन्धद्वितयं योजयामः। एकस्मिन् श्लोकपादसूचिका अकाराद्यनुक्रमेण समयोजि। यत्र कुत्राऽपि दृश्यमानः एकः पादोऽपि भागवतीयः भवेत् अत्र दृष्ट्वा स पादः कतमस्कन्धीयः कतमाध्यायिकः कतमश्लोकीयः इति च क्षणेन ज्ञातुं शक्येतेति, तदर्थोऽयं प्रयत्नः। प्राचीनमतत्रयसम्बन्धिषु व्याख्यानेषु प्रकृतविषयोपबृंहणाय, प्रतिपाद्यांशसमर्थनाय, संवादाय वा श्रुतिस्मृतीतिहासपुराणागमकोशव्याकरणादिशास्त्रग्रन्थेभ्यः विवरणकारै रुद्धृता अंशा श्शतश स्सहस्रशश्च सन्ति। यदि तेषां आकरनिर्देशः क्रियेत पठितॄणामाकरग्रन्थजिज्ञासा उपशमिता भवति। ते च आकरग्रन्थान् परामृश्य अधिकांशानपि जानीयुः । एवं सुहृदया स्समाराधिता भवेयु रिति सङ्कल्प्य सोढ्वा महान्तं श्रमं, तत्तद्व्याख्यानस्थले एव आकरनिर्देशं विधाय, तावताप्यतृप्यद्भि रस्माभिः शतशो विद्यमानानां उद्धरणानां साकरग्रन्थनिर्देशं, अकाराद्यनुक्रमेण अनुबन्धे द्वितीये सविशेषं स्थापनं विहितम्। स्थेयान्प्रयत्न आस्थेय स्सिद्धयेऽनल्पकर्मणः इति प्रयत्यापि सर्वेषां उद्धरणानां आकरा न लक्षिताः, तथाऽपि शते अशीत्यधिकानामुद्धारणानां आकरा निरदिश्यन्त। यत्र तु विजयध्वजीयव्याख्यादृष्टानाम् उद्धरणानां आकरनिर्देशः सर्वमूलग्रन्थान्तर्गत श्रीभागवततात्पर्यनिर्णयग्रन्थात्सम्पाद्य कृतः तत्र तात्पर्यनिर्णयग्रन्थदृष्टया रीत्या केवल माकरग्रन्थ नामनिर्देशः कृतः। अध्यायाद्यवान्तरग्रन्थभागो न निर्दिष्टः । अन्येषान्तु अवान्तरजग्रन्थभागोऽपि यथोपलम्भं सूचितः।

## — ★गोपीकृष्णप्रेमवृत्तान्तः, तत्तत्त्वञ्च —

गोपाङ्गनानां श्रीकृष्णस्य च मध्ये विद्यमानस्य प्रेम्णः समाधानसापेक्षं नैतिकमौचित्यं प्रति, तादृश प्रणयवृत्तान्तस्य भक्तिभावसम्भृते श्रीभागवते वर्णनं, शृङ्गाररसतुन्दिलानां साङ्गोपाङ्गविपुलवर्णनात्मकानां कथांशाना मत्राऽनुप्रवेशञ्चोद्दिश्य विमर्शकाः असम्मतिं प्रदर्शयन्तो विमृशन्ति। श्रीभागवतसाधुतासम्पादनाय प्रयस्यन्त स्सुधियः उच्चावचैस्सिद्धान्तकल्पनैः तथाकृतान् विमर्शान् समाधातुं प्रायतन्त। तेषु प्रधानमतरीतयस्तिस्र उदहह्रियन्ते।

---

★ स्वामि तपस्यानन्दरचिते उपोद्घाते — "Gopi-Krishna Episode: its Interpretation", "Bhagavata Interpretation of the love of the Gopikas", "Why the Medium of Erotic Poetry is used" इति शीर्षकत्रयं दत्वा लिखितान् विषया नधीत्य इदं लिखितम्। सभक्ति कृतज्ञतां निवेदयामि।

1. सर्वोऽप्यत्र गोपिका श्रीकृष्ण प्रेमोदन्तः चरित्रसिद्धा वास्तविककथा न भवति। अपि तु रूपकातिशयोक्तिच्छायाकल्पितैव। अत्र गोपिकाः जीवात्मस्थानीयाः, वासुदेवस्तु परमात्मस्थानीयः। भक्तिपवित्रस्वान्तस्य जीवस्य परमात्मसाङ्गत्यविषयिणी अतिशयिता श्रद्धैव भौतिकशृङ्गाररूपं गमिता। अत्र अध्यात्मदृष्ट्या, जीवः परमात्मनः प्रकृतिरिति तस्मिन् स्त्रीत्वमकल्पि। अस्मिन् सिद्धान्ते चारित्रिकसत्यता तिरस्कृता, उपेक्षिता वेति वेदितव्यम्। सर्वासां सङ्घटनानां साङ्केतिकं रूपणमेव कृतमिति मन्तव्यम्। इयमेका रीतिः।

2. इदं भागवतात् ज्ञायते यत् तदात्वे श्रीकृष्णः दशवर्षप्रायः एकादशवर्षवया वा बाल इति। अतोऽस्मिन् कामकलाविष्टाश्चेष्टा न स्थानं लभेरन्। शृङ्गारकाष्ठारूढानां चर्याणां का नामाऽत्र प्रसक्तिः? अतः क्रीडालोलस्य आभीरबालस्य गोपालबालबालिकाभिस्सहानुभूतासु निर्मायबालक्रीडासु कविताशैल्या अतिशयोक्ति मास्थाय शृङ्गारभङ्गी मारोप्य चमत्काराय तादृग्वर्णनमकारि। श्रीकृष्णो गोकुले गोपबाल इव युक्तवयस्काभिः बालिकाभिः सहितः गोपकुलसहजाभिः शुचिक्रीडाभिर्विनोदरसमनुभवन्नाऽऽसीत्। अकलङ्कबाललीलासु शृङ्गारारोपः अनुदात्तमताविष्टैः कल्पितः। अस्मिन् मते चरित्रसिद्धा एव बाललीलाः औदात्त्यदृष्ट्या भाविता इति अत्र अधार्मिकत्वशङ्काया नैव प्रसक्तिः।

3. अथ तृतीया निर्वहणरीतिः। अस्मिन् मते चारित्रिकसत्यमुररीक्रियते। अत्र गोपिकाः भौतिकवासनारहिताः शरीराभिमानशून्याः। ताः परमात्मेति मन्यमानेन श्रीकृष्णेन आध्यात्मिकभावेनैव सङ्गताः। तत्र दैहिककामसुखगन्धो नास्ति। अत्र वर्णनं सर्वमपि अवर्णनीयाध्यात्मरहस्यसम्बन्धसम्बद्धमवगन्तव्यम्। अस्य वादस्य बलं भागवतश्लोकेनानेन सम्पद्यते।

"नाऽसूयन् खलु कृष्णाय मोहिता यस्य मायया।
मन्यमानाः स्वपार्श्वस्थान् स्वान् स्वान् दारान् व्रजौकसः॥ (भाग. 10-33-38)

यदा गोपाङ्गनाः रासक्रीडानुबद्धा अभूवन्, तदा तासां भर्तारः स्वां स्वां जायां पार्श्वस्था मेव मन्यमानाः श्रीकृष्णाय नाऽभ्यसूयन्ति स्म इति सर्वमपि भगवन्मायानिर्वृत्त मिति बोध्यते। आश्चर्यजनन्या योगमायायाः प्रभावादेव सर्वं सम्पद्यत इति रासक्रीडारम्भवर्णनसमय एव योगमायामहिमा — "भगवानपि ता रात्रीः शरदोत्फुल्लमल्लिकाः। वीक्ष्य रन्तुं मनश्चक्रे योगमायामुपाश्रितः (भाग. 10-29-1) इति पद्येन असूचि।

## — गोपिकाप्रणयः —

अत्र विषये भागवतदृक्पथः क इति किञ्चिद्विमृश्यते। उपरिनिर्दिष्टवादत्रयमपि असन्दिग्धं समर्थयते श्रीमद्भागवतम्। अत्र वर्ण्यमाना गोपिकाकथा तत्सम्बन्धबान्धव्याद्यनुबद्धा अंशाश्च वास्तविका इत्यत्र विषये, भागवतभाषा, तद्गतवर्णनारीतिश्च अतिमुख्यं साक्ष्यं ददतः। यस्मै किल भागवत मुपदिश्यते स परीक्षिन्महाराजोऽपि तथैव विश्वसन् "भागवतकथायां नैतिकमौचित्यं किमस्ति?" इति शुकमुनि मपृच्छत्। अयं महर्षिः स्वीयेऽद्भुतसमाधाने तद्वर्णितानां वृत्तान्तानां व्याख्यां न व्यदधात्। अपि तु तेषां गूढाभिसन्धि मित्थं व्याकरोत्। दिव्यशक्तियुता महात्मानः धर्मान् नीतिमार्गांश्च उल्लङ्घन्ते। विद्युदाघातसदृशीः क्रियाः विदधति। भक्ष्यसम्बन्धिनो दोषाः सर्वभक्षकं पावकं न लिम्पन्ति। तथैव दिव्यशक्तिमतो महापुरुषान् तत्तत्कृत्यदोषाः न स्पृशन्ति। साधारणैः नरैः तेषां ताश्चेष्टा उदाहरणाय स्वीकुर्वद्भिः मनसाऽपि नाऽनुकरणीयाः। "दृष्टो धर्मव्यतिक्रमस्साहसञ्च महतां न तु दृष्टार्थेऽवरदौर्बल्यात्।" ते महात्मानः धर्ममतिक्रामन्ति, भ्रंशं निवारयितुमपि प्रभवन्ति। अल्पैर्मानवैस्तन्नाऽनुसर्तव्यम् इति गौतमस्मृतिः स्मर्यताम्। अविवेकाद्यदि अधर्ममाचरेयु स्ते विनिपतेयुः। हालाहलं पीतवन्तं महेश्वरं स्मृत्वा स्वयं यदि कश्चि द्विषमुपादत्ते स

म्रियेतैव। दिव्यपुरुषाणा मुपदेशाः क्रियाश्च अर्थवन्तो भवन्ति। विवेकिभिः आचरणयोग्या उपदेशाः क्रियाश्च अनुसरणीयाः। दिव्यज्ञानसम्पन्नाः अहन्ताशून्याः स्वार्थदृष्टिदवीयांसः यद्यत्कर्म सदसद्वा कुर्वन्ति, तद्वासता, प्रयोजनं वा, असता अनर्थो वा तेषां न सम्भवति। सत्येवं, सर्वशक्तं सर्वज्ञं सार्वं (सर्वहितकरं) सकललोकाधीश्वरं देवनरपशुपक्ष्यादिसकलप्राणिना मपि प्रभुं वासुदेवं किं वा दुश्चरितं विप्रकुर्यात्? यस्य पुरुषोत्तमस्य दिव्ये पादारविन्देऽर्चन्तोऽभिध्यायन्तो योगिनः सर्वबन्धविमुक्ता भवन्ति, तस्य विराड्रूपस्य स्वेच्छागृहीताभिमतोरुदेहस्य को वा बन्धः? किं वा पापम्? यस्मिन्भक्त्या योगिनोऽपि अध्यात्मशक्तेः परां काष्ठां लभन्ते। गोविन्दोऽयमन्तर्यामी भूत्वा, गोपिका स्तासां पतींश्च वशवर्तिनो विधाय तन्मनांसीन्द्रियाणि च प्रेरयति। भागवतैः सार्धं क्रीडितुं ता नुद्धर्तुमेव च लीलार्थां तनूं नन्दनन्दन आददे। सर्वप्राणिमनोहरया तया तन्वा तान् स्वोन्मुखा नाकृष्य तेषां प्रेमवर्धनाश्चेष्टा स्तनोति। कृष्णयोगमायाशक्तिः तादृशी भवति यया व्रजवासिनस्समेऽपि स्वस्वदारा उपकण्ठे वर्तन्त इत्यमन्यन्त। अतो गोपानां भगवति अप्रीतिविषय एव नाऽऽसीत्। श्रीकृष्णः सायुधः कंसं शिशुपालञ्चाऽभिययौ। तो सं हृत्य, पापेभ्यो मोचयित्वा च तयो समुन्नतं स्थान मकल्पयत्। द्वेषनिमित्तकमोक्षस्यैत दुदाहरणम्। कामा द्गोप्यस्तथैव समुद्धृताः। भगवत्सम्बन्धः यादृश स्तादृशो वा भवतु स जीवात्मान मुद्धर्तुं प्रगल्भते।

"कामात् द्वेषात् भयात् स्नेहात् यथाभक्तचेश्वरे मनः।
आवेश्य तदघं हित्वा बहव स्सद्गतिं गताः॥
तद्यथा "गोप्यः कामात्, भयात्कंसो द्वेषाच्चैद्यादयो नृपाः।
सम्बन्धाद्वृष्णयः, स्नेहा द्यूम, क्त्या वयं विभो!"॥ (भाग. 7-1-29 & 30)

भगवतोऽतिमानुषसौन्दर्यश्रिया, दिव्यवेणुगानस्रवन्त्या च उह्यमानाः भौतिकप्रेमसम्भृताः गोप्यः साधारणं प्रेयांसमिव कृष्णमभीयुः। विकारहेतावप्यविकृतचेता धीरोऽनादिब्रह्मचारी देवकीतर्णकः (वत्सः) तैर्मिलित्वा स्वसम्बन्धेन तासां भौतिकं प्रेमाणं दिव्यत्वसम्पन्नमकार्षीत्। गीताचार्यः श्रीकृष्णः परं ब्रह्मैव। तस्य स्वरूपं हेयप्रत्यनीकं सकलकल्याणगुणास्पदञ्च, महोदात्तञ्च। कामातुराः दैहिकभौतिक सुखकाङ्क्षिण्य इव, कामुक्यः, अभिसारिका इव च तेन पुण्डरीकाक्षेण संयुज्य गोपवधूट्यः अपोढकामवासनागन्धाः दिव्यभक्तिभावसम्भृताः परमहंसा इव शुद्धात्मानस्समजनिषत। अनेन दृक्पथेन यदि चिन्तयामः, तदा भगवत्प्रवृत्तौ संशयलेशोऽपि न स्यात्। भगवति चित्तैकाग्रता मुख्या भवति। तादृक्प्रवृत्तौ प्रेरणा यादृशी तादृशी वा भवतु, स तु कृपालु र्भग–हन्अतान् जनान् सत्पथप्रवर्तिन स्संस्कृत्य भवाब्धे स्तां स्तारयत्येव। संसारभोगिसन्दष्टजीवजीवातु र्भक्तिः।

"निभृत मरुन्मनोऽक्षदृढयोगयुजो हृदि य-
न्मुनय उपासते तदरयोऽपि ययुः स्मरणात्।
स्त्रिय उरगेन्द्रभोगभुजदण्ड विषक्तधियो
वय मपि ते समाः समदृशोऽङ्घ्रिसरोजसुधाः"॥ (भाग. 10-87-23)

मुनयः नियमितवायुमनइन्द्रियाः दृढयोगासक्ताः त्वदीयं यत्तत्त्वं प्राप्नुवन्ति स्म, द्वेषपूर्वकस्मरणात् शत्रवोऽपि तत्तत्त्वं प्राप्नुवन्, गोपकान्ताश्च भोगिभोगपरिणाहसुन्दरत्वदीयबाहुसौन्दर्यसमासक्तबुद्धय स्तदेव आपुः। वयं अर्थात् वेदाधिदेवताः भवत्पादारविन्दामृतरूपाः प्रकाशिका भूत्वा तत्तत्त्वमेव भजामः। सर्वत्र त्वं समदृष्टिरसि इति श्लोकसङ्ग्रहार्थः। सर्वविधोऽपि भगवत्स म्बन्धः भगवत्प्राप्तिसम्पादकत्प्राः।

भगवद्विषये चित्तासक्तौ तीव्रतैव प्रधानांशः। सा रागात्मिका वा भवतु, योगात्मिका वाऽस्तु, अपरागात्मिका वा वर्तताम् सार्वदिकसंस्मरणमेव तान् जनान् मोक्षार्हान् वितनुते। भगवतो नन्दकिशोरस्य अद्भुतं चरितं श्रद्धया यदि चिन्तयामः, तदा श्रीकृष्णस्साधारणो मनुजो न भवति, अपि तु "कृष्णस्तु भगवान् स्वयम्" इति निश्चेष्यामः। 'अजायमानो बहुधा विजायते' इति एकोऽप्यनेकात्मा कार्यानुरोधेन मायाशक्त्याऽवतरति। तथाऽपि 'अविकाराय शुद्धाय नित्याय परमात्मने' इत्युक्तदिशा अग्निहोत्र इवाऽतिपवित्रः अविकृत एव विद्योतते देवः। तस्य अवतारा आश्चर्यचर्याश्च स्वप्रयोजनशून्याः जीवोद्धरणदाक्ष्यमेव पिशुनयन्ति। ततोऽयं शुद्धशील इत्यत्र संशयलेशोऽपि मा क्रियताम्।

## ॥ शृङ्गारकलितायाः कवितायाः प्रयोजनम् ॥

भक्तिप्रधानपवित्रपुराणे शृङ्गारवर्णनौचित्यानौचित्यविषये श्रीभागवतादेव समाधानं लभ्यते। जगता मधीशः विदुषां, वेदान्तिनां, योगिनां, श्रोत्रियाणां, नयमार्गानुवर्तिनामेव कृते नाऽवततार। अपि तु, भगवति पूर्णविश्वासवतां कृते - ते नयशालिनः, अध्यात्मविदः, संस्कृतिपूर्णा वा मा भवन्तु नाम - कृष्णोऽवतारं स्वीचकार। वेदान्तिनः साधारणजनदुर्बोधेषु विषयेष्वेव श्रद्धां वहन्तः, न साधारणदुर्ललित चेष्टासु, साहसक्रियासु च श्रद्धालवो भवन्ति। राज्यरक्षाकर्मनिपुणः अर्थशास्त्रे आदरं वहेत्। सुकुमारचेतास्सहृदयः अध्यात्मविद्यायाः नीतिशास्त्राच्च उद्विजते; परन्तु स रसज्ञः मनोज्ञविषयेषु प्रणयप्रधानेषु प्रबन्धेषु अभिरुचिं प्रदर्शयेत्। गुडजिह्विकान्यायेन उपवर्ण्यमानप्रेमरञ्जिते श्रीभागवते पूर्णावतारभूतस्य श्रीकृष्णस्य बालपोगण्डलीलामधुराः भिन्नभिन्नस्वभावानां नानारूपभावावेशवतां वेदान्तिनां अध्यात्मविदां योगिनां धार्मिकाणां भक्तानां वियोगिनां क्रूराणा मक्रूराणां पुंसां स्त्रीणां बालानां वृद्धानाञ्चेति नानाप्रकाराणामपि तत्तदभिरुच्यनुगुणाः अद्भुता श्चारित्रिकसङ्घटनाः निधय इव निक्षिप्ता वर्तन्ते। गोपिकाप्रणयवृत्तान्ताः शृङ्गारानुबद्धा इव दृश्यमाना अपि तथोपदिष्टाः, यथा तासां प्रारम्भदशायां भौतिकानुरागरूपोऽपि प्रणयः दिव्यप्रेमभक्त्यात्मना परिणत इति ज्ञायेत।

एवं गोपिकाप्रेम साधारणकक्ष्यारूढमपि उत्तमकोटिमधिरोहतीति इम मंशं श्रीभागवतादवधार्य महाकविर्जयदेवः गोपीकृष्णप्रणयवृत्तमेव प्रधानप्रतिपाद्यतयोपादाय अत्यद्भुतं गीतगोविन्दाख्यं निस्समाभ्यधिकं दिव्यकाव्यं रसिकजनानां भक्तानाञ्च हृदयेषु अनवधिमानन्दथु माविर्भावयितुं निरमासीत्। सङ्गीतसाहित्योभयरसधुनीपरिप्लुतमिदं काव्यं सकलप्रबन्धलक्षणसम्पन्नं विद्वन्मनोहरं शृङ्गाररसोपचारपुरस्कृतञ्च भूत्वा कृष्णभक्तिरसमयहृदयेषु क्रमशः परमोन्नतभक्तिरसस्रवन्तीः प्रवाह्य, तान् भागवतान् उदात्तभक्तिप्रवणानचीकरत्, करोति च। भक्तहृदयवशीकरणे गीतगोविन्दस्य प्रभावोऽतिमहान्, यच्च जनयितुं प्रबन्धान्तरं न शशाक।

इदं भागवतवचन मनुशील्यताम्-

"अनुग्रहाय भूतानां मानुषं देह माश्रितः।<br>
भजते तादृशीः क्रीडा याः श्रुत्वा तत्परो भवेत्॥" (10-33-37)

"विक्रीडितं व्रजवधूभि रिदञ्च विष्णोः<br>
श्रद्धान्वितोऽनुशृणुया दथ वर्णयेद्यः।<br>
भक्तिं परां भगवति प्रतिलभ्य कामं<br>
हृद्रोग मा श्वपहिनो त्यचिरेण धीरः॥" (10-33-40)

श्रीहरिः निखिलप्राणिकोटीना मनुग्रहाय केवलं मानवीं तनू माशिश्रियेे। तत स्तादृशी अतिविलक्षणाः क्रीडा भेजे, याः श्रुत्वा कृत्स्नो जनोऽपि पारवश्यं विन्दते। व्रजवनिताभिस्सह श्रीहरेर्लीलां श्रद्धाभक्तियुतो यः कोऽपि जनः शृणुया द्वर्णयेद्वा स सर्वोऽपि भगवति अप्राकृतां भक्तिं सम्प्राप्य धीरो भूत्वा अविकृतचित्तः दुर्दमहृदयरोगं कामं दूरेऽपोहति। अस्याऽयं भावः - आरम्भे भौतिकवासनादूषित इव प्रतिलभ्यमानः प्रेमा क्रमशोऽपास्तभौतिकगन्धः पवित्र स्सम्पद्यते। समासादितदिव्यगुणयोगः तादृग्विध एव गोपीप्रणयः।

श्रीरामकृष्ण परमहंसः कृष्णगोपीप्रणयकथां सत्यदवीयसीं नोदैरिरत्। परमच्छान्दसवेदान्तिनो बहव स्तच्छिष्याः गोपीकृष्णप्रणयचरिते नैतिकभ्रंश माकलयन्तो गुरुं तत्रौचित्य मपृच्छन्। तदा तानुद्दिश्य परमहंसः इत्थं समाहिति मभ्यधत्त - "यदि यूयं गोपीवृत्ते श्रद्धां न वोढु मर्हथ तर्हि तद्विस्मरत। परन्तु, कृष्णे यां तीव्रां भक्तिं ता भेजिरे तस्याः शततमी मपि वा कलां यूयं चराचरप्रभौ परमात्मनि अनुभवितुं कुशला यदि भवथ, तर्हि 'यूयं श्रीकृष्णेनाऽतिमात्र मनुगृहीता वय' मिति मन्यध्वम्" इति।

भागवताभिसन्धिरयं भवितुमर्हति — "गोपिकाः स्वात्मशक्त्या खनित्वा अतिविलक्षणां काञ्चन भक्तिस्रोतो वहां निर्ममिरे, तया भक्तिवहिन्या भगवत्सन्निधि मधिगन्तुं कश्चित् न प्रयतेत चेत् सः तादृगादरपवित्रप्रेमपूर्णं भगवन्तं प्राप्तुं न प्रभवे देव" इति।

श्रीभागवताध्ययनेनेदं विज्ञायते यत् सर्वात्मनि कृष्णे गोपिकानां भक्तिरारम्भलघ्वी क्रमशोऽतिमहती ववृधे इति। साधारणस्य परोक्षभक्तस्य आरम्भदशातः पूर्णदशापर्यन्तं क्रमिकदशाः बह्वयः कृच्छ्रसाध्या भवेयुः। तादृशसङ्कटं महाभाग्यभाजां समकालवर्तिनीनां अतएव साक्षादीक्षमाणानां अवताररूपेण कृष्णेन क्रीडन्तीनां नासीत्। तासां साहजिकी वेगवती च प्रणयाभिवृद्धि रजायत। सामान्यतो लोके स्त्रीपुंसम्बन्धिसम्पर्कः विनिपातायैव मार्गं दर्शयेत्। परन्तु अत्र लोकानुग्रहायावतीर्णेन वासुदेवेन सम्बद्धः प्रेमबन्धः पवित्रीकरणालङ्कर्मीणो बभूव। भक्तमन्दारो भगवानपि तत्प्रणयानुगुणमेव स्वदिव्यसङ्कल्पया ता अन्वग्रहीष्ट तथाऽपि। लघुनैव कालेन गोकुलं विहाय मधुरा मभिगच्छता कृष्णेन विप्रयुक्ता गोप्य आसन्। प्रोषितेन कृष्णेन गोपिकाभ्य इत्थं सन्देशः प्रहितः "न विना विप्रलम्भेन शृङ्गारः पुष्टिमश्नुते" इति रीत्या वियोगोऽनुरागं द्रढयति। अचिरेणैव ब्रह्मानन्दानुभवायाऽर्हा भविष्यथ; यदा संयोग वियोगावुभावपि समान मानन्दं जनयिष्यतः" इति। पश्चाद्यदा यातेषु कतिषु च न वत्सरेषु श्यमन्तपञ्चके प्रेयसा सङ्गताः प्रिया गोप्यः विप्रयोग विवृद्धप्रेमाणोऽदृश्यन्त। तस्मिन् समये स ता स्सम्यक् प्राबोधयत्; यतश्च गोप्यः परमात्मन स्तस्य सान्निध्यं सर्वेष्वपि प्रदेशेषु पदार्थेषु चानुभवितुं शेकुः। तादात्विकः तत्सन्देशस्तु एवम् —

"मयि भक्ति र्हि भूताना ममृतत्वाय कल्पते
दिष्ट्या यदासी न्मत्स्नेहो भवतीनां मदापनः॥
अहं हि सर्वभूताना मादि रन्तोऽन्तरं बहिः।
भौतिकानां यथा खं वार्भूर्वायुर्ज्योति रङ्गनाः॥
एवं ह्येतानि भूतानि भूतेष्वात्माऽत्मना ततः।
उभयं मय्यथ परे पश्यताभात मक्षरे"

"अध्यात्मशिक्षया गोप्य एवं कृष्णेन शिक्षिताः॥
तदनुस्मरणध्वस्त जीवकोशा स्तमभ्यगुः॥" (भाग. 10-82-45 to 48)

मद्विषयिणी भक्तिः मोक्षाय कल्पते। युष्माकं मयि जाता या भक्तिः सा अदृष्टवशा न्मत्प्रापिका समपद्यत। पृथिव्यप्तेजोवाय्वाकाशाः भूतपरिणात्मकदेहानां अन्तर्बहिश्च वर्तन्ते। तथैवाऽहं सर्वभूतानां सृष्ट्यन्त कारणंभवामि अन्तर्बहिश्च व्याप्य तिष्ठामि। भूतपरिणामात्मकदेवादिशरीराणि, तेषु स्थित मात्मानञ्च अन्तर्बहिश्च व्याप्य अहं स्थितः। अतः चेतनाचेतनात्मक मुभयं व्याप्य तिष्ठामि। तथाऽपि व्याप्यगतदोषास्पृष्टे मयि सर्वं पश्यत।

एवं कृष्णेन आध्यात्मिकविद्यायां प्रापितशिक्षाः गोपिकाः मनःपूर्वकनिदिध्यासेन ध्वस्तकर्ममूला सानाः भगवन्तं प्रापुः। मुक्ता बभूवु रित्यर्थः।

अतश्चैतदपि ज्ञायते यत् दिव्यमाहात्म्य मजानती मूढभक्तिरियं न भवति। आरम्भकाले सा तथा भायादपि। तथापीय पूर्णं विवेकं विज्ञानञ्चाऽऽतनुते; पूर्णोविवेकश्च भक्ति मेधयति, न कदाऽपि ह्रसयति।

## — गोपिकावस्त्रापहरणलीला —

नदीतीरे वस्त्राणि विसृज्य जलाशये स्नान्तीनां गोपिकानां चेलानि श्रीकृष्णोऽहार्षीदिति भागवते वर्ण्यमाना वस्त्रहरणकथा अधर्म्याचरणरूपा विस्मयानन्दजननी व च भाति। भारत देशे क्वचित् वसनविसर्जनपूर्वकस्नाना चरण मभ्यासे वर्तते। पञ्जाबदेशे स्त्रियः सर्वाण्यमि वस्त्राणि विहाय दिग्वसनाः स्नान्तीति क्वचिल्लिखितं दृश्यते। आर्यावर्ते विद्यमानमिममाचारं विदितवान् श्रीभागवतग्रन्थकर्ता तमाचारं श्रीकृष्णचरितानुबद्ध मवर्णयदिति केचिदाशेरते।

कदाचित् कात्यायनीव्रत माचरन्त्यः गोपाङ्गनाः वसनानि तटे निक्षिप्य स्नातुं सलिलेऽवातरन्। तद्दृष्ट्वा बालकृष्णः झटिति तत्र गत्वा चेलानि चोरयित्वा तटस्थं कदम्बतरु मारुरोह। अशिक्षितेषु स्वतन्त्रेषु दुर्ललितेषु बालकेषु एतादृश्य श्चेष्टा दृश्यन्ते। ये तावत् विशिष्य पश्चाद्वयःपरिणामे महान्तो भविष्यन्ति ते बाल्ये किञ्चिद्दुर्वृत्ताः परिदृश्यन्ते। इदं चरिता दवगम्यते। अनया दृष्टया यदि विमृशामः वस्त्र हरणवृत्तान्तः काल्पनिक एवेति न भायात्। कृष्णकृत मिदं चौर्यकर्म सत्यमेवेति विश्वासो भवति। आशैशवा न्नवनीतस्तेयसिद्धहस्तोऽय मद्य निभृतं वसना न्यचूचुर दिति न किञ्चि दसम्भाव्य मत्र वर्तते। सत्यकथेयम्।

परन्त्वत्र वासुदेवचरिते अधार्मिकत्व बुद्धिः, कामुकत्वशङ्का, (व्रीडादायि) अश्लीलत्वस्फूर्तिश्च भवन्ती कथं समाधीयताम्?

ग्रन्थकर्ताऽत्र सूक्ष्मधर्मं बुबोधयिषुरिवाऽस्ति। आपातरमणीयामिमां कथां द्वारीकृत्य सत्यज्ञापनपूर्वक मन्यत्प्रयोजनं सिषाधयिषति। पुरञ्जनोपाख्यानेन व्याजीकृतेन सूक्ष्म मन्तर्निगूढधर्मं यथा उपादिक्षत्, तथाऽत्रापि चिकीर्षति।

"गोपबालिकाः वसनहरणं विज्ञाय, कण्ठदघ्ने तोये स्थित्वा अङ्गानि गोपायन्त्यः भगवन्तं वसनानि ययाचिरे। 'जलाशया त्तीरमासाद्य याचत, तदा दास्या' मीति प्रत्यूचे आभीरडिम्भः। ताश्च गोप्य मङ्गं दर्शना द्रक्षन्त्यः कराभ्यां, तीरमासाद्य अयाचन्त। 'बाहू उत्क्षिप्य याचध्वम् तदैव चीराणि वितरेय'मिति नन्दनन्दनः प्रत्यब्रवीत्। तदा हस्तेनैकेन गोप्यं पिधाय, अन्येन करेण नमस्कृत्य देहीति प्रार्थयाञ्चक्रिरे कन्या स्ताः। तदा भगवान् "ऐकेन पणिना यो वै प्रणमेद्देव मच्युतम्। तस्य दण्डः करच्छेद इति धर्मविदो विदुः इति भर्त्सयते स्म। मार्गान्तर मपश्यन्त्यो गोपाङ्गनाः चेलचोरं द्वाभ्यां कराभ्यां मूर्ध्न्यञ्जलिं बद्ध्वा नमश्चक्रुः। प्रसन्नो बालगोपालः वासांसि व्यतरत्" — इति भागवती कथा। आन्तर उपदेशः

भक्तेन अहम्ममताभिमानं उज्झित्वा, देहे स्वत्वबुद्धिं विहाय सर्वात्मना निरुपधिः शरणागति रनुष्ठेया। सैव फलेग्रहि र्भवेदिति उपदेशायैव कृष्ण एवं विदधे। अत्र विषये श्रीकृष्णे कामवासना शङ्का न युज्यते। तदात्वेऽयं सप्तवर्षदेशीयः पोगण्डः (बालः) तस्मिन् वयसि तत्र दुर्वृत्तचिन्तनं अनुचित मित्येव न, अपितु पापायाऽपि सम्पद्यते। परमात्मनः शुद्धजीवात्मनश्च मध्ये गोपनं किम्। अन्तर्यामिणो भगवतः अदृश्यं गोप्यं किमस्ति? आवरणं वा कुतः? सर्वान् स्थूलधर्मान् शङ्काभिमानादिकञ्च सन्त्यज्य सर्वात्मना हृदयपूर्वकं शरणवरण मेव युक्तरूपम् — इति बोधने एव ऋषितात्पर्य मिति विज्ञायते।

अपि च कथांशेनाऽनेन एकहस्तनमस्कारः (मतान्तरस्थैः क्रियमाणः) महानर्थनिदानमिति च बोध्यते। ननु कृष्णो गीताचार्यः। भगवतः भक्तोद्दिधीर्षया मेव, व्रतसफलीकरणे एव अभिसन्धिरिति कण्ठत एव कथयति वेदव्यासः। "कृष्णो योगीश्वरेश्वरः...... तत्र गतस्तत्कर्मसिद्धये" इत्यारम्भे एव भाव मिमं सूचयामास। कृष्णो महायोगीति, तासां गोपिकानां कात्यायन्यर्चनं सफलं शुभोदर्कञ्च कर्तुमेव देवकीनन्दनः तत्राऽयासीदिति, वासांसि चाऽचूचुरत्, न तु स्वस्य तुच्छाभिलाषसिद्धये इति च सुस्पष्टमवगम्यते।

भक्तेन सता निर्व्याजसम्पूर्णात्मसमर्पणमेव कर्तव्य मिति उपदेश एव चेलहरणवृत्तान्तसारांश★ः।

## उपकारस्मृतिः

'मधुरेण समापये' दिति अभियुक्तोक्तौ श्रद्धालुना मया अवतारस्य (उपोद्घातस्य) चरमसीम्नि महत्सु अवश्यविधेयं कृतज्ञतानिवेदनकृत्यं विधित्सामि। अस्याः शोधपूर्ण सव्याख्य श्रीभागवतप्रकाशकसंस्थायाः प्रतिष्ठापनं क्री.प. एकाशीत्यधिक नवाशत्युत्तर सहस्रतमे (१९८१) वत्सरे उदारहृदयेन सदसद्विवेकचतुरेण सत्यसङ्कल्पेन आर्षधर्मरक्षादीक्षितेन मूर्तित्रयेण निरवाहि। मूर्तित्रयमिति निर्देशार्हाः विश्वोपाध्यायपरिषदध्यक्षाः श्रीमन्तः डा० एक्किराल कृष्णमाचार्याः, तिरुमलतिरुपतिदेवस्थान तादात्विक कार्यनिर्वहणाधिकृताः ऐ.ए.यस्. उपाधिभाजः श्रीमन्तः पि.वि.आर.के. प्रसादाभिख्याः (७८-८२), जिल्लेळ्ळमूडि मातृश्रीप्राच्यकलाशालायाः तादात्विकाध्यक्षाः श्रीमन्तः डा.पन्नाल राधाकृष्णशर्माणश्च। संस्थासमारम्भका स्त्रय एते कृतज्ञतानिवेदने प्राथम्यं भजन्ते। तैस्तथा प्रतिष्ठापिता इयं श्रीभागवतशोधनसमितिः समेधमाना अद्याप्युज्जीवति, परिष्करण प्रकाशन कृत्यञ्च निर्वहन्ती समिन्धे।

तदा प्रभृति क्रमशः नियुक्ताः ति.ति.दे. कार्यनिर्वहणाधिकारिणः सर्वेऽपि ऐ.ए.यस्. उपाधिभाजः २. श्रीमन्तः जि. कुमारस्वामिरेड्डि महाभागाः (८२ - ८४), ३. श्रीमन्तः यस्. लक्ष्मीनारायण महाशयाः (८४-८७), ४. श्रीमन्तः सि. हेच्. वेङ्कटपतिराजु समभिख्याः (८७ - ९०) ५. श्रीमन्तः यम्.वि.यस्. प्रसोदाभिधानाः (९०-९२) ६. श्रीमन्तः डि.वि.यल्.यन्. मूर्तिमहोदयाः (९२-९५), ७. श्रीमन्तः यन्. रमेशकुमार समभिख्याः ('९५-'९६) - इतीमे श्रद्धापूतामास्थां दधानाः अस्याः संस्थायाः सर्वाङ्गीणसमृद्धये बहु प्रायतन्त।

अद्यतनकार्यनिर्वहणाधिकृताः ज्ञानवयोऽनुभववृद्धाः, ऐ.ए.यस्. बिरुदभूषणाः यम्.के.आर. विनायकसमाख्या अपि संस्थायाः सुष्ठु निर्वहणे श्रद्धानाः ग्रन्थप्रकाशनाय सौविध्यं सम्पादयन्तीति एतेभ्यः, पूर्वोदाहृतेभ्यः

सप्तसंख्याभासमानेभ्योऽधिकृतेभ्यश्च कृतज्ञतापुरस्कृता अञ्जलयः समर्प्यन्ते। तेषा मुपकारं संस्मरन्ती श्रीभागवतपरिष्करणपरिषदियं तेषु सर्वथा सर्वदा च आधमर्ण्यमश्नुवाना कृतज्ञतां हृदयेन धत्ते, अभिधत्ते च। अर्हणीयाः ति.ति. देवस्थान धर्मकर्तृमण्डलीसदस्याः भूतपूर्वा अद्यतनाश्च उपकारस्मरणपूर्वकं कृतज्ञताञ्जलिना समाराध्यन्ते। पूर्वनिर्दिष्टेषु कार्यनिर्वहणाधिकृतेषु अन्यतमाः श्रीमन्तः डि.वि.यल्.न्. मूर्ति, ऐ.ए.यस्. महोदयाः पार्थक्येन पुनरपि कृतज्ञतापूर्वकं स्मरणीया भवन्ति, यत इमे भागवत सम्पादकसंस्थायां बद्धश्रद्धाः वदान्यवतंसानां श्रीमतां शम्भुकुमार कश्लीवाल् नाम्नां सकाशात् लक्षरूप्यकाणि भागवतसंस्थायै आर्थिकसाहाय्य पेण समपीपदन्। अपि च। बहोः कालात् प्रागेव सज्जीकृतस्य दशमस्कन्धप्रथमभागस्य मुद्रणाय अपेक्षितं संविधानकं मङ्क्षु अचीक्लृपंश्च।

किञ्च ये ये महान्तः ग्रन्थपरिष्करणकर्मणि अल्पमनल्पं वा साहाय्यमाचरन्ति स्म, तेभ्यस्सर्वेभ्यः हृदयसम्भृतां कृतज्ञतां निवेदयामि। ग्रन्थसम्पादनविषये इदंसंस्थाकर्मचारिणः भूतपूर्व परिशोधकपण्डिताः श्रीमन्तः के.सि. जयचन्द्रशास्त्रिणः (शिरोमणिः, विद्वान्), उ. वेङ्कटरामय्यनामधेयाः (यम्.ए. शिरोमणिः), आ.वरदराजसमाख्याः (शिरोमणिः, विद्वान्), अद्यतनाः श्रीमान् यस्.बि.यस्. भट्टाचार्यः (शिरोमाणिः, शिक्षाशास्त्री), श्रीमती यस्.पूर्णवल्लीनामधोया (यम्.ए. सुवर्णपदकग्रहीत्री), डा.यस्. दशरथाख्यः (यम्.ए.पिहेच्.डि.) डा.के.राजगोपालन्. (यम्.ए.पिहेच्.डि) नामा च सश्रद्धं तत्तत्कर्तव्यं निरवाक्षुः। तत स्तेष्वपि कृतज्ञता व्याह्रियते।

सन्दर्भेऽस्मिन्, अवश्यमनुष्ठेयं किञ्चित् यदि नाऽऽचरिष्यम् तदा कृतविदहं नाऽभविष्यम्। अतः, श्रीमद्भागवत सम्बन्धीनि दुर्लभान्यनर्घाणि स्वीयानि प्राचीनभागवतप्रकाशनानि प्रदाय अस्मदीयप्रकाशनं सुष्ठुं सुगमञ्च कृतवद्भ्यः उदारहृदयेभ्यः तेभ्यो महद्भ्यः मामिकां कृतज्ञतां निवेदयामि। तत्र सर्वप्रथमतः संस्मरणार्हाः अस्याः संस्थायाः भूतपूर्वनिदेशकाः मातृश्रीप्राच्यकलाशालायाः भूतपूर्वाध्यक्षाः ब्रह्मश्रीमन्तः डा.पन्नाल राधाकृष्णशर्माणः, यत स्तैरतिबहवः नानाव्याख्यासनाथाः दुर्लभा अमूल्या मुद्रितग्रन्थाः मह्यं प्रादायिषत। इत्थं महदुपकृतवत्सु तेषु सर्वदा आधमर्ण्यं वहामि। एवं दाससाहित्यप्रचारसंस्थायाः विशिष्टाधिकारिणः श्रीमन्तः के.अप्पण्णाचार्याः विजयध्वजीयव्याख्यानविशिष्टान् कांश्चन मुद्रितग्रन्थान् प्रदाय उपाकृषत। तेष्वपि कृतज्ञोऽस्मि। श्रीवेङ्कटेश्वरविश्वविद्यालायानुबन्धि प्राच्यविद्यापरिशोधनालयनिदेशकाः श्रीमन्तः डा.यम्.यस्. नारायणमूर्तिसामह्वया अपि अपेक्षितग्रन्थप्रदानेन उपकारं व्यदधुः। अन्ये च केचन विद्वांसः उपयुक्तान् ग्रन्थान् प्रददते स्म। तेषु तेषु च कृतज्ञो वर्ते। एवं य कया चन विधया साहाय्य माचरितवद्भ्यः सर्वेभ्यः सश्रद्धा कृतज्ञता निवेद्यते।

अक्षर संयोजकेषु मुद्रणालयाधिकृतेषु **Om Shakthi Laser Typesetters & Shakti Printers.** कृतवत्सु च कृतज्ञो भवामि। अत्र ग्रन्थे अनवधानात्, नेत्रादीन्द्रियवैकल्यात् अथवा मतिदुर्गतिः, व्युत्पत्तिदौस्थ्यात् कारणान्ताराद्वा परिष्करण दोषा मुद्रणसम्बन्धिनश्चः लब्धपदा भवेयुः। पूज्या लब्धवर्णाः उपलाक्षितानि स्खालित्यानि सूचयन्त्विति प्रार्थ्यन्ते। अनन्तरप्रकाशे तान् भ्रंशान् परिहरिष्यामि।

---

ज.श्रीमत्या टि.यस्. रुक्मिण्याख्यया रचिते जं A Crited Study of the Bhāgavdapurañ समाख्ये गन्थे स्थिता Itenpretation of Vastrāpahanaṇa' रतिदनथीर्षकाम् भागात् गृहीता विषया: संस्कृते आनूदिता। ग्रन्थक त्री सश्राद्धा कृतज्ञता निनेद्यते।

अद्य यावत् श्रीभागवतस्य शोधपूर्णः प्रथमस्कन्धरूपवः प्रथमभागः केवलं (क्री.प.१९८९ वत्सरे) प्राकाश्य मनायि। एतर्हि शोधपूर्णपरिष्करणपात्रीभूतः श्रीभागवतदशमस्कन्धप्रथमभागात्मकः (भागत्रयात्मना विभक्तेषु त्रिषु) श्रीकोशः व्याख्यात्रयविशिष्टः साङ्गोपाङ्गं यथाबुद्धिविभवं परिष्कृत्य मुद्राप्य रसज्ञानां हृदयालूनां भागवतानां करकमलयो रर्प्यते, विबुधव्रजत्रा क्रियते। क्रमशः दशमस्कन्धस्य द्वितीयतृतीयभागौ, अन्ये च स्कन्धाः (२-९,११,१२) सव्याख्याः प्रकाशयिष्यन्ते।

श्रीपदपुरी

1998

विद्वन्नियोज्यः सम्पादकः॥

## LIST OF ABBREVIATIONS

(of the Edition of Srimad Bhagavata Mahapurana being referred to)

1. A. Edited by Sri Krishna Sankara Sastri - contains about 30 commentaries - Printed in Devanagari Script at Ahmedabad, Gujarat.
2. B. Printed in Devanagari Script at Brindavan - contains 9 commentaries.
3. G. Contains text only - Printed at Gita Press, Ghorakhpur - in Devanagari Script.
4. H. Contains Sridhara's Commentary. Edited by Sri Hayagriva Sastry. Printed in Telugu Script at Madras.
5. J. Contains Sridharacharya's Commentary - Edited by Prof. J.L. Sastri - in Devanagari Script.
6. K. Contains the commentary of Sri Veera Raghavacharya Edited by Kavibhushana Sri Kumara Tata Charya printed in Devanagari Script - at Ananda Press, Madras.
7. M. Contains the commentary of Sri Vijaya Dhvaja Thirta - Printed in Devanagari Script - A Madhva Edition.
8. Ma. Contains the commentary of Sri Vijaya Dhwaja Tirtha - printed in Devanagari Script - Another Madhva Edition.
9. T. Contains the commentary of Sri Veera Raghava Charya - printed in Telugu Characters - Published by Sri Sri Tridandi Srimannarayana Ramanuja Jeer Swami.
10. V. Contains the commentary of Sridharacharaya - Printed at Vavilla Press, Madras in Telugu Script.
11. W. Contains the commentary of Sri Veera Raghava Charya - Printed in Telugu character - Published by the Maharaja of Wanaparti Samsthan, Andhra.

## LIST OF ABBREVIATIONS

### Commentaries

1. **श्रीध.** श्रीधरस्वामिविरचिता भावार्थदीपिका
2. **वीर.** श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका
3. **विज.** श्रीविजध्यजतीर्थकृता पदरत्नावली

## Texts cited in commentaries and their Abbreviations

| Abbreviation | Name of the Book | Abbreviation | Name of the Book |
|---|---|---|---|
| अथ शिखा.उ. | अथर्वशिखोपनिषत् | भर.सं. | भरद्वाजसंहिता |
| अम.को. | अमरकोशः | | भागवततन्त्रे |
| अष्टा | अष्टाध्यायी | भाग. | भागवतम् |
| | अहिर्बुध्न्यसंहिता | भ.गी. | भगवद्गीता |
| आगम.प्रा. | आगमप्रामाण्यम् | | भविष्यत्पुराणे |
| | आग्नेये | भारते | भारते आनुशासनिकपर्व |
| ईशा.उ. | ईशावास्योपनिषत् | भारते आरण्य | भारते आरण्यपर्व |
| उणा.सू. | उणादिसूत्राणि | भारते उद्योग | भारते उद्योगपर्व |
| | उत्पलमाला | भारते शान्ति | भारते शान्तिपर्व |
| ऋक्.सं | ऋक् संहिता | मनुस्मृ | मनुस्मृति |
| ऐत.उ. | ऐतरेयोपनिषत् | | महाकौर्मे |
| कठ.उ. | कठोपनिषत् | | माहात्म्ये |
| कौषी.उ. | कौषीतक्युपनिषत् | | |
| | क्रियायोगे | म.ना.उ. | महानारयणोपनिषत् |
| | गारुडे | मुण्ड.उ. | मुण्डकोपनिषत् |
| छान्दो.उ. | छान्दोग्योपनिषत् | मैत्रा.उ. | मैत्रायण्युपनिषत् |
| जित.स्तो | जितन्ता स्तोत्रम् | रमा | रामायणम् |
| | तन्त्रभागवते | | लक्ष्मीतन्त्रे |
| तैत्ति.सं. | तैत्तिरीय संहिता | वर. स्तवः | वरदराजस्तवः |
| तैत्ति.आ. | तैत्तिरीय आरण्यकम् | | वामने |
| तैत्ति.उ. | तैत्तिरीयोपनिषत् | विष्णु ध. | विष्णुधर्मोत्तरपुराणम् |
| निरा.उ. | निरालम्बोपनिषत् | वि.पु. | विष्णुपुराणम् |
| | निरुक्तम् | | विष्वक्सेनसंहिता |
| | पद्मतन्त्रे | वे.नि. | वेदनिघण्टुः |
| | परमसंहिता | वै.को | वैजयन्ती कोशः |
| | पाद्मपुराणम् | | शब्दनिर्णये |
| | | शार्ङ्ग. पद्ध | शार्ङ्गधरपद्धतिः |
| पु.सू. | पुरुषसूक्तम् | श्वेता. उ. | श्वेताश्वतरोपनिषत् |
| | प्रकाशिकायाम् | सुबा. उ. | सुबालोपनिषत् |
| प्रश्न. उ. | प्रश्नोपनिषत् | सुभा. | सुभाषितरत्न भाण्डागारम् |
| बृह.३. | बृहदारण्यकोपनिषत् | सूर्य.उ. | सूर्योपनिषत् |
| | ब्रह्मतर्के | | षाड्गुण्ये |
| | ब्रह्मवैवर्ते | हला.को. | हलायुधकोशः |
| ब्र.सू. | ब्रह्मसूत्राणि | | हेमचन्द्रः |
| | ब्राह्मे | | |

# श्रीमद्भागवत दशमस्कन्धीयानां प्रथमाध्याय प्रभृतीनां अष्टाविंशाध्याय पर्यन्ताना मध्यायानां

## - विषयानुक्रमणी -

### (दशमस्कन्धे पूर्वार्धे)


| अध्यायसंख्या | विषयः |
| --- | --- |
| १. | श्रीकृष्णावतारोपक्रमः - ब्रह्मकर्तृकं पृथिव्या आशासनं - कंसस्य देवकीवधोद्योगात् वसुदेव वचनेन निवृत्तिः षण्णां देवकी पुत्राणां कंसकर्तृको वधश्च। |
| २. | भगवतो देवकी गर्भेऽनुप्रवेशः- तत्र ब्रह्मादिदेव कृतं तदीयं स्तवनं देवकीसान्त्वनञ्च। |
| ३. | श्रीकृष्णप्रादुर्भावः - वसुदेवदेवकीकृता भगवतः स्तुतिः - भगवदादेशेन कंसभीतस्य वसुदेवस्य गोकुलं प्रति स्वपुत्र नयनम् - ततो यशोदासुताया आयननञ्च। |
| ४. | जिघांसोः कंसस्य हस्ता दुन्मुक्ताया देव्या भगवदवतारसूचनम् - कंसानुतापः - तदीयदुर्मन्त्रिणा दुर्मन्त्रणञ्च |
| ५. | गोकुले भगवतो जातकर्मादिमहोत्सवः नन्दस्य मधुरागमनं तत्र नन्दवसुदेव संवादः। |
| ६. | पूतनावधः। |
| ७. | शकटभङ्गः - तृणावर्तवधः - जृम्भमाणस्य भगवतो मुखे यशोदया आकाशादि दर्शनञ्च। |
| ८. | गर्गागमनम् - जातककथनपूर्वकं यशोदा रोहिणी सुतयो र्नामकरणसंस्कारः - यशोदायै भगवत्कर्तृकं स्वमुखे विश्वरूप प्रकटीकरणञ्च। |
| ९. | श्रीकृष्णस्य उलूखले बन्धनम्। |
| १०. | यमलार्जुनोद्धारः |
| ११. | गोपानां गोकुलं परित्यज्य बृन्दावने गमनम् - तत्र श्रीकृष्णद्वारा वत्सासुर बकासुरयो र्वधः। |
| १२. | अघासुरवधः |
| १३. | सबाल वत्सबृन्दे ब्रह्मणाऽपहृते श्रीकृष्णस्य तत्तद्रूपेण आब्दं यथापूर्वं विहरणम् - ब्रह्मणो मोहभङ्गश्च। |
| १४. | ब्रह्मणा कृता भगवतः स्तुतिः - वत्सपालानयनञ्च। |
| १५. | गोचारणं-धेनुकासुर वधः - कालिय विष दूषिताम्बु पानान्मृतानां गवां गोपानञ्च पुन रुज्जीवनम्। |
| १६. | कालिय दमनम् - नागपत्नीकृतं नागकर्तृकञ्च भगवतः स्तवनम् - नागद्वारा ह्रदपरित्यागश्च। |
| १७. | कालियस्य यमुनाह्रदे निवासस्य कारणवर्णनम् ह्रदा न्निर्गतेन श्रीकृष्णेन ब्रजौकसां दावानला द्रक्षणम्। |
| १८. | प्रलम्बासुरवधः। |
| १९. | मुञ्जाटव्यां गवां गोपानाञ्च दावानला द्रक्षणम्। |
| २०. | प्रावृड्वर्णनम् शरद्वर्णनञ्च। |
| २१. | वेणुगीतम् - भगवतो मधुरं वेणुनाद माकर्ण्य गोपीभि स्तद्गुणगानम्। |
| २२. | चीरहरणलीला। |
| २३. | अन्नयाच्ञामिषेण यज्ञपत्नी ष्वनुग्रहः। |
| २४. | इन्द्रमखभङ्गः। |
| २५. | कोपान्मुसलधारावर्षं वर्षतीन्द्रे ब्रजौकसां रक्षणार्थं भगवतो गोवर्धन धारणम् |
| २६. | श्रीकृष्णस्यालौकिकं प्रभावं दृष्ट्वा चकितान् गोपान् प्रति नन्दस्य गर्गोक्तिकथनम्। |
| २७. | विगतमतस्येन्द्रस्य श्रीकृष्ण सन्निधौ क्षमाप्रार्थनम् - कामधेन्विन्द्राभ्यां श्रीकृष्ण स्याभिषेकश्च। |
| २८. | विकालेऽवगाहनात् वरुणदूतेन वरुणालयं नीतस्य नन्दस्य भगवता पुनरानयनम्। |

## श्रीमद्भागवत दशमस्कन्धीयानां प्रथमाध्याय प्रभृतीनां अष्टाविंशांध्याय पर्यन्तानां अध्यायानां

### - अध्यायार्थसङ्ग्रहश्लोका:-

कृष्णावतारचरितश्रवणामृतनिर्वृत:।
उक्तानुवादेनौत्सुक्या द्राजा पृच्छति तत्पुन:॥ १ ॥

तत्र तु प्रथमे कंस स्स्वमृत्युं देवकी सुतात्।
श्रुत्वा भीतोऽवधीत्तस्याष्षड्गर्भानिति वर्ण्यते॥ २ ॥

द्वितीये कंसघाताय देवक्या गर्भगो हरि:।
ब्रह्मादिभि स्स्तुत स्सा च सान्त्वितेति निरूप्यते॥ ३ ॥

तृतीये निजरूपेण सम्भूत स्तु हरि स्स्वयम्।
पितृभ्यां संस्तुतो नीत: पित्रा भीतेन गोकुलम्॥ ४ ॥

चतुर्थे चण्डिकावाक्य माकर्ण्यातिभयाकुल:।
दुर्मन्त्र्यभिहितं मेने कंसो बालादिहिंसनम्॥ ५ ॥

पञ्चमे जातकं नन्द स्सूनो: कृत्वा महोत्सवम्।
गत्वा तु मधुरां प्राप वासुदेवागमोत्सवम्॥ ६ ॥

षष्टे सख्यु र्गिरा नन्दो व्रजन् गच्छन् मृतां पथि।
दृष्ट्वा तु राक्षसीं, तस्या मृत्युं श्रुत्वाऽसविस्मित:॥ ७ ॥

उत्क्षिपन् शकटं व्योम्नि तृणावर्त मधिक्षिपन्।
दर्शयन्विश्व मास्ये च कृष्ण: क्रीडति सप्तमे॥ ८ ॥

अष्टमे नामकर्माऽस्य बालक्रीडाकुतूहले
मृद्भक्षणादियोगे च विश्वरूपं निरूप्यते॥ ९ ॥

विश्वरूपादि बालस्य नियम्याऽऽशङ्किन: पितु:।
नामकृद्गर्भवाक्येन निजं तत्त्व मसूचयत्॥ १० ॥

नवमे पयउत्सिक्ते गत्वा गोप्यथ तत्कृतम्।
विलोक्य भण्डिभङ्गादि कृष्णं दाम्ना बबन्धनम्॥ ११ ॥

तत्तूदराश्रितं विश्वं दृष्ट्वा विस्मितचेतस:
बन्धनद्व्यङ्गुलापूर्त्या पूर्णतां सोऽन्वदर्शयत्॥ १२ ॥

दशमेऽपातय द्राजन्नन्तरा यमलार्जुनौ।
तत्र ताभ्याञ्च देवाभ्यां कृष्ण: स्तुत इतीर्यते॥ १३ ॥

एकादशे समागत्य बृन्दावन मथार्भकै:।
वत्सान्पालयताऽनेन हतौ वत्स बकासुरौ॥ १४ ॥

द्वादशे तु महासर्पवपुर्धर मघसुरम्।
वत्सपालगलं क्रुद्धो गलोऽहन्निति वर्ण्यते॥ १५ ॥

महाबकगलक्रीडा केवलस्य न कौतुकम्॥
इतीवाऽघासुरमुखे ससख: प्राविशद्धरि:॥ १६ ॥

त्रयोदशे हरि र्ब्रह्म वत्सा न्पालांश्च मायया
तदा तत्सर्वरूपोऽब्दं कृष्ण: पूर्वव दाचरत्॥ १७ ॥

चतुर्दशेऽद्भुतं दृष्ट्वाऽपूर्वागन्तुकनिश्चयम्।
अनीश: कर्तु मस्तौषीत्कृष्णं ब्रह्माऽतिमोहित:॥ १८ ॥

तत: पञ्चदशे धेनुपालनं धेनुकार्दनम्।
कालियक्ष्वेलतो गोपरक्षणञ्च निरूप्यते॥ १९ ॥

षोडशेकालियस्योक्तो निग्रहो यमुनाह्रदे।
तत्पत्नीभि: स्तुतेनाऽथ कृष्णेनाऽनुग्रह: पुन:॥ २० ॥

नागं सप्तदशे नागालयं तं निरयासयत्।
बन्धूंश्च सखिन: श्रान्तान् सुप्तां स्तत्र दवा दपात्॥ २१ ॥

अष्टादशे ततो ग्रीष्मे वसन्तगुणलक्षिते
अघातय द्बलेनाऽलं प्रलम्बं लीलया हरि:॥ २१ ॥

ऊनविंशे निविष्टं तु गोपगोकुल मच्युत:।
मुञ्जारणमरण्याग्ने ररक्ष तन्निपानत:॥ २३ ॥

विंशेप्रावृड्ढरच्छोभावर्णनैन वनोचिता:।
प्रावृट्क्रीडा निरूप्यन्ते गोपरामयुजो हरे:॥ २४ ॥

एकविंशे शरद्रम्यबृन्दावनगते हरौ।
तद्वेणुस्वन माकर्ण्य गोपीभि र्गीत मीर्यते॥ २५ ॥

द्वाविंशे गोपकन्यानां वस्त्राहरणलीलया।
वरं दत्वा गत: कृष्णो यज्ञ शाला मितीर्यते॥ २६ ॥

त्रयोविंशे ततो गोपै रन्नयाच्यापदेशत:।
तत्पत्न्यनुग्रहात्कृष्णो वीक्षिता नन्वतापयत्॥ २७ ॥

चतुर्विंशे महेन्द्रस्य मखं व्यावर्त्य हेतुभि:।
कृष्ण: प्रावर्तयामास गोवर्धनमहोत्सवम्॥ २८ ॥

पञ्चविंशेरुषा चक्रे व्रजनाशाय वर्षति।
उद्धृत्य गिरि मासारा दरक्षद्गोकुलं प्रभु:॥ २९ ॥

षड्विंशे विस्मितान्गोपान् कृष्णस्याद्भुतकर्मभि:।
नन्दो गर्गोक्ति माशाङ्क्य तदैश्वर्य मवर्णयत्॥ ३० ॥

सप्तविंशे तदऽऽलक्ष्य कृष्णस्य प्राभवं परम्।
वर्ण्यते सुरभीन्द्राभ्या मभिषेकमहोत्सव:॥ ३१ ॥

अष्टाविंशे ततो नन्दानयनं वरुणालयात्।
वैकुण्ठ दर्शनञ्चाऽपि गोपाना मनुवर्ण्यते॥ ३२ ॥

## श्रीमद्भागवतपाठविधिः

स्नातः शुचिर्भूत्वा प्राणानायम्य त्रिराचम्य च मङ्गलपाठपूर्वकं भगवन्तं प्रणमेत्। तदनु सञ्चितैः षोडशोपचारैर्मानसोपचारैर्वा व्यासं शुकं वासुदेवं श्रीमद्भागवतग्रन्थं च सादरं सविनयं सभक्तिभावं सम्पूजयेत्। ततः पाठारम्भात् प्राक् 'ओं नमो भगवते वासुदेवाय' इति द्वादशाक्षरमन्त्रम्, 'ओं क्लीं कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा' इति गोपालमन्त्रं वाऽष्टोत्तरशतं जपेत्। पश्चादेवं विनियुञ्जीत —

### विनियोगः

ओं अस्य श्रीमद्भागवताख्यस्तोत्रमन्त्रस्य नारद ऋषिः, बृहती छन्दः, श्रीकृष्णः परमात्मा देवता, ब्रह्म बीजम्, भक्तिः शक्तिः, ज्ञानवैराग्ये कीलकम्, मम श्रीमद्भागवत्प्रसादसिद्ध्यर्थं पाठे विनियोगः।

### ऋष्यादिन्यासः

'नारदर्षये नमः' शिरसि। 'बृहतीच्छन्दसे नमः' मुखे। 'श्रीकृष्णपरमात्मदेवतायै नमः' हृदि। 'ब्रह्मबीजाय नमः' गुह्ये। 'भक्तिशक्तये नमः' पादयोः। 'ज्ञानवैराग्यकीलकाय नमः' नाभौ। श्रीमद्भागवत्प्रसादसिद्ध्यर्थकपाठविनियोगाय नमः सर्वाङ्गे। द्वादशाक्षरमन्त्रेण हृदयाद्यङ्गन्यासं करन्यासं च कुर्यात्। अथवाऽधोऽङ्कितरीत्याङ्गन्यासकरन्यासौ विदध्यात् —

### अङ्गन्यासः

ओं क्लां हृदयाय नमः। ओं क्लीं शिरसे स्वाहा। ओं क्लूं शिखायै वषट्। ओं क्लैं कवचाय हुम्। ओं क्लौं नेत्रत्रयाय वौषट्। ओं क्लः अस्त्राय फट्।

### करन्यासः

ओं क्लां अङ्गुष्ठाभ्यां नमः। ओं क्लीं तर्जनीभ्यां नमः। ओं क्लूं मध्यमाभ्यां नमः। ओं क्लैं अनामिकाभ्यां नमः। ओं क्लौं कनिष्ठिकाभ्यां नमः। ओं क्लः करतलकरपृष्ठाभ्यां नमः।

### अथ ध्यानम्

**कस्तूरीतिलकं ललाटफलके वक्षःस्थले कौस्तुभं नासाग्रे नवमौक्तिकं करतले वेणुं करे कङ्कणम्।**
**सर्वाङ्गे हरिचन्दनं च कलयन् कण्ठे च मुक्तावलिं गोपस्त्रीपरिवेष्टितो विजयते गोपालचूडामणिः॥**
**अस्ति स्वस्तरुणीकराग्रविगलत्कल्पप्रसूनाप्लुतं वस्तु प्रस्तुतवेणुनादलहरीनिर्वाणनिर्व्याकुलम्।**
**स्रस्तस्रस्तनिबद्धनीविविलसद्गोपीसहस्रावृतं हस्तन्यस्तनतापवर्गमखिलोदारं किशोराकृति॥**

*इत्येवं ध्यात्वा पाठमारभेत।*

## श्रीमद्भागवतसप्ताहपारायणस्य दैनन्दिनविश्रामस्थलानि निम्नाङ्कितपद्येषु निरूपितानि

**मनुकर्दमसंवादपर्यन्तं प्रथमेऽहनि। भरताख्यानपर्यन्तं द्वितीयेऽहनि वाचयेत्॥**
**तृतीये दिवसे कुर्यात् सप्तमस्कन्धपूरणम्। कृष्णाविर्भावपर्यन्तं चतुर्थे दिवसे वदेत्॥**
**रुक्मिण्युद्वाहपर्यन्तं पञ्चमेऽहनि शस्यते। श्रीहंसाख्यानपर्यन्तं षष्ठेऽहनि वदेत्सुधीः॥**
**सप्तमे तु दिने कुर्यात् पूर्तिं भागवतस्य वै। एवं निर्विघ्नतासिद्धिर्विपर्यय इतोऽन्यथा॥**

# श्रीमद्भागवतमहापुराणम्

ओं नमो भगवते वासुदेवाय

# दशमः स्कन्धः

## पूर्वार्धम्

## प्रथमोऽध्यायः

श्रीकृष्णस्य विविधविचित्रलीलाविशेषवर्णनाऽऽकर्णनाय
परीक्षिन्नरेन्द्रः शुकमहर्षिं पृच्छति

राजोवाच

कथितो वंशविस्तारो भवता सोमसूर्ययोः ।
राज्ञाञ्चोभयवंश्यानां चरितं परमाद्भुतम् ॥ १ ॥

यदोश्च धर्मशीलस्य नितरां मुनिसत्तम !
तत्रांशेनाऽवतीर्णस्य विष्णो र्वीर्याणि शंस नः ॥ २ ॥

अवतीर्य यदो र्वंशे भगवान् भूतभावनः ।
कृतवान् यानि विश्वात्मा तानि नो वद विस्तरात् ॥ ३ ॥

निवृत्ततर्षैरुपगीयमानाद्भवौषधाच्छ्रोत्रमनोभिरामात् ।
क उत्तमश्लोकगुणानुवादात्पुमान् विरज्येत विना[1] ऽपशुघ्नात् ॥ ४ ॥

पितामहा मे समरेऽमरञ्जयैर्देवव्रताद्यातिरथैस्तिमिङ्गिलैः ।
दुरत्ययं कौरवसैन्यसागरं कृत्वाऽतरन् वत्सपदं स्म यत्प्लवाः ॥ ५ ॥

द्रौण्यस्त्रविप्लुष्टमिदं मदङ्गं सन्तानबीजं कुरुपाण्डवानाम् ।
जुगोप कुक्षिङ्गत आत्तचक्रो मातुश्च मे यश्शरणङ्गतायाः ॥ ६ ॥

वीर्याणि तस्याऽखिलदेहभाजामन्तर्बहिः पूरुषकालरूपैः ।
प्रयच्छतो मृत्युमुताऽमृतञ्च[2] मायामनुष्यस्य वदस्व विद्वन् ॥ ७ ॥

---

1. M.° नातिमुग्धात् 2. M ° मनामयञ्च ।

## श्रीधरस्वामिविरचिता भावार्थदीपिका

विश्वसर्गविसर्गादि नवलक्षणलक्षितम् ।
श्रीकृष्णाख्यं परं धाम जगद्धाम नमामि तत् ॥
दशमे दशमं लक्ष्यमाश्रिताश्रयविग्रहम् ।
क्रीडद्यदुकुलाम्भोधौ परानन्दमुदीर्यते ॥
दशमे कृष्णसत्कीर्तिवितानायाऽनुवर्ण्यते ।
धर्मग्लानिनिमित्तस्तु निरोधो दुष्टभूभुजाम् ॥
प्राकृतादिश्चतुर्धा यो निरोधस्स तु वर्णितः ।
तत्तत्प्रसङ्गतस्सृष्टिसंहारादिनिरूपणैः ॥
कृता नवतिरध्याया दशमे कृष्णकीर्तये ।
आद्यैश्चतुर्भिरध्यायै र्ब्रह्मप्रार्थनयाऽवनेः ॥
भारं हर्तुं हरेर्जन्म सप्रसङ्गं निरूप्यते ।
गोकुले मधुरायाञ्च द्वारवत्यां ततः क्रमात् ॥
कृष्णलीला त्रिधा प्रोक्ता तत्तद्भेदैस्त्वनेकधा ।
स[1]पञ्चत्रिंशताऽध्यायैः[1] बृहद्बृन्दावनादिषु[2] ॥
गोकुले वसतो लीला वर्ण्यते परमात्मनः ।
एकेन यमुनावारिण्यक्रूरेण कृता स्तुतिः ॥
एकादशभिराख्याता लीला म[3]धुपुरे हरेः[3] ।
शेषैर्द्वारवतीलीला तन्निर्माणादि वर्ण्यते ॥
एवं नवतिरध्याया दशमे विशदार्थकाः ॥

[4]अत्र प्राकृतादिचतुर्विधलयविवृतिरेवं विविच्य कथ्यते - प्राकृतः नैमित्तिकः आत्यन्तिकः नित्यश्चेति लयश्चतुर्धा। प्रकृतौ तत्कार्यब्रह्माण्डस्य लयः प्राकृतः । ब्रह्मणो निद्रां निमित्तीकृत्य प्रवर्तमानो लोकत्रयप्रलयो नैमित्तिकः । ज्ञानेनाऽविद्यां सकार्यां छित्वा स्वरूपेणावस्थान मात्यन्तिकः । देहस्य प्रतिक्षणमवस्थाभेदेन प्रवर्तमानो नित्य[4]ः ।

तत्र तु प्रथमे कंसः स्वं[5] मृत्युं देवकीसुतात् ।
श्रुत्वा भीतोऽवधीत्तस्या ष्षड्गर्भानिति वर्ण्यते ॥
कृष्णावतारचरित श्रवणामृतनिर्वृतः ।
उक्तानुवादेनौत्सुक्या द्राजा पृच्छति तत्पुनः ॥

**कथितो वंशविस्तार** इत्यादिना[6] ॥ १ ॥
**यदोरिति** । अंशेनेति प्रतीत्यभिप्रायेणोक्तम् ॥ २ ॥

ननूक्तानि [7]कर्माणि 'जातो गतः पितृगृहा द्व्रजमेधितार्थः (भाग. 9-24-66) इत्यादिना । सत्यं, पुनर्विस्तरेण वदेत्याह - **अवतीर्येति** । [8-]भूतानि भावयति पालयतीति तथा[-8] ॥ ३ ॥

अत्र लोके त्रिविधा जनाः मुक्ताः , मुमुक्षवः , विषयिणश्च । तेषां मध्ये अत्र न कस्याप्यलम्प्रत्यय इत्याह **निवृत्ततर्षैरिति**। [9]निवृत्ततर्षैः गततृष्णैः मुक्तैरित्यर्थः[-9] । मुमुक्षूणामयमेव [10]उपादेय इत्याह भवौषधादिति । विषयिणाम[11]पि परमो विषयोऽयमेवेत्याह श्रोत्रमनोभिरामादिति । अपगता शुक् यस्मात्तमात्मानं हन्तीत्यपशु(क्)घ्नः , तस्मात् । पशुघातिन इति वा ॥ ४ ॥

किञ्च अस्मत्कुलदैवतं श्रीकृष्णः । अतस्तत्कथैव नित्यं श्रोतव्येत्याशयेनाऽऽह - **पितामहा** इति । अमरान् जयन्ति ये तैः । देवव्रतो भीष्मः तदाद्यैरतिरथै[12]रेव तिमिङ्गिलैः [13] दुरत्ययम् । वत्सपदमिव अत्यल्पं कृत्वा तुच्छीकृत्य अतरन् स्म । यः श्रीकृष्ण एव प्लवो येषां ते तस्य वीर्याणि वदस्वेति तृतीयश्लोक[14]गतपदेनाऽन्वयः ॥ ५ ॥

न केवलं पाण्डवानेवाऽरक्षत्, इदं मम शरीरमपि यो रक्षितवानित्याह - **द्रौण्यस्त्रविप्लुष्ट** मिति । द्रौणेरश्वत्थाम्नः ब्रह्मास्त्रेण दग्धमिदं मच्छरीरं कुरूणां पाण्डवानाञ्च सन्तानस्य [15]बीजं निदानं [16]मे मातुः कुक्षौ प्रविष्टो यो धृतचक्रो जुगोपेति ॥ ६ ॥

**वीर्याणीति**। आखिलदेहभाजां सर्वप्राणिनाम् अन्तः पुरुषरूपेण बहिः कालरूपैश्च। अंशाभिप्रायेण बहुवचनम्। अमृतं [17]मुक्तिम्। मृत्युं संसारम्। उत अपि। प्रयच्छतो वीर्याणि वदस्व ब्रूहि। अयं भावः - अन्तर्यामिरूपेण अन्तर्दृष्टीनां मुक्तिं, बहिर्दृष्टीनां कालरूपेण मृत्युं [18]संसारं [19]प्रददाति यतः , अतोऽन्तर्दृष्ट्या तद्वीर्याण्येव श्रोतव्यानीति ॥ ७ ॥

---

1- -1 v. पञ्चत्रिंशद्भिरध्यायैः 2. B. सुरदुष्करा 3- -3 B मधुवने कृता । 4- -4 B omits 5. B स्वमृत्युं 6. B इति ॥ १ ॥ 7. B omits कर्माणि 8- -8 J.V omit 9- -9 B.J omit 10. B,J उपाय 11 B,J omit अपि। ★ अत्र व्याख्यातुः द्विविधः पदच्छेदः सम्मत इति भाति - आपशुक्घ्नात् (अपशुग्घ्नात्) इति, पशुघ्नात् इति च । 12. B,J omit एव 13. B,J add तिमिङ्गिलतुल्यैः 14. B,J गतेनाऽ° 15 B,J omit बीजं 16. B,J मम 17. B,J omit मुक्तिम् । 18. B,J omit संसारं 19. B,J omit प्र

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अतिक्रान्तस्कन्धान्ते "जातो गतः पितृगृहाद्व्रजमेधितार्थो हत्वा रिपून् सुतशतानि कृतोरुदारः, उत्पाद्य तेषु पुरुषः क्रतुभिस्समीज आत्मानमात्मनिगमं प्रथमं जनेषु॥" (भाग. 9-24-66) इत्यादि श्लोकद्वयेन सङ्गृह्य प्रदर्शितं कृष्णावतारचरित्रं विस्तरेण शुश्रूषुरतिक्रान्तस्कन्धार्थानुवादपूर्वकं पृच्छति राजा कथित इत्यादिना श्लोकदशकेन । तत्र पूर्वस्कन्धार्थमनुवदति **कथित** इति सार्धेन । सोमसूर्ययोस्तदुभयवंशजातानाञ्च राज्ञां वंशविस्तारः , तेषां परमाद्भुतं चरित्रञ्च कथितम् ॥१॥

हे मुनिसत्तम, नितरां धर्म एव शीलं [1]वृत्तं यस्य तस्य यदोर्वंशविस्तारः कथितः । अधुना तत्र यदोर्वंशे अंशेन बलरामेण सहावतीर्णस्य । यद्वा सङ्कल्परूपज्ञानेन वा, दिव्यविग्रहांशेन वा । अन्यथा "एते चांशकला विष्णोः [2] कृष्णस्तु भगवान् स्वयम्" (भाग. 1-3-28) इति पूर्वोत्तरव्याघातापत्तेः । विष्णोः श्रीकृष्णस्य वीर्याणि वीर्यगुणप्रकारकाणि चरित्राणि, नः शुश्रूषुभ्योऽस्मभ्यं, शंस विस्तरतः कथय ॥ २ ॥

कानि वीर्याणीत्यत्राऽऽह - **अवतीर्येति** । यद्वा, न परव्यूहादिरूपेणावस्थितस्य वीर्याणि, किन्तु, यदोर्वंशेऽवतीर्य **भगवान् यानि वीर्याणि कृतवान् तानि वीर्याणि विस्तरतः नः** अस्मभ्यं, वद शंस । अवतरणप्रभृतीनि स्वर्लोकगमनपर्यन्तानि **वीर्याणि** विस्तरेण **कथयेति** भावः । अत एव पुनरवतीर्येत्युक्तम् । अवतारप्रयोजनं तन्निमित्तञ्च विस्तरेण वदेत्यभिप्रायेण **विशिनष्टि** । **भूतभावनः** भूतानि साधुभूतानि भावयति विभावयति त्रायत इति तथा । विश्वात्मा विश्वस्यान्तरात्मा । **विश्वमात्मा** शरीरं यस्येति वा विश्वात्मा ॥ ३ ॥

ननु विष्णोर्वीर्याणि अभीक्ष्णशः श्रुतान्येव किं पृच्छसीत्यत्राऽऽह - **निवृत्ततर्षै** रिति । 'क उत्तमश्लोकगुणानुवादात्' इत्यस्य अमृतादिति शेषः । उत्तमश्लोकस्य भगवतः गुणानुवादरूपाद् अमृतात् पशुघ्नं विना कः पुमान् विरज्येत? न कोऽपीत्यर्थः । प्रसिद्धामृतवैलक्षण्यं सूचयितुं विशिनष्टि - निवृत्तः तर्षः विषयेषु अनलम्बुद्धिर्येषां तैः, विगतविषयस्पृहै[5] र्योगिभिरुपगीयमानात् । प्रसिद्धन्त्वमृतम् अनिवृत्ततर्षोपगीयमानमित्यर्थः । भवौषधात् भवस्य संसारस्य रोगरूपस्य औषधात् औषधा[4]दिव प्रतीकाररूपात्, प्रसिद्धं तु भववर्धनमिति भावः । श्रोत्रयोर्मनस श्चाभिरामात्, प्रसिद्धन्तु रसनेन्द्रियमात्राभिराममिति भावः । गुणानुवादो गुणकथा पशुं हन्तीति पशुघ्नो गोघ्नः, तं विनेत्यर्थः । यद्वा पशुवत् हन्ति गच्छति व्याप्रियत इति पशुघ्नः, तं विनेत्यर्थः, पशुतुल्यवृत्तिः, केवलमूर्ख इति यावत् । यद्वा, अपशुघ्नादितिछेदः । पशु इति सम्यगर्थकमव्ययम्। नपशु असम्यक् हन्ति गच्छति बुध्यतीति तथा। हन - हिंसागत्योः, गत्यर्थास्सर्वे ज्ञानार्थकाः। सम्य गुपकारमविद्वान् कृतघ्न इति यावत् । उत्तमश्लोककृतोपकाराभिज्ञस्तद्गुणानुवादात् कः पुमान् विरज्येतेत्यर्थः॥ ४॥

कोऽसौ तत्कृतो[5]पकारः, यदभिज्ञानात् तद्गुणानुवादात् न विरज्यते[6] । बहुषु भगवदवतारतच्चरिते[7]षु सत्स्वपि किं विशेषेण कृष्णावतार [8]चरित्रादिकमेव पृच्छसीत्यत्राह - **पितामहा** इति द्वाभ्याम् । अमरञ्जयैः देवानपि जेतुं समर्थैः **भीष्माद्यतिरथरूपैः** तिमिङ्गिलैः हेतुभिः दुःखेनाप्यत्येतुं पारङ्गन्तुमशक्यं कौरवाणां सैन्यमेव सागरस्तम्, यो भगवान् कृष्ण एव प्लवो नौर्येषां ते [9]मम पितामहा युधिष्ठिरादयः, वत्सपदं कृत्वा गोष्पदतुल्यं कृत्वा अतरन् स्म पारं जग्मुः किल। श्लोकद्वयस्थयच्छब्दयोर्वीर्याणि तस्येत्यनेनान्वयः ॥ ५ ॥

**द्रौणीति** । किञ्च, द्रौणेरश्वत्थाम्नोऽस्त्रेण तत्प्रयुक्तब्रह्मशीर्षनामकास्त्रेण विप्लुष्टं दग्धमिदं मदङ्गं मच्छरीरं कुरूणां पाण्डवानाञ्च सन्तानस्य बीजं प्रवर्तकं वंशद्वयेऽपि खस्यैवाऽवशेषितत्वात् तदुभयसन्तानबीजमित्यर्थः । यो जुगोप । कथम्भूतः? शरणं गताया मम मातुरुत्तरायाः कुक्षिं प्रविष्टः । आत्तं धृतं चक्रं सुदर्शनं येन तथाभूतो मत्पितामहप्रभृतीनां [10]म[10]त्पर्यन्तानाम् अनिष्टपरिहारेष्टप्रापणदीक्षितस्य महोपकर्तुर्गुणानुवादात् कृतज्ञः कथमहं विरज्येयमिति भावः ॥ ६ ॥

**वीर्याणीति** । यत एवमतो, हे विद्वन् ! अखिलानां देहभाजाम् अन्तर्बहिः पूरुषकालरूपैः अमृतं मृत्युञ्च **प्रयच्छतः** । क्षेत्रज्ञानां कालावयवानाञ्च [11]बहुत्वाद् बहुवचनम् । क्षेत्रज्ञकालात्मकैः रूपैश्शरीरैः, तत्राऽन्तः पुरुषरूपेण अमृतम् अमरणं स्थितिं प्रयच्छतः, स्थितिहेतोरित्यर्थः । उत अपि च। बहिः कालरूपेण मृत्युं प्रयच्छतः विनाशहेतोरित्यर्थः कृत्स्नजगत्कारणस्येत्यर्थः । **"कारणन्तु ध्येयः"** (अथ.शिख.उ. 3) इति कारणस्यैव वस्तुनो ध्येयत्वश्रवणात्, ध्यानस्य च श्रवणमननादिपूर्वकत्वात् तद्विषयकशुश्रूषा ममाऽस्तीति ज्ञापनायाऽखिलदेहभाजामित्यादि अमृतञ्चेत्यन्तमुक्तम् । तर्हि एवम्भूतस्य **कथं** मनुष्यत्वापत्तिरित्यतो विशिनष्टि । मायामनुष्यस्य सङ्कल्पज्ञानेन मनुष्यस्य, प्रच्छन्नमनुष्यस्य वा तस्य कृष्णस्य वीर्याणि वदस्व प्रकाशय । **"भासनोपसम्भाषा"** (अष्टा० 1-3-47) इत्यादि[12]ना वदेस्तङ् ॥ ७ ॥

1. K,W. omit वृत्तं 2. K प्रकाशकानि 3. B,W °धं 4. B,W °धमिव 5. B °तः उप 6. B ° से । 7. B ° त्रेषु 8. B तच्च° 9. K,W omit मम 10- -10 K, W omit 11. B. बाहुल्यात् 12. B ° दि सूत्रेण

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

नवमस्कन्धान्ते संक्षिप्तं श्रीविष्णुचरितं विस्तरतः श्रोतुं राजा वृत्तमनूद्य वक्तुं प्रार्थयते **'कथितो वंशविस्तार'** इत्यादिना । विद्यया जन्मना चैकलक्षणः सन्तानो वंशः तत्र भवो वंश्यः "व्यासः प्रपञ्चो विस्तारः " (हला०. को. 4-81) इत्यभिधानम् । राज्ञां चरितञ्च कथितम् । कथने निमित्तमाह परमेति ॥ १ ॥

अत्र विशेषमाह - **यदोरिति**। यदोर्ययातिपुत्रस्य वंशो नितरां कथितः धर्मो भगवान् तत्समाधियुक्तस्य। "शील समाधौ" इति धातुः। अस्तु नाम, ततः किमपेक्षितमिति तर्वत्राऽऽह - तत्रेति। यदोर्वंशे वीर्याणि पराक्रमान् ॥२॥

तात्पर्यात् पुनरुक्तमेवाऽऽह - **अवतीर्येति** । यानि भूकण्टकदितिसुतहननादीनि कर्माणि । विश्वात्मा **विश्वव्यापी-**त्यनेन ब्रह्मत्वं ध्वनयति । विस्तरतः न केवलमर्थतः प्रपञ्चनम् अपि तु शब्दतः अल्पबुद्धीनामवगन्तुमशक्यत्वात् । "सच (तु) शब्दस्य विस्तरः " (आम.को. 3- 135, वैज.को. 5-2-3) इत्यभिधानम् ॥ ३ ॥

अतीतस्कन्धे हरिकथाश्रवणेन अलम्बुद्धिर्नाभूत् किम् इति तत्राऽऽह - **निवृत्तेति** । निवृत्ततर्षैः विषयालम्बुद्धिसहितैः भवौषधात् संसाराख्यरोगपरिहारहेतुभूतौषधात्, अतिमुग्धात् अन्यथाज्ञानिनः । पशुघ्नादिति वा पाठः ॥ ४ ॥

माहात्म्यं हरेरनुभवसिद्धं यस्मादतो वक्तव्यमित्याशयेनाऽऽह - **पितामहा** इति । पितामहा अर्जुनादयः अमरान् देवान् जयन्तीति अमरञ्जयास्तैः देवानामिव व्रतम् अप्रजाजननलक्षणं यस्य स भीष्मः, स आद्यो येषां द्रोणादीनां ते तथा त एव अतिरथा रथ्युत्तमास्तैः । तिमिर्नाम महामत्स्यः कायेन दशयोजनप्रमाणमावृत्य स्थितः तमपि गिलति ग्रसत इति तिमिङ्गिलः । खप्रत्ययनिमित्तं मुमागमः । वत्सपदं गोवत्सपदमिव, वत्सपदं लुप्तोपमम् । यः कृष्णः प्लवः उडुपं येषां ते यत्प्लवाः नदीतरणाय निर्मितं वंशाचर्मादिना यत्साधनं स प्लव इति ॥ ५ ॥

इतोऽपि तद्वीर्याणि श्रोतव्यानीत्याऽऽह - **द्रौण्यस्त्रेति** । मातुरुत्तरायाः कुक्षिं गतः प्रविष्टः । इदं प्रत्यक्षञ्चेति भावेन उक्तं मेय इति । मया मेयः ज्ञेयः मम दृग्विषयः ॥ ६ ॥

"भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः " (अष्टा. 1-3-47) इत्यतो वदस्वेत्यात्मनेपदप्रयोगो मद्धितार्थं वक्तव्यमिति सूचनार्थः, शुकस्य वक्तव्यांशज्ञानपाटवप्रदर्शनार्थञ्च । एतदेव प्रकटितमभूत् विद्वन्नित्यनेन । अन्तः पुरुषरूपैः बहिः कालरूपैः अनामयं संसारदुःखनिरासेन सुखं, मृत्युं दुःखानुभवलक्षणम् अन्धं तमः प्रयच्छतो ददतः । बहुरूपत्वाद् बहुवचनम्। पलायन्त इति शेषः ॥७॥

**रोहिण्यास्तनयः प्रोक्तो रामस्सङ्कर्षणस्त्वया ।**
**देवक्या गर्भसम्बन्धः कुतो देहान्तरं विना ॥ ८ ॥**

**कस्मान्मुकुन्दो भगवान् पितृगेहाद् व्रजं गतः ।**
**क्व वासं ज्ञातिभिस्सा[1]कम् [2]अकरोत्सात्वतां पतिः ॥ ९ ॥**

**व्रजे वसन् किमकरोन्मधुपुर्यां च केशवः ।**
**भ्रातरं चावधीत्कंसं मातुरद्धाऽतदर्हणम् ॥ १० ॥**

**देहं मानुषमाश्रित्य कति वर्षाणि वृष्णिभिः ।**
**यदुपुर्यां सहाऽवात्सीत् पत्न्यः कत्यभवन् [3]विभोः ॥ ११ ॥**

**एतदन्यच्च सर्वं मे मुने कृष्णविचेष्टितम् ।**
**वक्तुमर्हसि सर्वज्ञ श्रद्दधानाय विस्तृतम् ॥ १२ ॥**

**नैषातिदुस्सहा क्षुन्मां त्यक्तोद मपि बाधते ।**
**पिबन्तं त्वन्मुखाम्भो[4]जाच्च्युतं हरिकथामृतम् ॥ १३ ॥**

---

1 B,G,M ° स्सार्धं 2. B, G, K, M, कृतवान् सा ° 3. B,G, प्रभोः ; W विभो। 4 B,G, °जच्युत, M ° जस्रुत

**श्रीध०** **रोहिण्या** इति । ननु "बलं गदं सारणञ्च दुर्मदं विपुलं ध्रुवम् । "वसुदेवस्तु रोहिण्यां कृतादीनुदपादयत्" (भाग. 9 - 24 - 46) इति रोहिण्यास्तनयो [1]बलः प्रोक्तः । "वसुदेवस्तु देवक्यामष्टपुत्रानजीजनत् । कीर्तिमन्तं सुषेणञ्च भद्रसेनमुदारधीः । मृदुं [2]सम्मर्दनं भद्रं सङ्कर्षणमहीश्वरम् । अष्टमस्तु तयोरासीत्स्वयमेव हरिः किल" (भाग. 9-24-53) इति। पुनर्देवक्या गर्भसम्बन्धस्तस्यैवोक्तः, स कुतो घटते इत्याक्षेपः ॥ ८ ॥

**कस्मादिति** । भगवतः कंसभय[3]शङ्कया असम्भवादित्यर्थ[3]ः ॥ ९ ॥

**व्रजे** इति । अद्धा साक्षात् । मातुर्भ्रातरं कंसं तस्मात् [4]अतदर्हण[4] वधानर्हं कस्मादवधीत् ॥ १०,११,१२ ॥

ननु क्षुत्तृड्भ्यां पीडितस्य तव कुतः श्रवणावकाशः? तत्राऽऽह - **नेति** । त्यक्तोदकस्याऽपि [5]मे जीवितं हरिकथामृतपाननिमित्तम् । तदुपरमे [6]सत्येव जीवन[6] न स्यादित्यर्थः ॥ १३ ॥

---

1. B, J रामः 2. B,J सन्तर्दनं 3- -3 V शङ्कासम्भवादित्यर्थः 4- -4 B,J omit 5 B, J मम 6- -6 B,J सद्य एव जीवितं

**वीर०** अंशेनावतीर्णस्य विष्णोरित्यंशचरित्रमपि कथनीयं[1] सूचितम् । तदेव व्यञ्जयन् पृच्छति - **रोहिण्या** इति। सङ्कर्षणः भगवदंशसम्भूतसङ्कर्षणावताररूपो रामो[2] **बलरामः रोहिण्यास्तनयः प्रोक्तः । तथा तस्य देवक्या गर्भसन्दर्भश्च** प्रोक्तः[3] । त्वया नवमे इति शेषः । तदेतदुभयं देहान्तरं विनैव **एकेन देहेनैव तस्य कुतः** कस्माद्धेतोरभवत् ॥ ८॥

"कृतवान् यानि विश्वात्मा तानि नो वद" (भाग 10-1-3) इति सामान्यतः पृष्टानि वीर्याणि विशेषतः पृच्छति - **कस्मादिति चतुर्भिः** । भगवान् मुकुन्दः कस्माद्धेतोः पितुर्वसुदेवस्य गेहाद् व्रजं नन्दव्रजं[4] गतः ? सात्त्वतां भक्तानां पतिर्भगवान् ज्ञातिभिः यदुभिस्सह क्व वासं[5] कृतवान् ? ॥ ९ ॥

व्रजे मधुपुर्यां च वसन् किं किमकरोत्? मातुर्देवक्याः अद्धा साक्षात् भ्रातरम् अत एव अतदर्हणं वधानर्हं कंसं कुतोऽवधीत् ? ॥ १० ॥

मानुषं मानुषवदवभासमानं देहं दिव्यमङ्गलविग्रहम् आश्रित्य परिगृह्य वृष्णिभिर्यदुभिस्सह यदुपुर्यां द्वारकायां कति वर्षाण्यवात्सीत् उषितवान्? तस्य पत्न्य: कति बभूवु:? हे विभो! ॥ ११ ॥

एतत्पृष्टमन्यदपृष्टञ्च यद्यत्पर्वं कृष्णस्य[6] विचेष्टितं हे मुने! श्रद्दधानाय श्रवणोपयुक्तत्वरान्विताय मे शुश्रूषवे मह्यं हे सर्वज्ञ! साकल्येन कृष्णचेष्टिताभिज्ञ! विस्तृतं यथा तथा वक्तुमर्हसि ॥ १२ ॥

प्रायोपविष्टस्य अशनायापिपासाभ्यामर्दितस्य[7] कथं श्रवणोपयुक्तचित्त समाधानसम्भव इत्यत्राऽऽह - **नैषेति** । त्यक्तम् उदपानं येन तथाभूतमपि मां दुस्सहा सोढुमशक्या एषा क्षुत् न बाधते । तत्र हेतुं वदन्नात्यानं विशिनष्टि । त्वन्मुखाम्भोजाच्च्युतं गलितं हरिकथैवामृतं तत्पिबन्तं मामित्यन्वय: ॥ १३ ॥

---

1. B adds इति 2. K,W omit रामो 3. B स्मृत: 4. K,W omit नन्दव्रजं 5. B निवासं 6. K,W कृष्णवि° 7. B adds तव

**विज०** एकस्य द्वयोर्योनिसम्बन्धानुपपत्तिः प्रश्नबीजम् ॥ ८,९ ॥

मधुपुर्याञ्च वसन् किं कर्म कृतवान्? मातुर्भ्रातरं मातुलमित्यर्थः । अतदर्हणं तस्य वधस्य अयोग्यमित्यर्थः ॥ १०, ११ ॥

मे मह्यम् ॥ १२ ॥

क्षुधितस्य तव दौर्बल्यान्मनो नेच्छति श्रोतुमिति तत्राऽऽह - **नैषेति**। त्यक्तोदम्, **आचमनजलमन्तरेणेति** शेषः । ननु दिव्यमन्त्रौषधादिकमन्तरेण क्षुधादिकं मानुषदेहं बाधत एव; अतः **कथं न बाधत इति तत्राऽऽह** पिबन्तमिति । स्रुतं गलितम् ॥ १३ ॥

श्रीसूत उवाच

[1]एवं निशाम्य भृगुनन्दनसाधुवादं वैयासकिस्स भगवानथ विष्णुरातम् ।
प्रत्यर्च्य कृष्णचरितं कलिकल्मष व्याहर्तुमारभत भागवतप्रधानः ॥ १४ ॥

श्रीभगवदवतारकारण प्रवचनघट्टः

श्रीशुक उवाच

सम्यग्व्यवसिता बुद्धि स्तव राजर्षिसत्तम !
वासुदेवकथायां ते यज्जाता नैष्ठिकी [2]रतिः ॥ १५ ॥
वासुदेवकथाप्रश्नः पुरुषांस्त्रीन् पुनाति हि ।
वक्तारं पृच्छकं श्रोतृंस्तत्पादसलिलं यथा ॥ १६ ॥
भूमि र्दृप्तनृपव्याजदैत्यानीकशतायुतैः ।
आक्रान्ता भूरिभारेण ब्रह्माणं शरणं ययौ ॥ १७ ॥
गौर्भूत्वाऽश्रुमुखी खिन्ना [3]रुदन्ती करुणं विभोः ।
उपस्थितान्तिके तस्मै व्यसनं [4]समवोचत ॥ १८ ॥
ब्रह्मा तदुपधार्याऽथ सह देवैस्तया सह ।
जगाम सत्रि[5]नयनस्तीरं क्षीरपयोनिधेः ॥ १९ ॥

---

1. W एतन्नि° 2. K,W मतिः 3. B,G क्रन्दन्ती, K. रुदती 4. B.G. स्व° 5. V. °ण°

**श्रीध० एव मिति** । एवं साधुवादं समीचीन[1]प्रश्नम् । भागवतप्रधानः भागवतेषु श्रेष्ठः ॥ १४ ॥

**सम्यगिति** । व्यवसिता [2]कृतनिश्चया यत् यतो बुद्धेः ॥ १५, १६ ॥

तत्र तावत् प्रथमं भगवदवतारकारणमाह - **भूमिरिति** नवभिः श्लोकैः । दृप्तनृपव्याजा ये दैत्यास्तेषामनीकशतानामयुतैः यो भूरिभारः , तेनाऽऽक्रान्ता ॥ १७ ॥

**गौरिति** । विभोरन्तिके उपस्थिता सती ॥ १८, १९ ॥

1. B,J °नं 2. V. निश्चिता 3. B, J.° रित्यादि

**वीर०** इत्थमापृष्टो भगवान् शुकः श्रीकृष्णचरित्रं विस्तरतः कथयितुमारेभे इत्याह सूतः - **एवमिति** । हे भृगुनन्दन! शौनक, एवमित्थं साधुवादं साधोः परीक्षितो वादमुक्तिं प्रश्नरूपं निशम्य स भगवान् वैयासकिश्शुकः , ततो विष्णुरातं परीक्षितं प्रत्यर्च्य प्रत्यभिनन्द्य, कलिकल्मषघ्नं शृण्वतां वदतां च कलिकालकृतपापघ्नं कृष्णस्य भगवतश्चरित्रं व्याहर्तुं विस्तरतो वक्तुं दशमैकादशस्कन्धद्वयेन वक्तुमिति यावत् । आरभत प्रारेभे। युक्त [1] चैतदित्यभिप्रायेण विशिनष्टि । भागवतप्रधानः भागवतं भगवत्स्वरूपगुणाद्यनुसन्धानमेव प्रधानं मुख्यं प्रयोजनं यस्य तथाभूतः ॥ १४ ॥

तावत्प्रत्यर्च्याऽऽह - **सम्यगिति** द्वाभ्याम् । हे राजर्षिसत्तम ! तव बुद्धिस्सम्यग् व्यवसिता निश्चिता हेयोपादेयविवेकयुक्तेत्यर्थः । कुत एतत् ज्ञातव्यमित्यत्राऽऽह - यत् यस्मात् वासुदेवकथायामेव तव मतिर्नैष्ठिकी निष्ठायुक्ता वासुदेवकथाश्रवण एव परिनिष्ठितेत्यर्थः ॥ १५ ॥

किं तच्छ्रवणनिष्ठामात्रेणेत्यत्राऽऽह - **वासुदेवेति** । वासुदेव कथाप्रश्न एव, किं पुनस्तच्छ्रवणादिकमित्यभिप्रायेण प्रश्न इत्युक्तम् । यद्वा प्रश्नप्रतिवचनतच्छ्रवणानां त्रयाणामुपलक्षणार्थः प्रश्नशब्दः । त्रीन् पुरुषान् पुनाति, कान्[2]? वक्तारं प्रतिवक्तारं, पृच्छकं पृच्छन्तं श्रोतॄंश्चेति त्रीन् वक्ता प्रतिवक्ता च एकैकेन माव्यमित्यभिप्रायेण वक्तारं पृच्छकञ्चेति एकवचन निर्देशः । श्रोतृभिस्तु बहुभिरपीति बहुवचननिर्देशः । यथा तस्य वासुदेवस्य पादसलिलं गाङ्गमम्भः पुनाति तद्वदिति पवित्रीकरणमात्रे दृष्टान्तः , नतु पुरुषत्रयपवित्रीकरणे, त्रयाणां तत्राऽसम्भवात् । यद्वा यथा गाङ्गं सलिमुपस्पृशन्तं तस्य[3] पितरं पितामहञ्च पुनाति तद्वदिति दृष्टान्ताभिप्रायः । यथा तत्पादसलिलमुपस्पृशन्तमेकमेव पुरुषं पुनाति न तथा तत्कथाप्रश्नः पुनाति, अपि तु त्रीनिति व्यतिरेकदृष्टान्तो वाऽभिप्रेतः ॥ १६ ॥

तमित्थं प्रत्यर्च्य अवतारप्रभृतीनि वीर्याणि विस्तरतो विवक्षुः तावदवतारनिमित्तभूतां भूप्रार्थनामुपपादयति **भूमि** रित्यादिभिः चतुर्भिः । दृप्तः गर्विताः नृपव्याजाः नृपवदवभासमानाः ये दैत्यास्तेषामनीकानां सैन्यानां[4] शतानामयुतैः भूरिभारेण तद्रूपनिरवधिकभारेण आक्रान्ता पीडिता भूमिः ब्रह्माणं चतुर्मुखं शरणं ययौ ॥ १७ ॥

तदेव प्रपञ्चयति । गौर्भूत्वा गोरूपं बिभ्राणा खिन्ना दीना अश्रूणि मुखे यस्यास्तथाभूता करुणं यथा तथा रुदती[5] विभोः ब्रह्मणोऽन्तिके समीपे उपस्थिता स्तुवती[6] व्यसनं स्वदुःखं तस्मै ब्रह्मणे सम्यगवोचत विज्ञापयामास ॥१८॥

ब्रह्मा तद्व्यसनमुपधार्य ज्ञात्वा अथ देवगणैस्तया भूम्या सह सत्रिनयनस्सरुद्रः क्षीरसागरस्य तीरं जगाम ॥ १९ ॥

1. K adds इति 2. K,W, omit कान् 3. तत्पि° 4. K,W omit सैन्यानां 5. B, W रुदन्ती 6. B,W स्तुवन्ती

**विज०** सूतः इति शौनकं प्रत्याह - सूत इति । हे भृगुनन्दन! शौनक! प्रत्यर्च्य प्रतिसम्भाव्य, राजानमिति शेषः ॥ १४ ॥

कीदृशी प्रत्यर्चेति तामाह - **सम्यग् व्यवसितेति** । नैष्ठिकी श्रीनारायणोत्कर्षसम्बन्धिनी । "**निष्ठोत्कर्षे व्यवस्थायाम्**" (वैज. को. 6.2.21) इति यादवः । निश्चलतया स्थितिर्निष्ठा तद्वतीति वा ॥ १५ ॥

न केवलं हरिकथाप्रश्नः प्रष्टारं पुनाति, किन्तु वक्तारमपीत्याह - **वासुदेवेति** । तत्पादसलिलं भागीरथी शालग्रामतीर्थं वा। "गङ्गा गङ्गेति यो ब्रूयात्" (विष्णु० पु० 2-8-123) इत्यादेः ॥ १६ ॥

एतदन्यच्चेत्येतत् यदन्यदिति तदिदमिति ध्वनयन् कथामादित उपक्रमते - **भूमिरित्यादिना** । शतायुतैरित्यनेनास ङ्ख्यायातत्वं सूचयति । भूरिभारेण पीडितेति शेषः ॥ १७ ॥

यथा करुणं भवति तथा रुदन्ती, व्यसनं विविधनिरसनम् ॥ १८, १९ ॥

**तत्र गत्वा जगन्नाथं देवदेवं[1] वृषाकपिम् ।**
**पूर्णं[2] पुरुषसूक्तेन ह्युपतस्थे[3] समाहितः ॥ २० ॥**
**गिरं समाधौ गगने समीरितां निशम्य वेधास्त्रिदशानुवाच ह[4] ।**
**गां पौरुषीं मे शृणुताऽमराः पुन र्विधीयतामाशु तथैव मा चिरम् ॥ २१ ॥**
**पुरैव पुंसाऽवधृतो धराज्वरो भवद्भिरंशै र्यदुषूपजन्यताम् ।**
**स यावदुर्व्या भरमीश्वरेश्वरः स्वकालशक्त्या क्षपयंश्चरेद्भुवि ॥ २२ ॥**
**वसुदेवगृहे साक्षाद् भगवान् पुरुषः परः ।**
**जनिष्यते तत्पूजार्थं[5] सम्भवन्तु[6] सुरस्त्रियः ॥ २३ ॥**
**★ ऋषयोऽपि तदादेशात् कल्प्यन्तां पशुरूपिणः ।**
**पयोदानमुखेनापि विष्णुं तर्पयितुं सुराः ॥**
**वासुदेवकलाऽनन्तस्सहस्रवदन स्स्वराट् ।**
**अग्रजो[7] भविता देवो हरेः प्रियचिकीर्षया ॥ २४ ॥**
**विष्णोर्माया[8] भगवती यया सम्मोहितं जगत् ।**
**आदिष्टा प्रभुणांऽशेन कार्यार्थे सम्भविष्यति ॥ २५ ॥**

---

1. V. वासुदेवं 2. B,G,K,M,W पुरुषं 3. B,G,M उप 4. K,W omit ह 5. B,G,M, तत्प्रियार्थं 6. K,W ° वन्त्वमर

* This extra verse is commented on by Viraraghava 7. B,G,M ° तो 8. M. योगमाया

**श्रीध०** तत्रेति । वृषान् देहान् जीवरूपेण प्रविश्य आकम्पयतीति वृषाकपिः ॥ २० ॥

**गिरमिति** । पौरुषीं पुरुषस्य भगवतः [2-]इयं पौरुषी तां[-2] गां वाचं, मे मत्तः आशु शृणुत । मा चिरम् अविलम्बितं, तथैव विधीयताश्चेति ॥ २१ ॥

**पुरेति**। विज्ञापनात् पुरैव पुंसा ईश्वरेण [3]धरायाः ज्वरः तापः। [4-]अवधृतो अवधारितः[-4] ॥ २२,२३,२४ ॥

**विष्णोरिति** । देवकीगर्भसङ्कर्षणयशोदामोहनादिकार्यर्थे यशोदायां सम्भविष्यति ॥ २५ ॥

---

1- -1 B, J omit 2- -2 V omits 3. B,J omit धरायाः 4- -4 B,J omit

**वीर०** तत्र तीरे गत्वा समाहितचित्तो जगन्नाथं परमपुरुषं वृषाकपिं श्रीमहाविष्णुं पुरुषसूक्तेनोपतस्थे तुष्टाव स्तुतिपूर्वकं निदध्यावित्यर्थ ॥ २० ॥

तथा गगने समीरितां गिरम् अशरीरां वाणीं समाधौ निशम्य वेधाः ब्रह्मा, त्रिदशान् [1]देवान् प्रत्यवोचत । तेदेवाह - **गामित्यादिभिः** सार्धैः पञ्चभिः । हे अमराः! समाधौ मया श्रुतां पौरुषीं परमपुरुषसम्बन्धिनीं गां गिरं मे मत्तः कथयतः शृणुत, यथा ईश्वरेणा[2]ऽऽदिष्टं [3]तथैव भवद्भिर्विधीयतां क्रियतां चिरं विलम्बं मा कार्ष्ट ॥ २१ ॥

का नाम गौरित्यत्राऽऽह - **पुरैवेति**। पुरा भवद्भिर्ज्ञापितेः पूर्वमेव। यद्वा, पुरैव स्वावतारात् पूर्वमेवेत्यर्थः। पुंसा ईश्वरेण धराज्वरो भूक्लेशः अवधृतः विज्ञातः । भवद्भिः यदुष्वंशैः उपजन्यताम् उत्पद्यताम्। जीवानामंशेनोत्पत्तिर्नाम धर्मभूतज्ञानेन जीवान्तराधिष्ठातृत्वं, स्वरूपस्याणुत्वेन अनेकदेहवृत्त्यसम्भवात् । कदा अस्माभिरुत्पत्तव्यमित्यत्राऽऽह - सः ईश्वराणामस्माकमपि ईश्वरो भगवान् स्वसम्बन्धिन्या कालाख्यया शक्त्या कार्योपयुक्तापृथक्सिद्धविशेषणभूतया तन्वा उर्व्या भूमेर्भरं क्षपयन्, निरसितुमिति भावः । भुवि यावच्चरेत् अवतरेत् ततः पूर्वमेव जन्यतामित्यर्थः ॥ २२ ॥

तथा वसुदेवस्य गृहे, भगवान् पूर्णषाड्गुण्यः प्रकृतिपुरुषविलक्षणः परमपुरुषः साक्षाज्जनिष्यते अवतरिष्यति। न कपिलादिवज्जीवान्तराधिष्ठातृत्वेनावतरिष्यति; किन्तु अद्वारकमेवेत्यभिप्रायेण साक्षादित्युक्तम् । तस्य जनिष्यमाणस्य परमपुरुषस्य पूजार्थं परिचर्यार्थं क्रीडार्थमिति यावत् । अमराणां स्त्रियोऽपि सम्भवन्तु स्वांशैरुत्पद्यन्ताम् ॥ २३ ॥

तथा ऋषयोऽपि तस्य भगवत आदेशादनुशासनात् पशुरूपिणः कल्प्यन्तां गोरूपिणस्सम्भवन्तु । किमर्थं, तत्राह - हे सुराः पयोदानमुखेन क्षीरप्रदोहनद्वाराऽपि विष्णुं तर्पयितुं तपआदिभिस्तर्पयन्त्येव, अधुना पयोदानमुखेनाऽपि तर्पयितुं गोरूपिणः कल्प्यन्तामित्यपिशब्दाभिप्रायः । तथायो वसुदेवस्य कला अंशः । कोऽसौ ? यः अनन्तः सहस्रमुखः स्वराड् कर्मवश्यः सोऽपि हरेः प्रियं कर्तु मिच्छया अग्रजो भविता तस्य अग्रजो भविष्यतीत्यर्थः ॥ २४ ॥

तथा विष्णो र्या माया, सा का? यया मायया इदं जगत् चेतनवर्गः सम्मोहितं, साऽपि भगवती [4-]श्रीभगवत्परतन्त्रा अन्यैः[-4] पूज्या मायाधिष्ठात्री देवता, प्रभुणा नियन्त्रा भगवता आदिष्टा [5-]आज्ञापिता[-5]सती तस्य कार्यार्थे प्रयोजनार्थमंशेन सम्भविष्यति जनिष्यते ॥ २५ ॥

---

1. B सुरान् 2. K,W °णातिदिष्टं 3. K,W omit तथैव 4- -4 K,W omit 5- -5 K,W omit

**विज०** जगन्नाथत्वं राजादेरप्यस्तीति देवदेवमिति इन्द्रादिव्यावृत्त्यर्थम् । वृषाकपिम् अभीष्टदानादानन्दपानाच्च वृतषड्गुणत्वात् अकपेर्दुःखपोषणाच्च वृषाकपिस्तम् । नीरूपस्य हरेरिन्द्रियविजयत्वं कथमित्यतः पुरुषमिति। "तस्येदमेव शिरः " (तैत्ति. उ. 2-1-1) इत्यादेः । उपतस्थे मन्त्रवचनपूर्वक मुपासनां कृतवानिति। "उपान्मन्त्रकरणे" (अष्टा. 1-3-25) इत्यात्मनेपदम्। कोऽयं मन्त्रः, येन धात्वर्थः समर्थितः स्यादित्यतः पुरुषसूक्तेनेति ॥ २० ॥

समाधाविति तादर्थ्ये सप्तमी, समाध्यर्थं देवकार्यसमर्थनार्थं समीरितां गिरम् "अत्यर्थमिति गीर्वाणी वाचि हि सम्प्रतिष्ठितम्" इति श्रुतेः। तां स्तुतिगिरं संस्मृत्य गुणध्यानसमवस्थायां वा कथितम्। "समाधिर्ध्यानसन्धानप्रतिज्ञासु समर्थने" (वैज. को. 7-1-81) इत्यभिधानादित्यर्थः। पौरुषीं पुरुषेणोक्तां गमयति अवगवमयति ज्ञापयत्यर्थमिति गौर्वाक्। "अथ कस्माद्गौरिति गच्छति" (निरुक्तम्) । इति निरुक्तकारनिर्वचनमपि वक्तुः श्रोतुः कर्णान्तरगमनाद्युक्तम् ॥ २१ ॥

धराज्वरः भूमेस्सन्तापः 'ज्वर - सन्तापे' इति धातुः। न केवलं जननमेव पूर्यते तावन्तं कालमवस्थानञ्चापेक्षितमित्याह स यावदिति। स्वकालशक्त्या स्वरूपभूतोपसंहारकालाख्यशक्त्या ॥ २२ ॥

न केवलं देवानामुर्व्यामवतारः , तदङ्गनानामपीत्याह - **वसुदेवेति** ॥ २३ ॥

हरेरवताराविनाभूतस्य शेषावतारस्य प्रकारमाह - **वासुदेवेति**। वासुदेवकलानन्तः इत्येकं[2] पदम् । वासुदेवस्य कलयासितकेशांशेन युक्तः शेषः स्वेन हरिणा राजत इति स्वराट् । स्वस्य स्वतन्त्रस्य हरेरधस्तच्छयनीयत्वेन राजत इति वा । स्वमात्मानं सनकादिभ्यो राजयति प्रकाशयतीति वा हरेरग्रज ॥ २४ ॥

देवकार्यार्थं सहायान्तरं, वक्ति—योगमायेति । योगमाया दुर्गा ॥ २५ ॥

---

1. Ma नि 2. B °स्ता °

**श्रीशुक उवाच**

**इत्यादिश्याऽमरगणान् प्रजापतिपतिर्विभुः ।**
**आश्वास्य च महीं गीर्भिः स्वधाम परमं ययौ ॥ २६ ॥**

**शूरसेनो यदुपतिर्मधुरा[1]मावसत्पुरीम्[2]।**
**माधुरान्[3] शूरसेनांश्च[4] विषयान् बुभुजे पुरा[5] ॥ २७ ॥**

**राजधानी ततस्साऽभूत् सर्वयादवभूभुजाम्।**
**मधुरा[6] भगवान् यत्र नित्यं सन्निहितो हरिः ॥ २८ ॥**

**तस्यां तु कर्हिचिच्छौरिर्वसुदेवः कृतोद्वहः ।**
**देवक्या सूर्यया[7] सार्धं प्रयाणे रथमारुहत् ॥ २९ ॥**

**उग्रसेनसुतः कंसः [8-]भगिन्याः प्रीतिमावहन्[-8]।**
**रश्मीन् हयानां जगृहे[9] रौक्मै रथशतै र्वृतः ॥ ३० ॥**

चतुश्शतं पारिबर्हं गजानां हेममालिनाम्।
अश्वानामयुतं[10] सार्धं रथानां च त्रिषट्शतम्॥ ३१॥

दासीनां सुकुमारीणां द्वे शते समलङ्कृते।
दुहित्रे देवकः प्रादाद् याने[11] दुहितृवत्सलः॥ ३२॥

शङ्ख[12]तूर्य[13]मृदङ्गानि नेदुर्दुन्दुभयस्समम्।
प्रयाणोपक्रमे तात[14] वरवध्वोस्सुमङ्गलम्॥ ३३॥

पथि प्रग्रहिणं कंसमाभाष्याऽऽहाऽशरीरवाक्।
अस्यास्त्वामष्टमो गर्भो हन्ता यां नयसे[15]ऽबुध॥ ३४॥

इत्युक्तस्स खलः पापो भोजानां कुलपांसनः।
भगिनीं हन्तुमारब्धः खड्गपाणिः कचेऽग्रहीत्॥ ३५॥

तं जुगुप्सितकर्माणं नृशंसं निरपत्रपम्।
वसुदेवो महाभाग उवाच परिसान्त्वयन्॥ ३६॥

---

1. B,G,M °शु° 2. B,G,M °सन्मु ° 3. W म° 4. B,G,M °शु° 5. M. स्वराद् 6. B,G,M °शु° 7. M भार्यया 8- -8 B,G,M स्वसुः प्रियचिकीर्षया; K,W भगिन्याः प्रियचिकीर्षया 9. B,G,V जग्राह 10. W °तैः 11. B,G,M °ने 12. B,G °श्व 13. B,G,M °णप्रक्रमे 14. B,G तावत् 15. B,G वहसेऽ°

**श्रीध०** भोजेन्द्रबन्धनागारे अवताराय प्रस्तावकथामाह शूरसेन इत्यादिना[1], यावदध्यायसमाप्ति। [2-]मधुरायामावसनं मधुरायां वसनं[-2], विषयान् देशान्॥ २६, २७, २८॥

**तस्यामिति**। सूर्यया नवोढया साकं[3] प्रयाणे प्रयाणार्थम्॥ २९॥

**उग्रसेनेति**। रश्मीन् प्रग्रहान् अग्रहीत्[4]॥ ३०॥

**चतुश्शतमिति**। पारिबर्हम् उपस्करम्॥ ३१॥
**[5-]दासीनामिति**। देवकः उग्रसेनः[-5]॥ ३२, ३३॥

**पथीति**। आभाष्य रे रे कंसेति सम्बोध्य। हन्ता हनिष्यति॥ ३४॥

**इतीति**। कुलपांसनः कुलदूषणः। आरब्धः उद्युक्तः। कचे केशबन्धे॥ ३५॥

**तमिति**। नृशंसं क्रूरं, महाभाग इति। अयं भावः - स्वजन्मनि देवैर्हर्षेण आनकदुन्दुभिनिर्घोषिण[6] भाविभगवदवतारेण[7]ाशक्यप्रतीकारता सम्भवतीति सान्त्वयन्, स्तुत्या कृपाविषयत्वेन उपपत्तिभिश्च सन्मार्गेण सम्बोधयन्॥ ३६॥

---

1. V इति, 2- -2 V. omits 3. B,J, omit साकं 4. B,J, omit अग्रहीत् 5- -5 B,J omit 6. B,J घोषणात् 7. V. °णाशङ्क्यप्रति

**वीर०** इत्येवं भगवतोक्तमेव अमरगणान् प्रत्यादिश्य अनुज्ञाप्य, प्रजापतीनां दक्षादीनामपि पतिः विभुः ब्रह्मा गीर्भिर्महीमाश्वास्य सान्त्वयित्वा परमं श्रेष्ठं स्वधाम स्वलोकं ययौ॥ २६॥

तदेवमवतारनिमित्तमुपपादितम्। अथावतारप्रकारं पितुर्गेहाद्व्रजगमननिमित्तं च वर्णयितुं तदुपोद्घातरूप मितिहास माह - **शूरसेन** इत्यादिना यावदध्यायसमाप्ति। पुरा पूर्वकाले यदूनां पतिः शूरसेनो नाम मधुरां पुरीमधिवसन्, मधुरान् शूरसेनांश्च विषयान् देशान् बुभुजे। इह उपभोगो भुजेरर्थः, न तु पालनम्; तत्र "**भुजोऽनवने**" (अष्टा. 1-3-66) इत्यात्मनेपदप्रतिषेधात्॥ २७॥

यतश्शूरसेनो राजा अध्यवसत्, ततस्सा मधुरा पुरी सर्वेषां या[2]दवभूभुजां[2] यादवभूपालानां राजधानी बभूव। तत्र पुर्यां हरिर्भगवान्नित्यं सन्निहितः, आविर्भावस्थानत्वादिति भावः॥ २८॥

कदाचित्तस्यां पुर्यां शौरिः शूरस्य सुतो वसुदेवः कृतविवाहः देवक्या सूर्यया नवोढया भार्यया सह प्रयाणे स्वगृहं प्रति प्रयाणे निमित्ते रथमारुरोह॥ २९॥

तत उग्रसेनस्य सुतः कंसः भगिन्या देवक्याः प्रियं कर्तुमिच्छया स्वयं रौक्मैः हेममयैः रथानां शतैः परिवृतो भगिनीरथवाहानामश्वानां प्रग्रहान् जगृहे॥ ३०॥

तदा देवक उग्रसेनस्य भ्राता दुहितृवत्सलः, हेतुगर्भमिदम् दुहितृवत्सलत्वाद् दुहित्रे देवक्यै पारिबर्हमुपायनं ददौ। पारिबर्हं दर्शयति। हेममालालङ्कृतानां गजानामयुतं, तथाविधानामश्वानां सार्धमर्धेन पञ्चसहस्रया सहितमयुतम्। रथानां तु त्रिषट्शतमष्टादशशतञ्च। यानैः गमनसाधनैस्सह दासीनां सुकुमारीणां समलङ्कृते द्वे शते॥ ३१, ३२॥

हे तात! वरवध्वोः प्रयाणोपक्रमे मङ्गलार्थं शङ्खादीनि दुन्दुभयश्च समं युगपन्नेदुः दध्वनुः। सुमङ्गलमिति क्रियाविशेषणं वा॥ ३३॥

ततो मार्गे प्रग्रहिणं हयरश्मिधरं कंसमुद्दिश्याशरीर[3] वागाह उत्सृष्टा बभूव। तामेव दर्शयति अस्या इति। यां भगिनीं प्रियचिकीर्षया नयसे भर्तृगृहं प्रापयसि अस्या अष्टमो गर्भः, अपत्यपरो गर्भशब्दः। [4]हे अबुध! अज्ञ![-4] त्वां हन्ता हनिष्यति॥ ३४॥

[5]इति इत्थमुक्तः स[6]ः भोजानां कुलपांसनः कुलमलरूपः कुलाधम इति यावत्। खलो मूर्खः पापात्मा कंसः, तथाभूतत्वात् खड्गः पाणौ यस्य, तथाभूतो भगिनीं स्वप्राणापहारनिदानभूतां भगिनीं हन्तुमुद्युक्तः कचेऽग्रहीत्, केशपाशं जग्राहेत्यर्थः॥ ३५॥

जुगुप्सितं निन्दितं भगिनीवधोद्योगरूपं कर्म यस्य, तत एव नृशंसं क्रूरम्, अत एव निरपत्रपं निर्लज्जं, तं कंसं परिसान्त्वयन् उपच्छन्दयन्, महाभागो महाभाग्ययुक्तो महाबुद्धिमान् वसुदेव उवाच॥ ३६॥

---

1. B राजा 2- -2 K,W omit 3. B °रिणी 4- -4 K,W omit 5. K,W omit इति 6. K,W omit सः

**विज०** महर्लोकादिभ्यः परमम्॥ २६॥

चतुर्मुखे भुवं सान्त्वयित्वा सत्यलोकं गते उत्तरकथां प्रसञ्जयति - **शूरसेन** इति। कार्तवीर्यसुतः पुरीमावसन्निति सप्तम्यर्थे द्वितीया "उपान्वध्याङ्वसः" (अष्टा. 1-4-48) इति सूत्रात्॥ २७, २८॥

ततः किमत्राह - **तस्यामिति** ॥ २९॥

विवाहकाले रथहयानां कविकाग्रहणे अत्यन्तं बन्धुना भाव्यमिति दर्शयितुं तद्ग्रहिणमाह - **उग्रसेनसुत** इति॥ ३०॥
विवाहकाले दुहित्रे यद्दीयमानं धनं तत्पारिबर्हं नाम॥ ३१,३२॥
प्रयाणप्रक्रमे गमनारम्भे॥ ३३॥
प्रग्रहः कविका, तद्वन्तम्। अस्याः देवक्याः ॥ ३४॥
कुलपांसनः कुलधूलीकरणशीलः । कचे केशपाशे॥ ३५॥
नृशंसं क्रूरकर्माणं परिसान्त्वयन् साम्ना भेदेन च सम्बोधयन्॥ ३६॥

## -: देवकीहननोद्युक्तं कंसं प्रति वसुदेवकृतसामाद्युपदेशः :-

**[1-]वसुदेव उवाच[-1]**

**श्लाघनीयगुणश्शूरैर्भवान् भोजयशस्करः ।**
**स कथं भगिनीं [2]हन्यात् स्त्रियमुद्वाहपर्वणि॥ ३७॥**
**[3]मृत्युर्जन्मवतां वीर देहेन सह जायते।**
**अद्य वाऽब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः ॥ ३८॥**
**देहे पञ्चत्वमापन्ने देही [4]कर्मानुगोऽवशः ।**
**देहान्तरमनुप्राप्य प्राक्तनं त्यजते वपुः ॥ ३९॥**

**व्रजंस्तिष्ठन् पदैकेन [5]यथैवैकेन गच्छति।**
**यथा तृणजलूकैवं देही कर्मगतिं गतः ॥ ४० ॥**

**स्वप्ने यथा पश्यति देहमीदृशं मनोरथेनाभिनिविष्टचेतसः ।**
**दृष्टश्रुताभ्यां मनसाऽनुचिन्तयन् प्रपद्यते तत्किमपि ह्यपस्मृतिः ॥ ४१ ॥**

यतो यतो धावति दैवचोदितं मनो विकारात्मकमाप[6] पञ्चसु।
गुणेषु मायारचितेषु देह्यसौ प्रपद्यमानस्सह तेन जायते॥ ४२॥

ज्योतिर्यथैवोदकपार्थिवेष्वदस्समीरवेगानुगतं विभाव्यते।
एवं स्वमायारचितेष्वसौ पुमान् गुणेषु रागानुगतो विमुह्यति॥ ४३॥

तस्मान्न कस्यचिद्द्रोह माचरेत्स तथाविधः।
आत्मनः क्षेममन्विच्छन् द्रोग्धुर्वै परतो भयम्॥ ४४॥

एषा तवाऽनुजा बाला कृपणा पुत्रिकोपमा।
हन्तुं नार्हसि कल्याणीमिमां त्वं दीनवत्सल[7]!॥ ४५॥

---

1- -1 K,W omit 2. K,W हन्याः 3. V. °धर्म° 4. K,W कर्मवशानुगः 5. V °वान्येन 6. M °मात्म 7. B,G °लः

**श्रीध०** किञ्च [1-]वसुदेवः[-1]कंसं सामभेदाभ्यां स[2]म्बोधयन्[3]नाऽऽह**श्लाघनीयेति।** तत्र साम पञ्चविधम्। [4-]भेदो द्विविधः तदुक्तम्[-4] "[5-]ला भोपकृतिसम्नन्धा ह्यभेदो गुणकीर्तनम्। साम पञ्चविधं भेदो दृष्टादृष्टभयं वचः" इति। श्लाघनीयगुण इति गुणकीर्तनम्। भगिनीमिति सम्बन्धकथमम्। पुक्षिकोपमेत्यभेदं वत्यति। हन्यादिति स्त्रीवधनिवृत्त्या यशोलाभं दर्शयति। उद्वाहपर्वणीति सन्तानवृद्ध्या उपकारं दर्शयति॥ ३७॥

[6]मम मरणभयेन हन्मीति चेत्तयाऽति मरणस्याऽपरिहरणीयत्वात्, देहान्तरस्य चावश्यम्भावित्वात्, तत्रादि भोगप्रेमास्पदत्वादीनामविशेषात् तद्भयेन पापाचरणमयुक्तमित्यभिप्रेत्याऽऽह - **मृत्युरिति।** देहेन सहेति। विधात्रा ललाहे लिखितत्वादिति। [7-]देहस्य क्षणभङ्गुरत्वान्नित्यमाशङ्क्यो मृत्युरिति वा[-7]। तयापि कालवि[8]लम्बार्थं हन्मीति चेत्तत्राऽऽह - अद्य वेति। अवश्यम्भाविनि मरेण विलम्बमात्राय पापाचरणम् [9]अयुक्तम् इति भावः॥ ३८॥

किञ्चा [10]तस्मिन् देहे गते यदि देहान्तरं न स्यात्, तदा पापेनापि [11]एतत्पालनं युज्येत न तु तदस्तीत्याऽऽह - **देहे** इति। [12]आपन्ने आपन्नप्राये कर्मवशादयलत एव प्रथमं देहान्तरं प्राप्य पश्चात् पूर्वं वपुस्त्यजति॥ ३९॥

अत्र दृष्टान्तः - **व्रजन्निति।** एकेन अग्रतो निहितेन पदा तिष्ठन् भुवमवष्टभ्य देहं बिभ्रत्, पश्चादन्येन पूर्वप्रदेशाद् उत्थाप्य पुरा निहितेन गच्छति तद्वत्। अत्र च स्वीकारपरित्यागौ नात्यन्तभिन्नविषयाविति स्पष्टम्। दृष्टान्तान्तरमाऽऽह - **यथा तृणजलूकेति।** सा हि [13]यं तृणान्तरमवष्टभ्य पूर्वतृणं त्यजति। एवं कर्मपये वर्तमानो[14]ऽन्यो जीवोऽपि॥ ४०॥

देहविषयावेव स्वीकारपरित्यागौ दर्शयितुं दृष्टान्तान्तरमाह - **स्वप्ने** इति। दृष्टं राजादिदर्शनम्। श्रुतम् इन्द्रादिश्रवणम्। ताभ्यामाहितसंस्कारेण मनसा तदेवानुचिन्तयन्। ईदृशं जाग्रद्दृष्टश्रुतसदृशं देहं राजादिरूपं किमपि [15]अतितुच्छमनिरूक्तं पश्यति। श्रणान्तरे च तदेवाऽहमिति प्रपद्यते मन्यते। ततश्च जाग्रद्देहादपगतस्मृतिर्भवति पुरुषो ययेति। जाग्रत्येव दर्शयितुं दृष्टान्तान्तरमाऽऽह - **व्यनोरथेनेति।** अत्रापि दृष्टश्रुताभ्यामित्यादि सर्वं योज्यम्। तथा च वक्ष्यति "जन्तोर्वै कस्यचिद्धेतोर्मृत्युरत्यन्तविस्मृतिः। जन्मत्वात्मतया पुसः सर्वभावेन भूरिद! विषयस्वीकृतिं प्राहुर्यथा स्वप्नमनोरथौ। [16-]स्वप्ने मनोरथे[-16] चेत्यं (चैवं) प्राक्तनं न स्मरत्यसौ" (भाग. 11-22-40,41,42) इत्यादि। तद्वदत्राऽपि कर्मवशाद्देहान्तरं प्राप्य प्राक्तनं त्यजतीति॥ ४१॥

ननु विचित्रदेहहेतूनां कर्मणाम् अ[17]कृतत्वाद् देहविशेषप्राप्तौ किं कारणमत आह - **यतोयत** इति। देहस्य पञ्चत्वसमये पञ्चसु गुणेषु[18] भूतेषु मा[19-]यारचितेषु[-19] मायया नानादेहरूपेण रचितेषु दैवन फलाभिमुखेन कर्मणा चोदितं नानाविकारात्मकं मनो यं यं देहं देवतिर्यगादिरूपं प्रतिधावति धावञ्च सत् यं यमाप अभिनिवेशनप्राप्तं, तत्र तत्र असौ देही जायते। ननु मनसः क[20]र्मकर्तृत्वात् तदेव जायतां म त्वकर्तात्मोत्यत आह - **प्रपद्यमान** इति। तदेवाऽहमिति प्र[21]पद्यमानस्तेन सह जायत इति॥ ४२॥

ननु सत्यं भविष्यत्येव किमपि देहमात्रं, तथाप्यस्य अतिप्रियस्य राजदेहस्य रक्षणाय अकृत्यमपि क्रियत इति चेत्तत्राऽऽहज्योतिरिति। अदश्चन्द्रादिज्योति! उदकयुक्तेषु पार्थिवेषु घटादिषु। यद्वा उदकेषु पार्थिवेषु तैलघृतादिषु प्रतिबिम्बेन स्थितं समीरस्य वायोर्वेगमनुगतं कम्पादियुक्तं प्रतीयते यथा। एवं स्वाविद्यारचितेषु गुणेषु देहेषु। असौ रागेणानुगतः प्रविष्टो मुत्यति अभिनिवेशं प्राप्नोति। अय भावः आत्मनस्तावद् देहाद्यध्यासाज्जन्माक्तं सह तेन जायत इति। ततश्च अन्योन्यधर्माध्यासाद् यथा दे[22]हधर्माः कार्श्यादयः आत्मनि प्रतीयन्ते, स्थू[23-]लोऽहं, कृशोऽहमिति[-23]। एवमात्मधर्माः प्रेमास्पदत्व[24]ज्ञानाश्रयत्वादयोऽपि देहादिष्विति। अ[25]तः राजसूकरादिदेहयोः विशेषभावात् व्यर्थो मृत्युप्रतीकार इति॥ ४३॥

एवयुक्तं सामोपायमुपसंहरन् भेदमाह - **तस्मादिति।** परत इति अयिद्रुह्यमाणान् तत्सम्बन्धिनश्च यमादिति। भ[26]यं इहामुत्र ल भयमिति भेदो दर्शितः॥ ४४॥

पुनस्सामैवाऽऽह **एषेति।** पुत्रिकोपमा दारुमयी वा अचितनप्राया॥ ४५॥

---

1- -1. B,J omit 2. V सम्भेद° 3. B,J omit आह 4- -4. omits 5- -5. B सम्बन्धसामोदकृतिर्ह्र्च भेदो J सम्बन्धलाभोपकृतिर्ह्र्चभेदो 6. B,J omit मम 7- -7. B,J omit 8. B लम्बनार्थ 9. B,J न युक्तम् 10. B,J अस्मिन् 11. B,J तत्पा° 12. V omits आपन्ने 13. V omits यथा 14. V omits °ऽन्यो ★ 15. B,J omit अतितुच्छम् 16- -16. B,J स्वपं मनोरथं 17. B,J कृतत्वात् 18. V adds पञ्च 19- -19. B,J omit 20. B,J omit कर्म 21. B,J मन्यमानः 22. B,J देहादि 23- -23. B,J omit 24. B,J °त्वादयोऽपि 25. B,J omit अतः 26. B,J omit भयं

**वीर०** उक्तिमेवाह श्लाघनीयेत्यादिभिर्नवभिः । शूरैः श्लाघनीयाः स्तुत्याः गुणाः यस्य, भोजानां भोजवंश्यानां यशः कीर्तिं करोत्यावहतीति तथा, स भवानेवम्भूतत्वात् कथं स्त्रियं तत्राप्युद्वाहकर्मणि उद्वाहाङ्गगृहप्रवेशकर्मणि, प[1-]र्वणीति पाठे गृहप्रवेशोत्सवकर्मणीत्यर्थः । तत्रापि भगिनीं हन्याः (त्?) हन्तुमुद्युक्तोऽसि॥ ३७॥

मन्मरणनिदानभूतत्वात् भगिनीमपि हन्यामित्यत्राऽऽह **मृत्युरिति।** हे वीर! जन्मवतामुत्पत्तिमतां देहेनैव सह मृत्युर्जायते मृत्युश्छायेव देहमुत्पत्तेरारभ्याऽनुवर्तत एव; किन्तु कालमात्रम् अपेक्षते इति भावः । अतो[2]ऽधुना वा वर्षशतान्ते वा प्राणिनां मृत्युः ध्रुवः निश्चितः, अपरिहार्य इति यावत्॥ ३८॥

नन्वब्दशतान्ते जरया जीर्णं शरीरमस्तु मृत्युग्रस्तं, अधुना त्विदं कल्याणतरं[3] शरीरम[4]पैति चेत् पुनरेवंविधं दुर्लभमित्यत आह **देहे** इति। देहे पञ्चत्वं मरणमापन्ने आप्तुमुद्युक्ते सति देही तद्देहस्थो जीवः कर्मवशानुगः प्राचीनकर्मवश्यतामनुप्राप्तः कर्मानुगुणं शरीरान्तरं प्राप्यैव प्राक्तनं वपुस्त्यजते। कर्मानुगुणशरीरान्तरस्याऽयत्नलभ्यत्वात् एवंविधजुगुप्सितकर्मसम्पाद्यस्य शरीरस्य निहीनस्यैवाऽऽपत्तेः तादात्विकं मरणभयमपहाय भगिनीप्राणपरित्राणरूपाच्छुभकर्मणः पुनरितोऽपि कल्याणतरदेहप्राप्तेश्चैषा न हन्तव्येति भावः ॥ ३९॥

"देहान्तरमनुप्राप्य प्राक्तनं त्यजते वपुः" (भाग 10-1-39) इत्येतदेव सदृष्टान्तमुपपादयति - **व्रजन्निति।** इयं प्रसिद्धा तृणजलूका तृणगतः[5] कीटविशेषः, स यथा व्रजन् गन्तुमुद्युक्तः एकेन पदा[6] पादेन तिष्ठन् तृणमवलम्बयन्नेव एकेन पदेन गच्छति, एवं देही जीवोऽपि पञ्चत्वमापन्नं देहं त्यजन् कर्मगतिं कर्मानुरूपं शरीरं गतः अधिष्ठितः, प्राक्तनं वपुस्त्यजतीत्यर्थः । अणोर्जीवस्य कथं पञ्चतामापत्स्यमानं देहमधितिष्ठत एव पुनर्देहान्तराधिष्ठातृत्वमिति न शङ्कनीयम्, गेहाद् गेहान्तरं प्रविशत इव स्वोपकरणेन्द्रियप्राणादिप्रापणपूर्वकत्वाद् देहान्तरप्राप्तेः धर्मभूतज्ञानद्वारा वा देहान्तराधिष्ठातृत्वमिति न विरोधः । यद्वा देहान्तरपरिग्रहपूर्वकमेव पूर्वदेहपरित्यागे दृष्टान्तस्तृणजलूका, छाययेव मृत्युनाऽनुगतत्वाज्जीवदशायामपि मृतप्रायत्वे दृष्टान्तान्तरमुच्यते - व्रजन्नित्यादिना[7]। यथा एकेन पदेन[8] व्रजन् गच्छन् पुरुषः पुनरेकेन पादेन तिष्ठन्नेव गच्छति, तद्वज्जीवन्नपि पुरुषः[9] मृतप्राय एव सन् जीवतीति अत एव व्रजंस्तिष्ठन्निति पुंस्त्वनिर्देशः यथाशब्दद्वयञ्च ॥ ४० ॥

ननु तृणजलूका विद्यमानशरीरेणैव गन्तव्यदेशमवष्टभ्यैव पूर्वदेशं त्यजतीति युक्तं तस्याः भयशोकाद्यभाव इति। दार्ष्टान्तिके तु न तथा। न हि प्राक्तनवपुर्विशिष्टो वपुरन्तरं प्राप्य प्राक्तनं त्यजति वपुरन्तरवैशिष्ट्याकारेण वपुरन्तरप्राप्त्यसम्भवात्। अपि तु विशेष्याकारेणैव वपुरन्तरप्राप्तिः, प्राक्तनवपुस्त्यागश्च। अतः प्राक्तनकल्याणतरवपुस्त्यागप्रयुक्तभयशोकोपनिपातसम्भावनया तत्परिहारोऽवश्यकर्तव्य इत्यत्र तदनुभवसिद्धस्वप्नदृष्टान्तेन देहान्तरप्राप्तिपूर्वकपूर्वदेहत्यागं तत्प्रयुक्तभयाद्यभावञ्च दार्ष्टान्तिके सङ्गमयति स्वप्न इति। स्वप्ने यथा दृष्टश्रुताभ्यां दृष्टश्रुतमनीषितलाभार्थं मनसाऽनुचिन्तयन् सङ्कल्पविकल्पौ कुर्वन् मनोरथेन देशान्तरगमनराज्याभिषेकादिरूपमनोरथेन अभिनिविष्टा चेतना बुद्धिर्यस्य तथाभूतो जीव: ईदृशं शयानदेहसदृशं तत्किमपि ततो विलक्षणं वा किमपि शरीरं स्वप्नमात्रावस्थायित्वेन स्वप्नद्रष्ट्रेकानुभाव्यत्वेन च स्वाप्नदेहस्य शयानतुल्यदेहतया चिन्तितुमशक्यत्वात् किमपीत्युक्तम्। तावत्पश्यति, ततस्तत्प्रतिपद्यते अपस्मृतिः शयानदेहविषयकस्मृतिरहितश्च भवति। अत एव तत्त्यागप्रयुक्तभयशोकादि रहितश्च भवति। हीति स्वपरानुभवप्रसिद्धिं द्योतयति पश्यति प्रतिपद्यते इत्यनेन। प्रथमं ज्ञानेनानुप्रवेशः , ततस्स्वरूपेणेति सूचितम्। एवं दार्ष्टान्तिकेऽप्यवगन्तव्यमिति भावः । न हीदानीम् अस्मदादीनां प्राक्तनदेहत्यागप्रयुक्तभयशोकादिकमुपलभ्यत इति च भावः। न च स्वप्नेऽपि शयानदेहे नैव देशन्तरगमनादिकमनुभूयत इति युक्तिमता अपवरकादौ शयानस्य देशान्तरगमनाद्यसम्भवात् ततस्तदवस्थामात्रावस्थायितद्द्रष्टमात्रानुभाव्यदेहान्तरेणैव तदनुभवः। यद्वा, पूर्वार्धं दृष्टान्तपरमुत्तरार्धन्तु दार्ष्टान्तिकपरम्। तदयमर्थः - स्वप्ने देशान्तरगमनादिमनोरथाभिनिविष्टचित्तो जीवः यथा ईदृशं शयानदेहवदात्माभिमानविषयं स्वप्नदृश्यमात्रानु भाव्यफलपुण्यापुण्यकर्मानुगुणपरमपुरुषसृष्टं तावत्कालमात्रावस्थायि स्वप्नद्र[10]ष्ट्रेकावगम्यं देहं पश्यति ज्ञानद्वाराऽधितिष्ठति, ज्ञान द्वाराऽधिष्ठाय देशान्तरगमनराज्यभिषेकशिशेदादीननुभवतीति भावः । अपस्मृतिः अपगता शयानदेहविषया स्मृतिर्यस्य तथाभूतश्च भवति। तद्वधादिसम्भावनाप्रयुक्तभयादिरहितश्च भवति। उत्तरार्धस्य तथेत्यादिः । एवं दृष्टश्रुताभ्यामिति तादर्थ्यचतुर्थी। दृष्टमैहिकंसुखं, श्रुतमामुष्मिकं ताभ्यां तदर्थं मनसानुचिन्तयन् किमपि कर्मानुगुणमीश्वरसृष्टं किमपि शरीरं प्रतिपद्यते, अपस्मृतिश्च भवति। प्रथमं ज्ञानद्वारा अधिष्ठाय प्राक्तनवपुर्विषयस्मृतिरहितः ततः स्वरूपेण प्रविशतीत्यर्थः ॥ ४१ ॥

किमपि प्रपद्यत इत्येतदेव विवृण्वन् तदेव जीवस्योत्पत्तिनिमित्याह **यत इति** । दैवमत्र दिष्टं कर्म वासनात्मकं तच्चोदितं तदनुगुणप्रवृत्तं विकारात्मकं सङ्कल्पविकल्परूपविकारप्रकारं सत् मनोमायारचितेषु सत्त्वादिगुणत्रयात्मकप्रकृतिपरिणामरूपेषु

पञ्चसु गुणेषु शब्दादिविषयेषु मध्ये। यतो यतो धावति यं यं वि[11]षयं स्मरति तं तमेव प्रपद्यमानः अनुप्रविष्टः तेन सह जायते, इयमेव जीवस्योत्पत्तिर्निमित्ति भावः । "यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेबरम्। तं तमेवैति कौन्तेय, सदा तद्भावभावितः " (भगी. 8-6) इति भगवदुक्तेरिति भावः ॥ ४२॥

तेन सह जन्मरूपोपाधिप्रयुक्तमेव जीवस्य देवमनुष्यत्वादि नानात्वम्। वस्तुतस्तु सर्वत्र शरीरेषु ज्ञानैकाकारत्वेनावतिष्ठत इति सदृष्टान्तमाह - ज्योतिरिति। यथा अदः अन्तरिक्षस्थमेकरूपमेव सूर्यादिज्योतिः उदकेषु, पार्थिवेषु पृथिवीपरिणामरूपेषु दर्पणादिषु च प्रतिबिम्बितं तत्समीरस्य वायोर्वेगेन अनुगतमनुवृत्तं सत् विभाव्यते। समीरवेगशब्दोऽल्पत्वमहत्वाद्युपाधि गतधर्मोपलक्षकः। विविधं भा[12]व्यते वृद्धिह्रासादिधर्मभाक्त्वेन भाव्यते दृश्यते, अस्मदादिभिरिति शेषः । एवमसौ पुमान् जीवः स्वतो विमनुष्य[13]त्वादिनानात्वरहितोऽपि स्वमायारचितेषु स्वदेहारम्भकप्रकृति परिणामरूपभूतसूक्ष्मारब्धेषु गुणेषु गुणपरिणामात्मकेषु शरीरेषु, रागानुगतः रागेण शब्दादिविषयस्पृहया वा[14-] सनात्मिकया[-14] हेतुभूतया, अनुगतोऽनुप्रविष्टः, विमुह्यति देवोऽहं मनुष्योऽहम् इत्येवं नानाविधं मोहं प्राप्नोति। यद्यपि दृष्टान्ते सूर्यादिज्योतिरुदकाद्युपाधिषु अनवस्थितमेव स्वच्छद्रव्यप्रतिहतिनिवृत्तस्वरश्मिभिर्हेतुभिः समीपस्थजनैर्विभाव्यते। दार्ष्टान्तिके तु देहेष्ववस्थित एव सन् पुमान् मुह्यतीति तयोर्वैषम्यम्। तथापि वस्तुतो नानात्वाभावौपाधिकनानात्वमात्रेण दृष्टान्तदार्ष्टान्तिकभावोऽवगन्तव्यः ॥ ४३॥

तस्मादिति। तस्माद्वस्तुस्थितेरेवं विधत्वात् तथाविधः वस्तु तत्त्वाभिज्ञः स[15]ः पुमान् आत्मनः स्वस्य क्षेममन्विच्छन् अन्विच्छुः, कस्यचिद[16]पि द्रोहं नाऽऽचरेत् न कुर्यात्। एवञ्चेत्तस्य न कुतश्चिदपि भयम्, अन्यथा तु भयमित्याह द्रोग्धुर्वै परतः अन्यस्मात् भयमित्यर्थः। यद्वा, परतः परमेश्वरात् भयं भूतद्रोग्धुर्भयं वै भयमस्त्येवेत्यर्थः॥ ४४॥

एवं सामान्यतो हिताहितं विविच्य अथ विशेषेण विवेचयति - एषेति। अनुजात्वस्त्रीत्वबाल्यदैन्य-पुत्रिकातुल्यत्वकल्याणत्वादिधर्मयुक्तेयमवध्या। अत इमां त्वं हन्तुं नार्हसि। हन्तृत्वानर्हतां सूचयितुं सम्बोधयति हे दीनवत्सलेति॥ ४५॥

---

1- -1 K,W. omit 2. K. °ऽद्य 3. B. adds नवयौवनसम्पन्न 4. B. °मुपैति 5. B. गतकीट 6. K, W. omit पदा 7. B. °ति। 8. B. पा° 9. B. adds पुनः 10. K. दृगे° 11. K,W. omit विषयं 12. K omit भाव्यते 13. K,W. °ष्यादि 14- -14 K,W. omit 15. K,W. omit सः 16. K.W. omit अपि.

विज० "सम्बन्धलाभोपकृतिरभेदो गुणकीर्तनम्" सा[1]म पञ्च[2]विधं, भेदो दृष्टादृष्टभयं वचः " इति पञ्चविधं साम ज्ञायते - श्लाघनीयगुणेत्यादिना। श्लाघनीयगुणेति गुणकीर्तनम्। भोजयशस्करेति कीर्तिलाभकथनम्। हन्याः स्त्रियमिति स्त्रीवधादकीर्तिलाभसूचनम्। भगिनीमिति सम्बन्धवचनम्। उद्वाहपर्वणीति अपकृतिसूचनम्। उद्वाहपर्वणीति सूचनात् विवाहोऽयमेव॥ ३७॥

मृत्युर्जन्मवतामित्यादिना अदृष्टभयम्॥ ३८॥

देहे पञ्चत्वमित्यादिना दृष्टभयं, कर्म पुण्यपापविषयम्। अवशो विष्णुवशः , त्यजते त्यजति॥ ३९॥

पूर्वदेहपरित्यागेन देहान्तरप्राप्तौ दृष्टान्तमाऽऽह **व्रजन्निति**। यथा व्रजन् पुरुषः एकेन पादेन तिष्ठति, एकेन गच्छति, पूर्वदेशवियोगेन देशान्तरसंयोगमाप्नोति, यथा तृणजलूका तृणान्तरं गृहीत्वा पूर्वतृणं त्यजति एवं देही कर्मगतिं गतो भवतीत्यन्वयः। कर्मणो गतिराप्तिर्यस्मिन् देहे त्यजति तथा तत्तद्देहान्तरमित्यर्थः ॥४०॥

ननु देहात्मनोरभेदेन देही पूर्वदेहं परित्यज्य अभिनवदेहान्तरं यातीति कथं सङ्घाघटीतीति तत्राऽऽह - **स्वप्ने इति**। जाग्रद्दृष्टश्रुतपदार्थसंस्कारसमुद्बुद्धमनोरथेन अभिनिविष्टचेतनः गाढप्रग्रस्तबुद्धिरात्मा स्वप्ने ईदृशं जाग्रद्देहसदृशदेहं यथा पश्यति स्वकीयत्वेनाऽनुभवति परकीयत्वेन वा आत्मन एकत्वेन देहयोर्द्वित्वेन दर्शनाद्देहात्मनोर्भेद आनुभाविकः तथा मनसाऽनुचिन्तयन् आत्मादृष्टश्रुतस्मृतानुसृतं तत् तत्र किमपि देवाद्यन्यतमशरीरं प्रपद्यते। कदेत्यत उत्क्रमपस्मृतिरिति। उत्तरदेहे अभिमानितया पूर्वदेहस्मरणाभावेन मृत इत्यर्थः । हिशब्दो हेतौ। यत एव मृत इत्यर्थः । तदुक्तमाचार्यैः "स्वप्ने यथा दृष्टश्रुतस्मृत्यनुसारि देहं प्राप्नोत्यपस्मृतिर्मृतः पूर्वदेहस्मरणाभावात् अनभिमानत" इति॥ ४१॥

एतदेव विवृणोति **यतो यत** इति। सार्वविभक्तिकस्तसिः इति वचनात्, यतो यतो यत्र यत्र। मायारचितेष्वित्यादिषु[3] सप्तमी षष्ठ्यर्थे भगवदिच्छोद्बोधितप्रकृतिनिमित्तानाम्। प्रकृते रेकत्वेन सृष्टेः नानाविध्यं कथमत्राऽऽह - गुणेष्विति। कार्यकारण[4]भेदात् सत्त्वादिगुणविहितानाम् आत्मपञ्चसु देवगन्धर्वपितृमनुष्यासुरभेदेन पञ्चानामात्मनां मध्ये दैवेन अदृष्टोद्बोधकेन हरिणा चोदितं प्रेरितं मनो धावति विषयीकरोति। मनो विशिनष्टि - विकारात्मकमिति। सङ्कल्पविकल्पनिबद्धमिति [5]यस्य मनो मरणसमये योग्यतानुसारेण यं यं धावति असौ देही तत्र तत्र प्रपद्यमानः प्रवृत्तिं लभमानः तेन दैवेन सह जायते "प्राज्ञेनाऽऽत्मनाऽन्वारूढ उत्सृज्य याति" (बृह.उ. 4.3.35) इति श्रुतेः । उत्पद्यमानोऽपि तेन सह उत्पद्यते इति ज्ञातव्यम्[5]। अत्रापि योग्यतामपेक्ष्य तत्तच्छरीरग्रहणम्। तदुक्तं - "देवादित्वं योग्यतया तत्सकाशस्त्वनुस्मृतेः। श्वेतद्वीपादि तत्राऽपि योग्यतामप्यपेक्ष्य तु॥ विष्णोः स्थानं विनाऽन्यत्र वायुशक्रादिनामपि। त्रैलोक्यदेशभेदेषु योग्यता नत्वपेक्ष्यते" (नारदीये) इति। अनेन व्याप्तस्याऽऽत्मनो गमानं कथमिति चोद्यं परिहृतम्। परमात्मानमन्तरेण निरुपचरिता व्याप्तिर्नास्ति। "अणुर्ह्येष आत्मा" इति श्रुतेः । आलोकवद्गुणेन यथायोग्यव्याप्तिरस्तु नाम, तथाऽपि स्वरूपतो नास्त्येव "व्याप्ता ह्यात्मान श्चेतना निर्गुणश्च" इति स्मृतिः श्रीनारायणविषयेति निरणायि, नो चेदुक्तागतिरेवेति॥ ४२॥

ननु गुणानां नानात्वात् सृष्टे वैचित्र्यमस्तु एकस्यात्मनो नानाविधप्रतीतिः कथमिति शङ्कां सदृष्टान्तं परिहरति ज्योतिरिति। यथा अदो ज्योतिरादित्यलक्षणं समीरवेगानुगतं वायुवेगनिमित्तचलनेन अनुचलितमौदकपार्थिवेषु जलपूर्णशरावाद्युपाधिषु प्रतिबिम्बितं विभाव्यते विविधत्वेन भाव्यते छिन्नभिन्नादिरूपेण प्रतीयते। एवमसौ पुमान् स्वमायारचितेषु "परस्वो हरिः" (प्रकाशिकायाम्) इति वचनात् स्वस्य विष्णोरिच्छया रचितेषु देहेषु प्रतिबिम्बितः अशोभने शोभनाध्यासो रागः , तेनानुगतः तन्मयान्तःकरणो विमुह्यति विविधं छिन्नो भिन्नो मृतोऽस्मीति मोहमज्ञानं प्रतिपद्यते यथा तदेव ज्योतिः पार्थिववद्धनीभूतपूर्णजले प्रतिबिम्बितं वायुवेगानुगतं विशिष्टं निश्चलं भाव्यते छेदभेदादिरहितं प्रतीयते। एवं योग्यो जीवो गुणेषु प्रतिबिम्बितो रागमनुरागं स्नेहविशेषमनुगतो निर्मुक्तद्वेषो विगतमोहो भवति। अज्ञाननिमित्तं छिन्नोऽहमिति दुःखं न प्राप्नोतीति परिहारपरतया वा योजनीयम्। उभयोरपि समाख्यानसिद्धप्रमाणत्वात्। तदुक्तम् "यथैवोदशरावेषु" इत्यारभ्य "परेषां द्रोहमाचरन्" (तन्त्रभागवते) इत्यन्तेन। स्वमायेत्यत्र स्वशब्देन विष्णुरेवोच्यते मानसिद्धत्वात्। तदुक्तम्

"परस्वो हरिरुद्दामः" (प्रकाशिकायाम्) इति पद्येन। गुणयोगयुक्तरूढ्या सिद्धत्वात् मुख्यश्च तदुक्तम् - "स्वतन्त्रत्वात् सुखत्वाच्च स्वनामा विष्णुरुच्यते" (पाद्मे) इति। "रागोऽनुरागे लाक्षायाम्" (वैज. को. 6.1.51) इति यादवः॥ ४३॥

नन्वस्तु नाम आत्मनो जन्मादिकं कर्मनिमित्तं, प्रकृते ततः किम्? तत्राऽऽह - **तस्मादिति** । यत आत्मा तथाविधः कर्मफलभोक्ता, तस्मात् स तादृशः कस्यचिद् द्रोहं हिंसां नाऽऽचरेत्। ततः किम् ? तत्राऽऽह - आत्मन इति। अनर्थश्चाऽऽह - द्रोग्धुरिति। परतः परलोके दुःखलक्षणं भयं भवतीति शेषः ॥ ४४॥

परतोऽन्यस्मात् द्रोह्यात्पुरुषात् द्रोहलक्षणं भयं स्यादिति मत्वा निरन्तरद्रोहलक्षणं दुःखं भवतीति भयसाम प्रदर्श्य भेदसाम प्रदर्शयति - **एषेति**॥ ४५॥

---

1. B,M. साम्नः 2. B,M. विधः 3. Ma. °ति 4. B,M. °णाभे °5- -5 Ma omits.

## [1-]श्रीशुक उवाच[-1]

एवं स सामभिर्भेदै[2]र्बोध्यमानोऽपि दारुणः ।
न न्यवर्तत कौरव्य! पुरुषादाननुव्रतः ॥ ४६॥
निर्बन्धं तस्य [3]तं ज्ञात्वा विचिन्त्याऽऽनकदुन्दुभिः ।
[4]प्राप्तकालं प्रतिव्योढुमिदं तत्रान्वपद्यत॥ ४७॥
मृत्युर्बुद्धिमताऽपोह्यो यावद्बुद्धिबलोदयम्।
यद्यसौ न निवर्तेत नापराधोऽस्ति देहिनः ॥ ४८॥
[5]प्रत्यर्प्य मृत्यवे पुत्रान् मोचये कृपणामिमाम्।
सुता मे यदि जायेरन् मृत्युर्वा न म्रियेत चेत्॥ ४९॥
विपर्ययो वा किं न स्याद्गतिर्धातुर्दुरत्यया।
उपस्थितो निवर्तेत निवृत्तः पुनरापतेत्॥ ५०॥
अग्नेर्यथा दारुवियोगयोगयोरदृष्टतोऽन्य न्न निमित्तमस्ति।
एवं हि जन्तोरपि दुर्विभाव्यः शरीरसंयोगवियोगहेतुः ॥ ५१॥
एवं विमृश्य तं पापं यावदात्मनिदर्शनम्।
[6]सान्त्वयामास वै शौरिर्बहुमानपुरस्सरम्॥ ५२॥
[7]प्रहृष्टवदनाम्भोजो [8]नृशंसं निरपत्रपम्।
मनसा दूयमानेन प्रहस[9-]न्निद म[-9]ब्रवीत्॥ ५३॥

**[10-]व सुदेव उवाच[-10]**

**न ह्यस्याऽऽस्ते भयं सौम्य य[11]द्वै त्वाऽऽहाऽशरीरवाक्।**
**पुत्रान् समर्पयिष्ये[12]ऽस्या यतस्ते भयमुत्थितम्॥ ५४॥**

---

1- -1 K,M,W. omit 2. B,G,M. °बोध्य° 3. K,W. तु 4. B,G. प्राप्तं 5. B,G,K,W. प्रदाय 6. B,G,K,W. पूजयामास 7. B,G. प्रसन्न; M. प्रत्यग्र 8. B,G. वि 9- -9 K,W. सन्पुनर° 10- -10 K,M,W. omit 11. B. यद्वै साऽऽहाऽशरीरवाक्; G. यद्वागाऽऽहाऽशरीरिणी 12. V. °ऽहं

**श्रीध० एवमिति।** चो[1]द्यमान उपदिश्यमानः स्वयं दारुणः । पुनः पुरुषादान् दैत्यान्, अनुव्रतोऽनुसृत इति॥ ४६॥

**निर्बन्धमिति।** आनकदुन्दुभिरिति पदं महाभाग इत्यत्रोक्ताभिप्रायम्। प्रतिव्योढुं प्रतिकर्तुं [2]वञ्चयितुमित्यर्थः । इदं वक्ष्यमाणम् [3]अपत्यार्पणमन्वपद्यत ज्ञातवान्॥ ४७॥

ननु खलोऽयमेतन्न मन्येतेत्याशङ्क्याह [4-]स्वयमेव[-4] **मृत्युरिति** ॥ ४८॥

तस्मादुपेक्षादोषपरिहारायैवं करिष्यामीत्याह - **[5]प्रत्यर्प्येति।** मृत्यवे कंसाय। नन्विदमपि नैव न्यायमित्याशङ्क्याऽऽह- सुता इति। अस्यां यदि मे [6]सुता जायेरन् तदा यद्भावि तद्भवतु, जीवितं तु तावद्भवेदेव। तदन्तरा यद्ययमेव म्रियेत तदा न किञ्चिदन्याय्यम्॥ ४९॥

यदि च सुता भविष्यन्ति न चाऽयं म्रियेत तदा मत्पुत्रादेवाऽस्य [7-]मरणमिति[-7] विपर्ययो वा किं न स्यात्। ननु प्रौढस्य कंसस्य तव बालकात् कथं मृत्युस्स्यात् तत्राऽऽह - गतिरिति। धातुः "अस्यास्त्वामष्टमो गर्भो हन्ता यां नयसेऽबुध" (भाग 10-1-34) इत्युक्तवतः । अत इदानीमपत्यार्पणप्रतिज्ञैव मन्त्रः । तथा सति उपस्थितो मृत्युरयं तावन्निवर्तेत। [8]इदानीं निवृत्तः पुनः कालान्तरे आपतेच्चेत् तदा नापराधो ममेत्यर्थः । अथवा [9]अस्य मत्पुत्रादुपस्थितो मृत्युरस्याः वधाद्यो निवर्तेत स पुनरनेन सन्मन्त्रेण भवेदेवेति। यद्वा, "गतिर्धातुर्दुरत्यया" (भाग. 10-1-50) इत्येतस्य प्रपञ्चः - उपस्थित इति॥ ५०॥

प्राणिनामदृष्टं दुर्वितर्क्यमिति सदृष्टान्तमाह - **अग्नेरिति।** वने वृक्षान् प्रदहन् [10]अग्निः सन्निहितानपि वृक्षान् परित्यज्य कदाचिद्दूरस्थानेव दहति ग्रामे गृहान् वा। न हि [11]तस्य प्राण्यदृष्टव्यतिरेकेण किञ्चिन्नियामकमस्ति यथा, एवं जन्तोर्जन्ममरणयोरपि हेतु दुर्विभाव्योऽचिन्त्यः ॥ ५१॥

**एवमिति।** यावदात्मनिदर्शनं स्वप्रज्ञावधि [12]विमृश्य विचार्य॥ ५२॥

**प्रहृष्येति।** तस्य विश्वासाय विकसितमुखा[13-]म्भोज स्सन्[-13] प्रहसन्न ब्रवीत्॥ ५३॥

**नेति।** यद्वा अशरीरिणी वागाह। तथा हि वै[14] निश्चितम्, अस्यास्सकाशात् ते भयं नास्ति खलु[15] यतो येभ्यः पुत्रेभ्यः ते भयमुत्थितम्। अष्टमो हन्तेत्युक्तेऽन्योन्यापेक्षया सर्वेऽप्यष्टमा भवेयुः इत्युद्भूतं, तेनाऽस्याः पुत्रान् समर्पयिष्ये॥ ५४॥

---

1. B,J. बोध्य° 2. V. omits वञ्चयितुम् 3. V. प्रत्यर्पणम् 4- -4. V omits 5. B,J. प्रदायेति। 6. J. omits सुता 7- -7 V. °मित्याह - विपर्यय इति। 8. B,J. omit इदानीं 9. V. omits अस्य 10. V. वह्निः 11. B,J. अस्य 12. B,J. omit विमृश्य 13- -13. B,J °जो विह सत्र° 14. B,J. omit वै 15. B,J. omit खलु

**वीर० एवमिति।** इत्थं सामभिः श्लाघनीयेत्यादिगुणकीर्तनपूर्वकमुपलालनैः , भेदैः दृष्टादृष्टभयसूचकवचोभिः चोद्यमानोऽपि वधोद्योगनिवृत्त्यर्थं प्रेर्यमाणोऽपि स कंसो दारुणः क्रूरः हेतुगर्भमिदं, दारुणत्वात्। तत्र हेतुः । पुरुषादान् राक्षसान् अनुव्रतः असुरसम्पत्त्यभिजातः । हे कौरव्य, न न्यवर्तत, वधोद्योगादिति शेषः ॥ ४६॥

तस्य कंसस्य सम्बन्धिनं निर्बन्धमनिवृत्तवधोद्योगरूपं ज्ञात्वा, आनकदुन्दुभिर्वसुदेवः प्राप्तं समुपस्थितं कालं पत्न्या मृत्युं प्रतिव्योढुं परिहर्तुं विचिन्त्य, उपायमिति शेषः। तत्र कालपरिहारे इदं वक्ष्यमाणम् अन्वपद्यत उपायत्वेनाऽध्यवास्यत्॥ ४७॥

विचारपूर्वकं प्रतिपत्तिमेव दर्शयति - **मृत्युरित्यादिभिश्चतुर्भिः।** उपस्थितो मृत्युः , बुद्धिमता पुंसा यावद्बुद्धिबलोदयं यथामति यथाशक्ति च अपोह्यः परिहार्यः। एवमपि यद्यसौ मृत्यु र्न निवर्तेत तर्हि न देहिनोऽपराधोऽस्ति॥ ४८॥

अतः पुत्राञ्जनिष्यमाणान् मृत्युरूपेणोपस्थिताय कंसाय मृत्यवे प्रदाय प्रदास्यामीति प्रतिज्ञाय, दीनामिमां स्त्रियं मोचये त्याजयामि। प्रतिज्ञाया दोषरूपत्वमाशङ्क्य अध्यवस्यति।[1] यदि मे मम सुता जायेरन्, सम्भावनायां लिङ्। यदि मृत्युः मृत्युभूतः कंसो वा मत्सुतोत्पत्तेः पूर्वमेव न म्रियेत न मरिष्यति, तर्हि पुत्रान् दास्यामि। मम पुत्रोत्पत्तेः कंसावस्थानस्य च पाक्षिकत्वात् पुत्रार्पणप्रतिज्ञा न दोष इति भावः ॥ ४९॥

पाक्षिकत्वमेव सम्भावयति - **विपर्ययो वेति।** विपर्ययः मम पुत्राः कंसस्य मृत्युर्वा, तस्यावस्थितौ मम पुत्राभावो वा किं न स्यात्; अतोऽपि न दोष इति भावः । नन्वशरीरवाण्या ईश्वरवचस्त्वान्नासत्यता। अतोऽन्वय एव निश्चितः न विपर्यय इत्याशङ्क्याध्यवस्यति। धातुरीश्वरस्य गतिः दुरत्यया अर्वाचीनैर्दुर्ज्ञेया, धात्रा तथोक्तत्वेऽपि कदाचित् तद्विपर्ययोऽपि स्यादिति भावः। तत्रोदाहरणमालोच्याध्यवस्यति उपस्थित इति। उपस्थितो मृत्युः क्वचिन्निवर्तेत, यथा मार्कण्डेयादेः । निवृत्तो वरदानान्निवृत्तोऽपि मृत्युः पुनरापतेत्, यथा हिरण्यकशिपुरावणादेः। अतः प्रतिज्ञा न दोष इत्यर्थ ः ॥ ५०॥

यद्यपि कदाचिद्[2]विपर्यय एव स्यात् तथापीयं मत्[3]प्रतिज्ञा न दुष्यति न हि मत्पुत्रमृत्युः मत्प्रतिज्ञापरतन्त्रः, तस्य कर्माधीनत्वेन पुरुषाधीनत्वाभावादिति सदृष्टान्तमध्यवस्यति **अग्नेरिति।** योगवियोगशब्दाभ्यां शीघ्रविलम्बोत्पत्ती विवक्षिते। दारुशब्देनारणिः । यथा अग्नेः दारुवियोगयोगयोः [4-]दारुणः सकाशात् विलम्बशीघ्रोत्पत्त्योः निमित्तकारणमदृष्टतः

**यजमानादृष्टादन्यन्नास्ति।** एवं जन्तोर्जीवस्य शरीरसंयोगवियोगयोगयोः-4 हेतुरदृष्टतः **कर्मणोऽन्यो दुर्विभाव्यः दुरध्यवस्यः** । मत्प्रतिज्ञामात्रं न हेतुः किन्तु तेषां कर्मैवेति भावः ॥ ५१ ॥

5 एवं यावदात्मनिदर्शनम्। आत्माऽत्र बुद्धिः निदर्शनं तस्याः प्रसरः । यावद्बुद्धिप्रसरं विमृश्य निश्चित्य, शौरिर्वसुदेव स्तम् पापं पापोद्युक्तं कंसं बहुमानपुरस्सरं बहुमानपूर्वकम्, पूजयामास स्वेन विमृष्टमर्थं तत्सम्मतीचकार॥ ५२ ॥

तदेव दर्शयितुं पूजोपयुक्तं वाक्यमाहेत्याह - **प्रहृष्टेति** । अन्तर्भावितण्यर्थः । प्रहृष्टं विकासितं बलाद् वदनाम्भोजं येन तथाभूतः वसुदेवः दूयमानेन उपतप्तेन मनसा प्रहसन् बहिर्हसन् निर्लज्जं कंसं प्रति इदं वक्ष्यमाणं वाक्यमब्रवीत्॥ ५३ ॥

तदेवाऽऽह - **न हीति।** हे सौम्य, तव अस्याः स्त्रियाः सकाशात् भयं मृत्युभयं नास्ति हि; किन्तु अस्याः पुत्रादिति भावः । यत् येभ्योऽस्याः पुत्रेभ्यः 6- ते तव -6 भयमशरीरिणीवागाह, यतो येभ्यश्च ते भयमुत्थितं समुपस्थितं तान् पुत्रान् अहं तुभ्यं समर्पयिष्ये दास्यामीति, त्वं तु तान् जहि, मा वा? न तु तत्र मेऽपराध इति भावः ॥ ५४ ॥

---

★ मूलानुसारी पाठः 1. B. adds सुता इति। 2. B. °चिद्वि° 3. K,W. omit मत् 4- -4. K,W. omit 5. K.W. omit एवं 6- -6 K,W omit

**विज०** पुरुषादान् राक्षसान् अनुव्रतः तत्स्वभावमापन्न इत्यर्थः ॥ ४६ ॥

यश्शास्त्रनिषिद्धः तं प्राप्तकालं प्राप्तावसरं व्यसनं प्रतिव्योढुं प्रतिहर्तुमिदं वक्ष्यमाणमन्वपद्यत अपश्यत्॥ ४७ ॥

यावद्बुद्धिबलोदयमित्यव्ययीभावः , "यावदवधारणे" (अष्टा. 2-1-8) इति सूत्रात्। अपराधः शास्त्रविरोधाचरण लक्षणः ॥ ४८ ॥

किमपश्यत्, तदाह - प्रत्यर्प्य मृत्यवे मारकाय कंसाय। उपायाभासोऽयं यदपत्यार्पणं तत्राऽऽह वा मम सुतोत्पत्तेः प्राक् न म्रियेत चेत् यदि न मरिष्यति॥ ४९ ॥

विपर्ययो वा मम पुत्रः कंसं वा हनिष्यतीति किं न स्यात्। **कथमेतदिति** तत्राऽऽह धातुरिति। धातुः **ईश्वरस्य** गतिश्चेष्टालक्षणा दुरत्यया अतिक्रान्तुमशक्या। अतः किं, तत्राऽऽह उपस्थित इति। सर्वथा तावदुपस्थितो मृत्युरस्या निवर्तेत निवृत्तो यदि रावणादेरिव पुनरापतेत् तर्हि तदानीमस्तु किं तावदिदानीम्॥ ५० ॥

1- कस्यचित् निवृत्तः स्यात् मुक्तस्येव -1 इतोऽपि धातुर्गतिः दुरत्ययेत्येतत् सदृष्टान्तमुपपादयति - **अग्नेरिति।** यथाऽग्नेर्दावादिदहनस्य दारुवियोगयोगयोः काष्ठानभिव्यक्तिव्यक्त्योः दाह्यवृक्षाभिमानिजीवादृष्टप्रेरकेश्वरात् अन्यन्निमित्तं नास्ति। अदृष्ट इत्यादौ हरिनिवेशः कस्मात् उच्यते, कुण्डस्थाग्नेः दारुवियोगादौ स्वतः प्रवृत्त्यभावादिति वचनात् - 2-"यथा कुण्डस्थितस्याग्नेर्दैवाद्दारूपसन्नमेत्। देहयोगवियोगश्च तथा दैवान्न चान्यथा-2" (वामने) इति वचनाच्च। एवं जन्तोरपि

शरीरवियोगसंयोगहेतोः हरेरन्यो दुर्विभाव्यः, केवला[3]दृष्टलक्षणस्य कर्मणः स्वतः प्रवृत्त्यनुपपत्तेः कार्यस्य च दर्शनान्यथानुपपत्त्या श्रीनारायण एव भाव्य इत्यतः त्वया शास्त्रज्ञेन अस्या हननं नोचितमिति भावः ॥५१॥

आत्मनि यावद्दर्शनं परबोधलक्षणं ज्ञानं विमृश्याऽऽलोच्य ज्ञात्वा तावता सान्त्वयामास स्वावगतलोकप्रसिद्धदृष्टान्तो यावान् तावता वा॥ ५२॥

प्रत्यग्रं सद्यस्कं नूतनं वदनाम्बुजं यस्य स तथा। "प्रत्यग्रमुक्तं सद्यस्कम्" (हला.को. 4-78) इति हलायुधः । दूयमानेन मनसेति अन्तस्तापञ्च सूचयति प्रहसन्निति बहिः प्रसादम्। इदं महतां लक्षणम्॥ ५३॥

यावद्बोधेनाप्युक्तसंवादं विज्ञाय यथासंवादी स्यात् तथा प्रत्येतुं वक्ति - न ह्यस्या इति। यतो देवक्या॥ ५४॥

(विजयध्वजव्याख्यानरीत्या अत्र प्रथमोऽध्यायः समाप्तः)

---

1- -1 B,M, omit 2- -2 Ma omits 3. Ma. °लदृष्ट

## (विजयध्वजव्याख्यानरीत्या अत्र द्वितीयोऽध्यायः आरभ्यते)

[1]श्रीशुक उवाच[-1]

[2]स्वसुर्वधान्निववृते कंसस्तद्वाक्यसारवित्।
वसुदेवोऽपि तं प्रीतः प्रशस्य प्राविशद्गृहम्॥ ५५॥
अथ काल उपावृत्ते देवकी सर्वदेवता।
[3]पुत्रान् प्रसुषुवे चाष्टौ कन्याश्चैवाऽनुवत्सरम्॥ ५६॥
कीर्तिमन्तं प्रथमजं [4]कंसायाऽऽनकदुन्दुभिः ।
अर्पयामास कृच्छ्रेण सोऽनृता दतिविह्वलः ॥५७॥
किं दुस्सहं नु साधूनां विदुषां किमपेक्षितम्।
किमकार्यं कदर्याणां दुस्त्यजं [5]किं धृतात्मनाम्॥ ५८॥
दृष्ट्वा समत्वं तच्छौरेः सत्ये चैव [6]व्यवस्थितिम्।
कंसुस्तुष्टमना राजन् प्रहसन्निदमब्रवीत्॥ ५९॥
प्रतियातु कुमारोऽयं न ह्यस्मादस्ति मे भयम्।
[7]अष्टमाद्युवयोः [8]पुत्रान्मृत्युर्मे विहितः किल॥ ६०॥
तथेति सुतमादाय भयावानकदुन्दुभिः ।
नाभ्यनन्दत तद्वाक्यमसतोऽविजितात्मनः ॥ ६१॥

---

1- -1 K,W. omit 2. K,M,W. सुहृद्व° 3. K,W. सा 4. M. पुत्रमानक 5. M. किमृ° 6. K,V,W. तम् 7. B,G,V. गर्भान्मृ° 8. V. °र्मेऽभि

**श्रीध० स्वसुरिति।** निववृते निवृत्तः । तद्वाक्ये सार उपपत्तिस्तद्वित्॥ ५५॥

**अथेति।** का[1-]ल उपावृत्ते[-1] प्रसूतिकाले प्राप्ते सर्वः सर्वात्मा भगवानेव देवता यस्यास्सा, [2]तथा भगवदाश्रयत्वात् सर्वदेवतामयी वा॥ ५६, ५७॥

[3]ननु मृत्यवे पुत्रं कथमर्पितवानित्यपेक्षायामाह किं दुस्सहमिति। साधूनां सत्यसन्धानाम्। [4]ननु पुत्रलालन सुखापेक्षया कथं त्यक्तेत्यत आह - विदुषामिति। भगवानेव तत्त्वं, नाऽन्यदिति जानतामित्यर्थः । ननु स्वयं नीते सति कंसो बालं न हन्यादिति मत्वा नीतवानिति किं न स्यादिति नेत्याऽऽह - न किमकार्यमिति। ननु देवकी कथं पुत्रं तत्याजेत्यत आह दुस्त्यजमिति। चित्ते धृत आत्मा हरिर्यैस्तेषाम्॥ ५८ - ६१॥

---

1- -1 B,J. omit 2. V. omits तथा 3. B,J. omit ननु 4. B,J omit ननु

**वीर०** ततस्तस्य वसुदेवस्य वाक्यसारवित् वाक्याभिप्रायं जानन् कंसः सुहृदो भगिन्या वधान्निववृते न्यवर्तत, ततो वसुदेवोऽपि प्रीतस्तं कंसं प्रशस्य स्वगृहं प्राविशत्॥ ५५॥

अथ काले गर्भधारणयोग्यकाले उपावृत्ते समुपस्थिते सति सा सर्वदेवताप्राया देवतांशत्वात् तत्तुल्या देवकी प्रतिवत्सरम्, अष्टौ [1]सुतान् एकां कन्याञ्च सुषुवे॥ ५६॥

तदा तावत् स्वप्रतिज्ञां पालयन् वसुदेवः प्रथमजम् [2]अग्रजं कीर्तिमन्तं [3-]कीर्तिमन्नामानं[-3] पुत्रं कृच्छ्रेण दुःखेन कंसायाऽर्पयामास। तत्र हेतुं वदन् विशिनष्टि - अनृतादनृतभाषणात् [4]अतिविह्वलः [5-]भयविह्वलः[-5] ॥५७॥

पुत्रानुरागं विहाय कथं समर्पयामासेत्यत्राऽऽह - **किमिति।** साधूनां दुस्सहं दुःखेनाऽपि सोढुमशक्यं किन्वस्ति न किमपि। सर्वमपि सुसहमेवेत्यर्थः । पुत्रविपत्तिरपि सुसहैवेति भावः । तथा विदुषां स्वात्मपरमात्मयाथात्म्यज्ञानिनां पुंसां किन्वपेक्षितम् न किमपि। शरीरतदनुबन्ध्यादिकमपेक्षितं नाऽस्तीति भावः । किमुपेक्षितमिति पाठान्तरम्। तदा विदुषामिति साधूनां विशेषणम्। कदर्याणामुपेक्षितम्, अकार्यञ्च किमस्तीत्यन्वयः । कदर्यशब्दः क्षुद्रपर्यायः। इदं कंसाभिप्रायकम्। धृतः स्ववशीकृतः आत्मा मनो येषां, दुस्त्यजं किम्? देहतदनुबन्ध्यादिकं सर्वं सुत्यजमेवेति भावः॥ ५८॥

**दृष्ट्वेति।** व्यवस्थितमिति भावे क्तः । शौरेर्वसुदेवस्य तत्समत्वं सुखदुःखयोस्साम्यं, सत्ये व्यवस्थितं निश्चलत्वं च दृष्ट्वा, कंसस्तुष्टं मनो यस्य तथाभूतः[6] हे राजन्! प्रहसन्निदं वक्ष्यमाणमब्रवीत्॥ ५९॥

[7-]तदेवाऽऽह - **प्रतीति**।[-7] अयं [8]तव कुमारः प्रतियातु गृहं प्रतिगच्छतु। [9]मम अस्मात्कुमाराद्भयं मृत्युभयं नाऽस्ति हि; युवयोरष्टमात् पुत्रादेव हि मम मृत्युः विहितः किल, [10-]अशरीरवाचेति शेषः[-10] ॥ ६०॥

ततस्तथेत्यङ्गीकृत्य आनकदुन्दुभिर्वसुदेवः सुतमादाय ययौ। किन्तु असतः पापिनोऽनवस्थितचित्तस्य [11-]अविजितात्मनः अज्ञस्य[-11] कंसस्य, तदुक्तं वाक्यं नाभ्यनन्दत्। "अव्यवस्थितचित्तस्य प्रसादोऽपि भयङ्करः" इति न्यायादितिभावः ॥ ६१॥

---

1. B. पुत्रान् 2. K,W. omit अग्रजं 3- -3. B. कीर्तिमानिति नामकं 4. B. अतीव, K. भृश 5- -5. B. अनृतभाषणरूपपापभयादत्यन्तं विह्वल इत्यर्थः ॥ ५७॥ 6. B. adds सन् 7- -7. K. omits 8. K,W. omit तव 9. K,W. omit मम 10- -10. K,W. omit 11- -11. K,W. omit

**विज०** अत्र कंसचरितकथनव्याजेन संसारस्यानर्थरूपत्वं वर्णयति शुकः । सुहृत् सहोदरी। भार्यावधोपरमात् प्रीतः कंसं प्रशस्य॥ ५५॥

सर्वा देवता यस्यां सन्निहिता स्सा तथा। अनुवत्सरं प्रतिवत्सरम्॥ ५६॥

नाम्ना कीर्तिमन्तम्॥ ५७॥

स्वात्मनः प्राणनाशेनापि सत्यमेव रक्षन्ति महान्त इत्याशयेनाऽऽह **किं दुस्सहमिति**। कंसः असाधुष्वेक-इत्याशयेनाऽऽह - किमकार्यमिति। कदर्याणां कुत्सितस्वामिनां दरिद्राणां वा वसुदेवः साधुष्वेक इत्याशयेनाऽऽह-दुस्त्यजमिति। ऋतात्मनां सत्यस्वभावानाम्॥ ५८ - ६०॥

अविजितात्मनोऽसतः कंसस्य तद्वचनं न विश्वसनीयमिति नाऽभ्यनन्दत॥ ६१॥

**★ अथ कंसमुपागम्य नारदो ब्रह्मनन्दनः।**
**एकान्तमुपसङ्गम्य वाक्यमेतदुवाच ह॥**

**नन्दाद्या ये व्रजे गोपा याश्चामीषाञ्च योषितः।**
**वृष्णयो वसुदेवाद्या देवक्याद्या यदुस्त्रियः॥ ६२॥**

**सर्वे वै देवताप्राया उभयोरपि भारत।**
**ज्ञातयो बन्धुसुहृदो ये च कंसमनुव्रताः॥ ६३॥**

❈ असुरास्सर्व एवैते लोकोपद्रवकारिणः।
OO गतेऽथ वसुदेवे तु देवकार्यार्थमुद्यतः॥
एतत्कंसाय भगवान् [1-]शशंसा[-1]ऽभ्येत्य नारदः।
भूमेर्भारा[2]यमाणानां दैत्यानाञ्च वधोद्यमम्॥ ६४॥

ऋषेर्विनिर्गमे कंसो यदून्[3] मत्वा सुरानिति।
देवक्या गर्भसम्भूतं विष्णुञ्च स्ववधं प्रति॥ ६५॥

देवकीं वसुदेवञ्च निगृह्य निगलै[4] गृहि।
जातं जातमहन् पुत्रं तयो रजनशङ्कया॥ ६६॥

मातरं पितरं भ्रातृन् पुत्रांश्च[5] सुहृदस्सखीन्[6]।
[7-]घ्नन्ति ह्यसु[-7]तृपो[8] लुब्धा राजानः प्रायशो भुवि॥ ६७॥

आत्मानमिह सञ्जातं जानन् प्राग् विष्णुना हतम्।
महासुरं कालनेमिं यदुभिस्स व्यरुध्यत॥ ६८॥

उग्रसेनञ्च पितरं यदुभोजान्धकाधिपम्।
स्वयं निगृह्य बुभुजे शूरसेनान् महाबलः ॥ ६९॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादश
साहस्र्यां श्रीहयग्रीव ब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे पूर्वार्धे श्रीकृष्णावतारोपक्रमे
प्रथमोऽध्यायः ॥ १॥

---

★ This additional verse is found in M. Edn. only

❈ This half verse is not found in G. Edn.

OO This half verse is found in M.Edn. only.

1- -1 M. शंसयामास 2. M. °वतीर्णानां 3. B. विष्णवंशं 4. B,G,M. °है° 5. B,G,M. सर्वांश्च 6. B,G. °स्तथा; K,W. °श्शिशून्
7- -7 M. निघ्नन्त्यसु 8. K,W. °पाः

**श्रीध॰** कंसस्य शान्तिर्देवकार्यानुगुणा न भवतीति नारदस्य प्रत्यवस्थानम्। तदाह - **नन्दाद्या** इत्यादि त्रयेण॥ ६२॥

**सर्व** इति। उभयोर्वसुदेवनन्दकुलयोः ॥ ६३॥

भूमेरिति। [1-]वधोद्य[-1]मं देवकृतमिति शेषः ॥ ६४, ६५॥

**देवकीमिति।** निगलै[2]ः शृङ्खलैः । अजनो विष्णुः तच्छङ्कया॥ ६६, ६९॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां प्रथमोऽध्यायः ॥ १॥

---

1- -1. V. omits 2. B,J. °है:

**वीर०** नन्दाद्या इत्यादि सार्धश्लोकत्रयमेकान्वयम्। हे भारत ! उभयोः नन्दवसुदेवयोः ज्ञातयः बन्धवः सुहृदोऽपि देवताप्रायाः देवांशैर्जातत्वात् देवताप्रायाः, तत्तुल्या इत्यर्थः । ये तु कंसमनुव्रताः ते सर्वे असुराः असुरसम्पत्त्या जाताः, अत एव लोकोपद्रवकारिणः इत्येतद् भूमेर्भारायमाणानां नृपव्याजानां दैत्यानां भगवत्कर्तृकं वधोद्योगश्च। ततो भगवान्नारदोऽभ्येत्य आगत्य कंसाय शशंस कथयामास॥ ६२, ६३, ६४॥

ततः ऋषेर्नारदस्य विनिर्गम[1]नन्तरं कंसो यदून् सुरांशसम्भवान्, स्ववधं प्रत्युद्दिश्य देवक्या गर्भे सम्भविष्यन्तं विष्णुञ्च ज्ञात्वा॥ ६५॥

देवकीं वसुदेवञ्च निगलैः शृङ्खलैः गृहे कारागृहे निगृह्य निग्रहपूर्वकमाबध्य, अजनशङ्कया अरिष्टशङ्कया। अर्दनशङ्कयेति पाठे स्वपीडाशङ्कया तयोः देवकीवसुदेवयोः पुत्रं जातं जातम् अहन् जघान॥ ६६॥

निर्घृणः कथमहन्नित्यत्र लोकपरिपाटीं दर्शयति - **मातरमिति।** भुवि राजानः प्रायशोऽसुतृपाः परप्राणै - रात्मप्राणतर्पकाः लुब्धाः निषादसदृशाः मात्रादीनपि [2-]घ्नन्ति [-2]हि॥ ६७॥

आत्मानं प्राक् पूर्वजन्मनि विष्णुना हतं महासुरं कालनेमिम् इह अस्मिञ्जन्मनि आत्मरूपेण जातं जानन् नारदवाक्याज्जानन् स कंसः यदुभिस्सह व्यरुध्यत विरोधं कृतवान्॥ ६८॥

भोजानामन्धकानाञ्च यादवानामधिपं पितरमुग्रसेनं निगृह्य स्वयं महाबलः कंसः शूरसेनान् जनपदान् बुभुजे उपभुक्तवान्॥ ६९॥

इति श्रीवत्सान्वयपयःपारावारराकासुधाकरस्य सर्वविद्यानिधेः चक्रवर्तिनः श्रीशैलगुरोः सुतेन
तच्चरणकमल परिचर्याप्रसादिततत्सूक्तिसमधिगतश्रीमद्भागवतार्थ हृदयेन
श्रीवैष्णवदासेन श्रीवीरराघवविदुषा लिखितायां श्रीमद्भागवतचन्द्रचन्द्रिकायां
श्रीमद्भागवतव्याख्यायां दशमस्कन्धे पूर्वार्धे प्रथमोऽध्यायः ॥ १॥

---

1. B. °मनान° 2- -2. B. घ्नन्तीति, हि निश्चयार्थद्योतकः ॥ ६७॥

**विज०** नन्दाद्या इत्यारभ्य वधोद्यममित्यन्तं नारदवाक्यम्॥ ६२ ॥

उभयोः यदुकुलगोकुलयोः ॥ ६३ ॥

वधोद्यमम्। देवैः क्रियमाणमिति शेषः ॥ ६४, ६५॥

अहन् हतवान्। अजनो विष्णुरवतीर्ण इति शङ्कया॥ ६६ ॥

परप्राणैः स्वानसून् प्राणांस्तर्पयन्तीत्यसुतृपः ॥ ६७॥

प्राक् पूर्वजन्मनि॥ ६८॥

शूरसेनान् विषयान्॥ ६९॥

**(विजयध्वजव्याख्यानरीत्या अत्र द्वितीयोऽध्यायः समाप्तः )**

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां
टीकायां दशमस्कन्धे पूर्वार्धे प्रथमोऽध्यायः ॥ १ ॥

# द्वितीयोऽध्यायः

## (विजयध्वजरीत्या तृतीयोऽध्यायः )

श्रीशुक उवाच

प्रलम्ब बक चाणूर तृणावर्त महाशनैः ।
मुष्टिकारिष्ट द्विविद पूतना केशि धेनुकैः ॥ १ ॥

अन्यैश्चाऽसुरभूपालै र्बाणभौमादिभि र्युतः।
यदूनां कदनं चक्रे बलिमागधसंश्रयः[1] ॥ २ ॥

ते पीडिता निविविशुः कुरुपञ्चालकेकयान्[2] ।
साल्वा[3] न्विदर्भा न्निषधा न्विदेहा[4] न्कोसला[5] नपि ॥ ३ ॥

एते तमनुरुन्धाना ज्ञातयः पर्युपासते।
हतेषु षट्सु बालेषु देवक्या औग्रसेनिना ॥ ४ ॥

सप्तमो वैष्णवं धाम यमनन्तं प्रचक्षते।
गर्भो बभूव देवक्या हर्षशोकविवर्धनः ॥ ५ ॥

भगवा नपि विश्वात्मा विदित्वा कंसजं भयम्।
यदूनां निजनाथानां योगमायां समादिशत् ॥ ६ ॥

---

1. B,G,J,M,V बली 2. B,G,J प° 3. G,J,M शा° 4. K,W °न्मगधान् 5. M °न्मागधा नपि।

## श्रीधरस्वामिविरचिता भावार्थदीपिका

द्वितीये कंसघाताय देवक्या गर्भगो हरिः।
ब्रह्मादिभिः स्तुतः सा च सान्त्वितेति निरूप्यते॥

"यदुभि स्स व्यरुध्यत" (भाग० 10-1-68) इत्युक्तम्। तमेव विरोधं प्रपञ्चयति। त्वरया देवकीगर्भस्य अन्यत्र सञ्चारेण भगवतः प्रवेशं **प्रलम्बेत्यादि** सार्धश्लोकत्रयेणाऽऽह। महाशनोऽघासुरः ॥ १-३ ॥

**एके** इति। अनुरुन्धाना अनुवर्तमानाः ॥ ४ ॥

**सप्तम** इति। धाम कला। तदेव सप्तमो गर्भो बभूव। किं तद्धामेत्यतः आह - यमनन्त मिति। हर्षशोकविवर्धनः, आनन्दरूपस्यावतीर्णत्वात् हर्षः, पूर्वगर्भसाधारणदृष्ट्या शोक इति॥ ५,६ ॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

"यदुभि स्स व्यरुध्यत" (भाग० 10-1-68) इत्येतदेव प्रपञ्चयन् भगवतो देवकीजठरप्रवेशप्रकारं, तत्प्रवेशप्रयुक्त प्रभातिशययुक्त देवकी दर्शनोद्विग्नस्य कंसस्यावस्थानप्रकारं, गर्भस्थं विष्णु मुद्दिश्य ब्रह्मादीनां स्तुतिप्रकारञ्चाऽऽह [1-]द्वितीयाध्यायेन **प्रलम्बे** त्यादिना[-1]। प्रलम्बादिभि रन्यैश्च असुरप्रकृतिभि र्भूपालैः बाणादिभिः परिवृतः [2]कंसः, भौमो नरकासुरः, बलिमागधौ संश्रयौ यस्य तथाभूतः । बलीति मागधो विशेषणं वा। मागधो जरासन्धः । यदूनां कदनमुपद्रवं चकार॥ १,२ ॥

तदा ते यदवः केचित्पीडिताः कुर्वादीञ्जनपदान् विविशुः ॥ ३ ॥

एके तु ज्ञातयः तं कंसमनुरुन्धाना अनुवर्तमानाः पर्युपासते पर्यचरन्। तत औग्रसेनिना कंसेन षट्सु देवक्या [3-]गर्भेषु अपत्येषु[-3] हतेषु सत्सु यत् वैष्णवं विष्णो स्सम्बन्धि धाम तेजोंऽश इति यावत्। कोऽसौ? तस्या हर्षशोकौ विवर्धयतीति तथा। कंसभया च्छोकः [4-]श्रीभगवत्कलासम्बन्धात् पुत्रो भविष्यति किं समर्थोऽस्माक मपीति हर्षः[-4] इति भावः॥ ४,५ ॥

ततो भगवा न्विश्वात्मा, हेतुगर्भ मिदम्। कंसा ज्जातं, निज आत्मा नाथो येषां तेषां यदूनां भयं ज्ञात्वा योगमायां स्वमायाधिष्ठात्रीं देवता मादिशत् आज्ञापयामास॥ ६ ॥

---

1- -1 K,W **द्वितीयेन प्रलम्बेति** 2. K,W omit कंसः 3- -3 B पुत्रेषु 4- -4 K,W omit.

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अवताररूपं हरे र्न किञ्चि दपि भिन्नं साक्षात्स्वरूपमेव तज्ज्ञानस्य मुक्तिहेतुत्वा दित्यभिप्रायेण निरूपण मस्मिन्नध्याये। तत्र दुष्टेन्द्रियैः सदिन्द्रियनिग्रह इव कंसः प्रलम्बादिभि स्सहितो यदुनिग्रह मकृतेत्यादिकं निरूपयति **प्रलम्बे** त्यादिना॥ १ ॥

कदनं कलहम् मागाधो जरासन्धः संश्रयो यस्य स तथा, तं संश्रयतीति वा॥ २ ॥

ते यादवा निविविशुः निवेशनं चक्रुः ॥ ३ ॥

अनुरुन्धाना अनुवर्तमानाः ॥ ४ ॥

वैष्णवं धाम विष्णुतेजः सन्निहितम्। हर्षशोकविवर्धन इति उत्पत्तिप्रस्रवणाभ्या मिति शेषः । हर्षं समेधयन् शोक मेधयन्निति वा॥ ५,६ ॥

**गच्छ देवि व्रजं भद्रे गोपगोभि रलङ्कृतम्।**
**रोहिणी वसुदेवस्य भार्याऽऽस्ते नन्दगोकुले।**
**अन्याश्च कंससंविग्ना विवरेषु वसन्ति हि॥ ७॥**

**देवक्या जठरे गर्भं शेषाख्यं धाम मामकम्।**
**तत्सन्निकृष्य रोहिण्या उदरे सन्निवेशय॥ ८॥**

**अथाऽहम्[1] मंशभागेन देवक्यां पुत्रतां शुभे।**
**प्राप्स्यामि त्वं यशोदायां नन्दपत्न्यां भविष्यसि॥ ९॥**

**अर्चिष्यन्ति मनुष्या स्त्वां सर्वकामवरेश्वरीम्[2]।**
**[3]नानोपहारबलिभिः सर्वकामवरप्रदाम्॥ १०॥**

**नामधेयानि कुर्वन्ति स्थानानि च नरा भुवि।**
**दुर्गेति भद्रकालीति विजया वैष्णवीति च॥ ११॥**

**कुमुदा चण्डिका कृष्णा माधवी कन्यकेति च।**
**माया नारायणीशाना[4] शारदे त्यम्बिकेति च॥ १२॥**

**गर्भसङ्कर्षणात्तं वै[5] प्राहु[6] स्सङ्कर्षणं भुवि।**
**रामेति लोकरमणात् [7-]बलभद्रं बलोच्छ्रयात्[-7]॥ १३॥**

---

1. M °ऽहं स्वांश 2. K.W. प्रदे° 3. B,G,J धूपोप 4. B,G,J °नी 5. B वा 6. B आहुः 7- -7 B,G,J बलं बलवदुच्छ्रयात्।

**श्रीध० गच्छेति।** ननु सा गोकुले किमित्याऽऽस्ते ? अत आह - **अन्याश्चेति।** न केवलं सैव अन्या अपीति। विवरेषु अलक्ष्यस्थानेषु ॥ ७ ॥

**देवक्या** इति। जठरे सन्तम्। ननु गर्भ आकृष्यमाणः कथं जीवेदित्यत[1] आह - मामकं धामेति। तत् ततः ॥ ८ ॥

किमर्थ मेवं कार्य मित्यत आह - **अथेति।** अथ[2] अनन्तर मेवेत्यर्थः। अंशभागेनेति - अंशै श्शक्तिभि र्भजते अधितिष्ठति सर्वान् ब्रह्मादि स्तम्बपर्यन्ता निति अंशभागः, तेन परिपूर्णेन[3] रूपेणेत्यर्थः। यद्वा, अंशै र्ज्ञानैश्वर्यबलादिभिः भाजयति योजयति स्वीया निति तथा[4] तेनेति। यद्वा, अंशेन पुरुषरूपेण मायया भागो भजनमीक्षणं यस्य तेन। यद्वा अंशेन मायया गुणावतारादिरूपा भागा भेदा यस्य तेन। यद्वा अंशा एव मत्स्य कूर्मादिरूपा भजनीया न तु साक्षात्स्वरूपं यस्य तेन। यद्वा अंशै र्ज्ञानबलादिभिः भजन मनुवर्तनं भक्तेषु यस्य तेन। सर्वथा परिपूर्णेन[5] रूपेणेति विवक्षितम्। "कृष्णस्तु भगवान् स्वयम्" (भाग 1-3-28) इत्युक्तत्वादिति। तां प्रोत्साहयति - त्वं यशोदायामिति त्र्यक्षरोन[6]सार्धचतुष्टयेन ॥ ९ ॥

**अर्चिष्यन्तीति।** सर्वान्पुत्रादीन्कामयन्ते ये तेषां वरां श्रेष्ठां[7] ईश्वरीं नियन्त्रीम्। अर्चकानां सर्वा[8] न्कामवरान् प्रददाति या, ताम् ॥ १० - १२ ॥

[9-]त्वं द्विकर्षणेन[-9] [10-]त द्विक्रमेण[-10] च तस्य स [11-]ङ्कर्षण राम बलभद्रेति[-11] व्यपदेशा भविष्यन्तीत्याह - **गर्भेति।** रामेति च सम्बोधनं करिष्यन्ति। त्वया सङ्कृष्टेन तेन लोकस्य रमणाद्रत्युत्पादनात् ॥ १३ ॥

---

1. V °दत 2. B,J, omit अथ 3. V पूर्णरू° 4. V omits तथा 5. V पूर्णस्व° 6. V omits त्र्यक्षरोन 7. V omits श्रेष्ठां 8. V सर्वका° 9- -9 B,J omit 10- -10. V omits 11- -11 B,J omit.

**वीर०** तदेवाऽऽह **गच्छेत्यादिना** सन्दिष्टैव मित्यतः प्राक्तनेन। हे देवि! हे भद्रे! त्वं गोपैः गोभिश्चाऽलङ्कृतं नन्दव्रजं गच्छ। तत्र गत्वा किं विधेय मित्यत्राऽऽह - नन्दगोकुले नन्दस्य ग्रो[1] व्रजे वसुदेवस्य भार्या आस्ते। तथा अन्याश्च तस्य भार्याः कंसात्संविग्नाः भीताः तत्र तत्र[2] विवरेषु पर्वतबिलादिषु प्रच्छन्ना वसन्ति ॥ ७ ॥

अधुना मामकं मदीयं शेषाख्यं धाम अंशं देवक्या जठरे गर्भरूपेणाऽवस्थितं, तस्मा[3] द्देवकीजठरा त्सन्निकृष्य सम्यक् बहि र्निष्कास्य रोहिण्या जठरे सम्यङ्निवेशय। अनेन "रोहिण्या स्तनयः प्रोक्तः" इत्यादि प्राक्तनं प्रश्नो[4]त्तर मुक्तं भवति ॥ ८ ॥

अथाऽहमंशभागेन मदंशांशभूतेन सङ्कर्षणेन सह हे शुभे! देवक्याः पुत्रत्वं प्राप्स्यामि। त्वन्तु नन्दस्य पत्न्यां यशोदायां भविष्यसि सम्भव॥९॥

सर्वेषां कामाना मिष्टार्थानां वराणाञ्च (ईश्वरीं) प्रदात्रीं (पाठान्तरे) सर्वकामप्रदाना मपि ईश्वरीं त्वां नानाविधै रुपहारैः नैवेद्यै रन्यैश्च बलिभिः पूजाभिः नरा अर्चिष्यन्ति। एव मनुगृह्णामीति भावः ॥१०॥

तथा भुवि तव स्थानानि मन्दिराणि नामधेयानि च कुर्वन्ति [5-] करिष्यन्ति [-5]। तत्र नामानि दर्शयति- दुर्गेति॥११,१२॥

तथा त्वया देवकीजठरात् सङ्कृष्टं शेषम्, अत एव प्रवृत्तिनिमित्तात् सङ्कर्षणा त्सङ्कर्षणशब्दवाच्यम्। लोकरमणात् लोकरञ्जना न्निमित्तात् रामेति रामशब्दवाच्यम्। बलाधिक्या न्निमित्तात् बलभद्रशब्दवाच्यम्। भुवि प्राहुर्वक्ष्यन्ति। यद्वा तं तेभ्यो निमित्तेभ्यः तत्तच्छब्दै र्व्यवहरिष्यन्तीत्यर्थः ॥१३॥

---

1. B adds कुले 2. K,W omit तत्र 3. K omits तस्मात् 4. B प्रश्न स्योत्तरं 5- -5 K,W omit.

**विज०** पर्वतविवरेषु॥७,८॥

स्वांशभागेन स्वांशांशेन, अंशस्य भागो भजनं स्वीकारः ; तेनेति वा॥९,१०॥

दुरधिगमत्वा द्दुर्गा। भद्रा, मङ्गला नीला चेति भद्रकाली। सर्वा दिशो विजयतीति विजया। विष्णोरियं वैष्णवी॥११॥

कौ भूमौ मोदते इति कुमुदा। 'चडि कोपे' इति धातोः शत्रवे कुपितत्वात् चण्डिका। सदानन्दत्वा- न्कृष्णा। मधुकुलोत्पन्नत्वान्माधवी बिष्णुदयितत्वा द्वा। कं सुखं नयतीति कन्या, नित्यकुमारी वा। मीयते ज्ञायते इति माया। मां यातीति वा। नारस्य नरसमुदायस्य अयनत्वा न्नारायणी। सर्वस्य ईष्टे इति ईशाना। शीर्यत इति शारः, तं संसारं द्यति खण्डयतीति शारदा। शत्रुविषयं शारं हिंसां ददातीति वा। सर्वस्य मातृत्वादम्बिका॥१२॥

बलोच्छ्र्यात् बलोन्नतेः ॥१३॥

**सन्दिष्टैवं भगवता तथे त्योमिति तद्वचः।**
**[1]प्रतिगृह्य परिक्रम्य गां गता तत्तथाऽकरोत्॥१४॥**

**गर्भे प्रणीते देवक्या रोहिणीं[2] योगनिद्रया।**
**अहो विस्रंसितो गर्भ इति पौरा विचुक्रुशुः ॥१५॥**

★ भगवानपि विश्वात्मा भक्तानामभयङ्करः ॥
आविवेशांशभागेन मन आनकदुन्दुभेः ॥१६॥

स बिभ्रत्पौरुषं धाम [3]भ्राजमानो यथा रविः ।
दुरासदोऽतिदुर्धर्षो भूतानां सम्बभूव ह॥१७॥

ततो जगन्मङ्गल मच्युतांशं समीहितं शूरसुतेन देवी।
दधार सर्वात्मक मात्मभूतं काष्ठा यथाऽऽनन्दकरं [4]मनस्तः ॥१८॥

सा देवकी सर्वजगन्निवासनिवासभूता नितरां [5-]न रेजे[-5]।
भोजेन्द्रगेहेऽग्निशिखेव रुद्धा सरस्वती [6]ज्ञानखले यथा सती॥१९॥

---

1. V परि 2. V °ण्यां. ★ V आविवेशांशभागेन मन आनकदुन्दुभेः । अंशेन भगवा न्विष्णुः भुवो भारापनुत्तये॥ १६ ॥ 3. M राज° 4. K,W घनस्थम्; M नभस्तः 5- -5 M विरेजे 6. M द्यूत

**श्रीध० सन्दिष्टेति।** तथेति पुनर प्योमिति आदरेण प्रतिगृह्य। गां पृथिवीम्॥ १४॥

**गर्भ इति।** विस्रंसितो [1]विभ्रष्टो विस्रस्त [2]इत्यर्थः इत्[3]येवं विचुक्रुशुः। न तु तद्विदु रित्यर्थः॥ १५॥

**भगवा** निति। मन आविवेश मन स्याविर्बभूव जीवाना मिव न धातुसम्बन्ध इत्यर्थः ॥१६॥

**स** इति। धाम [4]श्रीविष्णोः ॥१७॥

**तत** इति। जगन्मङ्गलं [5-]जगतो मूर्तिमन्मङ्गलम्[-5]। अच्युतांशं अच्युता च्युतिरहिता अंशा ऐश्वर्यादयो यस्य तम्। यद्वा, अच्युतस्य अंश इवांशः [6]भक्ताना मनुग्रहार्थं [7]परिच्छन्नवपु रित्यर्थः । [8]समाहितं सम्यग्भूत मेवाऽऽहितं [9]वैधदीक्षयाऽर्पितम्, देवी द्योतमाना शुद्धसत्त्वेत्यर्थः । सर्वात्मकं सर्वस्याऽऽत्मानम्, अत एवाऽऽत्मभूतम्, स्वस्मिन्नाऽऽदावेव सन्तम्। मनस्तो मनसैव दधार धारणया धृतवती। अत्रानुरूपं दृष्टान्तमाह - यथा काष्ठा प्राची दिक् आनन्दकरं चन्द्रमिति॥ १८॥

**सेति।** सर्वजगन्निवासस्य श्रीहरे र्निवासभूता सत्यपि नितरां सर्व जनाह्लादकतया न रेजे, किन्तु स्वयमेवाऽऽनन्द [10]मन्वभवत्। यतः कंसस्य गृहे रुद्धा अन्यैर्न दृश्यते। घटादिषु रुद्धा अग्निशिखा [11]दीप कलिकेव। तथा सती [12]शोभना सरस्वती ज्ञानखले ज्ञानवञ्चके रुद्धा यथाऽन्येषा मनुपकारिणी न राजते तद्वत्॥ १९॥

---

1. V omits विभ्रष्टः 2. V omits इत्यर्थः 3. B,J omit एवं 4. B,J श्रीमूर्तिम् 5- -5 V omits 6. V भक्तानु 7. B च्छिन्न 8. B,J omit समाहितम् 9. J वेध 10. V °भूत् 11. V दीप इव 12. B,J शोभमाना।

**वीर०** एव[1] मित्थं भगवता सन्दिष्टा आदिष्टा योगमाया तस्य भगवतो वचः[2] तथे त्योमिति, तथैवाऽस्त्विति अङ्गीकारपूर्वकं प्रतिगृह्य अभिनन्द्य तं प्रदक्षिणीकृत्य गां भूमिं गता प्रविष्टा सती तथैव यथोक्त मकरोत्॥ १४॥

ततो योगनिद्रया भगवद्योगनिद्राधिष्ठात्र्या शक्त्या देवक्या गर्भे रोहिण्यीं प्रति प्रणीते प्रापिते सति, तदा पौराः जनाः, अहो देवक्या गर्भो विस्रंसितः विस्रस्तः । 'स्रंसु अधःपतने' इति धातुः। विचुक्रुशुः रुरुदुः ॥ १५॥

ततो भक्ताना मभयङ्करः भक्तामयचिकीर्षुः विश्वात्मा भगवान् अंशभागेन, जातस्येति शेषः। "स आत्मा अङ्गान्यन्या देवताः " (तैत्ति उ. 1-5-1) इति देवतानां भगवदंशत्वश्रवणात् आनकदुन्दुभे र्दैवांशेन जातत्वाच्चेति भावः। मन आविवेश सङ्कल्पज्ञानेनाऽऽविवेशेत्यर्थः । "यो मनसि तिष्ठन्" (बृह.उ. 3-7-20) इति पूर्वमेवाऽऽविष्टत्वावगमात् अंशभागेन सङ्कल्परूपज्ञानेन आविवेशेति वाऽन्वयः ॥ १६॥

वसुदेवः पौरुषं भगवत्सम्बन्धि तेजो बिभ्र द्बिभ्राणः यथा रवि स्तथा भ्राजमानः दुरासदः इत्थन्तया अभिसंहितु मशक्येन तेजसा युक्तः, भूतानां कंसादीनां दुर्धर्षः दुःखेनाऽपि सोढु मशक्यो बभूव॥ १७॥

ततः शूरसुतेन वसुदेवेन निहितं जगतां मङ्गलं यस्मात्तम्। अच्युतः अप्रच्युतोंऽशः सङ्कल्परूपं ज्ञानं यस्य तम्। सर्वात्मकं सर्वशरीरकम् आत्मनोऽप्यात्मभूतं भगवन्तं देवकी दधार, जठर इति शेषः।[4] यथा काष्ठा पूर्वा दिक् घनस्थमभ्रपिहित मानन्दकरं चन्द्रं बिभर्ति तद्वत्। वसुदेवापत्यत्वसिद्धये ताव द्वसुदेवहृद्गतः, पश्चा द्देवकीजठरं प्रविवेशेत्यर्थः । पूर्वदिश श्चन्द्रस्येव वसुदेवदेवकीजठरयो र्भगवत स्सम्बन्ध इति भावः ॥ १८॥

सा धृतपरमपुरुषा देवकी सर्वजगदाधारभूतस्य भगवतो निवासभूता सती अतितरां न रेजे न रराज; यथा भोजेन्द्रस्य उग्रसेनस्य कंसस्य वा गृहेऽवरुद्धा अग्ने श्शिखेव। अभूतोपमेयम्। यथा च ज्ञानखले [5]वेदविरुद्धज्ञानेन मूर्खे[5] पुंसि सती निर्दुष्टा सरस्वती उपनिष न्न राजते तद्वत् । परमात्मगर्भत्वादग्निशिखादृष्टान्तः । "तस्या श्शिखाया मध्ये परमात्मा व्यवस्थितः" (म.ना.उ. 9-12) इति श्रुतेः। 'ज्ञानबले' इति पाठान्तरम्। तदा वेदाविरुद्धज्ञानवतीत्यर्थः ॥ १९॥

---

1. B adds श्री भगवदाज्ञोदया दनन्तरं सा योगमायाऽपि श्रीभगवदाज्ञां सर्वात्मना अत्यादरेण प्रणतिपूर्वकं शिरसि निधाय आज्ञाक्रम मनुलङ्घ्य भुवि समागत्य यथैवाऽऽज्ञप्ता तथैवाऽकरो दित्याह श्रीशुकः - **सन्दिष्टैव** मित्यादिना। 2. B adds वचनं 3. B विराजमानः 4. B adds हृदयाकाशे हृदयकमले वेति दिक् 5- -5 B वेदविरुद्धेन हीनेन ज्ञानेन मूर्खे दुर्जने।

**विज०** तद्वचनं तथेति स्पष्टीकरणम्। तथे त्योमिति तथा करोमीति तद्वचः प्रतिगृह्येति वा॥१४॥

योगनिद्रया देवक्या गर्भे रोहिणीं प्रणीते सति विस्रंसितः स्रावितो निर्गलित इति विचुक्रुशुः ॥१५,१६॥

पौरुषं धाम पुरुषाकारीभूतं विष्णुतेजः ॥१७॥

वसुदेवप्रवेशानन्तरं देवी अच्युतस्य हरे रंशं कृष्णकेशलक्षणं दधार। जगन्मङ्गलयति भूभार हरणेन जगन्मङ्गलं करोतीति जगन्मङ्गलम्। शूरसुतेन वसुदेवेन समाहितं सर्वात्मनः सर्वव्यापिनो हरेः या सर्वव्यापित्वशक्तिः साऽस्यास्तीति सर्वात्मक स्तम्। आत्मभूतं देवक्यां प्रत्यगात्मस्वरूपम्, आत्मनो मनसो भूतमभिव्यक्तं वा। आत्मभुव श्चतुर्मुखस्य भूतमिष्टसाधकत्वादिष्टं दैवं वा। आनन्दकरं मुक्तप्रपञ्चस्याऽपि सुखकरम्। कथमिव? काष्ठा पूर्वीदिक् आनन्दोऽमृतं करो यस्य स तमानन्दकरं चन्द्रं नभस्त आकाशे यथा दधाति तथा हृदयाकाशे दधार न तु योन्याकाशे। कीदृशी काष्ठा? पूर्णमनोरथा। कीदृशी? देवी द्योतमाना। [1-] कीदृशं चन्द्रम्[-1]? रात्र्या मन्धकारनिरासेन जगन्मङ्गलभूतम्। च्युतिरहिता अंशाः करा यस्य स तथा। तं पूर्ण कलमित्यर्थः। शूर श्चण्डकर स्सूर्यः, तत्सुतः सुषुम्नाख्यो रश्मिः तेन समाहितं निष्पादितम्। अमावास्यायां सूर्ये लीनः तस्य सुषुम्नाख्यरश्मिना अभिव्यज्यत इति शास्त्रप्रसिद्धिः। सर्वासा मोषधीना मङ्कुरजनकत्वेन प्रेष्ठत्वात् सर्वात्मक मात्मनो मनसोऽभिमानित्वात् आत्मभूतं लोकविडम्बनार्थं पितृमातृप्रवेशक्रमः, न तु शरीरस्वीकारार्थम्। तदुक्तम् "आविश्य पितरं विष्णुः [2-] स्वरूपेणैव मातरम्। विडम्बनार्थं लोकस्य निर्जनिश्चाऽप्यथाऽऽविशत्। आनन्दमात्रदेहेन जातवत्सम्प्रदृश्यते[-2]" (वामने) इत्यादिना॥१८॥

सा देवकी प्रथमं भोजेन्द्रगेहे रुद्धा न रेजे इति। 'विरेजे' इति पाठे नञ मध्याहृत्य व्याख्येयम्। पश्चात्[*], सर्वजगन्त्यस्मिन् निवसन्तीति सर्वजगन्निवासो विष्णुः तस्य निवास भूता, हेतुगर्भ विशेषणम्। नितरा मत्यन्तं न रेजे। विरेजे इति पाठे नञोऽध्याहार्यत्वम्। अत्र दृष्टान्तः दाहकाग्निशिखा दाह्यतृणपटलादिना रुद्धा न राजते, पुन श्शुष्केण तेनैव ज्वलिता यथा राजते। यथा वा सती सरस्वती सत्यरूपा वाणी द्यूतखले द्यूतरङ्ग स्थले अनृतेन रुद्धा न राजते। सैव निर्व्याजा रोचते, तथेति। अन्यथा यथास्थितकथनं दृष्टान्त दार्ष्टान्तिक विरोधा दयुक्तम्॥१९॥

---

1- -1 Ma omits 2- 2- Ma omits * अर्थानुसारेण पाठः शोधितः। ★ अर्थानुसारेण पाठः शोधितः।

**तां वीक्ष्य कंसः प्रभया [1]जितान्तरां विरोचयन्तीं भवनं शुचिस्मिताम्।**
**आहैष मे प्राणहरो हरि र्गुहां ध्रुवं श्रितो यन्न पुरेय मीदृशी ॥ २० ॥**

**किमद्य तस्मिन् [2]करणीय माशु मे [3]यथार्थतन्त्रो न विहन्ति विक्रमम्।**
**स्त्रियाः स्वसु र्गुरुमत्या वधोऽयं यशः श्रियं [4]हन्त्यनुकूल मायुः ॥ २१ ॥**

★ ऋ [5]द्धष जीवन् खलु सम्परेतो वर्तेत योऽत्यन्तनृशंसितेन।
देहे मृते [6-]तं मनुजा श्शपन्ति गन्ता तमोऽन्धं [-6]तनुमानिनो ध्रुवम्॥ २२॥

इति घोरतमा द्भावात् [7]सन्निवृत्तः स्वयम्प्रभुः ।
आस्ते [8]प्रतीक्षंस्तज्जन्म हरे [9]र्वैरानुबन्धकृत्॥ २३॥

आसीन स्संविशं स्तिष्ठन् भुञ्जानः पर्यटन् [10]पिबन्।
चिन्तयानो हृषीकेश मपश्य त्तन्मयं जगत्॥ २४॥

ब्रह्मा [11]भवश्च तत्रैत्य [12-]मुनिभिर्नारदादिभि[-12]ः।
देवै स्सानुचरै स्साकं गीर्भि [13-]र्धिषिण मैडयन्[-13] ॥ २५॥

---

1. M °ऽ जितम्भरां 2. M घटनीय ° 3. B,G,J यदर्थ; V यमर्थ 4. B,G,J काल°; V वेल ° ★ विहन्ति कीर्तिं सुदुरासदां परैः । त्यजन्ति सन्तो यशसा विहीनम्॥ This additional half verse is found between 21 and 22 verses in V. edition. 5. B,K एव 6- -6 M तमनु ह्यर्थकामौ यशोऽमलं गौरभि 7. V स नि° 8. V° क्ष्य त° 9. M. वित् 10. B,G,J महीम् 11. K,W °दयश्च 12- -12 V मुनयो नारदादयः, 13- -13 B,G,J °वृषण मैडयन्; M °र्विष्णु मथाऽ स्तुवत्।

**श्रीध० तामिति।** प्रभया भवनं विरोचयन्तीम्। अजितः [1]श्रीकृष्णः अन्तरा कुक्षिमध्ये यस्या स्ताम्। एष विरोचमानो [2-]गुहां श्रितः गर्भे स्थित[-2]ः ध्रुवं हरि रेव यत् यस्मात् ईदृशीयं [3]पुरा पूर्वं नाऽऽसीत्॥ २०॥

ननु सन्ति सामादय उपायाः । नेति स्वय मेवाऽऽह **किमिति।** अयमर्थतन्त्रो देवकार्यप्रधानो विक्रमं न विहन्ति। मद्वधे पराक्रमं करिष्यत्येवेत्यर्थः । यद्वा, तर्हीदानी मेवेयं हन्यता मिति विचिन्त्याह - अर्थतन्त्रोऽपि पुमान् स्वं विक्रमं न विहन्ति न नाशयति। स्त्रीवधे त न्नाशः स्या दिति भावः । तदेवाऽऽह स्त्रिया इति। गुरुमत्या [4]गर्भिण्याः ॥ २१॥

**स इति।** किञ्च स एष [5]जीवन्नपि मृतः स्यात् नृशंसितेन क्रौर्येण यो वर्तेत तं जीवन्त मेव मनुजाः शपन्ति, दुर्वाक्यैर्धिक्कुर्वन्ति। देहे मृते तनुमानिनः पापिनो नरकं गच्छन्ति। अथवा शापप्रकार [6]मेवाऽऽह- तनुमानिनो [7-]देहात्माभिमानिन[-7]ः अस्य देहे मृतेऽयं ध्रुव मन्धन्तमो गमिष्यतीति॥ २२,२३॥

**आसीन इति।** संविशन् शयानः ॥ २४॥

**ब्रह्मेति।** रम्याभिर्गीर्भिः वृषणं कामवर्षिणम्, ऐडयन् तुष्टुवुः ॥ २५॥

---

1. B,J omit श्रीकृष्णः 2- -2 B,J omit 3. V omits पुरा 4. B,J गुर्विण्याः 5. V °न्नेव 6. V° माह 7- -7 B,J omit.

**वीर०** तदा प्रभया जिता न्यन्तराणि दिगन्तराणि यस्याः, शुचि विशुद्धं स्मितं यस्या स्ताम्। भवनं गृहं विरोचयन्तीम्। देवकीमवलोक्य[1] कंसः आह[2]। उक्तिमेव दर्शयति "एष" इत्यादिना 'इति घोरे' इत्यतः प्राक्तनेन। मे मम प्राणहरः प्राणान् जिहीर्षुः अय मेष हरिः गुहां देवकीजठरविवरं श्रितः । पुरा इयं देवकी नेदृशी एवंविधप्रभान्विता नाऽऽसीत्। अतो नूनं गुहा माश्रितः ॥२०॥

अर्थतन्त्रो देवकार्यप्रधानोऽयं हरिर्मम विक्रमं यथा न निहन्ति तथाऽत्र हरिविषये मे मया अधुना आशु किं करणीयम्? किं घटनीयम्। य द्येनां हन्मि तर्ह्यस्याः स्त्रियाः , तत्राऽपि स्वसुर्भगिन्याः, तत्राऽपि गुरुमत्याः गुरुतरगर्भिण्याः वधोऽयं यशआदीनि हन्ति क्षपयति। अनुकूल मित्यायुर्विशेषणम्। अनुकाय मिति पाठान्तरम्। तदा प्रतिशरीरं यशआदीनि हन्तीत्यन्वयः ॥२१॥

सः गुरुमतीहन्ता स्वयं जीव न्नपि सम्परेतः मृतप्रायः खलु, यः पुमान् अत्यन्तनृशंसितेन क्रूरचेष्टितेन वर्तेत, तनुमानिनो देहात्माभिमानिनो देहे मृते नष्टे सति मनुजा स्तं शपन्ति। स चान्धंतमो नरकं ध्रुवं नूनं गन्ता गमिष्यति॥२२॥

इतीत्थं घोरतमात् भावात् गुरुमतीवधोद्योगरूपात् स्वयं प्रभुः तां हन्तुं समर्थोऽपि निवृत्तः । ततः हरेर्जन्म प्रतीक्षमाणस्सन् वैरानुबन्धं वैराविच्छेदं कुर्वन् आस्ते आस॥२३॥

आसनादिक्रियास्वपि हरि मेव चिन्तयमानः जगत् तन्मयं हृषीकेशमयं तत्प्रचुर मपश्यत्॥२४॥

तत्र देवकीसन्निधौ नारदादिभि र्मुनिभिः सानुचरै र्देवैश्च सह ब्रह्मा चतुर्मुखो भवो रुद्रश्च समागत्य[3] गीर्भिः औपनिषदानुकारिणीभिः वाग्भिः धिषणं धिषणायुक्तं सर्वज्ञं भगवन्तं ऐडयन् तुष्टुवुः । ण्यन्ता न्निवृत्तप्रेरणात् ईडे र्लङ्। नारदाद्यभिप्रायकं बहुवचनम्। [4-]वृषण मिति पाठे कामवर्षिणं भगवन्तं ऐडय न्निति स एवाऽर्थः[-4] ॥२५॥

---

1. B °मालोक्य 2. B प्राह 3. K,W omit समागत्य 4- -4 K, W omit.

**विज०** अजितम्भरां विष्णुं दधानां जेतुमशक्यगर्भभरां वा। अन्तःस्थितविष्णुं प्रभावर्धितस्वदेहप्रभया गर्भरूपेण हृदयगुहां प्रविष्टो, यद्यस्मात्, तं तस्मात् ध्रुवम्॥२०॥

अस्तु तव प्राणहरो हरिः, ततः किम्? अत्राऽऽह **किमद्येति।** अद्य मे मया तस्मिन् गर्भस्थिते हरौ घटनीयम् उपद्रवत्वेन कर्तव्यं तत् केन प्रकारेणेति चिन्त्यते, तदप्याऽऽशु कर्तव्यं, न कालः क्षेपणीयः। कुतोऽत्राऽऽह - अर्थेति। अधुना अह मर्थतन्त्रः प्रायोजनाधीन इति यत्तस्मात् कालो न क्षेपणीय इति तत्राऽऽह यथेति। यथा अयमर्थतन्त्रः देवकार्यलक्षणप्रयोजनैकपरायणो गर्भस्थितो हरिः मम विक्रमजीवनलक्षणं न विहन्ति तथा झटिति करणीय मित्यर्थः । यथा अर्थतन्त्रः पुरुषः स्वविक्रमं न विहन्ति तथेति वा। ननु तर्हि तद्वध एव श्रेयानिति तत्राऽऽह स्त्रिया इति। अयं स्त्रिया वधो यशो हन्ति। अस्त्वयशस्करः, ततः किम्? तत्राऽऽह

स्वसु रिति। स्वसु र्वधः श्रियं हन्ति। "जीवन्भद्राणि" (पश्यतु) (भार. आरण्य 3-240-36) इति वचना त्तदप्यस्त्विति तत्राऽऽह गुरुमत्या इति। गर्भिण्या वधोऽनुकूलं क्षम मायु र्हरति। अतो वधो न घटनीय इति भावः ॥ २१ ॥

ननु लोके केषाञ्चित् क्रूरकर्मिणां दीर्घायुष्यदर्शनात् तवाऽपि किं न स्यात् इत्यत आह - **स एष** इति। जीवन्परेतो जीवन्मृतो न केवलं क्रूरकर्मकर्तु स्त्व जीवन्मृतत्वमात्रं, अपि तु मृते पुरुषार्थसर्वस्वहानिः स्या दित्याह - देह इति। अभिमानिनो देहे मृते पञ्चत्वं प्राप्ते तं देह मनु अर्थकामौ पुरुषार्थौ नश्यतः साधकाभावात्। हिशब्दः अर्थकामा वनु धर्मो नश्यतीति दर्शयति। तमनु गौः स्वर्गादिशब्दवाच्यो लोको नश्यति साधकाभावात्। देह मनु मानिनोऽमलं यशो नश्यति। ध्रुवं तत्र न संशय इत्यर्थः। अर्थकामयशआदिनाशे गौ र्दृष्टि र्ज्ञानं नश्यति। तां दृष्टि मनु मानिनः पुंसो ध्रुवं नित्यसुखानुभवलक्षणो गौ र्मोक्षो नश्यतीति वा। स्वतोऽनृतस्याऽपि कंसस्य एवंविधं ज्ञानं सच्चेतनावेशा दुपपद्यत इति क्षुद्रबाधानवकाशः । "गौ र्दृष्टि र्दीधितिः स्वर्गे" (हला. को 5-68) इति हलायुधः ॥ २२ ॥

भावात्कर्मणः, "भावो लीला क्रिया चेष्टा" (वैज.को. 6-1-43) इति यादवः । स्वयं प्रभुः ज्ञानित्वाभिमानी स्वमनसैव समर्थ इति वा। वैरानुबन्धवित् वैर मनुबन्धं स्नेहञ्च वेत्तीति। वैर मनु स्नेहं करोतीति वा। 'विद कृतौ' इति धातुः । अनेन निरन्तरतच्चिन्तया स्नेह स्तर्क्यते। ननु तात्त्विकः स्वत एव प्रधानो द्वेषः इति ध्वनयति। निरन्तर वैरकृद्वा॥ २३ ॥

तच्चिन्ताप्रकारं दर्शयति **आसीन** इति। संविशन् शयानः। हृषि रानन्दः, स एव केशो यस्य स तथा तम्। यद्वा हृषीकाणा मिन्द्रियाणा मीश इति तत्तत्पदार्थस्य कृष्णात्मकत्व माशङ्क्य तन्मयत्वम्॥ २४,२५॥

-: ब्रह्मेशानादि देवगणाः देवकीगर्भस्थितं परमपुरुषं स्तुवन्ति :-

**देवा ऊचुः**[1-1]

**सत्यव्रतं सत्यपरं त्रिसत्यं सत्त्यस्य योनिं निहितञ्च सत्ये।**
**सत्यस्य सत्य मृतसत्यनेत्रं[2] सत्यात्मकं त्वां शरणं प्रपन्नाः ॥ २६ ॥**

**एकायनोऽसौ द्विफल स्त्रिमूल श्चतूरसः पञ्चविधः[3] षडात्मा।**
**सप्तत्व गष्टविटपो नवाक्षो दशच्छदो[4] द्विखगो ह्यादिवृक्षः॥ २७॥**

त्व मेक एवाऽस्य सतः प्रसूतिः त्वं[5] सन्निधानं त्व मनुग्रहश्च।
त्वन्मायया संवृतचेतस स्त्वां पश्यन्ति नाना न विपश्चितो ये॥२८॥

बिभर्षि रूपाण्यवबोध आत्मन्[6] क्षेमाय लोकस्य चराचरस्य।
सत्त्वोपपन्नानि सुखावहानि सता मभद्राणि मुहुः खलानाम्॥२९॥

त्व य्यम्बुजाक्षा[7]ऽखिलसत्त्व[8]धाम्नि समाधिनाऽऽवेशितचेतसै[9]के।
त्वत्पादपोतेन महत्कृतेन कुर्वन्ति गोवत्सपदं भवाब्धिम्॥३०॥

स्वयं समुत्तीर्य सुदुस्तरं द्युमन् भवार्णवं भीम मदभ्रसौहृदाः।
भव त्पदाम्भोरुहनाव मत्र ते निधाय याताः सदनुग्रहो भवान्॥३१॥

---

1- -1 G,J omit, M ब्रह्मभवौ? ऊचतुः 2. M °मुत 3. B,G,J विध° 4. B,G,J,M °दी 5. M स्थानं निधानं 6. B,G,J,K,W आत्मा 7. K,W °मल 8. V लोक 9. M चेतसो ये।

**श्रीध०** प्रतिश्रुतं सत्यं कृत मिति हृष्टा स्सन्तः[1] सत्यत्वेनैव प्रथमं स्तुवन्ति - **सत्यव्रत** मिति। सत्यं व्रतं सङ्कल्पो यस्य तम्। सत्यं परं श्रेष्ठं प्राप्तिसाधनं यस्मिं स्तम्। त्रिसत्यं त्रिष्वपि कालेषु, सृष्टेः पूर्वं प्रलयानन्तरं स्थितिसमये च सत्य मव्यभिचारेण वर्तमानम्। तदेवाऽऽहुः 'सत्त्यस्य योनि' मिति। सच्छब्देन पृथिव्यप्तेजांसि, त्यच्छब्देन वाय्वाकाशौ। एवं सच्च त्यच्च[2] सत्त्यं भूतपञ्चकम्। "तत्सत्त्य मित्याचक्षते" (तैत्ति.उ. 2-6) इति श्रुतेः। [3]तस्य योनिं कारणम्। अनेन सृष्टेः[4] पूर्वं वर्तमानतोक्ता तथा सत्ये तस्मिन्नेव निहित मन्तर्यामितया स्थितम्। अनेन स्थितिसमयेऽपि [5-]सत्यत्व मुक्तम्[-5]। तथा च सत्यस्य सत्यं [6-]तस्यैव सत्यस्य[-6] सत्यं पारमार्थिकं तन्नाशेऽप्यवशिष्यमाणरूपम्। अनेन प्रलयेऽप्यवधित्वेन सत्यत्वं दर्शितम्। एवं त्रिसत्यत्व मुपपादितम्। तथा ऋतसत्यनेत्रं ऋतं सूनृता वाणी, सत्यं समदर्शनम्, तथा भगवता व्याख्यास्यमानत्वात् - "सत्यञ्च समदर्शनम्। ऋतञ्च सूनृता वाणी कविभिः परिकीर्तिता" (भाग. 11-19-37,38) इति तयो र्नेत्रं नयनसाधनं नेतारम्। प्रवर्तक मिति यावत्। एवं सर्वप्रकारेण सत्यात्मकं त्वां हे भगवन्! वयं शरणं प्रपन्नाः प्राप्ता इति॥२६॥

ननु भवन्तोऽपि लोकेश्वराः मत्तुल्या एव। किमिति मां शरणं प्रपद्यन्ते? नैवं वाच्यम्। त्वमेवैकः सर्वेश्वरः सर्वसृष्ट्यादिकारणत्वात्। वयन्तु त्वदेकशरणा एव। लोकादि रूपं द्वैतञ्च सर्वं त्वद्व्यतिरेकेण[7] नाऽस्तीति वक्तुं द्वैतप्रपञ्चं वृक्षरूपकेण[8] निरूपयन्ति - **एकायन** इति। असौ प्रपञ्च आदिवृक्षः। वृश्च्यत इति वृक्षः समष्टिव्यष्टिदेहरूपः। कथम्भूतः? एकायनः एका प्रकृति रयन माश्रयो यस्य सः। द्वे सुखदुःखे फले यस्य सः। त्रयो गुणा [9-]स्सत्त्वादयो[-9] मूलानि

यस्य सः। [10]चतूरसो धर्मार्थकाममोक्षाश्चत्वारो रसा यस्य सः। पञ्चेन्द्रियाणि [11]शिफा ज्ञानप्रकारा यस्य सः कोशा वा षडूर्मयः "[12-]बुभुक्षा च पिपासा च प्राणस्य मनस स्स्मृतौ। शोकमोहौ शरीरस्य जरा मृत्यू षडूर्मयः[-12]। [13-]त्वग्रुधिर मांस मेदोऽस्थिमज्जा एते षट् कोशाः[-13]। आत्मानः स्वभावा यस्य सः। [14]षडात्मा सप्त धातव(एव) त्वचो यस्य सः , पञ्च भूतानि मनोबुद्ध्यहङ्कारा श्चेति अष्टौ विटपाः शाखाविस्तारा यस्य सः। [15]नवाक्षः नव द्वाराणि [16]अक्षाः (अक्षाणि) छिद्राणि यस्य सः । दश प्राणाः [17-]नाग कूर्म कृकर देवदत्त धनञ्जय प्राणापानव्यानोदानसमानाः[-17] छदाः पत्राणि[18] यस्य स [19]दशाच्छदः, द्वौ जीवेश्वरौ खगौ यस्मिन्स द्विखगः ॥२७॥

एवंरूपस्य संसारवृक्षस्य सतः कार्यस्य त्व मेक एव प्रसूतिः - प्रकर्षेण सूति र्जन्म यस्मात् सः [20]त्वं कारण मित्यर्थः । त्व मेव सन्निधानं सम्यङ्निधीयतेऽस्मिन्निति लयस्थानम्। त्व मेवाऽनुग्रहश्च अनुगृह्णाति [21]पालयतीति [22]पालकः। ननु ब्रह्मविष्णुरुद्रा एवम्भूताः प्रसिद्धाः , कथ मह मेवेति चेत्तत्राऽऽहुः - त्वन्माययेति। संवृतं पिहितं चेतो ज्ञानं येषां ते त्वामेव नाना पश्यन्ति। ये तु विपश्चितो विद्वांसः ते तथा न पश्यन्ति॥२८॥

ननु देवकीपुत्रं मां कथ मेवं वर्णयथेति चेत् तत्राऽऽहुः - **बिभर्षीति**। [23-]आत्मन् परमात्मन्[-23] अवबोध [24]अवबोधैकस्वरूप! [25-]चराचरस्य स्थावरजङ्गमात्मकस्य क्षेमाय सत्त्वगुणयुक्तानि खलानामभद्राणि, सतां सुखावहानि रूपाणि मूर्ती बिभर्षि धत्से। न तु त्वं कस्याऽपि पुत्र इत्यर्थः[-25] ॥२९॥

न केवल मेतावत् भक्तानां मोक्षार्थ मपीत्याहुः - **त्वयीति**। त्वयि समाधिना आवेशितचेतसा निमित्तेन त्वत्पादपोतेनाऽऽश्रितेन। एके मुख्या विवेकिनः। महद्भिः कृतेन सेव्यतया सम्पादितेन। यद्वा इद मपि मायामय मित्यनादरं परित्यज्य इद मेव महत्सर्वोत्कृष्टमिति मनसि कृतेन बहुमतेनेत्यर्थः। भवाब्धिं तुच्छीकुर्वन्ति। अनायासेनैव भजनानुनिष्पादिनी तेषां मुक्तिरित्यर्थः ॥३०॥

ननु तेन पोतेन पूर्वे चे त्पारं गताः, तर्हीदानीन्तनानां का गतिः? तत्राऽऽहुः - **स्वय** मिति। अय मर्थः - हे द्युमन्। स्वप्रकाश! त्वत्पादपोतसामीप्यमात्रेण [26]भवाम्बुधौ वत्सपदमात्रे जाते अत स्तन्निरपेक्षं स्वय मेवाऽन्येषां भीमं सुदुस्तर मपि भवार्णवं समुत्तीर्य भवत्पदाम्भोरुहरूपां नाव मत्रैव निधाय भक्तिमार्गसम्प्रदायं प्रवर्त्येत्यर्थः। पारं याताः [27-]पारं गताः[-27]। तत्किम्? यतोऽदभ्रसौहृदाः सर्वभूतेष्वपि प्रीतियुक्ताः। अतस्तेऽन्येषां तरणाय निधायेति। कथं [28]मत्पादपोतेन तीर्णाः, अत उक्तम् भवान् सदनुग्रहः सतो भक्ताननुगृह्णातीति। [29-]ये न केनचित्प्रकारेण भगवति चेतो निवेशनीय मिति भावः[-29] ॥३१॥

1. V omits सन्तः 2. V त्यश्च 3. V omits तस्य 4. B,J omits सृष्टेः 5- -5 V वर्तमानतोक्ता 6- -6 V सत्यस्यैकस्य 7 V त० 8. V रूपेण 9- -9 B,J omit 10. V omits चतूरसः 11. B,J विधाः 12- -12 B,J omit 13 -13 B,J omit 14. B,J omit षडात्मा 15. B,J omit नवाक्षः 16. V अक्षीणि 17- -17 B,J omit 18. B,J add विद्यन्ते 19. B,J °दी 20. V omits त्वं 21. B,J omit पालयति 22. V omits पालकः 23- -23 B,J omit 24. B,J रूपः 25- -25 B,J आत्मा त्वमेव रूपाणि मूर्तीः बिभर्षि धत्से॥ न तु त्वं कस्याऽपि पुत्र इत्यर्थः। क्षेमाय पालनाय सतां धर्मवर्तिनां सुखकराणि, खलाना मभद्राणि नाशकानि ॥ २९ ॥ 26. V °म्भोधौ 27- -27 B,J omit 28. B पोताश्रयणमात्रेण; J पोतश्रवणमात्रेण 29- -29 B,J omit.

**वीर०** स्तुति मेवाऽऽह **सत्यव्रत** मित्यादिना या[1]वदध्यायसमाप्ति[-1]। [2] प्रकृतिपुरुषासम्भावितैर्धर्मै र्विशिष्टं स्तुवन्ति सत्यव्रतमिति। सत्यव्रतं सत्यसङ्कल्पम्। अनेन प्रतिज्ञातार्थो यथार्थीकृत इति सूचितम्। सत्यपरं चिदचिदात्मकं जग त्सत्यम्। "यदन्य द्देवेभ्यः प्राणेभ्यश्च तत्सत्" (कौषी.उ.1-6) "अथ यद्देवाश्च प्राणाश्च तत्सत्यम् तत्सत्यम् तदेकया वाचा व्यवह्रियते सत्यम्" (कौषी.उ.1-6) इति श्रुतेः। ततः परं विलक्षण मिदं साध्यम्। अत्र सत्यव्रतत्वादीनि हेतवः। कथं सत्य व्रतत्वम्? तत्राऽऽह - त्रिसत्यम्। त्रयः प्रकृति पुरुष कालाः सत्याः यस्य तम्, प्रकृति पुरुष कालशरीरक मित्यर्थः। प्रकृत्याद्यात्मकस्य कृत्स्नस्य जगतः स्वनियाम्यत्वेन स्वसङ्कल्पप्रतिभटाभावात् अव्याहतसङ्कल्प इत्यर्थः। यत स्सत्यव्रत मत एव सत्यस्य योनिं सत्यस्य चिदचि[3]दात्मकप्रपञ्चस्य योनिं कारणं, सत्ये निर्विकारे परे व्योम्नि निहितं, कर्तरि क्तः, अधितिष्ठन्त मित्यर्थः। त्रिसत्यं सत्यस्य योनि मिति लीलाविभूतिमत्त्व मुक्तम्। निहितञ्च सत्य इति नित्यविभूतिमत्त्वम्; एत दुभयं सत्यपरत्वे[4] हेतुः । तथा सत्यस्य सत्यं, जीवेभ्योऽपि सत्यं धर्मतोऽपि निर्विकारत्वात्। "न ह्येतस्मादिति नेति ने त्यन्य त्परमस्त्यथ नामधेयं सत्यस्य सत्य मिति प्राणा वै सत्यं तेषा मेव सत्यम्" (बृह.उ. 2-3-6) इति श्रुतेः। तदर्थस्तु इति नेति यद्ब्रह्म प्रतिपादितं तस्मा देतस्मा द्वस्तु परं न ह्यस्ति, ब्रह्मणोऽन्यत्स्वरूपतो गुणतश्च परं नाऽस्तीत्यर्थः। नत्वन्यमात्रनिषेधः, तथा हि सति अन्यत्पर मिति वैयर्थ्यापत्तेः। तदुपपादयति अथेति। प्राणशब्दनिर्दिष्टेभ्यः चेतनेभ्योऽपि कदाचि दपि ज्ञानादिसङ्कोचाभावात्परमात्मा सत्यं निर्विकार मित्यर्थः। "नित्यो नित्यानां चेतनश्चेतनानाम्" (कठ.उ. 5-13) इति श्रुत्यत्यन्तरसंवादात्। अन्यत्तु "प्रकृतैतावत्त्वम्" (ब्र.सू. 3-2-22) इति शारीरकसूत्रभाष्या दवगन्तव्यम्। विस्तरभया न्नाऽत्र लिख्यते। ऋतसत्यनेत्रम्। सत्य मादित्यः - "असा वादित्य स्सत्यम्" (सूर्य.उ. 5) इति श्रुतेः तत्साहचर्यात् ऋतशब्द श्चन्द्रपरः । चन्द्रादित्ययो र्नेत्रं प्रशासितार मित्यर्थः । "य आदित्ये तिष्ठन्, यश्चन्द्रमसि तिष्ठन्" (बृह.उ. 3-7-9) इत्यादि श्रुतेः । यद्वा तौ नेत्रे यस्य तम्। "चक्षुषी चन्द्र सूर्यौ" (मुण्ड.उ. 2-1-4) इति श्रुतेः। "एवं पुण्यस्य कर्मणो दूरा द्गन्धो वाति" (म.ना.उ. 9-7) इति पुण्यकर्मप्रतिसम्बन्धितया "एव मनृता दात्मानं जुगुप्सेत्" (म.ना.उ. 8-2) इत्यपुण्यकर्मणि अनृतशब्दप्रयोगात्, ऋतं पुण्य मनुष्ठेयं कर्म, सत्य मुच्यमानधर्मः, तयो र्नेतारं सत्यात्मकं स्वरूपेणाऽपि निर्विकारम्। अनेन प्रधानव्यावृत्तिः। एवम्भूतं त्वां वयं शरणं प्रपन्नाः अध्यवस्यामः ॥ २६ ॥

अथ त्रिसत्यत्व मेवोपपादयितुं कृत्स्नं जगत् वृक्षत्वेन रूपयित्वा तस्य भगवद्दासत्व माहुः - **एकायन** इति। एकं परं ब्रह्म अयन माश्रयो यस्य, द्विफलः द्वे सुखदुःखे फले यस्य, त्रय स्सत्त्वादयो गुणा मूलं यस्य, चत्वारो रसाः धर्मादिपुरुषार्थाः यस्य, पञ्च शिफा जटाः उत्तरमूलानि भूतसूक्ष्मात्मकानि यस्य, षडात्मानः ऊर्मयो, मनष्षष्ठानीन्द्रियाणि वा यस्य, सप्त त्वक् वसा मांस रुधिर मेदो मज्जास्थि शुक्लरूपा धातवः एव त्वक् यस्य, अष्टौ हस्तौ पादौ शिरः कण्ठो वक्षो जठर श्चेति विटपा श्शाखा यस्य, नवाक्षाः छिद्रकोटरा यस्य, दशाच्छदः दश शब्दादय एवाऽनुकूलाः प्रतिकूलाश्च प्राणापानव्यानोदानसमान नाग कूर्म कृकर देवदत्त धनञ्जय रूपाः प्राणोपप्राणा वा, छदाः पत्राणि यस्य, द्वौ जीवपरमात्मरूपौ खगौ पक्षिणौ यस्मिन् स आदिवृक्षः प्रवाहानादिशरीराख्यवृक्षः एक स्त्वमेव, अयन माश्रयो धारणं यस्य तथाभूत इति भावः ॥ २७ ॥

अथ तस्य सत्ययोनित्व मुपपादयन्ति - **त्वमिति।** अस्य परिदृश्यमानस्य चिदचिदात्मकस्य सतो जगतः प्रसूतिर्जन्मकारणं त्व मेक एव अस्य सन्निधानं सन्निधीयते उपसंह्रियतेऽस्मि न्निति सन्निधानं प्रलयाधिकरण मित्यर्थः। त्वमेक एव अस्याऽनुग्रहः , अनुगृह्णाति इष्टप्रदानेने त्यनुग्रहः , स्थितिकारण मित्यर्थ। ननु नाऽहं सत्परः, केचिन्मां जीवा दभिन्नं पश्यन्ति इत्यत्राऽऽहुः - त्वन्मायया मोहितं चेतो येषा मत एव नविपश्चितः अज्ञाः । नशब्दोऽयं निषेधार्थकः । ततो "नलोपो नञः" (अष्टा. 6-3-73) इति नलोपाभावः । ये जना स्ते त्वां नाना पश्यन्ति जीवरूपेणावस्थितं पश्यन्तीत्यभिप्रायः । पश्यन्ती त्युक्तेः न हि जीवविलक्षणं परस्वरूपं दृश्यते, कुतो नानादर्शनम्? "मोहितं नाभिजानाति मा मेभ्यः पर मव्ययम्।" (भ.गी. 7-13) इति त्वदुक्तेरिति[6] भावः। यद्वा, एवं कृत्स्नजगत्कारणत्व मुपपाद्य कार्यकारणयो रनन्यद्रव्यत्वसूचनाय तद्भेदवादं निराकुर्वन्ति त्व न्माययेति। त्वां नाना त्वां विना इदं जगत्पश्यन्ति त्वत्तः पृथक्सिद्धं जग त्पश्यन्तीत्यर्थः ॥ २८ ॥

त्व मनुग्रह इति स्थितिकारणत्व मुक्तम्। तच्चान्तर्यामित्वस्यावतारमन्वाद्यनुप्रवेशेने त्यभिप्रायेणाऽऽहुः - **बिभर्षीति। अवबोध** आत्मा ज्ञानस्वरूपः । असन्धि रार्षः । यद्वा अवबोधः ज्ञानस्वरूपः आत्मा सर्वान्तरात्मा च सन् इत्यसमस्तं पदद्वयम्। यद्वा अवबोधे इति सप्तम्यन्तम्। अवबोधे मानस्वरूपे जीवे आत्मा अन्तरात्मतया अवस्थितस्त्वमस्य चराचरात्मकस्य लोकस्य क्षेमार्थं रूपाणि अवताररूपाणि बिभर्षि। कथम्भूतानि सत्वोपपन्नानि शुद्धसत्त्वमयानि, सतां साधूनां सुखावहानि, खलानां दुष्कृतां मुहु र्मुहु रभद्राणि, मुहु र्बिभर्षीति वाऽन्वयः ॥ २९ ॥

एवं निखिलजगदुत्पादकारणत्वेन स्तुत्वा अथ "कारणन्तु ध्येयः" (अथ.शिख.उ. 3) इति कारणत्वसमनियतत्वेन श्रुतमुपास्यत्व मपि त्वन्निष्ठ मेवे त्यभिप्रायेण स्तुवन्ति, [7-]ब्रह्मादयो देवाः देवकीगर्भगतं श्रीनिवासं[-7] - **त्वयीति।** हे अम्बुजाक्ष! अमलसत्त्वधाम्नि शुद्धसत्त्वमयं धाम स्थानं [8-]विग्रह[-8] इति यावत्। तद्यस्य तस्मिन्। विशुद्धसत्त्वमय[9-]विग्रहयुक्ते[-9] त्वय्येके विपश्चितः अवताररूप [10-]श्रवणादि[-10] पराः पुरुषा वा समाधिना आवेशितं चेतः यैस्तथाभूताः । चेतसैक इति सन्धि रार्षः । समाधिना त्वय्यावेशितचेतसोपलक्षिता इति वा। महत्कृतेन महता सदाचार्येण कर्णधारस्थानीयेन कृतेन सन्निधापितेन प्रदर्शितेन तव पादपोतेन पादकमलरूपप्लवेन भव स्संसारः, स एवाऽब्धिः [11]सागरः गोवत्सपदं कुर्वन्ति। तदिव सुखेन अतितरन्तीत्यर्थः ॥ ३० ॥

न केवलं ते स्वय मेव गोवत्सपदं कुर्वन्ति, [12-]अ पि तु अन्येऽप्येवं कुर्युरिति प्रदर्शयन्त इव कुर्वन्तीत्यभिप्रायेण स्तुवन्ति स्वय मिति[-12]। हे द्युमन् नित्यविभूतिमन्![13] द्युमदिति पाठे द्युमद्भवार्णव मिति समस्तं पदं स्वर्गादि स्थानोपेतं भवार्णवं भीमं दुस्तर मपि अदभ्र मनल्पं सौहृदं त्वद्भक्तिरूपं येषां तथाभूता स्ते स्वयं समुत्तीर्य, त्वत्पादपोतेनेत्यनुषङ्गः । भगवतः [14-]प दाम्भोरुह मेव[-14] नौ स्ता मत्र निधाय इय मेव संसार[15]सागरोत्तारणसाधनभूतेति प्रदर्श्य याता स्त्वत्पदं प्राप्नुवन्ति। बिभर्षि रूपाणीत्यादिनोपक्रान्त मनुग्रहीतृत्वप्रतिपादन मुपसंहरन्ति। एवं भवान् सदनुग्रहः [16-]सा धूना मनु[-16] ग्रहशील: ॥३१॥

---

1- -1. K,W omit 2. B adds तावत् 3. K,W °चित्र 4. B,W °त्व 5. B °श्वेत्येते 6. B भगवदुक्तेः 7- -7. K,W omit 8- -8. B शरीरं विग्रहो वा यस्य इति 9- -9. B दिव्यनित्यमङ्गल श्रीविग्रहविशिष्टे 10- -10. B चरित्रगुणकथाश्रवणकीर्तनस्मरणादिपरा: 11. K omits सागरः 12- -12. B किन्तु अन्येषा मपि तथैवाऽस्त्विति तादृशशास्त्राप्रकाशनाद्यविच्छेद सम्प्रदायपरम्परा मत्रैव दृढतया विस्तार्य भवत्कृपया भवद्धाम प्राप्ता इत्यभिप्रायेण स्तुवन्ति स्वय मित्यादिना 13. B adds विभूतिद्वयनायकः 14- -14. B पदाम्बुजमेव 15. K,W °रोत्तारसा° 16- -16. K,W सदनु

**विज०** तत्र शङ्करादिभि स्समेतो ब्रह्मा ज्ञानिसुगमगुणविशिष्टं विष्टरश्रवस मभिष्टौति - सत्यव्रत मिति-। वयं त्वां शरणं प्रपन्ना इत्यन्वयः । कीदृशं त्वाम्? सत्यव्रतं पूर्णानन्दज्ञानलक्षणं, सत्यं तदेव व्रतं व्यावृत्तं रूपं यस्य स तथा तम्। सद्भ्यः पृथिव्यप्तेजोभ्यः त्ययोः वाय्वाकाशयोः परत्वात् विलक्षणत्वात् सत्यपरः तम्, त्रयाणां वेदानां सत्यत्वा न्मुख्यार्थत्वात् त्रिसत्यः तम्, सत्यस्याऽबाधितप्रपञ्चस्य योनिं मूलकारणं, सत्ये जगति अन्तर्नियामकत्वेन निहितम्। सत्यस्य विश्वस्य उत्तमानन्दज्ञानदं सत्यं सत्यस्य प्रपञ्चस्य नेत्रं नेतारम्, सत्यात्मकं सत्यस्य प्रपञ्चस्य अत्तृत्वा दादानाच्च सत्यात्मकम् कप्रत्ययः प्रशंसायाम्। उतशब्दः समुच्चयार्थः । "सच्छब्द उत्तमं ब्रूयात्" (तन्त्रभागवते) इत्यादिना अक्षरार्थो ज्ञातव्यः। प्रामाणिकत्वात् ग्राह्य मेत दिति सिद्धम्। यद्वा अनृताप्रियवर्जनं यथार्थकथनं सत्यम्, तदेव व्रतं नियमो यस्य स तथा तम्, "अजस्याऽवक्रतेजसः " (कठ.उ. 5-1) इति हि श्रुतिः, "सत्य संहिता वै देवाः" इति च। सत्यपरं धर्मपालकम्, "सत्यं धर्म उदाहृतः " इत्यभिधानम्। सत्त्यपरं, सत्ति रवसादनं, तस्मा दपर मन्यम्, तद्रहित मित्यर्थः। "अविनाशी वा अरेऽ य मात्मा (बृह.उ. 4-5-14) इति श्रुतेः। त्रिषु लोकेषु सत्यम्, तेषु नष्टेष्वपि अविनष्ट मित्यर्थः । सत्यस्य मुख्यप्राणस्य योनि मुत्पादकम्। "आत्मन एष प्राणो जायते" (प्रश्न. उ. 3-3) इति श्रुतिः । सत्ये मुख्यप्राणे निहितं सन्निहितम्। "स प्राण मसृजत" (प्रश्न.उ. 6-4) इति श्रुतिः । सत्य मेव नेत्रं नयनं यस्य स तथा। सत्यस्य प्रपञ्चस्य प्रकाशनात् निरुपमचरितत्वेन अबाधितम्। "अद्वैतं परमार्थतः" (आगम.प्र. 17) इति श्रुतिः । सत्या देवा स्ते नेत्रं शिष्यादिषु नेतारो यस्य स तथा। "तं देवाः प्राणयन्त" (ऐत.उ. 1-5-1) इति श्रुतिः। सत्य मबाधित

मात्मनः कं सुखं यस्य स तथा तं अबाधितस्वरूपसुखम्। "एष ह्येव परमानन्दः" इति श्रुतिः इति ॥२६॥

ननु प्रपञ्चोऽयं केचिज्जीवकर्तृकः , केचित्प्रधानकर्तृक इत्यदि सङ्गिरन्ते, तत्राऽऽह - **एकायन** इति। अत्र यत्रशब्द मध्याहृत्यान्वेतव्यम्। असा वादिवृक्षो यत्र स्थितः तं त्वां शरणं प्रपन्ना इति पूर्वेणाऽन्वयः। चेतनस्य मनुष्यस्य पुरुषार्थत्वादादिभूत मन्तरङ्गसाधनं ज्ञानं तेनाऽसिना वृश्च्यत इति आदिवृक्षः प्रपञ्चः । आदे र्हरे रधीनो वृक्ष इति वा मुक्तामुक्तप्रपञ्चपक्षीकरणाय दूरस्थस्याऽप्यदश्शब्देन परामर्शः । "ऋचो अक्षरे परमे व्योमन् यस्मि न्देवा अधिविश्वे निषेदुः । उतामृतत्वस्येशानः " (श्वेत.उ. 4-8) इत्यादि श्रुतिः । एका चेतनाचेतनात्मकलक्षणा प्रकृति रयनं आश्रयो यस्य स एकायनः । "यत्किञ्च जगत्यां जगत्" (ईश.उ.1) इति श्रुतिः । द्वे फले प्रवृत्तिनिवृत्तिलक्षणे यस्य स द्विफलः । सत्त्वादिगुणा मूलानि यस्य स त्रिमूलः । चत्वारो रसाः धर्मादिमोक्षान्ता यस्य स चतूरसः । तत्र प्रवृत्तफलस्य धर्मादय स्त्रयो रसाः , निवृत्त फलस्य मोक्ष एको रस इति विभागः। पञ्चमात्राश्शब्दादयः शिफा यस्य सः पञ्चशिफः । अस्ति जायते परिणमते विवर्धते अपक्षीयते विनश्यति इति षड्विकारानाप्नोतीति षडात्मा। त्वक्चर्ममंसरुधिरमेदोमज्जास्थीनि त्वग्रूपेण वर्तन्ते यस्य स सप्तत्वक्। देव गन्धर्व दानव राक्षस पिशाच तिर्यङ्मानुष स्थावरलक्षणा अष्ट विटपा यस्य सोऽष्टविटपः । नवाक्षा इन्द्रियाधिष्ठानभूता यस्य स नवाक्षः । "अक्षो रथाङ्गआधारे व्यवहारे विभीतके। शकटे पाशके कर्षे द्यूतभेदेऽक्ष इन्द्रिये" (वैज.को. 6-5-2) इति यादवः । दश छदाः पत्रस्थानीयानीन्द्रियाणि अस्य सन्तीति दशच्छदी। प्रवृत्तिमार्गस्थाः निवृत्तिमार्गस्था इति द्विप्रकाराः खगाः पुण्यापुण्यफल भागिनो जीवा यस्य स द्विखगः। तदुक्तम् - जगद्वृक्षाश्रया इत्यादि। हिशब्देन कारणस्य सदा सत्त्वात् प्रवाहेण च स त्वसावित्यादिना जगद्वृक्षस्य सनातनत्वम्। विष्णुकारणत्वं दर्शयति हरि रेक एवाऽयनं यस्याऽसौ तथा। द्वे पुण्यपापे फले यस्य स तथा। तिस्रो जाग्र दाद्या अवस्था यस्य, तिस्रो व्याहृतयो वेदा वा मूलं यस्य स तथा। चत्वारो रसाः स्वर्गमोक्षनरकतमोलक्षणा यस्य स तथा, प्राणापानव्यानोदानसमानाख्याः पञ्चशिफाः अवान्तर मूलानि यस्य स तथा। अशनायापिपासा शोकमोह जरामृत्यवः षडात्मानः सहजा यस्य। सप्त छन्दांसि त्वक्स्थानीयानि यस्य। अष्ट विटपाः - पञ्च महाभूतानि मनोबुद्ध्यहङ्काराः विटपा यस्य। नव नवाक्षा व्यवहारा अष्टादश भाषा यस्य स तथा। तन्त्रन्यायेन नवशब्दस्य एकोच्चारणं पायूपस्थयोरेकत्वेन नवेन्द्रियाणि वा यस्य दशेन्द्रियविषयाः शब्दस्पर्शादयः दशच्छदा अस्य सन्तीति। द्वौ खगौ जीवपरमात्मानौ यस्य। आदि रदनयोग्यः हरे रन्नभूतः प्रपञ्चः स एव वृक्षः आदिवृक्षः । अनेन जगद्वृक्षस्य हरे रधीनत्ववर्णनेन हरे रत्युत्तमत्व मुक्तं भवतीति ॥ २७ ॥

ननु "ब्रह्मा देवानां प्रथम स्सम्बभूव विश्वस्य कर्ता भुवनस्य गोप्ता एको रुद्रो न द्वितीयोऽवतस्थे" (मुण्ड.उ. 1-1) इत्यादिना इतरेषामपि जगदाश्रयत्वप्रतीतेः हरे रेव तल्लक्षणं कथं स्या दिति तत्राऽऽह - **त्वमेक एवेति।** अस्य सतः सत्यजगतः , प्रसूयत इति प्रसूतिः कारणम्। तिष्ठ त्यस्मिन्निति स्थानम्। निधीयतेऽ-

स्मिन्निति निधानम्। अनुगृह्णाति रक्षती त्यनुग्रहः । संवृतचेतसः आवृतज्ञानाः त्वां नाना पश्यन्ति ये विपश्चितः ते न पश्यन्तीत्यनेन हरे रेवोक्तलक्षणं नाऽन्यस्येति निरणायि ॥ २८ ॥

तत्तत्कालप्राप्तानर्थपरिहारलक्षणपालनञ्चाऽवतारलक्षणस्वरूपग्रहणेने त्याह - **बिभर्षीति।** अवबोध आत्मन् ज्ञानस्वरूपे त्वय्यधिकरणे इत्यनेन शुक्रशोणितसम्बन्धं निवारयति। क्षेमाय तत्तत्कालप्राप्त विपत्परिहार लक्षण पालनाय। "क्षेमो ना प्राप्तरक्षायाम्" (वैज.को. 6-5-22) इति यादवः । सत्त्वोपपन्नानि बलज्ञानसमाहारयुक्तानि सता मस्माकं सुखकराणि, कंसादिखलाना मभद्राणि तमआद्यमङ्गलकराणि ॥ २९ ॥

सतां सुखावहानी त्येत द्विवृणोति - **त्वयीति।** अखिलसत्त्वधाम्नि सदा सर्वगुणाना माधारभूते त्वयि समाधिना उपास्त्या आवेशितचेतसः तत्क्षिप्तचित्ताः ये पुरुषा स्ते महत्कृतेन तयैवोपास्त्या यथा मह द्विस्तीर्णं भवति तथा विरचितेन प्लवेन भवाब्धिं संसारसागरं घोरं गोवत्सपदं कुर्वन्ति। यथा वत्सचरणभारकृतनिम्नस्थितजल मयत्नेन तरन्ति, तथेत्यन्वयः ॥ ३० ॥

नन्वस्तु गोवत्सपदोपमो भवाब्धिः महान्त स्ते तमुत्तीर्य कुत्र यान्तीति तत्राऽऽह स्वयं समुत्तीर्येति। हे द्युमन्! तेजोमूर्ते! ये अदभ्रसौहृदाः स्वस्वयोग्यभक्तिपूर्णाः स्वय मकृत्रिमया भवत्पदाम्भोरुहनावा दुस्तरं भवार्णवं समुत्तीर्य तीर्त्वा स्थिता स्तेऽत्र योग्यादिषु शिष्यादिषु उपदेशेन निधाय तां भगवत्पदाम्भोरुहनावमेव याताः नाऽन्यद्याता भवन्तीति यदतो भवान् सत एवाऽनुगृह्णातीति सदनुग्रहो नामेत्यर्थः । ननु सत्त्वोपपन्नानीत्यादौ सत्त्वगुणात्मकत्वप्रतीतेः तीर्त्वा पुनः तत्प्राप्तिः कथं मुक्तिः स्यात्, तस्याऽनिर्गुणरूपत्वात्? उच्यते। अत्र सत्त्वशब्देन न सत्त्वगुणविवक्षा, किन्तु ज्ञानादिगुणसामग्री प्रामाणिकत्वात्। तदुक्तम् "सदा सर्वगुणाढ्यत्वात्" इत्यादि। त्वत्पादपोतेने त्यनेन भगवद्भक्तस्य शिवादिपादपोतपुरुषा द्वैशिष्ट्यं ज्ञाप्यते, तदुक्तम्- "भगवत्पादपोतेऽसौ" (वामने) इत्यादि। लोके नौतीर्णस्य तां विहाय देशान्तरगतिदर्शनात्कथं तामेवाऽऽश्रिता इति युज्यते इति चेत्, न भगवत्पादनावो वैलक्षण्या दर्थवैलक्षण्यस्य सम्भवात्। तदुक्तम् "भगवत्पादनौकाया" इत्यादि। अस्यार्थः- या भगवत्पादनौका इयं अन्यनौकोपमा न भवति। कुतः? तया भगवत्पादनावा भवाब्धिं तीर्त्वा श्रीहरिपादनावं तां प्राप्य सुखं तिष्ठन्तीति यस्मा त्तस्मा दिति। लोके च कर्णधारादयः तयाऽब्धिं तीर्त्वा तत्तीर एव ता माश्रित्य तिष्ठन्तो दृश्यन्ते इत्यतोऽविषमो दृष्टान्त इति सन्तोष्टव्यम् ॥ ३१ ॥

**येऽन्येऽरविन्दाक्ष विमुक्त मानिन स्त्वय्यस्तभावा दविशुद्धबुद्धयः ।**
**आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः ॥ ३२ ॥**

**तथा न ते माधव तावकाः क्वचि द्भ्रश्यन्ति मार्गात्त्वयि बद्धसौहृदाः ।**
**त्वयाऽभिगुप्ता विचरन्ति निर्भया विनायकानीकपमूर्धसु प्रभो ॥ ३३ ॥**

**सत्त्वं विशुद्धं श्रयते भवान् स्थितौ शरीरिणां श्रेय उपायनं वपुः ।**
**वेदक्रियायोगतपस्समाधिभि स्तवार्हणं येन जन स्समीहते ॥ ३४ ॥**

**सत्त्वं न चे द्धातरिदं निजं वपुः[1] विज्ञानमज्ञानभिदापमार्जनम्।**
**गुणप्रकाशै रनुमीयते भवान् प्रकाशते यस्य च येन वा गुणः ॥ ३५ ॥**

**न नामरूपे गुण कर्म जन्मभिः निरूपितव्ये तव तस्य साक्षिणः ।**
**मनोवचोभ्या मनुमेयवर्त्मनो देव क्रियायां प्रतिय न्त्यथाऽपि हि ॥ ३६ ॥**

**शृण्व न्गृण न्संस्मरयंश्च चिन्तय न्नामानि रूपाणि च मङ्गलानि ते।**
**क्रियासु य स्त्वच्चरणारविन्दयो राविष्टचित्तो[2] न भवाय कल्पते॥ ३७ ॥**

---

1. B,G,J,M भवेत् 2. B,G,J चेता

**श्रीध०** ननु विवेकिनां किं मद्भजनेन, मुक्ता एव हि ते, तत्राऽऽहुः - **येऽन्ये** इति। विमुक्तमानिनः विमुक्ता वय मिति मन्यमानाः। त्वयि अस्तो निरस्तोऽत एवाऽसन् यो भाव स्तस्मात् भक्ते रभावा दित्यर्थः। न विशुद्धा बुद्धि र्येषां ते तथा। यद्वा त्वयि अस्तभा इति च्छेदः। अस्तमतयो वादेष्वेव विशुद्धबुद्धयः। कृच्छ्रेण बहुजन्मतपसा परं पदं मोक्षसन्निहितं सत्कुलतपःश्रुतादि। पतन्ति विघ्नै रभिभूयन्ते। न आदृतौ युष्मदङ्घ्री यै स्ते ॥ ३२ ॥

त्वदीया स्तु न कदाचि दपि पतन्ती त्याहुः - **तथेति**। विनायका विघ्नहेतवः तेषा मनीकानि स्तोमा स्तानि पान्ति ये तेषां मूर्धसु विचरन्ति। विघ्नान् जयन्तीत्यर्थः । यद्वा[1-] त्वद्रूपाः प्रत्येकं विनायकानीकपमूर्धसु गरुडानां मूर्धसु चरन्ति[-1] ॥ ३३ ॥

सतां सुखावहानि रूपाणि धारयसीत्युक्तं - 'बिभर्षि रूपाणि' इति। तत्केन प्रकारेण सुखावहत्व मित्यपेक्षाया-माहुः - **सत्त्व** मिति। सत्त्वं वपुः श्रयत इत्यन्वयः । श्रेय उपासनं कर्मफलदातृ। कथम्? येन वपुषा जन स्तवाऽर्हण्रं पूजा मीहते करोति। कैः वेदश्च[2] क्रियायोगाश्च[3] तपश्च समाधिश्च तै श्चतुराश्रमधर्मै रित्यर्थः । वपुषोऽनाश्रयणेऽ र्हणासम्भवात् न कर्मफलसिद्धिः स्या दिति ॥ ३४ ॥

त्वय्यम्बुजाक्षेत्यादिना श्लोकत्रयेण भगवद्भक्ताना मेव मोक्षो नाऽन्येषा मित्युक्तम्, तत्र कर्मफलं भक्तिं विना मा भूत् मोक्षस्य तु ज्ञानैकसाध्यत्वात् किं भक्तयेति सानुशाया न्प्रत्याहुः - **सत्त्वं न चे** दिति। हे धातः ! इदं

सत्त्वं निजं तव वपु र्नभवेच्चेत् तर्हि विज्ञानं विशिष्ट मपरोक्षं ज्ञानं न भवे दित्यनुषङ्गः ।कथम्भूतम्? अज्ञानभिदापमार्जनं, अज्ञानश्च तत्कृता भिदा च तयो रपमार्जनं निवर्तकम्। यद्वा, अज्ञानं भिनत्तीत्यज्ञानभित् विज्ञानं, मार्जनं [4]नाशम् आप [5]प्राप। ननु जडानां बुद्ध्यादीनां यतः प्रकाशः तद्ब्रह्मेति ज्ञानं [6-]भवे देवेति[-6] चेत्, न। गुणप्रकाशैः गुणावच्छिन्नैः प्रकाशैः[7] । भवान् सर्वसाक्षी परिपूर्णः केवल मनुमीयते कल्प्यते, न तु साक्षात्क्रियत इत्यर्थः। अनुमानप्रकार [8]माहुः - प्रकाशते यस्य च येन वा गुणः इति यस्य सम्बन्धी अयं बुद्ध्यादिगुणः प्रकाशते यो गुणसाक्षीत्येवं, येन वा [9]बुद्ध्या रूढे प्रमात्रा [10-]बुद्ध्याधिष्ठात्रा[-10] बाह्यो गुणः प्रकाशते इत्यनुमीयत इत्यर्थः। शुद्धसत्त्ववपुषि त्वयि सेव्यमाने तु तदाकारेऽन्तःकरणे त्वत्प्रसादेन साक्षात्कारो भवे दिति भावः ॥ ३५॥

एवं ताव द्भक्ताना मभ्युदयापवर्गार्थं रूपाणि बिभर्षीत्युक्तं, तान्यपि भजनीयानि केवलं न तु ज्ञातुं शक्यन्ते, अनन्तत्वादतर्क्यत्वाच्च मनोवचसो रगोचरत्वा दित्याहुः - **न नामरूपे** इति।गुणाश्च जन्मानि च कर्माणि च तै - र्निरूपितव्ये निरूपणार्हे न भवतः।कुतः।अनुमेयं वर्त्म मार्गो यस्य तवेति तत्राऽपि हेतुः - तस्य साक्षिण इति।न हि साक्षिण स्तत्त्वं मनोवचोगोचार मित्यर्थः।हे देव! बहुधा द्योतमान! अथाऽपि क्रियाया मुपासनादिलक्षणायां त्वां प्रतियन्ति उपासकाः साक्षा त्पश्यन्ति।हि [11]प्रसिद्धौ ॥ ३६॥

तस्माद्भक्त्यैव मोक्ष इत्युपसंहरन्ति - **शृण्व** न्निति।अन्यानपि संस्मारयन्।क्रियासु [12]देवार्चनादि कर्मसु॥ ३७॥

---

1- -1 B,J omit 2. B,J वेदाश्च 3. B,J योगश्च 4. V विशसम् 5. B,J प्राप्त मेवेति 6- -6 V भवे देव 7. V adds सः 8. V °मेवाऽऽहुः 9. V बुद्ध्याद्यारू° 10- -10 V omits 11. B,J °द्धम् 12. V °दिषु॥ ३७॥

**वीर०** तन्निहितभवत्पदाम्बुरुहनाव मनुवर्तमनानां "समाधिनाऽऽ वेशितचेतसैके" (भाग. 10-2-30) इत्युक्तविपरीतानां गतिं वदन्तः स्तुवन्ति **य** इति। हे अरविन्दाक्ष! येऽन्ये पूर्वश्लोकद्वयप्रस्तुतेभ्योऽन्ये ये जनाः विमुक्ता वयमिति वृथाभिमानिनः, त्वय्यस्तभावात् भक्तिशून्यत्वा द्धेतोः अविशुद्धा बुद्धि र्येषां ते तथाभूताः परं पदं वर्णाश्रमादिरूप मुत्कृष्टं[1] स्थानं कृच्छ्रेण प्रयासेन आरुह्याऽपि सुकृतविशेषात् विप्रादिरूपं श्रेष्ठं जन्म प्राप्यापीत्यर्थः। अनादृतयुष्मदङ्घ्रयः अनुपासित भवच्चरणा स्सन्तः ततोऽधः पतन्ति। पुनः निहीनं जन्म प्राप्नुवन्तीत्यर्थः॥ ३२॥

आदृतयुष्मदङ्घ्रीणां तु न कर्हिचि दधःपतन मस्तीति [2]वदन्तः स्तुवन्ति - **तथेति।** हे माधव! ते तावका स्त्वद्भक्ता स्तु तथा त्वद्भक्तिरहितवत् क्वचि त्कदाचि दपि [3-]मार्गात्[-3] उत्तमजन्मानःन भ्रश्यन्ति नाऽधः पतन्ति। तत्र हेतुं वदन्त स्ता न्विशिंषन्ति। त्वय्येव बद्धं सौहृदं भक्त्यात्मकं येषां ते न भ्रश्यन्ति। किन्तु त्वया अभिगुप्ताः अभितो रक्षिताः "तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्" (भ.गी. 9-22) इति त्वदुक्ते रिति भावः।हे प्रभो! विनायकानीकपमूर्धसु विघ्नसेनापतिशिरस्सु [4-]भय[-4]रहिताः विचरन्ति जीवद्दशायां विघ्नानुपहतत्वद्भक्तियोगा स्तत स्त्वां प्राप्नुवन्तीति भावः॥ ३३॥

यद्यपि सङ्कल्पमात्रपरिकल्पितनिखिलप्रपञ्च स्त्वं सङ्कल्पमात्रेणैव जगत्त्रातुं प्रभु र्नावतार मपेक्षते, तथाऽपि उपासकानां उपासनालम्बनार्थ मवतरसीति वदन्तः स्तुवन्ति - **सत्त्व** मिति। स्थितौ स्थितिः पालनं तस्यां निमित्तभूतायां स्थित्यर्थं भवान् विशुद्धं रजस्तमोभ्यामननुविद्धं सत्त्वं सत्त्वमयं वपु श्शरीरं श्रयते बिभर्ति। संश्रयणे मुख्यं प्रयोजनं दर्शयन्तो वपु र्विशिंषन्ति - शरीरिणां श्रेयउपायनं श्रेयसे उपेयते उपास्यत इत्युपायनम्। 'इण् गतौ', गत्यर्था बुद्ध्यर्थाः। येन वपुषा आलम्बनभूतेन उपलक्षितस्य तव जनो वेदक्रियादिभि रर्हणमाराधनं समीहते कुरुते। वेदक्रिया वेदपूर्वभागचोदितक्रिया यज्ञादिक्रिया, योगः उत्तरभागचोदित मुपासनम्। तप स्तदनुग्राहक मनशनादिरूपम्, समाधिः वेदक्रियातपोभ्या[5]सा नुगृहीतेन योगेन निर्वर्त्यं चित्तैकाग्रचम्। यदि भवान् वपु र्न संश्रयते तर्ह्याराध्यरूपापरिज्ञानादाराधका स्त्वा माराधयितु मप्रभवः स्युः । अतो भवा नाराधकानुग्रहार्थं वपु स्संश्रयते इति भावः ॥ ३४॥

तदेव स्पष्टीकुर्वन्तः स्तुवन्ति - **सत्त्वं न चे दिति**। हे धातः , विश्वकारणभूत! इदं विज्ञानं प्रकाशकम् अज्ञानभिदापमार्जनं ध्यातृणा मज्ञानकृतदेवादिभेदाभिमानापमार्जनं शुद्धसत्त्वमयं[6] निज मसाधारणं वपु र्न चेत् भवा नाश्रयते न चेत्, तर्हि यस्य पुंसः येन कारणेन कालकर्मादिरूपेण यो गुण स्सत्त्वाद्यन्यतमः प्रकाशते उन्मिषति तस्य तै र्गुणप्रकाशैः गुणोन्मेषैः [7]गुणकार्यैः[7] भवा ननुमीयते। कार्यस्य कारणभूतः देवमनुष्यादिविलक्षणः न ज्ञायते, किन्तु इतरसजातीयतयाऽनुमीयते। यदि भवान्वपुराश्रयते तर्हि तद्वपुरसाधारणानि देवमनुष्यादिष्वसम्भावितानि गुणचेष्टितानि दृष्ट्वा तै [8]र्देवादि विजातीयं मन्यमानो ध्यातृवर्गो ध्यायतीति भावः ॥ ३५॥

नन्वह मपि देवादिसजातीयवपुष्मा नेवेत्यत्राऽऽह - **नेति**। मनोवचोभ्यां वचसा वेदवाक्येन तदनुसारेण मनसा चाऽनुमेयस्वभावस्य सर्वसाक्षिण स्तव गुणकर्मजन्मभि स्सह नामरूपे न निरूपितव्ये गुणकर्मजन्मनामरूपाणीतर सजातीयतया न निरूपणीयानि। "यत्तदद्रेश्य मग्राह्य मगोत्रवर्ण मचक्षुश्श्रोत्रं निष्कलं निष्क्रियं अजायमान" (मुण्ड.उ. 1-6) इत्यादिभिरितरसजातीयानि गुणादीनि प्रतिषिध्य "यस्सर्वज्ञ स्सर्ववित्" (मुण्ड.उ. 2-2-7) "पराऽस्य शक्ति र्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" (श्वेत.उ. 6-8) "यस्य चैत त्कर्म स वै वेदितव्यः" (कौषी.उ. 4-18), "बहुधा विजायते" (पु.सू. 2-1) इत्यादिभि र्विलक्षणाना मेव गुणादीनां श्रवणात् "जन्म कर्म च मे दिव्यम्" (भ.गी. 4-9) इति त्वदुक्ते श्चेति भावः । यद्यपि देवादिविलक्षणगुणकर्मादियुक्तः तथाऽपि त्वां वेदक्रियायां प्रतियन्ति अग्नीन्द्रादिनामरूपाणि तदन्तरात्मभूतस्य तवैवेति बुद्ध्या तद्विशिष्ट मपि त्त्वां वेदावगतयज्ञादिक्रियायां प्रतियन्ति आराध्यं मन्यन्ते॥ ३६॥

इन्द्रादिनामरूपेभ्यः स्वासाधारणनामरूपाणां ध्येयत्वादिकं वदन्तः स्तुवन्ति **शृण्व** न्निति। यः पुमान् ते तव मङ्गलावहानि [9]नामरूपाणि[9] शृण्वन् वक्तृसन्निधौ सति, गृणन् श्रोतृसन्निधौ, तदुभयासन्निधौ नामानि स्मरन् रूपाणि चिन्तयंश्च। संस्मरयन्निति णिजर्थ स्त्वविवक्षितः । क्रियासु वैदिकक्रियासु आसनाटनभोजनादिक्रियास्वपि त्वच्चरणारविन्दयोरा[10]सक्तं चित्तं[10] मति र्यस्य तथाभूत स्स पुमान् भवाय श्रेयस्समृद्ध्यै कल्पते। नेति पाठे भवाय संसृतये न कल्पते, किन्तु मुक्तये इत्यर्थः ॥ ३७॥

1. B,W भगव° 2. B adds सन्त: 3- -3 K,W omit 4- -4 K, W omit 5. K,W °भ्यामनु 6. B adds धाम तेजोरूपं 7- -7 B omits 8. B °दिभिर्वि° 9- -9 B नामानि रूपाणि च 10- -10 K,W °क्ता म°

**विज०** खलाना मित्युक्तं विवृणोति - **येऽन्ये** इति। रविन्द मन्धकार: स न भवति इति अरविन्दं प्रकाश: , ज्ञान मिति यावत्। "अन्धकारोऽ रविन्दान्धतिमिरं तम उच्यते" इत्युत्पलमाला। ये सद्भ्योऽन्ये खला: ते तत: परमपदात् योगारूढा: पतन्ती त्यन्वय: । पतने कारण माह अनादृतेति। 'अघि रघि लघि गत्यर्था: ' इति धातो: । अनुपासितभगवज्ज्ञाना:। ज्ञानाभावे कारण माह - त्वयीति। त्वय्यस्तभावात् त्वद्विषयभक्त्यभावात् अविशुद्धबुद्धय: दुष्टान्त:करणा: दुष्टज्ञाना वा। किं कृत्वा पतन्तीति तत्राऽऽह-आरुह्येति। कृच्छ्रेण महताऽऽयासेन परं पदं भगवत्प्राप्तिनिमित्त योग मारुह्य सन्न्यासाश्रमं प्राप्य तदनुष्ठानसामर्थ्याभावात् पतन्तीत्यर्थ:। योग मवाप्य तद्भ्रंशे निमित्त माह विमुक्तेति। विमुक्ता वय मित्यभिमानो येषा मस्तीति ताच्छीलिको णिनि:। हे विमुक्त इति वा। अभिमान एव भ्रंशे कारण मित्यर्थ: ॥ ३२॥

सम: समाधि: प्रकृते इति नेत्याह - **तथा नेति।** करावलम्बबाहुल्यात् उत्तमाश्रमान्न भ्रश्यन्तीत्यर्थ:। विनायका: विघ्ना: श्रेय:प्रतिबन्धिन: तेषा मनीकं सेना तत्पतय: विनायकानीकपा: तेषां मूर्धसु उपरितनानतिक्रम्य श्रेयस एव यतन्त इत्यर्थ: ॥ ३३॥

अधुना कस्मिन्नधिष्ठाने स्थितो हरि: पूज्य:, कै स्साधनै रिति तत्स्पष्टयति - **सत्त्व** मिति। स्थिता विति सप्तमी चतुर्थ्यर्थे। स्थितौ ज्ञानस्थिरीकरणाय भवान् विशुद्धं सत्त्वं वपु: रजस्तमोभ्या मस्पृष्टं ब्रह्मादि शरीरं श्रयते। विशिनष्टि शरीरिणामिति ज्ञानार्थिनां जीवानां श्रेयउपायनं श्रेयस्साधनं जनो येन ब्रह्मादिशरीरे स्थितेन हरिणोपदिष्टमार्गेण वेदादिभि स्त्वदर्हणं पूजां समीहते करोति। अत स्त्वत्प्रसादा दवाप्तं ज्ञान मेव स्थितं भवतीत्यर्थ: । विशुद्ध सत्त्वं ब्रह्मादे रिति वचना दुक्त एवाऽर्थ: ॥ ३४॥

ब्रह्मादि देवसन्निहित हरिप्रसादोत्पन्न ज्ञानं पुरुषार्थसाधन मित्युक्तं, तदनङ्गीकारे बाधक माह **सत्त्व** मिति। भो धात:! इदं निज मात्मीयं विज्ञानं विशिष्टं ज्ञानं यस्मात्त तथा। स्वयञ्च ज्ञानरूपं सत्त्वं ब्रह्मादिदेहाख्यं अज्ञानभिदापमार्जनम् अज्ञानान्यथाज्ञाननिवर्तकं न भवेच्चेत् यदि तर्हि विमतं ज्ञानं केनचिज्जनितं कार्यत्वात् घटवत् इति सत्त्वगुणोत्पन्नज्ञानै: भवा ननुमीयते। तदनुमितो न स्या द्यदि न स्या त्तर्हि अगुणो भवान्यस्य कस्य येन केन वा साधनेन प्रकाशते ज्ञायते। एत दुक्तं भवति - यदि ब्रह्मादिदेहसन्निहितश्रीनारायणप्रसादात् यज्ज्ञान मज्ञाननिवर्तकत्वेन श्रेयस्साधनं न स्यात् तर्हि तज्ज्ञानाभावेन तद्विषये लिङ्गस्थानं न स्यात्। तद्यदि न स्या त्तर्हि त्वज्ज्ञानाभावेन त्वत्पूजाविधानं न स्यात्, तन्न स्या द्यदि जगदान्ध्यं स्यात्। न चेद मुपपन्नम्। "कश्चिन्मां वेत्ति तत्त्वत:" (भ.गी. 7-3) "प्रियो हि ज्ञानिनोऽत्यर्थम्"

(भ.गी. 7-17) इत्यादिवाक्यप्रामाण्यान्यथानुपपत्त्या त्वज्ज्ञान मज्ञाननिवर्तकत्वेन पुरुषार्थसाधनं भवतीति सिद्धम्। तदुक्तम् "सत्त्वं ब्रह्मादि देहाख्यम्" (तन्त्रभागवते) इत्यादिक मस्मिन्नर्थे मानम्। यद्वा धातृदेहसन्निहितत्वा द्धात रिति सम्बुद्धिः। हरे यो भवान् गुणप्रकाशै रनुमीयते अत्र सन्निहितहरिप्रसादा दिदं ज्ञान मभूत्, तस्मादत्र हरिः सन्निहित इति तस्य तवेदं सत्त्वं निजं नित्यसन्निधानयोग्यं न भवे च्चे त्तर्हि तत उत्पन्न मज्ञानभिद्विज्ञानं मार्जनं स्वरूपतो नाश माप। यद्येवं तर्हि गुणो ज्ञानानन्दादिगुणपूर्णो भवान् यस्य येन वा प्रकाशते न कस्याऽपि आविर्भूतो न भवति साधनसामग्र्यभावात्। यद्वा, यस्य तव गुणोऽनुग्रहलक्षणः प्रकाशते, येन त्वया गुणो वा प्रकाश्यते यश्च भवान् गुणप्रकाशै रनुमीयते तस्य तवेदं सत्त्वं ब्रह्माद्यन्य तमाप्रधृष्यं बलं निजं न भवेच्चेत् तर्ह्य ज्ञान भिदामापयतीति अज्ञानभिदापं विज्ञानमार्जनं वरादिनाऽऽपादितं भवति, न त्वौत्पत्तिकम्। अतोऽप्रतिमं तव सत्त्व मित्यर्थः। इति गुणप्रकाशै रिन्द्रियज्ञानैः। एत दर्थद्वयं सिद्धान्ताविरुद्धत्वात् आचार्यचित्ताव्याकृताकाशान्तर्गत मिति ज्ञातव्यम्। श्रोतु र्मति मवेक्ष्य नोद्गलित मिद मिति॥ ३५॥

गुणप्रकाशैः तव सद्भावानुमानं यथा, तथा तव नामरूपानुमानेनाऽपि त्वत्सद्भावज्ञानं किं न स्या दत्राऽऽह- **न नामेति।** त्वन्नामरूपाभ्यां त्वत्सद्भावज्ञानसम्भवात्कि मायाससाध्येन परिशेषप्रमाणेनेति अतो वाऽत्राऽऽह - न नामेति। शुक्लभास्वरं तेज इति गुणेन कृपीटयोनि रग्नि रिति जन्मना दहनोऽग्निरिति कर्मणा यथाऽग्नि र्निरूप्यते तथा तव नामरूपे न निरूपितव्ये निरूपयितु मशक्ये लोकप्रसिद्ध्यभावात् अप्राकृतत्वात् सत्त्वाद्यभावात् अक्लिष्टकारित्वात् नित्यत्वात्। न च नामादिकं मिथ्येत्याह तस्येति। तस्य नामादेः साक्षिणः साक्षा द्द्रष्टुः न हीश्वरज्ञानगोचरस्य मिथ्यात्वं वक्तुं युक्तम्। तथा सति सर्वत्रानाश्वासप्रसङ्गः स्यात्। तस्मात् "वाचारम्भणं विकारः" (छान्दो. उ. 6-1-5) इति श्रुत्यवष्टम्भेन नामरूपयो र्मिथ्यात्वेन हरे स्ते न स्त इति न वक्तव्यम्। किन्तु अलौकिकार्थसन्नाम्नां तद्वाच्यरूपाणां वा अनन्तत्वात् अनामादिवचन मिति, ज्ञानिमनसा च अनुमेयानि नामरूपाणि सन्ति। "सर्वनामा सर्वकर्मा", "रुक्मवर्णं कर्तार मीशम्" (मुण्ड.उ. 3-1-3) इत्यादिश्रुते रित्याशयेनाऽऽह - मनोवचोभ्या मिति। यद्यय मनामा स्यात् तर्हि शब्दावाच्यः स्यात्, न च तथा "अह मेव" इत्यादि श्रुते रित्यादि। ननु ज्ञानाभावा न्नाऽस्त्येव नामादिक मिति तत्राऽऽह - प्रतियन्तीति। अथाऽपि यद्य प्यनन्तत्वात् ज्ञातु मशक्यानि तथाऽपि प्रतियन्ति जानन्ति, ज्ञानिन इति शेषः । तज्ज्ञानञ्च न स्वनियत मित्याह देवेति। देवस्य सर्वत्र द्योतमानस्य हरेः क्रियायाः प्रेरणालक्षणायाः श्रीनारायणप्रसादा दित्यर्थः । "लोकसिद्धार्थनाम्नः स इत्यारभ्य जानन्ति परमर्षयः" (पाद्मे) इत्यन्तं आचार्योक्ति रुक्तार्थसिद्धि रिति। अस्तु नाम रूपप्रसिद्धिः, ततः किं तत्राऽऽह - हीति। हिशब्दो हेतौ॥ ३६॥

यस्मा न्नामादयः सन्ति, तस्मात्क्रियमाणासु क्रियासु प्रेरकत्वेन पूज्यत्वेन नामानि शृण्वन् गृणन् रूपाणि चिन्तय-न्नाऽऽस्ते स त्वच्चरणारविन्दयोः आविष्टचित्तः पुरुषः भवाय संसाराय न कल्पत इत्यन्वयः । चशब्देन "सर्व क्रियासु कर्तृत्वपूज्यत्वेन जनार्दनम्। यो वेत्ति नैति संसारं तत्प्रसादा न्न संशयः" (क्रियायोगे) इति स्मृतेः। न श्रवणादिना पूर्यते, किन्तु तज्ज्ञानञ्च अवश्य मपेक्षितं भवति॥ ३७॥

1- -1 B omits.

दिष्ट्या हरेऽ स्या भवतः पदो भुवो भारोऽपनीत स्तव जन्मनेशितुः ।
दिष्ट्याऽङ्किंतां त्वत्पदकैः स्सुशोभनै र्द्रक्ष्याम गां याञ्च तवानुकम्पिताम् ॥ ३८ ॥

न तेऽभवस्येश भवस्य कारणं विना विनोदं बत तर्कयामहे।
भवो निरोधः स्थिति रप्यविद्यया कृता यत स्त्वय्यभवा[1]श्रयात्मनि ॥ ३९ ॥

मत्स्याश्व कच्छप वराह नृसिंह हंस राजन्य विप्रविबुधेषु कृतावतारः ।
त्वं [2]पासि न स्त्रिभुवनञ्च [3]तथाऽधुनेश भारं भुवो हर यदूत्तम वन्दनं ते ॥ ४० ॥

दिष्ट्याऽम्ब ते कुक्षिगतः परं पुमानंशेन साक्षाद्भगवान्भवाय नः ।
मा भूद्भयं भोजपते मुमूर्षो र्गोप्ता यदूनां भविता तवाऽत्मजः ॥ ४१ ॥

[4-]श्रीशुक उवाच[-4]

इत्यभिष्टूय पुरुषं यद्रूप [5]मनिदं यथा।
ब्रह्मेशानौ पुरोधाय देवाः [6-]प्रतिय युर्दिवम्[-6] ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे
गर्भगतविष्णो र्ब्रह्मादिकृतस्तुतिर्नाम द्वितीयोऽध्यायः ॥ २ ॥

**(विजयध्वजरीत्या तृतीयोऽध्यायः ॥ ३ ॥)**

1. B,G,J,K,W ° या ° 2. M,W पाहि 3. B,G,J,K,W य ° 4- -4 K,W omit 5. K,W °मविदन् 6- -6 K,W दिवं ययुः ।

**श्रीध०** विशेषतः श्रीकृष्णावतार मभिनन्दन्ति **दिष्टयेति**।[1] दिष्ट्या भद्रम्। तव पदः पादभूतायाः ईश्वरस्य तव जन्ममात्रेण [2-]भुवो भारः[-2] अपनीत एव। किञ्च, त्वत्पदकैः कोमलैः पदै स्सुशोभनैः वज्राङ्कुशादिशुभलक्षणैः गां पृथ्वीं, द्यां स्वर्गञ्च तव त्वयाऽनुकम्पिताम् ॥ ३८ ॥

तव जन्मना भारोऽपनीत इत्युक्त्या[3] ममाऽपि किं जीवव त्संसार उक्तो, नहि नही त्याहुः - **नेति। बत!** हे ईश! असंसारिण स्ते जन्मनः कारणं क्रीडां विना न तर्कयामः। किञ्च हे[4] अभवाश्रय! अभवश्च आश्रयश्च, न भवं आश्रय इति वा। अभयाश्रय इति पाठान्तरे[4] न भय माश्रयत इति तथा। तत्सम्बोधनम्। हे नित्यमुक्तेत्यर्थः। तव जन्मकारणं नाऽस्तीति किमु वक्तव्यम्। यतः आत्मनि[5] जीवात्मन्यपि भवादयः त्वयि विषये या अविद्या तया कृता न परमार्थत स्सन्तीति॥ ३९॥

प्रस्तुतं प्रार्थयन्ते **मत्स्येति।** नोऽस्मान् त्रिभुवनञ्च [6-]मत्स्यादिषु यथाऽपाः[-6], तथाऽधुनाऽपि पाहीति वन्दनं ते इति च वदन्त स्सर्वे शिरोभिः प्रणेमुः[7] ॥ ४०॥

देवकीं प्रत्याहुः **दिष्टचेति।** नोऽस्माकं भवाय [8-]क्षेमाय (भवायनः) भवस्य प्रपञ्चोत्पत्तेः अयनः स्थानभूत इति वा[-8] साक्षात्परः पुमान् ते कुक्षिं गतः, अतो भयं मा भू दिति। [9-]योंऽशेनाऽपि सदाऽस्माकं भवाय भवति स साक्षा त्ते कुक्षिं गत इत्येतत् अस्मद्भाग्यम्, यः अंशेन मत्स्याद्यवतारेण नोऽस्माकं कल्याणाय आसीत् सः सम्पूर्णः तव कुक्षिं गत इति तव दुःखनाशे को वा सन्देहः[-9]॥ ४१॥

**इतीति।** यस्य रूप मनिदं सर्वप्रत्यग्भूतम्। यथा यथावत् [10-]य द्रूपं मायामनुष्यरूप मिदं अनिदं यथा अविद्याकृत जन्ममरणादिरहितं सर्वसाक्षिप्रपञ्च सृष्टि स्थिति लयकारण मिति वा[-10]। अस्मा न्वञ्चयित्वा एता विह स्थास्यतः इति मन्यमाना ब्रह्मेशानौ पुरोधाय पुरतः कृत्वा दे[11]वा दिवं ययु रिति॥ ४२॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां द्वितीयोऽध्यायः ॥ २॥

---

1. V adds नः 2- -2 B,J omit 3. V °क्त्वा 4- -4 B,J हे अभयाश्रय! 5. B,J, omit आत्मनि 6- -6 B, J अन्यदा यथा पासि (अपाः) 7. B,J प्रणमन्ति 8- -8 B,J उद्भवाय 9- -9 B,J, omit 10- -10 B,J omit 11. B,J omit देवा दिवं

**वीर०** आत्मनां प्रकृतावतार प्रयुक्त मानन्द माविष्कुर्वन्तः स्तुवन्ति **दिष्टचेति।** दिष्टचेत्यानन्दद्योतक मव्ययम्। हे हरे! आश्रितार्तिहारिन्! तवेश्वरस्य जन्मना भवत स्तव पदा पादविन्यासेन च। पद इति पाठे [1-]पदरूपायाः[-1] अस्या भुवो भारोऽपनीतः अपनीतप्रायः। इदं दिष्टचा अस्माकमानन्द इत्यर्थः एवमुत्तरत्राऽपि। सुशोभनैः ध्वजवज्राङ्कुशादि चिह्नैश्चारुभिः पदकैः पादविन्यासैः अलङ्कृतां तव त्वया अनुकम्पिताञ्च गां भूमिं द्यां द्रक्ष्यामः[2] नित्यविभूति मिव द्रक्ष्यामः। एत दिष्टचा सङ्कल्पमात्रनिर्वर्त्यजगद्रक्षणस्य तवाऽवतारप्रयोजनं भक्तानुग्रह एवेत्युक्तम्॥ ३८॥

अथ अवतारनिमित्त माविष्कुर्वन्तः स्तुवन्ति **नेति**। हे ईश! अभवस्य कर्माधीनोत्पत्तिरहितस्य तव भवस्य जन्मनः कारणं निमित्तं विना विनोदं लीलार्थं सङ्कल्पं विना अन्य न्न तर्कयामहे। बते त्याश्चर्ये। अनितरसाधारणत्वाद्विस्मयः यथा सृष्ट्यादिजगव्द्यापारो विनोदमात्रानुकूलसङ्कल्पमूलकः, तद्वज्जन्मादीत्यभिप्रायेणाऽऽहुः भव इति। हे अभय! यतो विनोदा देव निमित्तात् अविद्यया संसारिणां ज्ञानविरोधिन्या प्रकृत्या जगत[3] उत्पत्त्यादयो विकारा स्तास्याऽऽश्रये आधारभूतेऽन्तरात्मनि च त्वयि कृताः, तमेव विनोद मभवस्य तव भवकारणं मन्यामह इत्यर्थः । आश्रयात्मनि कृता इत्यनेन उत्पत्त्यादयो विकाराः प्रकृतिगताः न स्वरूपगता इति सूचितम्॥ ३९॥

यथा मत्स्याद्यवतारपरिग्रहेणाऽस्मान् रक्षितवान् एव मधुना भूभारापहारद्वाराऽस्मान् पाही त्याहुः - **मत्स्येति**। मत्स्यादिषु कृतः परिगृहीतोऽवतारः येन, तथाभूत स्त्व मस्मान् त्रिलोकीञ्च यथा पासि रक्षितवान् तथा अधुनाऽपि भुवो भारं हर अपनय। हे यदूत्तम! ते तुभ्यं वन्दनं नम इत्यर्थः ॥४०॥

देवकीं प्रत्याहुः - **दिष्ट्येति**। हे अम्ब! नोऽस्माकं भवाय समृद्ध्यै अंशेन सङ्कल्पेन हेतुना परमपुरुषो भगवान् साक्षात्तव कुक्षिं प्रविष्टः । मुमूर्षोः भोजपतेः कंसाद्भयं तव मा भूत्। तवाऽऽत्मजो यदूनां गोप्ता भविता भविष्यति॥ ४१॥

[4-]इति इत्थं[-4] यथा यस्य भगवतो रूप मविदन् तथा स्वमत्यनुसारेण तं परमपुरुष मभिष्टूय ब्रह्मरुद्रौ पुरस्कृत्य देवा दिवं[5] प्रति ययुः॥ ४२॥

---

1- -1 K,W ततश्च 2. B adds च स्वर्गं 3. K जगदुत्प° 4- -4 K,W omit 5. B स्वर्गं।

**इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे**
**श्री वीरराघवविदुषा लिखितायां भागवतचन्द्र चन्द्रिकायां**
**व्याख्यायां द्वितीयोध्यायः ॥२॥**

**विज०** इदानी मवतारप्रयोजनं विज्ञापयति - **दिष्ट्येति**। तव जन्मना भवतः पदः भवच्चरणस्थानीयाया भुवः असुरकृतभारोऽपनीत इति यत्तत् दिष्ट्या सर्वस्य सुख मभूत्। सुष्ठु वा। "सुष्ठु दिष्ट्योपजोषम्" (वैज.को. 8-8-17) इति यादवः । तवाऽनुकम्पिताम् अनुकम्पाविषयां द्याञ्च द्रक्ष्यामः । दिष्ट्ये त्यभ्यास आदरणार्थम्। "पदाद्याश्रयणा द्विष्णोः पृथिव्यादि पदादिकम्" (ब्रह्मतर्के) इत्यादिस्मृतिसिद्धं भूमे र्विष्णुपदत्वम्॥ ३८॥

लोकानुग्रहमन्तरेण अन्य दवतारप्रयोजनं नाऽस्तीति विज्ञापयती त्याह **नेति**। न विद्यते भवः शुक्रशोणितसम्पर्क लक्षणं जन्म यस्य तथा तस्य। भवस्य भद्रस्य जन्मादिदोषरहितस्येत्यर्थः । "भवो रुद्रे हरे प्राप्तौ सत्तासंसारजन्मसु" (वैज.को 6-1-41) इति यादवः । ननु कर्दमे लीयत इव हरे र्जन्मादिमत्त्वं सत्य मित्यायातम्। तथा च तस्य कर्माधीनप्रवृत्तत्वेन ईश्वरत्वहाने र्न मोक्षार्थं तदुपासनं विधेय मिति तत्राऽऽह - भव इति। त्वयीति षष्ठ्यर्थे सप्तमी।

अभवाश्रयश्चाऽय मात्मा चेति अभवाश्रयात्मा मोक्षाश्रयः स्वामी। तस्य मुक्ताश्रयस्य स्वरूपस्य वा तव कृता अङ्गीकृता भवादयः अविद्यया त्वत्स्वरूपाज्ञानेन सत्या इति नरा मन्यन्त इति, यत इति शेषः । अस्य स्वस्य विद्यया इच्छया कृताः सत्या मन्यन्ते इति यत स्तस्मात् स्वरूपानादित्वेन ईश्वरत्वहान्यभावेन त्वदुपासनमेव विधेय मिति भावः। "अज्ञानादेव मन्यन्ते विष्णोर्जन्ममृती नराः । स्थितिरूपस्य चाऽन्यस्मा त्स्थितिं मोक्षाश्रयस्य हि" (ब्रह्मतर्के) इति वचना न्नेन्द्रजाल मिति मन्तव्य मिति॥ ३९॥

भक्तसङ्कटपरिहार मन्तरेण अन्य दवताप्रयोजनं न तवाऽस्तीति यत इतो निकृष्टोत्कृष्टजातिग्रहणेन त्रिभुवनमपादिति उपसंहरतीत्याह **मत्स्येति।** अश्वो हयग्रीवः । कच्छपः कूर्मः । विप्रो जामदग्न्यः । त्रिभुवनंह पास्यथा इति लकारव्यत्ययः। तथा सति कार्ये कृतेऽपि अस्माभि रेतावदेवाऽ नुष्ठीयते कृतप्रतिनिध्यभावा दित्याह - यदूत्तमेति। अस्त्विति शेषः ॥ ४०॥

भगवद्भक्तबहुमानातिशयेनाऽपि भगवतो धर्म इति प्रदर्शनाय देवकी माह **दिष्टयेति।** दिष्टचा मङ्गलम्। "दिष्टचा स्या न्मङ्गलादिषु" (वैज. को. 8-7-21) इति यादवः । साक्षात्तुर्यः जाग्रदाद्यवस्थातिक्रान्तः भविता भविष्यति॥ ४१॥

यद्रूप मनिदं प्रत्यक्षसिद्धं जगद्विलक्षणं तं पुरुषं पूर्णं यथा यथावत् अभिष्टूय। यद्वा यद्रूपं यथाऽनिदं प्रतीयते तादृशै र्विशेषणै रभिष्टूय॥ ४२॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
दशमस्कन्धे पूर्वार्धे द्वितीयोऽध्यायः ॥ २॥

(विजयध्वजरीत्या तृतीयोऽध्यायः)

# तृतीयोऽध्याय:

## (विजयध्वजरीत्या चतुर्थोऽध्याय:)

श्रीशुक उवाच

अथसर्वगुणोपेत: काल: परमशोभन:।
यर्ह्येवाजनजन्मर्क्षं[1] शान्तर्क्षग्रहतारकम्[2]॥ १ ॥

दिश: प्रसेदु र्गगनं निर्मलोडुगुणोदयम्।
मही मङ्गलभूयिष्ठ[3] पुरग्रामव्रजाकरा॥ २ ॥

नद्य: प्रसन्नसलिला ह्रदा जलरुहश्रिय:।
★ द्विजालिकुलसन्नादस्तबका वनराजय: ॥३॥

ववौ वायुस्सुखस्पर्श: पुण्यगन्धवहश्शुचि:।
अग्नयश्च द्विजातीनां शान्ता स्तत्र समैन्धत[4]॥ ४ ॥

मनांस्यासन् प्रसन्नानि साधूनामसुरद्रुहाम्।
जायमानेऽजने तस्मिन्नेदु र्दुन्दुभयो दिवि॥ ५ ॥

जगु: किन्नरगन्धर्वा स्तुष्टुवु: सिद्धचारणा:।
विद्याधर्यश्च[5] ननृतु रप्सरोभिस्समं[6] मुदा॥ ६ ॥

श्रीकृष्णावतार घट्ट:

मुमुचु र्मुनयो देवा: सुमनांसि मुदान्विता:।
मन्दं मन्दं जलधरा जगर्जु रनुसागरम्॥ ७ ॥

निशीथे तमसोद्भूते[7] जायमाने जनार्दने।
देवक्यां देवरूपिण्यां[8] विष्णुस्सर्वगुहाशय:[9]।
आविराशीद्यथा[10] प्राच्यां दिशीन्दुरिव पुष्कल:॥ ८ ॥

---

1. M °क्षे: 2. M °क: 3. G,K,W ०ष्ठा, * This half verse is not found in W. edn. but it is commented . 4. B,G,J,M समिन्धत; V. समेधिता:। 5. M °रा° 6. B,G,J,K,W तदा 7 B,G,J,M,V तम उ० 8 K,W भूतायां 9 K,W, गुणाश्रय: ; M. गुहाश्रय: 10. M. प्रादुरा०

## श्रीधरस्वामिविरचिता भावार्थदीपिका

तृतीये निजरूपेण सम्भूतस्तु हरि स्स्वयम्।
पितृभ्यां संस्तुतो नीतः पित्रा भीतेन गोकुलम्॥

**अथेति।** मङ्गलार्थम्[1] यर्हि [2]यदा सर्वगुणोपेतः कालो बभूव तदा देवक्यां विष्णु रावि रासीदिति अष्टमश्लोक[3]गतेनान्वयः। परमशोभनत्व मेवाऽऽह यर्हीत्यादिना। अजना न्नारायणाज्जन्म यस्य प्रजापते स्तस्य ऋक्षं रोहिणीनक्षत्रम्। कथम्भूतम्? शान्तानि ऋक्षण्यश्विन्यादीनि ग्रहाः [4]सूर्यादयः तारकाश्च यस्मिं स्तत्॥ १॥

**दिश इति।** यर्हीति सर्वत्रानु[5]षज्जते। निर्मलानामुडुगणाना मुदयो यास्मिंस्तत्तथा। मङ्गलभूयिष्ठाः पुरादयो यस्यां सा॥ २॥

**नद्य इति।** जल[6]रुहाणां श्रीः शोभा येषान्ते। द्विजालिकुलानां सन्ना[7]दाः येषु ते [8]तथाभूताः स्तबका यासु ताः॥ ३॥

**ववाविति।** [9-]समेधिताः सम्यक् दीप्ता बभूवुरित्यर्थः। समिन्धतेति पाठे अडभाव आर्ष[-9]॥ ४॥

**मनांसीति।** असुरद्रुहां कंसादिव्यतिरिक्तनां सर्वप्राणिनां देवानाञ्चेति। स्वर्गे तु विशेषमाह-जायमान इति। अजने जायमाने। [10-]जनार्दने उदयोन्मुखे सति[-10]। तदा आसन्नः प्रसवोयस्मिं स्तस्मिन्समये॥ ५,६॥

[11-]अनुसागरं सागरे गर्जीति सति[-11] तमसोद्भूते घनतमसि निशीथे यथा यथावत् ऐश्वेरणैवरूपेण॥ ७, ८॥

---

1. V °र्थः 2 B.J. Omit 3. V. °केनाऽ° 4. B.J. omit सूर्यादयः 5. V. षङ्गः। 6. B.J. °रुहैः 7. B.J. °दः 8. B.J. omit तथाभूताः 9- -9. B.J. समिन्धत अडागमोऽत्र द्रष्टव्यः। समैन्धतेति सम्यग्दीप्ता बभूवुरित्यर्थः॥ ४॥ 10- -10. B.J. omit 11- -11. J.V. Omit

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ भगवदवतारं प्रस्तौति - **अथेति**। यर्ह्येव अजनजन्म अजनस्य कर्मायत्तोत्पत्तिरहितस्य भगवतो जन्म, अथः तदा कालः सर्वैर्गुणैरुपेतः अत एव परमशोभनोऽभूदिति शेषः। तदेव प्रपञ्चयति शान्तर्क्षग्रहतारकम् ऋक्षं भगवज्जन्मनक्षत्रं[1] रोहिण्याख्यं तस्मिन् शान्ता अनुकूलाः अन्येषु च नक्षत्रेषु ग्रहास्सूर्यादयः, तारकाः अश्विन्यादि व्यतिरिक्त नक्षत्राणि च यस्मिन् यथा भवति तथा अभूदिति क्रियाविशेषणम्। यद्वा अजनाद्भगवतो जन्म यस्य तस्य प्रजापतेः यदृक्षं रोहिण्याख्यं तस्मिन्नित्यादिपूर्ववत्॥ ९॥

[2]तथा दिशः प्रसेदुः प्रसन्ना बभूवुः गगनं निर्मलानामुडूनां नक्षत्राणां गणो यस्मिन् तथाभूतं, पुराणां प्राकारोपेतानां ग्रामाणां तद्रहितानां व्रजानां गोष्ठानाञ्चाऽऽकरा आश्रयभूता मही मङ्गलभूयिष्ठा बभूव॥ २॥

नद्यस्तु प्रसन्नानि सलिलानि यासु तथाभूताः ह्रदास्तु जलरुहाणां श्रीः येषु तथाभूताः वनानां राजयः पङ्क्तयस्तु द्विजानां पक्षिणां, अलीनां भृङ्गाणाञ्च कुलानां सङ्घानां सन्नादो येषु तानि स्तबकानि यासु तथाभूताः॥ ३॥

वायुस्तु शुचिः धूलिरहितः पुण्यगन्धवहः सुगन्धिः सुखस्पर्शश्च ववौ प्रससार। द्विजातीनां त्रैवर्णिकानाम् अग्नयः पूर्वं शान्तास्तदा समैन्धत 'ञिइन्धीदीप्तौ' जज्वलुः। समेधिता इति पाठे तु स एवाऽर्थः। यद्वा शान्ताः अकलुषाः॥ ४॥

असुरद्रुहां देवानां साधूनां च मनांसि प्रसन्नन्यासन्। तस्मिन् भगवति जायमाने सति दिवि दुन्दुभयो नेदुः दध्वनुः॥ ५,६॥

कुसुमानि समन्ततो मुमुचुरित्यन्वयः। जनार्दने जायमाने निशीथे अर्धरात्रे तमसा अन्धकारेणोद्भूते व्याप्ते सति मेघाः मन्दम्मन्दं अनुसागरं सागरमनुसृत्य जगर्जुः यथा सागरो ध्वनति तद्वत्। सादर मिति पाठे आदरयुक्तं यथा तथा अनुजगर्जुः[3]। तदा देवभूतायां देवतांशत्वात्तत्तुल्यायां [4]देवक्यां सर्वेषां ज्ञानशक्ति बलैश्वर्यवीर्यतेजःप्रभृतीनां गुणानामाश्रयो विष्णु राविरासीदाविर्बभूव, यथा प्राच्यां दिशि पुष्कल षोडशकला - परिपूर्णः [5]चन्द्रः तद्वत्। इवशब्दो वाक्यालङ्कारे॥ ७,८॥

---

1. K.W. °जन्मर्क्षं 2. B. तदा 3. B adds इत्यर्थः। 4. K.W. Omit देवक्यां 5. K.S. Omit चन्द्रः

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

भगवद्भक्तचर्थं तदवतार प्रयोजनं समयेनाविर्भूत पूर्वकालादिगुणै र्विलासमाह - श्रीशुक इति। सर्वेषां ग्रहाणामुच्चस्थानगतत्वादि गुणविशिष्टः सर्वगुणोपेतः परमं शोभनं यस्मात्स तथा। अजनजन्मर्क्षं रोहिणी यत्र स तथा। शान्तानि प्रसन्नानि ऋक्षाणि ग्रहाश्च तारका यस्मिन् स तथा यर्हि यदा एवंविधः कालः॥ १॥

तदा दिशः प्रसेदु रित्यादिकमभूत्। निर्मलोडुगणस्य उदयो यस्मिन् स तथा। मङ्गलपूर्णाः पुराणि ग्रामा व्रजाकराश्च यस्यां सा तथा॥ २॥

जलरुहाणां पद्मानां श्रियो येषु तथा वनराजयः वन पङ्क्तयः॥ ३॥

सुमिन्धत ज्वलिताः॥ ४॥

सुमनांसि पुष्पाणि, अनुसागरं समुद्रस्योपान्ते॥ ५,६,७॥

जायमान इति द्विर्वचनं जन्मवैलक्षण्य प्रदर्शनपरम्। देवस्य हरे रूपं अस्यामस्तीति देवरूपिणी, तस्याम्॥ ७॥

**तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शङ्खगदा[1]द्युदायुधम्।**
**श्रीवत्सलक्ष्मं गलशोभि कौस्तुभं पीताम्बरंसान्द्रपयोदसौभगम्॥ ९॥**

**महार्ह वैदूर्य किरीटकुण्डल त्विषापरिष्वक्त सहस्रकुन्तलम्।**
**उद्दामकाञ्च्यङ्गद कङ्कणादिभि र्विरोचमानं वसुदेव ऐक्षत॥ १०॥**

**स विस्मयोत्फुल्ल विलोचनो हरिं सुतं विलोक्यानकदुन्दुभिस्तदा।**
**कृष्णावतारोत्सव सम्भ्रमोऽस्पृशन्मुदा द्विजेभ्योऽयुत माप्लुतो गवाम् ॥ ११॥**

**अथै[3]न मस्तौ दवदार्य पूरुषं परं नताङ्गः कृतधीः कृताञ्जलिः।**
**स्वरोचिषा भारत! सूतिकागृहं विरोचयन्तं गतभीः प्रभाववित्॥ १२॥**

---

1. B.G.J.० र्यु० 2. V. ० ड्रू ० 3. V. ० व ०

**श्रीध० तमिति।** तमद्भुतं बालकं वसुदेव ऐक्षतेति द्वितीयश्लो[1]कस्थेनान्वयः अद्भुतत्वे हेतुगर्भ विशेषणान् अम्बुजेक्षण मित्यादिना। [2-]श्रीवत्सलक्ष्मं श्रीवत्सलक्ष्माणं[-2] गलेन शोभत इति गलशोभी स कौस्तुभो यस्मिन् ॥ ९॥

**महार्हेति।** किरीटकुण्डलादीनां त्विषा कान्त्या परिष्वक्त सहस्रकुन्तलं स्फुरदपरिमित केशमित्यर्थः॥ १०॥

**स इति।** विस्मयेनोत्फुल्ले विकसिते विलोचने यस्य सः गवामयुत मस्पृशत् मनसा दत्तवान् कंसनिगृहीतस्य दानासम्भवात् स्पृष्टौ हेतुः कृष्णावतारेति।मुदा आप्लुतो व्याप्तः स्नात इति वा[3]॥ ११॥

**अथेति** - कृतधीः शुद्ध बुद्धिः॥ १२॥

---

1. B.J. ०केनाऽ० 2- -2. V.श्रीवत्सलक्ष्मलक्षणं यस्य 3. V. omits वा

**वीर०** त[1]म् अवतीर्णं भगवन्तं वसुदेव ऐक्षत अपश्यदित्यन्वयः। कथम्भूतम्? अद्भुत मदृष्टरूपत्वात् आश्चर्यविषयम् अम्बुजे इव ईक्षणे नेत्रे यस्य। [2-]चत्वारो भुजा यस्य[-2], शङ्खादीनि तानि आयुधानि यस्य, आदिशब्देन चक्रपद्मसङ्ग्रहः।

श्रीवत्सः लक्ष्म चिह्नं यस्य, आर्षत्वा ट्टिलोपः। यद्वा श्रीवत्स एव लक्ष्म; तदस्यास्तीति, श्रीवत्सलक्ष्मः अर्शआदित्वात् मत्वर्थीये अचि। 'न स्तद्धिते' (अष्टा॰ 6-4-144) इति टिलोपः। श्रियां लक्ष्म्यां वत्सला सापत्न्यदोषनिवृत्त्या अनुकूला क्ष्मा भूमिः यस्येति व्याख्यानान्तरम्। गले कण्ठे शोभी शोभावान् कौस्तुभो यस्य। पीताम्बरं यस्य। सान्द्रनीलाम्बुदस्येव सौभगं सौन्दर्यं वर्ण इति यावत्, यस्य। महार्हाण्यनर्घाणि वैडूर्यादि[3] रत्नानि यस्मिन् तस्य किरीटस्य कुण्डलयोश्च त्विषा कान्त्या परिष्वक्ताः अनुविद्धाः सहस्रकुन्तला यस्य। उद्दामैः श्लाघ्यैः काञ्च्यादिभिः विरोचमानम्॥ ९, १०॥

[4]सः वसुदेवः तं हरिं सुतं[5] विलोक्य विस्मयेनोत्फुल्ले विकसिते लोचने यस्य कृष्णावतार रूपा दुत्सवात्संभ्रमो यस्य तथाभूतस्तदैवाऽऽप्लुतः स्नातः द्विजेभ्यो गवामयुत मस्पृशत्। दातुं सङ्कल्पितवानित्यर्थः तदा कंसनिगृहीतस्य दानासम्भवात्॥ ११॥

अथ हे भारत स्वरोचिषा सूतिकागृहं विरोचयन्तं एनं कुमारं परमपुरुषमवधार्य निश्चित्य नतं प्रणत-मङ्गं यस्य, कृतो बद्धोऽञ्जलिर्येन, कृता समाहिता धी र्येन, गता भीः कंसजा यस्य, तथाभूतो वसुदेवः तस्य भगवतः प्रभावं जानन्नस्तौत् तुष्टाव॥ १२॥

---

1. K.W. omit 2- -2. K.omits 3. B.K.०डू० 4. K.W. omit सः 5. B. adds पुत्रभूतं

**विज०** शङ्खगदे आदी येषां तानि शङ्खगदादीनि तानि चोत्कृष्टानि च आयुधानि यस्य स तथा तं श्रीवत्सलक्ष्मं श्रीवत्सलाञ्छनं सान्द्रपयोदसौभगं सान्द्रपयोदस्य जलपूर्ण मेघस्येव सौभगं कान्ति विशेषो यस्य स तथा तम्॥ ९॥

महार्हाणि अनर्घ्यानि[1] वैदूर्यमयकिरीट कुण्डलानि महार्हवैदूर्यकिरीटकुण्डलानि, तेषां त्विषा शोभया किरीटञ्च कुण्डले च किरीटकुण्डलानि, परिष्वक्ता आलीढाः सहस्रकुन्तला यस्य स तथा॥ १०॥

अस्पृशत् दास्यामीति मनसा सङ्कॢप्तवान् मुदा आप्लुतः॥ ११॥

कृतधीः शिक्षित बुद्धिः पण्डितइत्यर्थः। गतभीत्वे निमित्तं प्रभावविदिति॥ १२॥

---

1. B ०र्घा०

-: स्वस्वरूपेणाविर्भूतं भगवन्तं प्रति वसुदेवकृत स्तुति: :-

वसुदेव उवाच

विदितोऽसि भवान् साक्षात्पुरुष: प्रकृते: पर:।
केवलानुभवानन्दस्वरूप: सर्वबुद्धिदृक्॥ १३॥

स एव स्वप्रकृत्येदं सृष्ट्वा[1]ऽग्रे त्रिगुणात्मकम्।
तदनु त्वं ह्यप्रविष्ट: प्रविष्ट इव भाव्यसे॥ १४॥

[2]यथेमे विकृता भावा [3]स्तथा ते विकृतैस्सह।
नानावीर्या: पृथग्भूता विराजं [4]जनयन्ति हि॥ १५॥

सन्निपत्य समुत्पाद्य दृश्यन्तेऽनुगता इव।
प्रागेव विद्यमानत्वा न्न तेषामिह सम्भव:॥ १६॥

एवं भवान्बुद्ध्यनुमेयलक्षणै[5]: ग्राह्यै र्गुणै: सन्नपि तद्गुणाग्रह:।
अनावृतत्त्वा द्वहिरन्तरं न ते सर्वस्य सर्वात्मन आत्मवस्तुन:॥ १७॥

---

1. M. यन्नि° 2. M.य एतेऽ० 3. M. °स्सत 4 M.शयनं तव। 5. M.०णो

**श्रीध०** वसुदेव: प्रथमं पुत्रबुद्ध्या पश्यं स्तां परित्यज्याह **विदितेति**। [1]अहो विदितोऽसी। कथं विदितोऽस्मि? भवान् प्रकृते: पर: पुरुष इति। ननु [2]किमत्राश्चर्यं पुरुषस्य प्रकृते रन्यत्वा देवेत्यत आह साक्षादिति प्रत्यक्षत इत्यर्थ:। नन्वक्षिसन्निकृष्टं प्रत्यक्षत उपलभ्यते किं [3]चित्रमित्यत आह केवलेति। केवलश्चाऽसा वनुभवश्चानन्दश्च [4]तावेव स्वरूपं यस्य स: "[5-]आनन्दो ब्रह्मेति व्यजानात्" (तैत्ति० उ० 3-6) इत्यादि श्रुते[-5]:। किञ्च सर्वबुद्धि दृक् नह्येवम्भूतो दृश्यो भवतीत्यर्थ:॥ १३॥

ननु देवकी जठरे प्रविष्टस्य किमियमिति स्तुति: क्रियते अत आह **स एवेति।** स एव उक्तस्वरूप एव त्वं न देवकी जठरे प्रविष्ट इत्यर्थ:। ननु विश्वं सृष्ट्वा [6]तदेवानु प्रविष्टस्य किमेतद्वहु, अत आह स्वप्रकृत्येति। स्वमायया [7]इदं सृष्ट्वा वा तदनु [8]त्वमप्रविष्ट एवेति। ननु तर्हि कथं श्रुत्योच्यते "तत्सृष्ट्वा तदेवाऽनु प्राविशत्" (तैत्ति. उ. 2-6) इति। अत आह - प्रविष्ट इवेति। [9-]यथा जले आकाशं प्रतिबिम्बितं चन्द्रसूर्यादिना अप्रविष्ट मेव प्रविष्टमिव तद्वत्[-9]। भाव्यसे निरूप्यसे। प्रत्यक्षतो वा सद्रूपेण वा प्रतिष्ट इव लक्ष्यसे॥ १४॥

अत्र दृष्टान्तो **यथेति**। इवेऽविकृता भावा: महदादयो यथा तथेति दृष्टान्तं विवृणोति। ते विकृतैरिति। ते विकृतैः षोडश विकारैस्सह सन्निपत्य विराजं ब्रह्माण्डं[10] जनयन्ति। सन्निपतने हेतु: — यत: पृथग्भूतास्सन्तो नानावीर्या विशिष्टकार्यसमर्था न भवन्ति अत: सन्निपत्येति। एवं समुत्पाद्य अनुगता: प्रविष्टा इव दृश्यन्ते न पुन: प्रविष्टा:, कुत: ? उत्पत्ते: प्रागेव कारणतया विद्यमानत्वान्न तेषा मिह सृष्टे कार्ये पश्चात्सम्भव: प्रवेश इति॥ १५,१६॥

दार्ष्टान्तिकेऽतिदिशति — एवं भवानिति। ननु यद्यहमप्रच्युतस्वरूप एव कारणतया कार्येषु वर्ते तर्हि तेष्विन्द्रियै: गृह्यमाणेषु ममग्रहणं किं [11-]नाऽस्तीत्यताऽऽह[-11] — बुद्ध्यनुमेयलक्षणैरिति। बुद्ध्या रूपादि ज्ञानेन अनुमेयं लक्षणं स्वरूपं येषां तै र्गुणैरिन्द्रियै: ग्राह्यै र्गुणै: सह सन्नपि वर्तमानोऽपि तद्गुणाग्रह स्तैर्गुणैस्सह न गृह्यते[12]। अयं भाव: नहि ग्राह्यैस्सह भावमात्रं ग्रहणे कारणं किन्त्विन्द्रियाणां शक्ति:। सा च कार्यैकसमाधिगम्यां यथा कार्यमेव कल्प्यते। अतो यथा चक्षुषा रूपग्रहणे रसादिग्रहणं नास्ति तथैव विषयग्रहणे त्वद्ग्रहण मपीति। अविषयत्वेन च ग्रहणानर्हत्व मुक्तमेव, [13-]आ म्रग्राहकदृष्टे: तन्निविष्टपीतरक्तरूपादि ग्रहण सामर्थ्यं न माधुर्यादि ग्रहणसामर्थ्यं रसस्य सहवर्तमानत्वेऽपि अचक्षुर्विषयत्वात्[-13] सर्वबुद्धिदृगित्यत्र। एवं तावत्प्रागेव विद्यमानत्वात् प्रवेशो नास्ती त्युक्तम्। किञ्च परिच्छिन्नस्य नीडे पक्ष्यादेरिव प्रवेशो भवेत् तव त्वनावृतत्वा दपरिच्छिन्नत्वेन बहिर[14]न्तरे च भेदो नास्ति कुत: प्रवेश इत्याह अनावृतत्त्वादिति। अनावृतत्त्वे हेतूनाह सर्वस्येति। नहि सर्वस्व[15]रूपस्यान्यदावरकमस्ति सर्वात्मन:। न ह्येकेनावृतोऽन्यस्यात्मा भवेत्। आत्मवस्तुन इत्यात्मनो वस्तुनश्चेति हेतुद्वयम् 'अत सातत्यगमने' इत्यस्मादतति व्याप्नोतीत्यात्मा। नहि व्यापकस्यावरणं घटते यथा वस्तुन: परमार्थ 'वस्तुन: आवरणं न घटत इत्यर्थ:। तस्मात् तवान्तर्यामितया प्रवेशो न मुख्योऽस्ति। कुतस्तरां गर्भे प्रवेश:। अत: केवलानुभवानन्दस्वरूप एव त्वं विदितोऽसीत्याश्चर्यं, मम भाग्यमित्यर्थ:॥ १७॥

---

1 B.J. omit अहो 2. B.J. किमाश्चर्यं 3. V. ०मत 4. V. तदेव 5 - 5 B.J. omit 6. B.J. तदनु 7. B.J. omit इदं 8. V °मनुप्र 9 - 9 B.J. omit 10. V.omits ब्रह्माण्डं 11- -11. B.J. नास्ति, तत्राऽऽह 12. W. °से 13- -13. B.J. omit 14. B.J. °रन्तर्भे° 15. B.J.omit स्व

**वीर०** स्तुतिमेव दर्शयति विदितोऽसीत्यादिभिर्दशभि:। तावत् "सत्यं ज्ञान मनन्तं ब्रह्म" (तैत्ति. उ. 2.1.1), "विज्ञान मानन्दम्" (बृह उ. 3.9.28) "यतो वा इमानि भूतानि" (तैत्ति. उ. 3.1) इत्यादिभि र्वेदान्त वाक्यैरवगतं स्वरूपत स्स्वभावतश्च प्रकृतिपुरुषविलक्षणं ब्रह्म, तदेव त्वमिति स्तौति विदितोऽसीति द्वाभ्याम्। प्रकृति शब्देनाऽत्र "भूमि रापोऽनलो वायु:" (भ.गी. 7.4) "अपरेयमितस्त्वन्याम्" (भ.गी. 7-5) इति श्लोकद्वयप्रतिपादितं चिदचिदात्मिक प्रकृतिद्वयं तन्त्रेण विवक्षितम्। न त्वचेतनप्रकृतिरेव 'सर्वबुद्धिदृक्' इति सर्वसाक्षित्वोक्ते: जीवा द्व्यावृत्ते रप्यवगमात्। मुक्तजीवस्वरूपस्य तत्सम्भवेऽपि "स्वप्रकृत्येदं सृष्ट्वाऽग्रे त्रिगुणात्मकम्" इत्यवगतजगद्व्यापारासम्भवात् तदसम्भवस्य "जगद्व्यापारवर्जं प्रकरणा दसन्निहितत्वाच्च" (ब्र.सू. 4.4.17) इति सूत्रितत्वात्। यद्वा प्रकृते: पर इत्यनेन

अचेतन प्रकृतेः परत्व मुच्यते, सर्वबुद्धि दृक् स एवेत्यादिना बद्ध मुक्त जीवाभ्यां परत्वमुच्यते। यः प्रकृतेः परो विलक्षणोऽसौ केवल मनुभवः ज्ञान मानन्दश्च स्वरूपं यस्य सः। अनुभव स्वरूप इत्येतावदुक्ते दुःखस्याऽपि ज्ञानात्मकत्वेन तत्स्वरूपत्वं प्रतीयेत, अतस्तद्व्यावृत्तये आनन्द इत्युक्तम् आनन्दो अनुकूलं ज्ञानं स्वरूपं यस्येत्यर्थः। केवलशब्देन दुःखसम्भिन्नानुभव व्यावृत्तिः सर्वा बुद्धी स्तद्वृत्तीर्युगपत्पश्यतीति तथा। अनेन बद्धजीवाद्व्यावृत्तिरुक्ता॥१३॥

अथ मुक्तजीवा द्व्यावर्तयितुमाह — **स एवेति।** यः प्रकृतेः परः सर्वबुद्धिदृक् स एव त्वम् अग्रे सृष्टेः प्राक् कारणत्वेनाऽवस्थित इति शेषः। स्वप्रकृत्या स्वशरीरभूतया महदादि पृथिव्यन्तरूपेण परिणतया त्रिगुणात्मिकया इदं परिदृश्यमानं स्थूलचिदचिदात्मकं सत्त्वादि गुणत्रय परिणामरूपत्वेन तद्वश्यजीवप्रचुरत्वेन च तदात्मकं जगत्सृष्ट्वा अनु पश्चात् तज्जगत्प्रविष्टः स्थित्यर्थं सङ्कल्परूपज्ञानेन प्रविष्टः सृष्टिदशाया मपि प्रविष्टत्वात् तथाऽप्यप्रविष्ट इव भाव्यसे। प्रविष्टजगद्गतविकारैः स्पृष्ट इव भाव्यसे विभाव्यसे विज्ञायस इत्यर्थः। तथा च श्रूयते "तत्सृष्ट्वा तदेवाऽनु प्राविशत्" (तैत्ति. उ. 2-6) "सत्यञ्चानृतञ्च सत्यमभवत्" (तैत्ति. उ. 2-5) इति विचित्रचिदचिद्रूपेण विक्रियमाणमपि ब्रह्म सत्यमेवाऽभवत् निरस्तनिखिलदोषमपरिच्छिन्नज्ञानानन्दमेक स्वरूपमेवाऽभवत् इत्यर्थः। इव शब्दोऽनतिरिक्तार्थः। अप्रविष्ट इव तद्गतदोषास्पृष्ट एव विभाव्यस[2] इत्यर्थः॥ १४॥

ननु कार्यानुप्रविष्टस्य मम कार्यात् प्रागेव तत्कारणतयाऽवस्थानं कथम्? कथन्तरां कार्यगतविकारास्पृष्टत्वञ्च इत्याशङ्क्य तदुभयं महदादि पृथिव्यन्ताचेतन दृष्टान्तमुखेनोपपादयति **यथेत्यादिभि** श्चतुर्भिः। तावद्दृष्टान्तं शिक्षयति यथेति द्वाभ्याम्। सप्त महदहङ्कार तन्मात्ररूपाः विकृताः प्रकृतिविकारात्मकाः भावाः पदार्थाः ये ते इमे तै र्विकृतैः तद्विकाररूपै आकाशाद्रिस्थूलभूतैरिन्द्रियैः साधिदैवतैश्च सह। तथा तैरिति पाठे ये च विकृता महदादयो भावाः तथा ये च तद्विकासः स्थूलभूतरूपाः तैस्तै स्सहेत्यन्वयः। तावन्नानावीर्या विभिन्नशक्तयः ब्रह्माण्डरूपैक कार्योत्पादनोपयुक्तैक रूप सामर्थ्य रहिता इत्यर्थः। अत्र हेतुः पृथग्भूताः परस्परसम्मेलन रहिता स्तावदेवम्भूता स्सन्तः "हन्ताऽह मिमा स्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि, तासां त्रिवृतं त्रिवृतमेकैकां करवाणि नामरूपे व्याकरोत्, त्रिवृतं त्रिवृत मेकैका मकरोत्" (छान्दो उ. 6-3-2) इति श्रुत्युक्तरीत्या त्वदनुप्रवेश पूर्वक त्वत्कर्तृक त्रिवृत्करणद्वारा त्रिवृत्करणं पञ्चीकरणस्याप्युपलक्षणम्।[3] सन्निपत्य समुत्पाद्य संहतत्त्वं समागतत्व ञ्चेत्यवस्थाद्वयं प्राप्य "समेत्यान्योन्य संयोगं परस्पर समाश्रयाः" (विष्णु पु. 1-2-52) इति वैष्णव वचनात्! तत्र संहतत्वं नाम पृथक्स्थित्यनर्ह संयोगमात्रम्, समागतत्वं पृथक्स्थित्यनर्हसंश्लेष विशेषः। विराजं ब्रह्माण्डम् त्वच्छयनस्थानं जनयन्ति हि[4]। हि शब्देन "महदाद्या विशेषान्ता ह्यण्ड मुत्पादयन्ति ते" (विष्णु पु. 1-2-53) इति वैष्णवादि पुराणान्तर प्रसिद्धि र्द्योत्यते। एवं सम्यग्विराज मुत्पाद्य अनुगता इव दृश्यन्ते अण्डान्तर्गता इव दृश्यन्ते। इवशब्दोऽनतिरिक्तार्थः अण्डान्तर्गता इव तत्रैवोत्पन्ना इव दृश्यन्ते न तु अण्डोत्पत्तेः प्रागेव विद्यमाना इवेत्यर्थः। न चैतावता तेषां तत्रोत्पत्तिरिति शक्यं वक्तुमित्यभिप्रायेणाह प्रागेवेति। अण्डोत्पत्तेः प्रागेव विद्यमानत्वात् पृथिव्यादीनामण्डान्तर्नोत्पत्ति रित्यर्थः॥ १५, १६॥

दृष्टान्ताभिप्रेतमर्थं दार्ष्टान्तिकेऽनुगमयति[5] **एवमिति।** यथा महदादि विशेषान्तानां भावानाम्[6] अण्डोत्पत्तेः प्रागेव तत्कारणतया अवस्थान मण्डान्तर्गत देवमनुष्यादि भावेष्वनुवृत्तिश्च तथा भवानपि कृत्स्नजगदुत्पत्तेः प्रागेव तत्कारणतयाऽवस्थित स्तदनुप्रविष्टः अथाऽनुप्रविष्टोऽप्यप्रविष्टः इव भाव्यस इत्येतदुपपादयति बुद्धीति। सन्नपि देवमनुष्यादि पदार्थेष्वनुप्रविश्य विद्यमानोऽपि बुद्ध्यनुमेयलक्षणैः ज्ञाननिरूप्यस्वभावैः ग्राह्यैरैन्द्रियकैः गुणैः गुणमयै र्देवादिपदार्थैः गुणकार्यैर्विशिष्टोऽपीति शेषः। तद्गुणाग्रहः तद्गुणै र्देवादिभावगत विकारैर्न गृह्यते नोपादीयते न स्पृश्यत इति यावत्। तथा तद्गुणग्रह इति पाठे तद्गुणमयकार्य[7] साक्षात्कर्ता भवान् बुद्ध्यनुमेयलक्षणैः ग्राह्यै र्गुणैर्विशिष्टोऽपि सन् एकरूपो निर्विकारः निरस्तनिखिलदोषः अपरिच्छिन्न ज्ञानानन्द स्वरूपः एकरूपत्वेनावतिष्ठत इत्यर्थः। यद्वा बुद्ध्यनुमेय लक्षणैः ग्राह्यै र्गुणैस्सन्नपि तैस्सह वर्तमानोऽपि तद्गुणाग्रहः तद्गतविकारास्पृष्टः। पाठान्तरे तत्साक्षात्कर्ता, न तु तद्गतविकारस्पृष्ट इत्यन्वयः। कथं तद्विशिष्टस्यापि तद्गत विकारास्पर्श इत्यत्राऽऽह अनावृतत्वादिति। अनावृतत्वात् असङ्कुचितज्ञानत्वात् नित्यासङ्कुचितापरिच्छिन्न ज्ञानत्वेन जीवस्येव कर्मायत्त ज्ञानसङ्कोच विकासादि विकाराभावात्। अनेन जीवगत विकारास्पर्शो उक्तः। अनावृतत्वे हेतु माह बहिरन्तरं न ते इति। बहिर्भागः तत्प्रतिसम्बन्ध्यन्तर्भागश्च ते तव नास्ति व्यापित्वादपरिच्छिन्नस्य आवरणासम्भवात् इति भावः। व्यापित्व मचेतनगतदोषास्पर्शश्चाऽऽह सर्वस्य कृत्स्नजगत्कारणतया तदनन्यत्वेनावस्थितस्य, किं सर्वत्वं स्वरूपेण? नेत्याह सर्वात्मनः सर्वशरीरकस्य शरीरात्मभावनिबन्धन मेवानन्यत्वम्, न तु स्वरूपाभेद निबन्धनमिति[8] भावः। शरीरगोचर बुद्धिशब्दानां शरीरिपर्यन्तत्वात् सर्वशरीरकत्वेऽपि सर्वानन्यत्व मविहत मेवेति भावः। यतस्सर्वात्मा अत एव न सर्वगतदोषसंस्पर्शप्रसङ्गः। नहि देहगता बाल्यादयोधर्माः तदात्मनि प्रसजन्तीत्यभिप्रायेण विशिनष्टि आत्मवस्तुन इति। सर्वेषामात्मभूतस्य तव बहिरन्तरं नेत्यन्वयः।[9] यद्यपि बालोऽहम्, युवाऽहम् इति देहधर्मास्तदात्मनि प्रतीयन्ते तथापि सा प्रतीति र्जीवानां देहात्मभ्रान्तिमूला परमपुरुषस्य त्वनावृतत्वात् आवरणमूलक देहात्मभ्रान्त्यादेरभावा दात्मनि न शरीरगत दोषसंस्पर्श स्तत्प्रतीतिश्चास्तीति भावः॥ १७॥

---

1. B. adds एवम् 2. K.W. omit वि 3. B. adds किञ्च 4. K.W. omit हि 5. B. ०के नि० 6. K.W. omit भावानाम् 7. W. कार्ये 8. K.W. रूपमिति 9. B. adds सर्वत्र सर्वथा सर्वतः परिपूर्णत्वादिति दिक्

**विज०** प्रकृतेः परत्वेन केवलानुभवानन्द स्वरूपत्वेन सर्वबुद्धिसाक्षित्वेन च पुरुषः षड्गुण इति भवान् पूज्यस्त्वं विदितोऽसि साक्षत् नोपचारमात्रम्॥ १३॥

ननु साक्षित्वेनोदासीनश्चेत् जगत्स्रष्टा क इति तत्राऽऽह **स एवेति।** तदनु सृष्टेरनन्तरं बहिरपि विद्यमानत्वात् अप्रविष्टः पूर्णस्वरूपात्प्रविष्टः सर्वगतस्य प्रवेशाप्रवेशौ उपचारतो नतु देवदत्तवत् मुख्यावित्यतः इवशब्दः। "बहिश्च विद्यमानत्वादप्रविष्टो जगत्पतिः प्रविष्टवच्च तत्रैव पूर्णरूपत्वतो विभुः" (ब्रह्मतर्के) इत्यादेः। सर्वगत रूपेणाऽप्रवेशः पुरुषरूपेण प्रवेशः जले प्रतीयमानाकाशादिवदिति वा। हिशब्दोऽसङ्गत्व माह॥ १४॥

सृष्टिप्रकारं दर्शयति य इति। य एते सप्ताऽविकृता: महदहङ्कारपञ्चतन्मात्रणि, भावा: पदार्था: ते विकृतै: स्थूलीभूतै: पृथिव्यादिभि: जन्यप्राणिकामकर्मादिभि: वा सह सन्निपत्य अन्योन्यं मिलित्वा विराजं ब्रह्माण्डं समुत्पाद्य अनुगता: प्रविष्टा इव दृश्यन्ते बहिरपि विद्यमानत्वात्, कथम्भूता भावा:? पृथग्भूता विश्लिष्टा: नानावीर्या: अवकाशदानादि शक्तीनां नानाविधत्वाद्विभक्तशक्तित्वात्तदभिमानिदेवानामिति शेष:। ननु तर्हि मेलनकर्ता क:? इति तत्राऽह शयनमिति। तव शयनस्थानीयत्वात् त्वमेव मेलन कर्तेत्यर्थ:॥ १५॥

व्यक्तिविशेषा दण्डे प्रवेशमात्रमेवोत्पत्ति: नतु साक्षादित्याह — प्रागेवेति। इह ब्रह्माण्डे सम्भव: साक्षादुत्पात्तिर्नास्ति किन्तु व्याक्ति विशेषेण प्रवेशमात्रमेव कुत:? प्रागेव विद्यमानत्वात् लब्ध सत्ता (क?) त्वात् पूर्वमेवोत्पन्नत्वा दित्यर्थ: प्रकृति विकृतत्वमन्तरेण अवान्तर विकृतत्वाभावात् महदादयोऽविकृता इत्युच्यन्ते "महदादि स्त्वविकृत" इत्यारभ्य अण्डे त्वेषा मभिव्यक्ति र्जनि रित्यभिधीयते" (ब्रह्मतर्के) इत्यन्तेन सम्यग्व्याख्यात माचार्यै रिति भाव्यम्॥ १६॥

स इत्यनुवर्तते। यथा तत्त्वानामचेतनत्वेन तदभिमानिनां विभक्तशक्तित्वेन च तेषा मन्यस्त्वं मेलयितृत्वेन भाव्य:। स एवं शरीर मुत्पाद्य समुत्पत्ते: प्राक् पश्चादपि निर्दोषत्वेन वर्तमानो भवान् ग्राह्यै रनुमेयै र्गुणैरिन्द्रियविषयै: उत्पन्नया बुद्ध्या ज्ञानाख्यलिङ्गेनानुमेयानि लक्षणानि स्वातन्त्र्यादीनि यस्य स तथा। तेषा मिन्द्रियाणां गुणाग्रह: विषयज्ञापकोऽन्योऽस्तीति ज्ञायते। "क्षेत्रज्ञ: पुरुषो ह्यात्मा" (हला.को 1-134) इत्यत्र क्षेत्रज्ञानस्य जीवनिष्ठत्वेन दर्शनान्नारायणनिष्ठत्वेनोच्यत इति कथम्? तत्राऽऽह अपीति। ग्राह्यगुणेषु अस्वातन्त्र्य प्रतीते: इदं जानामीति जीवसमवेतग्रहणशक्तिरपि तन्नियतेति। तदुक्तमाचार्यै: ग्राह्यगुणेत्यादि। सत् सर्वस्य ज्ञातृत्वेन वर्तमान इति वा तदुक्तम् "ज्ञाताऽपि सर्वभावानाम्" (तन्त्रभागवते) इति। उपहितस्यैव बहिरन्तर्विभागो न सर्वज्ञस्य भवेदित्याह अनावृतत्वादिति। अव्यवधानेन द्रष्टृत्वात्, तदुक्तम् "सर्वत्राव्यवधानेन द्रष्टृत्वात्सर्ववस्तुन:" (तन्त्रभागवते) इति। कुतो नास्तीति तत्राऽह सर्वस्येति। सर्वस्य पूर्णस्य हेतो: अनुग्राहकमाह सर्वात्मन इति। नह्यव्याप्तस्य सर्वस्यात्तृत्व देवदत्तस्येव युज्यते तस्मात्सर्वभक्षकत्वाऽन्यथानुपपत्या अपरिच्छिन्नत्व मेष्ठव्यम्। नन्वपरिच्छिन्नस्य "एको देव: सर्वभूतेषु गूढ:" (श्वेता. उ. 6-11) इत्यन्याश्रयत्वेन अवस्थानं कथम्? इति तत्राऽऽह आत्मवस्तुन इति। आत्मन्येव वसति न परस्मिन्नशक्तित्वेनेति आत्मवस्तु। तस्य पूर्णसामर्थ्यात् सर्वात्मना सर्वभक्षणादिति च॥ १७॥

**य[1] आत्मनो दृश्यगुणेषु सन्निति[2]व्यवस्यते स्व[3]व्यतिरेकतोऽबुध[4]:।**
**विनाऽनुवादं न च तन्मनीषितं सम्यग्[5]यत स्त्यक्तमुपाददत्पुमान्॥ १८॥**

**त्वत्तोऽस्य जन्मस्थिति संयमान्विभो वदन्त्यनीहा दगुणा दविक्रियात्।**
**त्वयीश्वरे ब्रह्मणि नो विरुध्यते त्[6]वदाश्रयत्वा दुपचर्यते[7] गुणै:॥ १९॥**

**स त्वं त्रिलोकस्थितये स्वमायया बिभर्षि शुक्लं खलु वर्णमात्मन:।**
**सर्गाय रक्तं रजसोपबृंहितं कृष्णञ्च वर्णं तमसा जनात्यये॥ २०॥**

**त्वमस्य लोकस्य विभो रिरक्षिषु र्गृहेऽवतीर्णोऽसि ममाखिलेश्वर।**
**राजन्य संज्ञा सुरकोटि यूथपै: निर्व्यूह्यमाना[8] निहनिष्यसे चमू[9]:॥ २१॥**
**अयन्त्व[10] सभ्यस्तव जन्मनौ[11] गृहे श्रुत्वाऽग्रजांस्ते न्य[12] हनत्सुरेश्वर!**
**स तेऽवतारं पुरुषै स्समर्पितं श्रुत्वाऽधुनैवाऽभिसरत्युदायुध:॥ २२॥**

---

1 M. यदा° 2. M. ० धे: 3. M. ० ऽस्व 4. M. °धै: 5. M. °ब्वचोऽव्यक्त° 6. B.G. J.V. त्व० 7. M. °से 8. M. °नां 9. M चमूम्। 10. M. °न्तमस्य° 11. M.V. मे; K.W. नो, 12. B.G.J. न्यवधी°

**श्रीध०** नन्वेतद्धेतुचतुष्टयं प्रपञ्चस्याऽवस्तुत्वे धटेत तत्तु न सम्भवति स[1]त्त्येन प्रतीते रित्याशङ्क्याह **य** इति। आत्मनो दृश्येषु गुणेषु देहादिषु स्वव्यतिरेकत आत्मव्यतिरेकेण पृथक् सन्नयं देहादिरिति व्यवस्यते निश्चिनोति य: पुमान् सोऽबुधोऽविद्वान् व्यतिरेकादर्शनात्। किञ्च मनीषितं विचारितं सत् तद्देहादि सर्वं यतो विनाऽनुवादं वाचारम्भणमात्रं विना न सम्यग्भवति। अतोऽवस्तुत्वेन त्यक्तं बाधितमे[2]तत् वस्तुबुद्ध्या उपाददत्स्वीकुर्वन्नबुध इत्यर्थ:॥ १८॥

एवं परमेश्वराद्दृश्यस्य तद्व्यतिरेकेण सत्त्व मुक्तम् परमेश्वरोपादानत्वादपि तद्व्यतिरेकेणासत्त्व मित्याह - **त्वत्त** इति। नचैवं सत्यपि विकारित्वं इत्याह - अनीहा दिति। अगुणत्वादनीहत्वं ततोऽविकारित्वं इत्यर्थ:। नन्वनीहत्वे कथं कर्तृत्वं कतृत्वे वा कुतोऽविकारित्वं तत्राऽऽह - त्वयीश्वर इति। ब्रह्मत्वा दविकारित्व मीश्वरत्वा त्कर्तृत्वमिति नन्वेतदपि विरुद्धमेव नेत्याऽऽह - त्वदाश्रयत्वादिति। गुणै: क[3]र्तृभि स्त्वयि सृष्ट्यादि कतृत्व मुपचर्यते गुणाश्रयत्वात्। यथा भृत्य[4]कृतं राजनि इति॥ १९॥

एवम्भूतस्यैव त[5]व यथा विश्वस्थितिसर्गलयार्थं त्रिवर्णगुणावतारा:, एव मयं भूभारापनयना[6-]र्थं अवतारभाव इति ज्ञातव्य इत्याह[-6] - सत्त्वमिति श्लोकद्वयेन॥ २०॥

**त्वमिति**। रि[7]रक्षिषु रक्षितु मिच्छु: अवतीर्णोऽसि कृष्णेन वर्णेन। अतस्साधूनां रक्षणार्थं राजन्यसंज्ञा: येऽसुरकोटि यूथपा: तै र्निव्यूह्यमाना इ[8]तस्ततश्चाल्यमानाश्चमू स्सेना: निहनिष्यसे संहरिष्यसि॥ २१॥

किन्तु तथाऽप्यप्रमत्तेन त्वया भा[9]व्यमित्याह - अयन्त्विति। असभ्य: खल: समर्पितं कथितम् [10-]अ भिसरत्यागमिष्यति[-10] ॥ २२॥

---

1. B.J. सत्यत्वेन 2. B.J. °मेव 3. B.J. कुर्वद्भि° 4. B,J. कृत्यं 5. V. omits तव 6- -6. B.J. °र्थमिति ज्ञातमित्याह 7. V omits रिरक्षिषु: 8. V, त° 9. V. भवितव्यमि° 10- -10. V. omits

**वीर०** एतदेव विशदयितुं परमपुरुषस्य प्रत्यक्षित स्वयाथात्म्यत्वेन देहात्मभ्रान्त्यभावं, जीवस्य तद्वैपरीत्यञ्चाह - **य** इति। यो भवान्[1] बुध स्सर्वज्ञः शश्वत्स्वयाथात्म्यज्ञः आत्मनस्स्वस्मा द्व्यतिरेकतः भेदाध्यवसायात् दृश्यगुणेषु दृश्येष्वैन्द्रियिकेषु गुणेषु गुणकार्येषु देवादिभावेषु सन्निति व्यवस्यते। देवादिपदार्थेष्वन्तरात्मतया अवस्थितमप्यात्मानं सन्नित्येव निरस्तनिखिलदोषत्वेन अपरिच्छिन्न ज्ञानानन्द स्वरूपत्वेन चैकरूपतया निर्विकारत्वेनैव, व्यवस्यति विविनक्ति आत्मनेपदन्त्वार्षम्। चस्त्वर्थः। तन्मनीषितन्तु तस्य जीवस्य मनीषित मध्यवसायः, बालोऽहम् युवाऽहम् देवोऽहम् मनुष्योऽहम् इत्यध्यवसायस्तु अनुवादं विना न सम्यक् विवेकिभिः निषेधार्थ मनुवादं विना न सम्यक् नाबाधितः। तन्मनीषितं केवलनिषेधार्थ मनुवादरूपतयोपयुज्यते न त्वबाधितमित्यर्थः। कुतः यतो विवेकिभि स्तत्त्वत्रययाथात्म्यविद्भिस्त्यक्तं परिहृतं बाधितं मनीषितं पुमान् देहात्मभ्रान्तिमान् उपाददत् हितबुद्ध्योपादत्ते। तदेवं शश्वत्प्रत्यक्षितस्वयाथात्म्यत्वात् देहात्माभ्रान्त्यभावात् शरीरभूत चिदचिद्गतविकाराभावात् प्रविष्टस्याप्याप्रविष्टप्रायत्वात् कृत्स्नजगदुत्पत्तेः प्राक् तत्कारणतया निर्विकारत्वेन चावस्थितो भवानिदं[2] जगत्ससर्जेति समुदायार्थः॥ १८॥

ननु निर्विकारस्य मम कथं विकाराश्रयत्वरूपं जगत्कारणत्व मित्यत्राऽऽह **त्वत्त** इति। हे विभो! अनीहात् सङ्कल्पेतर व्यापाररहितात् अगुणात् सत्त्वादि गुणत्रय रहितात् अविक्रियात् अविक्रियस्वरूपादपि त्वत्त एव कारणादस्य जगतो जन्मादीन्वदन्ति। संयमो लयः। "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" (श्वेता. उ. 6-19) "सत्यं ज्ञान मनन्तम्" (तैत्ति. उ. 2-1-1) "सदेव सौम्येद मग्र आसीत्" (छान्दो. उ. 6-2-1) "एकमेवाद्वितीयम्," (छान्दो. उ. 6-2-1) "तदैक्षत बहुस्याम्" (छान्दो. उ. 6-2-3) इत्यादयो वेदान्ताः प्रतिपादयन्तीत्यर्थः। कथ "मग्निना सिञ्चे" दितिवत् असङ्गतमर्थं वेदान्ता-अपि प्रतिपादयेयुः इत्यत्राऽऽह त्वयीति। तज्जगत्कारणत्वमीश्वरे प्रकृतिपुरुषनियन्तरि तच्छरीरके ब्रह्मणि निमित्तत्त्वोपादानत्वोपयुक्त सार्वज्ञ्य सर्वशक्तित्वाद्यनन्तकल्याणगुणैः स्वरूपेण च ब्रह्मत्ववति सर्वशक्तौ त्वयि न विरुध्यसे सूक्ष्मचिदचिद्विशिष्टे सर्वशक्तौ त्वयि कारणत्व मविरुद्धमेव, स्वरूपस्य निर्विकारत्वेऽपि स्वशरीरभूतचिदचिद्द्वारा विकाराश्रयत्वात् तदाश्रयत्व रूपं कारणत्व मविरुद्धमेवेत्यर्थः। ननु सृज्यत्वादे श्शरीरभूत चिदचिद्गतत्वात्कथं मम साक्षत् सृज्यत्वादिव्यपदेश इत्यत्राऽऽह आश्रयत्वादिति स्वशरीरभूत कार्यवर्गस्याश्रयत्वा दन्तरात्मतया धारकत्वा च्छरीरगतै रुत्पत्त्यादिभिः विशिष्टे त्वयि तदुपचर्यते, [3-]शरीरद्वारकमुच्यते[-3] न तु साक्षादुच्यत इत्यर्थः॥ १९॥

ननु नाहं जगज्जन्मसंयमकारणम्, अपि तु ब्रह्मरुद्रादित्यत्राह - **स त्व** मिति। स उक्तविधस्त्वं त्रिलोकस्य स्थितये पालनाय आत्मन स्स्वस्य मायया सङ्कल्पेन शुक्लं विशुद्धं वर्ण माकारं रजस्तमोभ्या मननुविद्ध मप्राकृतं शुद्धसत्त्वमयं विग्रहं बिभर्षि साक्षा दुपादत्से। सर्गाय त्रिलोकसृष्ट्येतु रजसा रजोगुणोपलक्षितेन चतुर्मुखाख्य जीवेन उपबृंहित मधिष्ठितं रक्तं वर्णं रजोगुणमयं वर्णं शरीरं बिभर्षि। चतुर्मुखाख्य जीवद्वारा बिभर्षीत्यर्थः। तथा जनस्योत्पत्तिमतः त्रिलोकस्यात्यये प्रलये निमित्ते तमसा गुणेनोपलक्षितेन रुद्राख्य जीवेनोपबृंहितं कृष्णं तमोगुणमयं वर्णं शरीरं बिभर्षि ब्रह्मरुद्राख्य जीवानुप्रवेशेन जन्मसंयमौ करोषि। स्थितिन्तु साक्षात्त्वमेव करोषीत्यर्थः। अत्र शुक्लरक्तकृष्ण शब्दैः सत्त्वरजःस्तमोगुणाः लक्ष्यन्ते। यथा - "अजा मेकां लोहित शुक्ल कृष्णाम्" (म.ना. उ. 8-4) इत्यत्र तद्वद्रजस्तमश्शब्दाभ्यां तद्गुणप्रचुरौ ब्रह्मरुद्राख्यौ जीवौ वर्णशब्देन शरीरम्। सत्त्व मित्येकं पदं वा शुक्लं रजस्तमोभ्यां अननुविद्धं सत्त्वं शुद्ध[4] सत्त्वमयं वर्णं शरीरं बिभर्षीत्यन्वयः॥ २०॥

यद्यपि भवान् दुष्कृद्विनाशपूर्वकं त्रिलोक पालनाधिकृतत्वा त्तदुपयुक्तया स्वासाधारणया तन्वा अवातरत् तथापि एनां तिरोधाप्य मनुष्यसजातीयां तनुमाश्रय, अन्यथा अधुनैवाऽयं कंसोऽभिद्रवति इत्यत्राऽऽह **त्वमस्येति** द्वाभ्याम्। हे विभो! अखिलेश्वर! अस्य लोकस्य रिरक्षिषु: पालयितु मिच्छु: मम गृहे कलत्रे अवतीर्णोऽसि, अस्येति कर्मणि षष्ठी। राजन्य संज्ञा ये असुरसङ्घा स्तेषां कोटिभि र्निर्व्यूह्यमाना: प्रचोद्यमाना: चमूस्सेना: निहनिष्यसि॥ २१॥

तथा हे सुरेश्वर! असभ्य: सत्सभाप्रवेशानर्ह:। खलेश्वर इति पाठे दुष्टाग्रगण्य: अयं कंस: मम गृहे तव जन्म श्रुत्वा भविष्यतीति श्रुत्वा तन्मात्सर्यदिव हेतो: तवाग्रजान् न्यहनत् हतवान्। कंसोऽधुना पुरुषै स्स्वभटै: समर्पितं निवेदितं, श्रावितमिति यावत् तवाऽवतारं श्रुत्वा अधुनैवोद्धृत मायुधं खड्गो येन तथा भूतोऽभिसरति अभ्येति। अत एव तनूं तिरोधापयेति भाव:। अधुना अभिसरन्त मपि हन्तुं प्रभुरेव त्वम्, तथाप्यहं ततो बिभेमीति च भाव:॥ २२॥

---

1. K,W भगवान् 2. B. भगवा° 3- -3. K. omits 4. K. omits शुद्ध

**विज॰** ज्ञानलिङ्गेन शरीरेन्द्रियादिभ्यो भेदेन ज्ञायसे इत्युक्तम्। तत्राऽज्ञानिन एवं मन्यन्त इत्याह - यदात्मन इति। आत्मन: परमात्मन: प्रत्यगात्मन: दृश्यगुणेषु शरीरेन्द्रियादिषु सन्निधे: प्रवेश लक्षणसन्निधानात् अबुधै: अस्वव्यतिरेकत: स्वाभेदेन व्यवस्यसे निश्चित्य ज्ञायसे इति यत् तदनुवादं अनुकूलं वेदवचनं विना न मनीषितम्, नैवाऽङ्गीकारयोग्यम्। कुत इति तत्राऽऽह - सम्यगिति। पुमान् पुरुष: पर्यङ्कशयनो विष्णु: व्यक्तं संशय निरासकरणं सम्यग्वच: अपौरुषेयत्वेन निर्दोषवेदवाक्यम् उपाददत् स्वीकृतवानाहेत्यन्वय:। परमात्मनोऽपि शरीरे सन्निधानात् अबुधै: स्वव्यतिरेकतो ज्ञायस इत्यादे रयमर्थ: सिद्ध:। यदिदं जगदेक मेकीभूतं मा भविष्यतीति तर्ह्यहमेक एव निष्षट नितरां सहमानोऽभियोद्धास्मि। अथ वा द्वावभियात स्तावप्येवमेव, अथवा त्रय एतादृशा मामभ्येत्य किमु करन्ति किं कुर्वन्ति, त्वां घ्नन्तीति वार्ता मा भूत् अह मेव हन्मीत्याह - खलेनेति। पर्षान् धान्यानि कुलित्थादीनि खले इव भूरीणि शत्रुभूतानि जगन्ति प्रतिहन्मि हनिष्यामि त्वद्धननशक्त्यभावेऽपि तव दुर्भग जीवाभेदवचनेन त्वां निन्दन्तीति तत्राऽऽह किमिति। शत्रवो मा मां किं निन्दन्ति सर्वगुणाकरत्वेन दोषलेशस्पर्शाभावात् स्वतो दोषाभावेऽपि बलादापादयन्ति हीति तत्राऽऽह - अनिन्द्रा इति असमर्था इत्यर्थ:। "प्रविष्टत्वाच्छरीरेषु जीव एवेति दुर्धिय: मन्यन्ते परमात्मानं न तन्मतमनुव्रजेत्"। (ब्रह्माण्डे) इत्यादे:। तर्हि निन्दाफलं किमिति अस्याप्येतदेवोत्तरमाह अव्यक्तमिति। अव्यक्तं अप्रकाशलक्षणं व्यक्तिशून्य मन्धंतम: यान्तीति च वेदवचन मुपादत्ते। "ऐकात्म्य ज्ञानतो यान्ति तम:" (ब्रह्मवैवर्ते) इति। तर्हि भेदज्ञानस्य किं फलम्? इत्यस्यापि इदमेवोत्तरमित्याह - व्यक्तमिति। विगताञ्जनं निर्दोषभेदज्ञानं मुक्ति साधन मुपाददत् भेदात्परं पदं "स्वातन्त्र्यपारतन्त्र्यादि ज्ञानं भेददृशि र्भवेत्" (ब्रह्मवैवर्ते) इति वचनम्॥ १८॥

कुलालघटयोरिव कार्यकारणयो जगद्ब्रह्मणो: भेद: पारमार्थिक इति ज्ञापनाय सृष्टिप्रकारं स्पष्टयति **त्वत्त** इति। अस्य प्रपञ्चस्य कुलालवत् आयासग्रस्ततया कर्ता नाऽयम्, किन्तु पूर्णानन्दत्वेनेत्याशयेनाऽऽह - अनीहादिति। अनीहादक्लिष्टकारित्वात् इति। अनीहत्वेन कर्ताचेन्मृद्वद्विकारित्वं हरे: इति तत्राऽऽह अविक्रियादिति। तथाऽविकृत एव सन् सर्वं करोतीति। नन्वियं सृष्टि: गुणपूर्विका सृष्टित्वात् पटसृष्टिवत् इति तत्राऽऽह अगुणादिति। नन्वियं प्रतीतिविरुद्धा सृष्टि: निष्क्रियस्य क्रियावत्त्वम्, अगुणस्य गुणवत्त्वम् अविकारिणो विकारित्व मिति तत्राऽऽह - त्वयीति। ईश्वरे ब्रह्मणीति पदद्वयं हेतुगर्भम् "ऐश्वर्यात्पूर्णशक्तित:" (ब्राह्मे) इति वचनात्। नन्वय मीश्वर: सृष्ट्यादौ प्रवर्तमानो गुणमपेक्षते न वा? प्रथमे गुणित्वं, द्वितीये सृष्ट्याद्यनुपपत्ति रिति तत्राऽऽह - तदाश्रयत्वादिति। गुणैस्सत्वादिभि: सृजसि न नत्र सन्देह:। तर्हि निर्गुणस्य गुणित्वापात इति शङ्का माऽभूदिति तदाश्रयत्वाद्गुणानां जडत्वेन स्वत: प्रवृत्त्यनुपपत्ते: तत्प्रवृत्त्यर्थं तत्प्रेरणा द्गुणीत्युपचर्यसे नतु मुख्यतो गुणी "केवलो निर्गुणश्च" (श्वेता उ. 6-11) इति श्रुते:। ननु सगुणागुणवचनस्य का क्षतिस्तर्हीति अस्यापीदमुत्तरं तदाश्रयत्वादिति। ज्ञानादि गुणै: क्लृप्तदेहत्वात् सत्त्वादिगुणविधुर इत्युपचर्यसे उपसङ्गम्यसे ज्ञायसे इत्यर्थ:। तेषां सत्त्वादिगुणाना माश्रयत्वादैश्वर्यादिगुणपूर्णत्वाद्वा सगुण इत्युपचर्यसे सम्भाव्यस इत्यर्थ:। "अगुणो गुणदेहत्वा त्सगुणो गुणधारणात्। ऐश्वर्यादिगुणित्वाद्वा वासुदेव इतीर्यते" (आग्नेये) इति वचनात् अर्थविशेषो ज्ञायत इति॥ १९॥

तदाश्रयत्वं प्रपञ्चयति **स त्वमिति।** अयमर्थ: यदा त्रिलोकस्थितये त्रैलोक्य रक्षणाय सत्त्वगुणं वर्धयन्नास्ते। तदा हयग्रीवादिरूपं शुक्लवर्णं बिभर्षि। "जगतां वर्धयन्सत्वं यदा रक्षति केशव:" (ब्रह्मतर्के) इत्यादे:। खल्वलुङ्कतोऽयमर्थ:। यदा सर्गाय तत्तत्स्वभावाभिव्यक्तये रजो वर्धयन् तदा रजसोपबृंहितं रजोगुणशक्तिव्यञ्जकं रक्तं जामदग्न्यादिरूपं बिभर्षि खलु "वर्धयंस्तु रजो येन जगदुत्पादयेद्धरि:" (ब्रह्मतर्के) इत्यादे:। जनस्य अत्यय प्रलये, 'अत्तये' इति पाठे अत्ति: संहृति: तस्यै। यदा लोके तमो वर्धयन् तदा तमसोपबृंहितं तमोगुणप्रवर्तकं कृष्णं यादवादिरूपं बिभर्षि खलु। येन विनाशयेत् "वर्धयंस्तु तमो लोके तत्कृष्णं यादवादिकम्" (ब्रह्मतर्के) इति वचनात्। ननु सर्वत्र सर्वशक्त्यभावात् अपूर्णता हरे रित्यस्याऽपि इद मुत्तरं खल्विति जिज्ञासालक्षणा वीप्सा कर्तव्या। तथाहि यच्छुक्लं रूपं सत्त्वं वर्धयन्बिभर्षि तद्रूपं त्रिलोकस्थितये खलु न भवति किन्तु सर्गसंहाराभ्यां बिभर्षि। रजो वर्धयन् रक्तरूपं बिभर्षि तत्सर्गाय खलु न भवति किन्तु तत्स्थितिसंहाराभ्याञ्च बिभर्षि, यत्तमो वर्धयन् कृष्णं रूपं बिभर्षि तज्जनात्यय एव खलु न भवति, किन्तु तन्त्रिलोकस्थिति सर्गाभ्याञ्च बिभर्षि इति मन्दमतीनां विस्पष्टतयाभ्यासोक्तं "सर्वत्र सर्वं कुरुते विशेषस्तत्र कीर्तित:" (ब्रह्मतर्के) इत्यादे:। तत्तात्पर्यार्थपरतया श्लोकार्थो ज्ञातव्य:। 'षद्लृ विशरण गत्यवसादनेषु' इत्यादे र्धातो: सृष्टिसंहाराविति सत्त्वशब्देन ज्ञातव्यौ। 'रजो रागे' इति धातो: रागशब्दस्यानेकार्थत्वेन स्थितिसंहारार्थोऽपि ज्ञातव्य:। 'तमुग्लान' इति धातो: ग्लानशब्दस्य सृष्टिस्थितिविरोधिज्ञापकत्वेन तत्परत्वेनाऽर्थो बोद्धव्य:। निर्गुणस्य गुणोपरक्तत्वं कथमित्यत उक्तं स्वमाययेति। "स्वेच्छयाऽनुगुणा द्विष्णु: नानारूपान्करोत्यज:" (तन्त्रभागवते) इत्यादि च। "निषेधे वागलङ्कारे ज्ञीप्सनेऽनुनये खलु" (वैज. को. 8-7-20) इति यादव:॥ २०॥

सर्वरूपेषु सर्वशक्ति रस्तीत्याशयेन स्तौति - **त्वमस्येति** । त्वदवतारेण संहारकारणेन रक्षा कथङ्कारा स्यादित्याशङ्क्य, असतां हनने सतां तारतम्येन सुखसमृद्धिः स्यादित्याशयेनाऽऽह राजन्येति। निर्व्यूह्यमानां प्रतिव्यूह्यमानां निहनिष्यसे निहनिष्यसि गमयिष्यसि सतां सुखानुभवमिति शेषः। 'चर भक्षण' इति धातोः "सतां सुखविवृद्ध्यर्थं मसतां पीडनं हरेः" (ब्रह्मतर्के) इत्यादेश्च ॥ २१ ॥

स्वात्मनि स्वभक्तेषु द्वेषबुद्धिकरत्वेन द्वेषात्मकं तमो भवतीत्यतः तदुपादाय त्वत्प्रवर्तन मित्याशयेनाऽऽह - अयं तमस्य इति। तमस्यः स्वभक्तद्वेषमूर्तिः। तदुक्तम् - "तमो द्वेषात्मकं शुद्धं सत्त्वात्मक मुदीर्यते" (ब्रह्मतर्के) इति वा जन्म भविष्यतीति स्वपुरुषैः समर्पितम्। अभिसरत्यभ्यागच्छति, उदायुधः धृतायुधः ॥ २२ ॥

---

★ Foot note of M. Edition :- "अभी इदमेकमेको अस्मि निःषाल भिद्वा किमु त्रयः करन्ति। खलेन पर्षान् प्रतिहन्मि भूरि किं मा निन्दन्ति शत्रवोऽनिन्द्राः":- (ऋ. वे. 10-48-7) इति श्रुतिः। 1. B. omits द्वितीये

-: स्वस्वरूपेणाऽऽविर्भूतं श्रीपरमपुरुषं प्रति देवकी कृत स्तुतिः :-

श्रीशुक उवाच

अथैन मात्मजं वीक्ष्य महापुरुष लक्षणम्।
देवकी तमुपाधावन्कंसाद्भीता शुचिस्मिता ॥ २३ ॥

देवक्युवाच

रूपंयत्तत्प्राहु रव्यक्तमाद्यं ब्रह्मज्योति र्निर्गुणं निर्विकारम्।
सत्तामात्रं निर्विशेषं निरीहं सत्त्वं साक्षाद्विष्णुरध्यात्मदीपः ॥ २४ ॥

नष्टे लोके द्विपरार्धावसाने महाभूते ष्वादिभूतं गतेषु।
व्यक्तेऽव्यक्तं कालवेगेन यातेभवानेकश्शिष्यतेऽशेषसंज्ञः ॥ २५ ॥

योऽयं कालस्तस्य तेऽव्यक्त बन्धो चेष्टा माहुश्चेष्टते येन विश्वम्।
निमेषादिर्वत्सरान्तो महीयां स्तन्त्वेशानंक्षेम धाम प्रपद्ये ॥ २६ ॥

मर्त्यो मृत्यु व्यालभीतः पलायन् लोकान्सर्वान्निर्भयं नाऽध्यगच्छत्।
त्वत्पादाब्जं प्राप्य यदृच्छयाऽद्य स्वस्थश्शेते मृत्यु रस्मादपैति ॥ २७ ॥

स त्वं घोरादुग्रसेनात्मजान्न स्त्राहि त्रस्तान्भृत्यवित्रासहाऽसि।
रूपश्चेदं पौरुषं ध्यानधिष्ण्यं मा[2] प्रत्यक्षं मांसदृशा[3- -3] कृषीष्ठाः॥ २८॥

जन्मते मय्यसौ पापो मा विद्यान्मधुसूदन।
समुद्विजे भवद्धेतोः कंसादह मधीरधीः॥ २९॥

उपसंहर विश्वात्मन् अदो[4] रूप मलौकिकम्।
शङ्ख चक्र गदापद्मश्रिया जुष्टं चतुर्भुजम्॥ ३०॥

विश्वं यदेतत्[5] स्वतनौनिशान्ते यथावकाशं पुरुषः परोभवान्।
बिभर्ति सोऽयं ममगर्भगोभूदहोनृ[6]लोकस्य विडम्बनं महत्[7]॥ ३१॥

---

1. M. दीपम्, 2. M. अप्र° 3- -3. K.M.W. मादृशां त्वं 4. K.V.W. अथो 5. K.W. य एतत् 6. V. °जो 7. B.G.J. हि तत्॥

**श्रीध० अथेति।** उपाधावत् अस्तौत्॥ २३॥

देवकी, किञ्चिद्विज्ञापयितुं त्वयि भयशङ्कैव तावन्नास्तीति श्लोक चतुष्टयेनाऽऽह - **रूपमिति।** यत्तत्किमपि रूपं वस्तु प्राहुर्वेदाः किं तद्वस्तु तदाह - अव्यक्तम्। अत्र हेतुः आद्यं कारणम्। किं परमाणवः, न ब्रह्म बृहत्। किं प्रधानम्? न ज्योति श्चेतनम्। किं वैशेषिकाणामिव ज्ञान गुणकम्? न निर्गुणम्। किं मीमांसकानामिव ज्ञानपरिणामि, न निर्विकारकम्। किं पुष्कराक्षादीनामिव शक्ति विक्षेप[1]परिणामि न सत्तामात्रम्। तर्हि किं सामान्यम्? [2-]न निर्विशेषम् तर्हि किं कारणत्वा त्सक्रियम्[-2] न निरीहम् सन्निधिमात्रेण कारणम्। एवम्भूतं किमपि कार्यं कल्प्यं यद्वस्तु स एव साक्षा त्त्वं विष्णुरिति। अपरोक्षश्चेत्याह अध्यात्म दीप इति। बुद्ध्यादिकार्यकारण सङ्घातप्रकाशक इत्यर्थः। अथवा, अव्यक्तं न केनापि प्रकारेण व्यज्यत इत्यव्यक्तम्, कथम्! उत्पत्त्या तावन्नव्यज्यत इत्याह - आद्यं सर्वस्य कार्यस्याद्यम् अनादीत्यर्थः तथा ब्रह्मज्योति निर्गुणं निर्विकारम् - इति चतुर्भिः पदै र्देशेन प्रकाशेन च गुणेन च विकारेण च व्यक्तिं निराकरोति - तथा सत्तामात्रमिति विशेषेण निर्विशेषमिति सामान्येन निरीह मिति क्रियया च व्यक्तिं निराकरोति - अन्यत्समानम्। एवम्भूतस्य तव न भयशङ्केतिभावः॥ २४॥

किञ्च महाप्रलयेऽप्यवाशिष्यमाणस्य कुतो भयमित्याह **नष्ट** इति। चराचरे लोके महाभूतेषु ली[3-]नेषु तेष्वपि[-3] आदिभूतं भूतसूक्ष्मं प्रविष्टेषु तस्मिन्नपि व्यक्तेऽव्यक्तं प्रधानं प्राप्ते। अशेषात्मके प्रधाने संज्ञा प्रज्ञा यस्य। एवं मयि लीनमिदमस्ति पश्चादेवमुद्बोधनीय मिति सोऽशेषसंज्ञः शेष संज्ञ इति वा॥ २५॥

**य** इति। किञ्च, एवं प्रलय हेतुर्योऽयं काल एतम्। हे अव्यक्तबन्धो ! प्रकृति प्रवर्तक तस्य प्रलयावधिभूतस्य ते तव चेष्टां लीलां चेष्टते विपरिवर्तते पुन: पुनर्वत्सरावृत्त्या। महीयान् द्विपरार्धरूप: यस्य चेष्टामाहुस्तं त्वा त्वां क्षेमधाम अभयस्थानं प्रपद्ये शरणं व्रजामि॥ २६॥

क्षेमधामत्वमेवाऽऽह - **मर्त्य इति।** लोकान्प्रति यदृच्छया केनाऽपि भाग्योदयेन। [4-]अत्र छन्दो भङ्ग अर्ष:[-4] हे आद्य!॥ २७॥

प्रस्तुतं विज्ञापयति स इति भृत्यानां वित्रासं हन्तीति भृत्यवित्रास हा। भृत्यविदिति वा च्छेद: पौरुषमैश्वरम्। ध्यानाधिष्ण्यं ध्यानास्पदम्। मांसदृशां मांसचक्षुषां [5-]मा दृशां त्वं इत्यपि पाठान्तरम्[-5]। प्रत्यक्षं मा कृथा:॥ २८॥

**जन्मेति।** भवत एव हेतो र्निमित्तात्[6] कंसात् समुद्विजे बिभेमि यतोऽधीरधी: अधीर चित्ता॥ २९,३०॥

किमित्युपसंहर्तव्य मेवं भूतेन [7]मया पुत्रेण तव [8]महती श्लाघा स्यादिति [9]चेत् तत्राऽऽह विश्वमिति। निशान्ते प्रलयावसाने यथावकाश मसङ्कोचत: असम्भावितत्वात् [10]उपहास्यतैव स्यादित्यर्थ: ॥ ३१॥

---

1. V. ०पणप० 2- -2. V. omits 3. J. लीनेष्वपि 4- -4. B.J. omit 5- -5. B.J. omit 6. V. ०त्तभूतात् 7. V. omits मया 8. V. बृ° 9. B.J. omit चेत् 10. B. अप°

**वीर०** अथैनं देवक्यापि स्तुत्वा प्रार्थयामासेत्याह[1]- **अथेति।** महापुरुषस्य भगवतोऽसाधारण विलक्षणानि चतुर्भुजत्वादीनि यस्य तमेन मात्मजं वीक्ष्य परमपुरुषं ज्ञात्वा पूर्वं कंसा द्भीताऽपि शुचिस्मितं यस्या स्तथाभूता स्वपुत्ररूप भगवद्दर्शनेन निवृत्त भीतित्त्वात् शचिस्मिता सती देवकी तमुपाधावत् तुष्टाव॥ २३॥

उपाधावन मेवाऽऽह **रूपमित्यादिभिश्चतुर्भि:** । तत् प्रसिद्धं यत् वेदान्तैक समधिगम्यं परमात्मस्वरूपं स एव त्वमिति स्तौति रूपमिति। यत्तद्रूपं वेदान्ता: प्राहु: स साक्षाद्विष्णुस्त्व मित्यन्वय:। रूप्यते [2]प्रकृतिपुरुष विलक्षणत्वेन निरूप्यते इति रूपं परमात्मस्वरूपम्। वैलक्षण्यमेव दर्शयितुं विशिनष्टि अव्यक्त मित्यादिना तत्राऽव्यक्तं निर्गुणं सत्तामात्रं निर्विशेषमित्येतानि प्रकृति व्यावर्तकानि विशेषणानि। [3]इतराणि तु पुरुषव्यवच्छेदकानीति विवेक:। अव्यक्तं व्यक्तै रिन्द्रियै र्न व्यज्यते न विषयीक्रियते इत्यव्यक्तम् अदृश्य मतीन्द्रिय मित्यर्थ:। प्रधानन्तु पृथिव्यादि रूपेण व्यक्तमिति भाव:। अत्र "यत्तदद्रेश्य मग्राह्यम्" (रुद्र. हृ 31) इत्यादि श्रुति रनुसन्धेया। यद्वा तदन्यार्थको नञ्, पृथिव्यादि रूपेण व्यक्तात् अचिद्द्रव्यादन्य दव्यक्तमिति साध्य धर्मोक्ति:। तत्र हेतु: आद्यम् आदौ भवम् आद्यम् व्यक्ता दचि द्रव्या दादौ कारणत्वेनावस्थितम्। किं तर्हि तत्सूक्ष्मावस्थ मचिद्द्रव्यम्? नेत्याह। निर्गुणं सत्त्वादिगुणरहितम्। अनेन सूक्ष्मावस्था

चिद्व्यावृत्तिः। सत्तामात्रं सतो भाव स्सत्ता, सैव सत्तामात्रम्। सच्छब्द सततैकरूपवस्तु वाचि वृद्धिक्षयादिरहित मित्यर्थः। निर्विशेषं विशेषा श्शब्दस्पर्शादय आकाशादिभूतपञ्चक गुणाः तेभ्यो निर्गतं तद्रहित मित्यर्थः। एवं कार्यकारणो भयावस्था चिद्व्य व्यावृत्तिः। अथ चिद्व्य व्यावृत्तये विशिनष्टि। ज्योतिः स्वयम्प्रकाशकम्। किं तर्हि तद्बद्धजीवः? नेत्याह। निर्विकारं शोकमोहादि विकाररहितं निरीहं पुण्य पापरू[4]पव्यापार[-4]हितम्। तर्हि तत्किं मुक्तजीवः नेत्याह अध्यात्म दीपः आत्मन्यध्यात्ममिति विभक्त्यर्थेऽव्ययीभावः। आत्मनि दीपः दीपवत्स्वप्रकाशं नित्य मसङ्कुचितं धर्मभूतं ज्ञानं यस्य सः। अनेन मुक्तजीव व्यावृत्तिः। तेषां संसारदशायां सङ्कुचित ज्ञानत्वात्। तर्हि किं नित्यसिद्धजीवः? नेत्याह। ब्रह्म स्वरूपेण गुणैश्च निरतिशय बृहत्। अनेन नित्यसिद्धव्यावृत्तिः तत्स्वरूपस्याप्यणुत्वात् स त्वं विष्णुरध्यात्मदीप इति पुंस्त्व निर्देशो विधेय प्राधान्याभिप्रायकः। तत्त्वम्[5] इति [6-]पाठान्तरम्। तदा[-6] तस्य भाव स्तत्त्वमबाधित मित्यर्थः। एवं प्रकृत्यादि विलक्षण मबाधित मित्यर्थः। एवं प्रकृत्यादिविलक्षण मबाधितं यद्रूपं तत्त्व मित्यध्याहारः। यद्वा तत् त्वम् इति पदद्वयम्। यत्तदित्यत्र तच्छब्दः प्रसिद्धिद्योतकः। यत् प्रसिद्धं प्रकृत्यादि विलक्षणं रूपं तत्त्वमित्यन्वयः। प्रकृत्यादीनामपि तच्छरीरत्वेन तदात्मकत्वात् तदनन्यदेवेति तव्द्यावृत्तये साक्षात्तत्व मित्युक्तम्। प्रकृत्यादीनां तदनन्यत्वं शरीरात्मभाव कार्यकारण भावनिबन्धनम्। तव तु तद्रूपानन्यत्वं मृदात्मको घट इतिवत्स्वरूपाभदेरूपमिति साक्षाच्छब्दाभिप्रेतोऽर्थः। चतुर्मुखादि देवान्तरव्युदासाय विष्णुरित्युक्तम्॥ २४॥

आद्यत्वमेव दर्शयितुं प्राकृत प्रलयावशिष्टं वस्तु त्वमेवेत्याह - नष्ट इति। चतुर्मुखस्य तन्मानेन वर्षशतात्मकमायुः, तस्य पञ्चाशद्वर्षात्मकं पूर्वार्धम्, उत्तरार्धञ्च परार्धमुच्यते तदुक्तम् "ब्रह्मणस्स्वस्य मानेन आयुर्वर्षशतं स्मृतम्। तत्परं वैतदर्धन्तु परार्धमाभिधीयते" इति। द्विपरार्धावसाने द्वयोः परार्धयो रवसाने चतुर्मुखलय इत्यर्थः। कालस्य वेगेन हेतुना महाभूतेषु पृथिव्यादिषु स्वकारणपरम्परया आदिभूतं भूतादि महङ्कारं गतेषु तस्मिन् लीनेषु सत्सु तथा व्यक्तेऽहङ्कारप्रकृतिभूते महत्तत्त्वे अव्यक्तं सूक्ष्मावस्थमचिद्व्यं याते गते सति इदं "अव्यक्त मक्षरे लीयते अक्षरं तमसि लीयते, तमः परे देव एकीभवति" (सुबा उ. 2-2) इति श्रुत्यर्थस्याप्युपलक्षणम्। एवं सति यश्शिष्यते पदार्थः स एको भवानेव यतो भवानवशिष्यते। अत एव निमित्ताच्छेषसंज्ञः शेषशब्दाभिधेयश्च। नामरूपविभागानर्ह सूक्ष्मचिदचिद्विशिष्टतयाऽवशिष्ट एक स्त्वमेवत्येकशब्दाभिप्रायः। अनेन "तमः परे देव एकीभवति" (सुबा उ. 2-2) इति श्रुत्युक्तैकीभाव श्चाभिप्रेतः नामरूपाभ्या मविभाज्यतय स्वाश्रयवस्तु संश्लेषो ह्येकी भावः। अनेन प्रकृतिपुरुषयो र्नित्यत्वं फलितम्। एतदभिप्रायणैव हि श्रुतौ "अक्षरं तमसि लीयसे" (सुबा. उ. 2-2) इत्येतत्पर्यन्तं सर्वत्र लय उक्तः। "तमः परे देव एकी भवति" (सुबा. उ. 2-2) इत्यत्रत्वेकीभावः। अयमर्थः। अत्रद्विविधो हि लयो विवक्षितः। एकस्तावत् स्वावस्थाप्रहाणेन पूर्वावस्थाप्रांप्तिरूपः यथा पृथिवीत्वावस्थायाः प्रहाणेन स्वावस्था प्राप्तिः; इतरस्तु स्वावस्थाप्रहाणमन्तरेण वस्त्वन्तर विभागानर्ह संसर्गविशेष प्राप्तिः - यथा प्रकृति पुरुषयोः पुरुषरूपं प्रकृतिरूपञ्च [8]परित्यज्य नित्यसिद्धमबाधित्वा विशेष भूतेन भगवता विभागानर्ह संसर्ग विशेष प्राप्तिः। तदेव "तम एकी भवति" (सुबा. उ. 2-2) इति विशिष्टैक्यरूपतया अभिधीयते। तदेवचाऽत्रैक शब्दे[9]नाप्यभिप्रेतम्। पूर्वन्तु "पृथिव्यप्सुप्रलीयते" (सुबा. उ. 2-2) इत्यादिना साक्षाल्लयशब्द

एव प्रयुज्यते "उभा वेतौ लीयते परमात्मनि इति वैष्णववचन मपि प्रकृतिपुरुषयो र्भगवता सह संश्लेषमात्र मेव कथयतीति न विरोधः। संसर्ग विशेषेऽपि लयशब्दः प्रयुज्यते; यथा - "वृक्षेषु पक्षिणो लीयन्ते" इति [10] अत एव "प्रकृतिं पुरुषश्चैव विद्ध्यनादी उभावपि" (भ.गी. 13-19) "अचेतना परार्थी च नित्या सतत विक्रिया" (परमसंहिता) इत्यादिषु "तदेतदक्षय नित्यं" (विष्णु. पु. 1-22-60) "जगत्स्थावर जङ्गमम्" इत्यादिषु वेदपारवेदिनां पराशरादीनां वाक्येषु च प्रकृति पुरुषो रनादित्वं प्रोक्तम्। तस्मादपि तयोर्न साक्षा द्विलयः। यथा आयुधरूपेण परिणते अयसि परिगृहीतं तोयं तोयरूपेणैव तिष्ठति। अन्यथा स्नेहानुवृत्त्याद्ययोगात्। तद्वत्प्रकृतिपुरुषवाचि भगवत्यविभागार्ह संसर्गमा[11]त्रेणैकीभा[12]व व्यवहारविषयमात्रभूतौ विशेषणजगत्सृष्ट्यादा वुपकुरुत इति। "महानव्यक्ते विलीयते" (सुबा. उ. 2-2) इत्यादि श्रुतौ अव्यक्तशब्द श्चित्समष्टिसंस्पृष्टाचित्समष्ट्यवस्था विशेषपरः। अक्षरशब्द स्त्वचित्समाष्टि परः। तम श्शब्दस्तु सर्वाचित्प्रपञ्चकारणभूता जहत्स्वावस्थ सूक्ष्मचित्परः॥ २५॥

ननु कालवेगेनेति कालावशेषस्यापि सूचितत्त्वेन कथमेकस्य ममैवाऽवशेष इत्यत्राऽऽह **योऽय** मिति। अव्यक्त बन्धोः अव्यक्तस्य निरतिशय सूक्ष्मदशामापन्नस्य प्रधानस्य बन्धो! तदाश्रयत्व रूपं तद्बन्धुत्व मिह विवक्षितम्। इदं दृष्टान्तार्थ मुक्तम्। यथा सूक्ष्मचिद्द्रव्यं त्वयि संश्लोष मा[13]पन्नं त्वदपृक्सिद्ध विशेषणं सत् - त्वदेकत्वाविरोधि तद्वदयं कालोऽपृक्सिद्धविशेषणभूतस्सन्नेकत्वाविरोधीति योयं निमेषादि वत्सरान्तः। कालस्य सूक्ष्मावस्था निमेषः। स्थूलावस्थातु वत्सरः। महीयान् महीयस्त्वमत्र ब्रह्मादीना मपि प्रभुत्वरूपं विवक्षितम्। येन कालेन निमित्तेन भवान्विश्वं चेष्टते करोति सृजन्त्यवत्यत्ति च। यद्वा विश्वं कर्तृ। चेष्टते प्रवर्तते तं च कालं तस्योक्तविधस्य ते तव चेष्टा माहुः चेष्टातुल्य मपृथक्सिद्धविशेषण माहुः। अतो नाऽयं त्वदेकत्व विरोधीति भावः। यं कालं यस्य तव चेष्टामाहुस्तमीशानं कालस्याऽपि नियन्तारं क्षेमधाम क्षेमस्याऽऽश्रयं क्षेमङ्करं त्वां प्रपद्ये शरणं व्रजामि हेतुगर्भ मिदं, क्षेमधामत्वात्प्रपद्ये इत्यर्थः॥ २६॥

कीदृशं तत्क्षेमधामत्वम्? यतो मां प्रपद्यते इत्यत्राऽऽह - मर्त्य इति। मर्त्यः मरणशीलः, जन्मनोऽप्युपलक्षणमिदम्। जन्ममरणादि रूपसंसृति भाक् पुमान् मृत्युव्यालभीतः, मृत्युः जन्ममरणादि रूपस्संसारः स एव व्यालः दुष्टसत्वः तस्माद्भीतः, मुमुक्षुस्सन्नित्यर्थः। सर्वान् लोकान् प्रति पलायन् पलायमानः। परस्मैपद मार्षम्। लोक्यन्ते उपायत्वेनाऽध्यवस्यन्ते इति लोका उपायाः, सर्वानुपाया ननुतिष्ट न्नित्यर्थः। निर्भयं भयस्यभावो निर्भयम्, अर्थाभावेऽव्ययीभावः। मृत्युव्यालभयाभावं नाऽध्यगच्छत्, न प्राप, न मुक्तो बंभूवेतिभावः। यदृच्छया यादृच्छिक सुकृत विशेष परिपाकेन त्वत्पादा[15]ब्जं प्राप्य उपायत्वेन प्राप्य, शरणं प्रपद्येति भावः स्वस्थः मृत्युव्यालभयनिवृत्तये कर्तव्योपायान्तर रहितः शेते यावज्जीवं सुखं वर्तते, ततोऽस्मान्मृत्युरपैति अपगच्छति। संसारान्मुक्तो भवतीत्यर्थः। स्व[16]पादाब्ज शरण वरण मात्रेण[17] निःश्रेयस प्रदस्य तव कियदेतल्लौकिकश्रेयः पदत्व मिति भावः॥ २७॥

इत्थमभिष्टूयाऽथ हृद्गतं विज्ञापयति **सत्त्वमिति**। स: क्षेमङ्करस्त्वं घोरात् द्रष्टुमप्यशक्यात् उग्रसेनस्यात्मजात्कंसात् त्रस्तान् भीतान्नोऽस्मान् त्राहि पाहि, यतस्त्वं भृत्यानां वित्रासहाभयापहर्ता भवसि। पौरुषं परमपुरुषासाधारणं परमपुरुषत्व सूचक मिदं रूपं ध्यानधिष्णयं योगिनां ध्यानैक शुभाश्रयभूतम्, अत स्त्वं मादृशां मांस चक्षुषां प्रत्यक्षं मा कृषीष्टा: मा कार्षी:॥ २८॥

हे मधुसूदन ! अयं पाप: कंसो मयि तव जन्म मा विद्यात् न[18] जानातु। तत्र हेतुमाह - भवेद्धेतो: त्वद्रूपात्कारणात् भवदवताररू[19] पनिमित्ता दिति यावत्। कंसा दह मधीरधी: हेतुगर्भ मिदम्। धैर्यरहित बुद्धित्वात् सुमुद्विजे बिभेमि॥ २९॥

हे विश्वात्मन्! अथो अत:। अद इति पाठे अद: एतत् शङ्खच[20]क्रादिभि: जुष्टं श्रीलक्ष्मी: शङ्खादीनां श्रिया जु[21]ष्टं वा चत्वारो भुजा यस्मिन्। अत एव अलौकिकं प्राकृत जने एव सम्भावितं रूपम् उपसंहर तिरोधापय॥ ३०॥

स्वनाभिकमलस्याखिललोक मपरिच्छिन्न वैभवं भगवन्तं ग[22]र्भे धृतवत्यस्मीति विस्मर्यते - विश्वमिति। निशा प्रलय: तस्य अन्तस्सृष्टिदशा तदा स्वतनौ स्वतन्वेकदेशभूते नाभीकमले य: परमपुरुषो भवानेतत्[23] कृत्स्नं चिदचिदात्मकं विश्वं बिभर्ति सोऽयं भवान् मम गर्भगोऽभूदिति यत्, तन्नृलोकस्य विडम्बनं तद्वदनुकरणमात्रम्। अहो! अत्याश्चर्यं मेतस्य भगवतो माहात्म्यमिति वि[24]स्मय:॥ ३२॥

---

1. B. adds मुनि: 2. K. प्राकृत 3. B. अन्यानि 4- -4. K. omits 5. K.W. add साक्षात् 6- -6. B. पाठे 7. K. °त्वमेवेति 8. K. omits परित्यज्य 9. B. omits अपि 10. B. adds साक्षाल्लय एव प्रयुज्यते। 11. B. adds विशेष 12. K. भावे 13. B. adds विशेष 14. B. °ऽप्य° 15. B °दाम्बुजं 16. B. त्वत् 17. B. adds एव 18. K. मा 19. B. रूपात् 20. K.W. omit चक्र 21. B. adds शोभया 22. B.adds स्व 23. B adds इदं 24. K.W. स्मय:

**विज०** उपाधावत् गुणस्मरण पूर्वकं तुष्टाव॥ २३॥

भगवदनुग्रह पात्रत्वात् वेदान्तनिर्णीतिगुण विशिष्टं स्तौति **रूप** मिति। यद्यस्य तद्रूप मेवंविधं प्राहु:, वेदान्ता इति शेष:। परोक्षत्वा त्तदित्युच्यते। कथम्भूत मव्यक्तम् ? आराधनेऽपि स्वप्रसादमन्तरेणाऽप्रत्यक्षं "तदव्यक्त माह हि" (ब्र.सू. 3-2-23) "अव्यक्त मचलं ध्रुवम्" तर्हि शून्यं नेत्याह। आद्यं आदौ विद्यमानम् "आत्मावा इद मेक एवाग्र आसित्" (ऐत. उ. 1-1-1) किमस्य संज्ञेत्यत्राऽऽह ब्रह्मेति "ब्रह्मविदाप्नोतिपरम् (तैति. उ. 2-1-1) अथ कस्मादुच्यते ब्रह्मेति? बृहन्तोस्मिन्गुणा: संज्ञान्तर माह ज्योति रिति "परं ज्योति रूपसम्पद्य स्वेन रूपेणाभि निष्पद्यते" (छान्दो उ. 8-4-3) । यद्वा गुणित्वेऽपि चेतनत्वं माभू त्घटवदित्यत्राऽऽह - ज्योति: ज्ञानलक्षण

प्रकाशरूपं सुवर्णज्योती: साक्षी चेता च गुणास्सत्त्वादय: किम् नेत्याऽऽह "निर्गुणं केवलो निर्गुणश्च" (श्वेता. उ. 6-11) उत्पन्नक्षणे सर्वकार्याणां निर्गुणत्व मुत्तरक्षणे नास्तीत्यादि विकार: किं न स्यादित्यत्राऽऽह निर्विकारम् "निर्विकारोऽक्षरश्शुद्ध:" अज्ञानादि मिश्रज्ञानगुण: किं न स्याज्जीवगुणव दिति तत्राऽऽह सत्ता मात्रम् सर्वाशुभ निर्मुक्तगुणैक रूपम् "सर्वाशुभविनिर्मुक्तगुणमात्रो यतो हरि:। सत्तामात्र मत:प्राहु:" (तन्त्रभागवते) एवं विध मन्यन्नास्तीत्याह निर्विशेषम्, निर्गतो विशेषो द्वितीयो यस्मात्तन्निर्विशेषम्। निर्विशेषोऽखिलोत्तम: एकमेवाऽद्वितीयम् निरीहम् आत्मकर्तृत्वाभिमानादिरहितम्, न तु क्रियाशून्यम् "स इमाँल्लोकानसृजत" (ऐत. उ. 1-2) इति श्रुते:। "अनादरान्निरीहश्च सेह: सर्वकृतीयत:" (तन्त्रभागवते) स साक्षात्त्वम् अन्यो न विद्वज्जनोक्त लक्षण संज्ञाभ्यां अयं नारायण इति प्रत्येत्यत: प्राकृतजन प्रत्ययोत्पत्तये तत्सिद्धसंज्ञामाह विष्णु: णकारो बलं षकार: प्राण आत्मा "सयो हैतौ णकारषकारावनुसंहितमृचो वेद" योगिभि र्ध्येयं वास्त्विदमेव नाऽन्यदित्याशयेनाऽऽह अध्यात्म दीपम्। आत्मानमधिकृत्य वर्तमानदेहेन्द्रियादि प्रकाशकम् "अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति" (कठ. उ. 2-12) यत्तदिति सामानाधिकरण्येन प्रकृते यदित्यस्य षष्ठीत्यङ्गीकारे किं नियामक मुच्यते स इति पुंलिङ्गेन परामर्शात् तद्रूप मिति अभ्युपेयते स इति पुनरुक्ते:। प्रथमाया: षष्ठ्यर्थत्वं न दृष्टमिति चेत् न "सप्तसु प्रथमा" (शब्दनिर्णये) इति सूत्रात्॥ २४॥

निर्गुणत्वादिकं तल्लक्षणमेवेत्याह - **नष्ट** इति। द्विपरार्धावसाने ब्रह्मण: शतायुर्लक्षण: काल: द्विपरार्ध: तस्यावसाने लोके नष्टे इति सामान्येनोक्तं विशिनष्टि - पञ्चमहाभूतेषु पृथिव्यादिषु अहङ्कारद्वारा आदिभूतं महत्तत्वं गतेषु व्यक्ते महत्तत्वे अव्यक्तं प्रधानं गते सति अशेष संज्ञ: अशेषा: संज्ञा यस्य स तथा "नामानि सर्वाणि च यं विशन्ति" इति श्रुते:॥ २५॥

कालवेगेन यात इत्यत्र प्रतीतं कालस्वातन्त्र्यं निवारयति **योऽय** मिति। निमेषादि र्वत्सरान्तो योऽयं काल: तं कालं यश्चऽशेषसंज्ञं स्तस्य ते तव चेष्टा माहु रित्यन्वय:। अव्यक्त बन्धो! [1] मुख्यप्राण बन्धो! [2] येन त्वया येन कालेन वा क्षेमधाम निर्भयस्थानम्। "अभयं प्रतिष्ठां विन्दते" (तैत्ति उ. 2-7) इति श्रुति:॥ २६॥

क्षेमधामत्वं दर्शयति **मर्त्य** इति। मृत्यु रेव व्याल: तस्माद्भीत: पलायन् पलायमान: अस्मान्मत्यात्॥ २७॥

भृत्यवित्रासहा भृत्यानां विविधभयनाशकोऽसि। मादृशामप्रत्यक्षं कृषीष्ठा: प्रत्यक्षं न कुरु। ध्यानधिष्ण्यं ध्यानविषयम्॥ २८॥

अप्रत्यक्षकरणे कारणमाह जन्मेति। मा विद्यात् न जानातु। समुद्विजे बिभेमि अधीरधी: चञ्चल बुद्धि:॥ २९, ३०॥

हरेः गर्भवासादि दुःखानुभावो नास्ति इत्याशयेनाऽऽह - **विश्वमिति।** निशान्ते रात्रिमध्ये यथावकाशं अवकाशमनतिक्रम्य। 'यथासादृश्ये' (अष्टा 2-1-7) इति समासः॥ ३१॥

---

1. B. omits प्राण 2. B. adds. प्रारब्धः

श्रीभगवानुवाच

त्वमेव पूर्वसर्गोऽभूः पृश्निः स्वायम्भुवे सति।
तदायं सुतपा नाम प्रजापति रकल्मषः॥ ३२॥

युवां वै ब्रह्मणाऽऽदिष्टौ प्रजासर्गे यदा ततः।
सन्नियम्येन्द्रिय ग्रामं तेपाथे परमं तपः॥ ३३॥

वर्षवातातप हिमधर्मकालगुणा ननु।
सहमानौश्वासरोध विनिर्धूत मनो मलौ॥ ३४॥

जीर्ण[1] पर्णानिलाहारा वुपशान्तेन चेतसा।
मत्तः कामानभीप्सन्तौ मदाराधन मीहतुः॥ ३५॥

एवं वां तप्यतो भद्रे[2] तपः परमदुष्करम्।
दिव्यवर्षसहस्राणि[3] द्वादशेयु र्मदात्मनोः॥ ३६॥

तदा वां परितुष्टोऽहं ममुना वपुषाऽनघे।
तपसा श्रद्धया नित्यं भक्त्या च हृदिभावितः॥ ३७॥

प्रादुरासं वरदराड् युवयोः कामदित्सया।
व्रियतां[4] वर इत्युक्ते मादृशो वां वृतस्सुतः॥ ३८॥

---

1. B.G.J.M. शीर्ण 2. B.G.J. °स्तीव्रं° 3. V. °णां, 4. K.V.W. व्री°

**बृहद्०** चतुर्भुजेन[1] रूपेणाविर्भावे कारणं तावदाह - **त्वमेवेत्यादि** चतुर्दशभिः श्लोकैः[2] । पूर्वसर्गे प्रथम जन्मनि। अभूः आसीः। पृश्नि र्नाम [3]स्वायम्भुवे[-3] स्वायम्भुवमन्वन्तरे, तदा अयं वसुदेवः ॥ ३२ ॥

**युवामिति ।** तेपाथे [4]दुष्करं तपः कृतवन्तौ [5]युवाम् ॥ ३३ - ३५ ॥

**एवमिति।** तप्यतो राचरतोः ईयुर्गतानि मदात्मनो र्मच्चित्तयोः ॥ ३६ ॥

**तदेति ।** अमुना वपुषा ॥ ३७ ॥

**प्रादुरासमिति ।** [6]प्रादुरासं प्रादुर्भूतोऽस्मि । वरदराट् वरदेषु श्रेष्ठ इत्यर्थः । तेन सकृद्भरेण च वारवार माविर्भावे[7] कारणमुक्तम्। कामस्य दित्सया दातुमिच्छया मादृशो मया सदृशः ॥ ३८ ॥

---

1. V. ° जरू ° 2. B.J. omit श्लोकैः। 3- -3 B.J. omit 4. B.J. omit दुष्करं 5. B.J. omit युवां 6. V. omits प्रादुरासं
7. V. ° चका °

**वीर०** तदेव पितृभ्यां संस्तुतः प्रार्थितश्च स्वासाधारणादिव्य [1]मङ्गल विग्रह प्रदर्शननिमित्तं विवक्षु स्तदुपोद्घातरूप मितिहास माह - भगवान् **त्व** मित्यादिना एतद्वामित्यतः प्राक्तनेन ग्रन्थेन पूर्वसर्गो इतस्तृतीयेजन्मनि स्वायम्भुवे मन्वन्तरे[2] त्वमेव पृश्नि र्नाम योषिदभूः। तदाऽयं तव भर्ता वसुदेव स्तु सुतपा नाम प्रजापति रभूत्। कथम्भूतः ? अकल्मषः शुद्धः ॥ ३२ ॥

एवं सति यदा युवां ब्रह्मणा चतुर्मुखेन प्रजासर्गे निमित्ते आदिष्टौ [3]आज्ञप्तौ। ततः इन्द्रियग्रामम् अन्तर्बाह्येन्द्रियगणं सम्यङ्नियम्य निगृह्य परमं [4]उत्कृष्टं तपः तेपाथे चक्राथे। पाकं पचतीतिवत् निर्देशः ॥ ३३ ॥

तपसः परत्वमेव दर्शयितुं तौ विशिनष्टि [5]वर्षवाततपेत्यादि[-5] वर्षादीन् कालधर्मान् ऋतुधर्मान् अनुक्रमेण प्राप्तान् सहमानौ धर्म आतपजं स्वेदोदकम्। 'घृ - क्षरणे' इति धातुः। श्वासनिरोधेन प्राणवायुनिरोधेन निर्धूतं मनसोमलं रजस्तमोभ्या[6] मभिभवरूपं ययोः। जीर्णानि वृक्षेभ्यो गलितानि पर्णानि अनिलश्च आहारो ययो स्तथाभूतौ मत्सकाशात् कामान् इष्टार्थान् अभीप्सन्तौ। उपशान्तेन रागादिभिः अकलुषितेन चेतसा मदारादन मीहतुः इहाञ्चक्राते कृतवन्तावित्यर्थः। आर्षत्वात् "इजादेः" (अष्टा 3-1-36) इत्यामभावः तद्भावश्च। अनुदात्तेत्व लक्षणात्मनेपदस्य चक्षिङने ङित्करणा [7]दनित्यत्वाद्वा।[-7] आधिजिहीषितः भवच्छब्दसामानाधिकरण्याभिप्रायकः प्रथमपुरुषप्रयोगः ॥ ३४, ३५ ॥

हे भद्रे! एव मित्थं परमदुष्करञ्च तपश्चरतोः। मय्येवाऽऽत्मा मनो ययो स्तयो र्युवयोः दिव्यानि देवमानपरिमितानि [8]वर्षाणि वर्षाणां वत्सराणां सहस्राणि द्वादश ईयुः व्यतिक्रान्तानि बभूवुः ॥ ३६ ॥

ततो हे अनघे! नित्यं भक्त्या हृदि भावितः अनुध्यातः वां युवयो स्तपसा अनशनादिरूपेण श्रद्धया च परितुष्ट स्सन् वरदराडहं युवयोः कामदित्सया वरान्दातुमिच्छया अमुना चतुर्भुजादिमता वपुषा प्रादुरासम्[9] प्रादुर्भूतोऽस्मि ततः[10] प्रादुर्भूतेन मया वरोऽभिमतोऽर्थः व्रियता मित्युक्ते सति वां युवाभ्याम्; शेषषष्ठीयम्। मादृशस्सुतः पुत्रो वृतः [11]याचितः ॥ ३७, ३८ ॥

---

1. K.W. omits मङ्गल 2. B. adds सति 3. K.W. omits आज्ञप्तौ 4. K.W. omit उत्कृष्टं 5--5 K.W. omit 6. B. add अभि
7--7 K. omits 8. K.W. omit वर्षाणि 9. B. adds प्रादुर्भूतोऽभवमित्यर्थः। 10. K. omits ततः 11. K.W. omit याचितः

**विज०** अहं युवयो स्तपः प्रभावात् आविर्भावमकरवम्, नतु कर्माधीनत्वेनेति पूर्वजन्मसङ्कीर्ण तपोमाहात्म्यं कथयति **त्वमेवेति**। अयं वसुदेवः॥ ३२॥

प्रजासर्गे तादर्थ्ये सप्तमी। ततस्तदा॥ ३३॥

अनुक्रमेण वर्षादिगुणान्सहमानौ। श्वासरोधः प्राणायामस्तेन॥ ३४॥

शीर्णपर्णं वायुनापतित पत्रम्। कामान् पुत्रादिलक्षणान्॥ ३५॥

वां युवयोः॥ ३६, ३७॥

वरदराट् वरदराजः। कामदित्सया अभीष्टदानेच्छया॥ ३८॥

**अजुष्टग्राम्य विषया वनपत्यौ च[1] दम्पती।**
**न वव्राथेऽपवर्गं मे मोहितौ मम मायाया॥ ३९॥**

**गते मयि युवां[2] लब्ध्वा वरं मत्सदृशं सुतम्।**
**ग्राम्यान्भोगानभुञ्जाथां युवां प्राप्तमनोरथौ॥ ४०॥**

**★अ दृष्ट्वाऽन्यतमं लोके शीलौदार्य गुणै स्समम्।**
**अहं सुतो वा मभवं पृश्निगर्भ इति श्रुतः[3]॥ ४१॥**

**तयोर्वां पुनरेवाऽह मदित्यामास[4] कश्यपात्।**
**उपेन्द्र इति विख्यातो वामनत्वाच्च वामनः॥ ४२॥**

**तृतीयेऽस्मिन् भवेऽहं[6] वै तेनैव वपुषाऽनघे[5]!**
**जातो भूय स्तयो रेव सत्यं मे व्याहृतं सति॥ ४३॥**

**एतद्वां दर्शितं[7] रूपं प्राग्जन्म स्मरणाय[8] मे।**
**नाऽन्यथा मद्भवं ज्ञानं मर्त्यलिङ्गेन जायते॥ ४४॥**

**युवां मां पुत्रभावेन ब्रह्मभावेन चा[9]ऽसकृत्।**
**चिन्तयन्तौ कृत स्नेहौ यास्येथे मद्गतिं पराम्॥ ४५॥ ★**

---

1. B.J. देव 2. M. °यु° ★ This verse is not found in V. edn. 3. M. स्मृतः। 4. K. °माशु, V. °मय। 5. B.G.J. °ऽथ वाम्; K.W. युवाम् 6. M. °वं 7. K.M.W. व 8. M. जन्यते। 9. K.W. वा ★ This extra verse is found in B.J & V. editions only after verse No. 45. It is not commented on by Sridhara, Veeraraghava and Vijayadwaja यदि कंसाद्बिभेषि त्वं तर्हि मां गोकुलं नय। मन्माया मानयाऽऽशु त्वं यशोदागर्भसम्भवाम्॥ ★ The Edn. V. reads this second half thus- यशोदायाश्च तां कन्यां मन्माया मानय द्रुतम्॥

After this extra half verse is found in V.edn. Which reads thus - स्वयं स्यु र्विवृता द्वारो यमुना च सुदुस्तरा।

**श्रीध० अजुष्टेति।** मे मत्तोऽपि युवा मपवर्गं न वव्राथे न वृतवन्तौ॥ ३९॥

**गत** इति। वरदं त्त्वा मयि गते॥ ४०, ४१॥

**तयोरिति।** अदित्यां कश्यपाद्धमन आसेति य त्तदपि तद्रूपयो र्युवयो रहमेव पुनरासमित्यर्थ:॥ ४२, ४३॥

**एतदिति।** प्राक् प्रथमं तावत् एतद्रूपं मे जन्मेति स्मरणाय ज्ञानाय दर्शितम्। मद्भवं मद्विषयम्। अनन्तरं त्वदिच्छया बालोऽपि भविष्यामीति भाव:॥ ४४॥

ननु त्वयि प्रसन्नेऽपि कथ मावयो: पुन: पुनर्जन्मेति। अत: परं न भविष्यतीत्याह - युवामीति॥ ४५॥

**वीर०** ननु मुक्तिदं भगवन्तं [1]भवन्तं साक्षात्कृत्य मुक्ति रेव[2] न [3]कुतो वृतेत्यत्राऽऽह **अजुष्टेति।** अजुष्टा: असेविता: ग्राम्यविषयाश्शब्दादयो याभ्याम्। न विद्यतेऽपत्यं ययोस्तौ दम्पती[4] युवां मम मायया मोहितौ अत[5] एवं मे मत्त: अपवर्गं मुक्तिं न वव्राथे अननुभूतविषयत्वा दनपत्यत्वान्मन्माया मोहितत्वाच्च नाऽपवर्गं वव्राथे इत्यर्थ:॥ ३९॥

मत्सदृशं सुतमेव वरं लब्ध्वा युवां मयिगते सति प्राप्तो मनोरथो याभ्यां तौ तथा भूतौ युवां ग्राम्यान् भोगान् विषयान् अभुञ्जाथाम् अन्वभूतम्॥ ४०॥

तदा अहं रूपादिभि: गुणै स्समं मत्सदृश मन्यतम मदृष्ट्वा "न तत्समश्चाभ्याधिकश्च दृश्यते" (श्वेता. उ. 6-8) न त्वत्समोस्त्यभ्यधिक: कुतोऽन्य:" (भ.गी. 11-43) इत्युक्तरीत्या मत्सदृश पुरुषान्तराभावं दृब्ह्वा अहमेव वां युवयो: सुतोऽभवम्। तदाऽहं पृश्निि गर्भ इति स्मृत: पृश्ने स्तव गर्भ भूतत्वात् तथा प्रसिद्ध:॥ ४१॥

तयो: पृश्नि सुतपसोरेवानन्तराजन्मनि कश्यपादितिरूपेण जातयो र्वां युवयो रथ कश्यपाददित्या मह मासं पुत्रोऽभूवम्। उपेन्द्र इति विख्यात: प्रसिद्ध:, इन्द्रानुजत्वादिति भाव: तथा वामनत्वात् ह्रस्वमूर्तित्वात् वामनश्चेति विख्यातोऽभूवम्॥ ४२॥

एवं जन्मद्वयमुक्तम्। अथ तृतीयं जन्मेदमेवेत्याह अस्मिंस्तृतीये भवे जन्मनि तयो रेवादिति कश्यपयोरेवैत द्रूपेण जातयो: [6]युवयो: तेनैव चतुर्भुजादि मता वपुषा भूयोऽहं जात: हे सति ! मे मम व्याहृतं भाषितं सत्यमेव हि॥ ४३॥

वां युवाभ्याम् एतच्चतुर्भुजादिमद्रूपं दर्शितं, किमर्थम्? ते तव प्राग्जन्म स्मरणाय पूर्वमप्यावयो[7]रयमेवोत्पन्न इति ज्ञापनार्थम्। अन्यथा प्रदर्शिते रूपदर्शनाभावे च्र मद्भवज्ञानं मदवतार ज्ञानं मर्त्यानां युष्माकं न जायते। मद्भव मिति पाठे मद्विषयकं मदवतार विषयकमिति यावत्॥ ४४॥

नन्वेवमपि कथमावयो [8]र्मुक्ति: स्यादित्याह **युवामिति।** असकृत्पुत्र[9]भावेनाऽपि सकृदपि वा ब्रह्मभावेन परब्रह्मत्वेन मां स्मरन्तौ युवां कृतो मयि निबद्ध: स्नेहो ययोस्तौ परामुत्कृष्टां मद्गतिं यास्येथे॥ ४५॥

1. K.W. omit भवन्तं 2. B. adds आभ्यां 3. B. किं 4. B. adds जायापती 5--5 K.W. omit 6. K. omits युवयो: 7. B. °रेष ए° 8. B °त्यत्राह 9. K. यास्यथ: |

**विज०** अजुष्टग्राम्य विषयौ अननुभूत मैथुनादि विषयौ ॥ ३९, ४० ॥

शीलम् वृत्तम्, औदार्यं माहात्म्यम् ॥ ४१ ॥

वामनत्वात् सुन्दरत्वात्, ह्रस्वत्वाद्वा ॥ ४२ ॥

तृतीये भवे जन्मनि ॥ ४३ ॥

मद्भव ज्ञानं मज्जन्मविषयक ज्ञानम्। मर्त्यलिङ्गेन मनुष्यशरीरेण ॥ ४४ ॥

यास्येथे गमिष्यथ: ॥ ४५ ॥

**श्रीशुक उवाच**

**इत्युक्त्वाऽऽसीद्धरि स्तूष्णीं भगवानात्ममायया।**
**पित्रो: सम्पश्यतो स्सद्यो बभूव प्राकृत श्शिशु: ॥ ४६ ॥**

**ततश्च शौरि र्भगवत्प्रचोदित: सुतं समादाय स सूतिकागृहात्।**
**यदा बहिर्गन्तु मियेष तर्ह्यजा या योग मायाऽजनि नन्द जायया ॥ ४७ ॥**

**तयाहृतप्रत्यय सर्ववृत्तिषु द्वा:स्थेषु पौरेषु[1] च शायितेष्वथ[2]।**
**द्वार स्तु सर्वा:[3] पिहिता दुरत्यया बृहत्कवाटायस कील[4] शृङ्खलै: ॥ ४८ ॥**

**ता: कृष्णवाहे वसुदेव आगते स्वयं व्यशीर्यन्त[5] यथा नमो[6] रवौ।**
**ववर्ष पर्जन्य उपांशु गर्जित: शेषोऽन्वगाद्वारि निवारयन्फणै: ॥ ४९ ॥**

**मघोनि वर्षत्यसकृद्यमानुजा गम्भीरतोयौ घजवोर्मिफेनिला।**
**भयानकावर्त शताकुला नदी मार्गं ददौ सिन्धुरिव श्रिय: पते: ॥ ५० ॥**

**नन्दव्रजं शौरि रुपेत्य तत्र तान् गोपान्[7]प्रसुप्तानुपलभ्य निद्रया।**
**सुतं[8] यशोदाशयने निधाय तत्सुतामुपादाय पुनर्गृहानगात् ॥ ५१ ॥**

**देवक्याश्शयने न्यस्य वसुदेवोऽथ दारिकाम्।**
**प्रतिमुच्य पदो लौहमास्ते[9] पूर्ववदावृत: ॥ ५२ ॥**

**यशोदा नन्दपत्नी च जातं पर मबुध्यत।**
**नतल्लिङ्गं परिश्रान्ता निद्रयाऽपगत स्मृति: ॥ ५३ ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैय्यासिक्यां अष्टादश साहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे पूर्वार्धे तृतीयोऽध्यायः॥ ३॥

---

1. B.G.J. °एवपि 2. M. यापिते° 3. B.G.J.M °पा° 4. K.W. कीलशृङ्खला:, V. शृङ्खलैः किल। 5. B.G.J. व्यवर्यन्ता 6. B.G.J.M श्वेः। 7. M. °न्सुषप्ता° 8. M.V. शिशुं 9. B.G.J.M. °र्लो°

**श्रीध० तत** इति। [1-]यदि कंसाद्बिभेषि त्वं तर्हि मां गोकुलं नय। "यशोदायाश्च तां कन्यां मन्मायां मानये[-1]" ति प्रथममेव भगवता प्रचोदितो वसुदेवो यदा गन्तुमैच्छ त्तदैव अजाऽपि या योगमाया सा नन्दजायया [2-]निमित्तमात्र भूतया[-2] अजनि जाता॥ ४६, ४७॥

**तयेति।** हृताः प्रत्ययार्थाः सर्ववृत्तयो येषाम् अथवा हृताः प्रत्यया अन्याश्च सर्ववृत्तयो येषां, जाग्रता मपि तथा भूतेषु द्वार पालेषु सत्सु [3]बृहत्कवाटेषु लोह कीलक मुक्तशृङ्खलैः बृहद्भिः [4]कवाटादिभि र्दुरत्यया इति वा॥ ४८॥

**ताः** इति। स्वयमेव [5]व्यशीर्यन्त विवृता इत्यर्थः। [6-]व्यव्रियन्तेति वक्तव्ये गुण च्छान्दसः[-6]। रवे [7]र्निमित्तात्॥ ४९॥

**मघोनीति।** गम्भीरो यस्तोयौघः तस्य जवेन [8]ये ऊर्मय स्तैः फेनिला फेन व्याप्ता। भयानकै रावर्तशतै र्व्याप्ताऽपि। श्रियःपतेः सीतापतेः॥ ५०॥

**नन्दव्रजमिति।** निद्रया अजया॥ ५१॥

**देवक्या** इति। प्रतिमुच्य बद्धा। पदोः पादयोः। [9]लौह निगडम्। आस्ते स्म॥ ५२॥

**यशोदेति।** जातं किञ्चिदिति केवलम् अबुध्यत, ननु [10]तल्लिङ्गं, पुत्रः कन्यावेति। योगनिद्रया च मोहितेति॥ ५३॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामि विरचितायां भावार्थदीपिकायां
व्याख्यायां तृतीयोऽध्यायः॥ ३॥

---

1- -1. V "यदि कंसाद्बिभेषि त्व" मित्यादिना। 2- -2. V. omits 3. B.J. बृहत्सु कपा° 4. B.J. कपा° 5. B.J. व्यवर्यन्त 6- -6. V. omits 7. V. °त्तभूतात् 8. V. omits ये 9. B.J लोहं 10. V. omits तल्लिङ्गं

**वीर०** इतीत्थमुक्त्वा हरिः तूष्णीं बभूव। ततः पित्रो र्देवकी वसुदेवयोः सम्पश्यतो स्सतोरेव सद्य स्तदैव [1-]स्वाधीनमायया भगवान् षाड्गुण्य [-1]पूर्णः प्राकृतः मानुषः शिशुर्बभूव [2-]बालरूपो बभूवेत्यर्थः[-2]॥ ४६॥

ततो [3]शिशुभावनानन्तरं[-3] भगवता शिशुरूपेण प्रचोदित आदिष्टः स शौरिः वसुदेवः तं सुत मादाय सूतिका गृहाद्बहि र्यदा गन्तु मियेष ऐच्छत् तर्हि तदा व्रजे नन्दस्य जायया यशोदया अजा प्रकृत्यभिमानिनी योगमाया शक्ति रजनि[4] जनेः कर्माणि चिणः परस्य तशब्दस्य लुक्॥ ४७॥

[5]तया योगमायया हृताः प्रत्ययाः बुद्धयः सर्ववृत्तयः तत्पूर्वक सर्वेन्द्रिय व्यापाराश्च येषां तेषु, अत एव सर्वेषु द्वाःस्थेषु द्वार पालेषु पौरेषु जनेषु च शायितेषु निद्रितेषु सत्सु अथ बृहन्ति कवाटेषु आयसा न्ययोमयानि कीलानि परस्परबन्धकं शङ्कुविशेषात्मकानि शृङ्खलाश्च यासु ताः। तृतीयान्त पाठे बृहद्भिः कवाटै आयस कीलैः शृङ्खलैः पिहिता इति वा। अत एव दुरत्यया दुरतिक्रमाः याः द्वारः द्वाराणि॥ ४८॥

तास्सर्वाः कृष्णवाहे कृष्णं वहतीति तथा तस्मिन् वसुदेवे आगते सति स्वय मेव व्यशीर्यन्त विवृता बभूवुः। यथा रवौ सूर्ये उदिते सति तमोन्धकारो विशीर्यते तद्वत्। रवे रिति पाठे रवे स्सकाशात्। तदा पर्जन्य उपांशुगर्जितः मन्दगर्जितो ववर्ष पौराणामप्रबोधनार्थ मिति भावः। शेषोऽनन्त फणै र्वारि [6]वर्षजलं निवारयन्नन्वगात् अनुययौ॥ ४९॥

असकृन्मेघे नितरां वर्षति सति गम्भीरस्य जलपूरस्य जवेन ये ऊर्मयः तैः फेनिलाः फेनान्यस्या स्सन्तीति तथा भयङ्कराणा मावर्तानां शतैः आकुला व्याप्ताऽपि यमानुजा यमुना नदी मार्गं [7]वसुदेवाय ददौ यथा सिन्धु स्समुद्रः श्रियःपतेः [8]सीतापतेः ददौ तद्वत्॥ ५०॥

तत श्शौरि र्वसुदेवो नन्दव्रजमुपेत्य तत्र योगमायया हेतु भूतया नितरां सुप्तान् तान्नन्दादीन् गोपानुपलभ्य ज्ञात्वा यशोदाया श्शयने शय्यायां स्वसुतं निधाय तस्या यशोदाया स्सुतां मायात्मिका मादाय पुनः गृहान्[9] अगात्॥ ५१॥

ततस्तां [10]दारिकां [11]बालिकां देवक्याश्शयने न्यस्य निधाय पूर्ववच्छृङ्खलां पादयोः कृत्वा आबध्य आवृतः पिहितकवाटस्सन्नाऽऽस्ते [12]आस्त पूर्ववदवर्तत। प्रतिमुच्य, पदोर्लौह मिति पाठे लौहं लोहमय निगलं पदोः पादयोः प्रतिमुच्य पुनर्धृत्वेत्यर्थः॥ ५२॥

[13]नन्दपत्नी यशोदातु जात मपत्यं पुत्रं परमबुध्यत, तत्पुरुषमात्र मबुध्यत, नतु तल्लिङ्गं तद्गतचिह्नानि। तत्र हेतुः, परिश्रान्ता तत्राऽपि हेतुः निद्रया मायाशक्त्युपबृंहिततया निद्रया। अपगतास्मृति र्यस्या स्तथा। यद्वा जातमपत्यं न सुतं नापि कन्याञ्चाऽबुध्यत। किन्तु जात्रमात्रं अबुध्यत। तत्र हेतुः [14]न लिङ्गे परिश्रान्ता[-14] तल्लिङ्गे स्त्रीपुंसाऽन्यतर चिह्न परामर्शे परिश्रान्ता तत्र हेतुः निद्रया अपगत स्मृतिः पूर्ववदर्थः॥ ५३॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघव विदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां तृतीयोऽध्यायः॥ ३॥

---

1- -1. K.W.omit 2- -2. K.W. omit 3- -3. K.W. omit 4. B. adds जनिता 5. B. adds तदा 6. K.W. omit वर्ष 7. K.W. omit वसुदेवाय 8- -8. B. सीतायाः पते श्रीरामचन्द्रस्य 9. B adds स्वनिवास भवनानि 10. K.W. omit दारिकां 11. B. पुत्रीं 12. B. omits आस्त 13. B. नन्दस्य 14- -14. B. omits

**विज०** प्राकृतवत् नतु प्राकृत: ॥ ४६ ॥

इयेष गन्तुमैच्छत् नन्दजायया नन्दजायायां तर्हि तदा ॥ ४७ ॥

योगमायया हृता: प्रत्ययानां ज्ञानहेतूनां इन्द्रियाणां सर्वा वृत्तयो येषु ते तथा, तेषु निद्रया मुग्धेष्वित्यर्थ:, चशब्दात् [1] पौरेषु निद्रां यापितेषु प्रापितेषु सत्सु मन्त्रौषाधादिभि र्दुरत्यया: सर्वा द्वारश्च बृहत्कपाटायस कील श्रृङ्खलै: पिहिता:, बृहद्भि: कपाटै: अयोमयै: अर्गलै: श्रृङ्खलैश्च ॥४७॥

कृष्णवाहे कृष्णं बिभ्राणे, ता: कपाटद्वार: व्यशीर्यन्त विवृता:। यथा तम: रवे रुदये उपांशु रहसि अन्वगात्। पृष्ठत: अयासीत्। फणा शब्द: उभयलिङ्ग: "फणाद्वयो:" (अम. को. 1-229) इत्यमर: ॥ ४९ ॥

मघोनि इन्द्रे यमानुजा यमुना, तोयौघजव: जलप्रवाह वेग: तद्युक्ता ऊर्मयो यस्यां सा तथा फेनिला फेनवती गम्भीरा च तोयौघ जवोर्मिश्च फेनिला च सा तथेति, भयानका भयङ्करा आवार्ता पयसां भ्रमा: तेषां शतै: आकुला: श्रिय:पते दशरथरामस्य सिन्धु: समुद्रइव ॥ ५० ॥

नन्दव्रजं नन्दगोकुलं उपलभ्य दृष्ट्वा निद्रया दुर्गया सुषुप्तान्। गृहानिति बहुवचने पुंल्लिङ्ग: "गृहा: पुंसि च भूम्नेव" (अम. को. 2-23) इत्यमर:। "गृहशब्दस्य भार्या वाचित्वेन नपुंसकत्वम्। तद्व्यावृत्त्यर्थं बहुवचनम् ॥ ५२ ॥

दारिकां कन्यकाम् ॥ ५२ ॥

परं केवलं जातं अबुध्यत, तस्य जातस्य लिङ्गं स्त्रीपुरुष विवेक लक्षणम् नाऽज्ञासीत्। तत्र निमित्तमाह परिश्रान्तेति। प्रसूति वेदनयेति शेष: ॥ ५३ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीविजयध्वजतीर्थ विरचितायां पदरत्नावल्यां
टीकायां तृतीयोऽध्याय: ॥ ३ ॥
(विजयध्वजरीत्या चतुर्थोऽध्याय:।)

---

1. M.Ma, आ°

# चतुर्थोऽध्यायः

## (विजयध्वजरीत्या पञ्चमोध्यायः)

**श्रीशुक उवाच**

**बहिरन्तःपुरद्वारः सर्वाः पूर्ववदावृताः।**
**ततो बालध्वनिं श्रुत्वा गृहपालास्समुत्थिताः॥ १॥**
**ते तु तूर्णमुपव्रज्य देवक्या गर्भजन्म तत्।**
**आचख्यु र्भोजराजाय यदुद्विग्नः प्रतीक्षते॥ २॥**
**स तल्पात्तूर्णमुत्थाय कालोऽयमिति विह्वलः।**
**सूतीगृहमगात् शीघ्रं[1] प्रस्खलन् मुक्तमूर्धजः॥ ३॥**
**तमाह भ्रातरं देवी कृपणा करुणं सती।**
**स्नुषेयं तव कल्याण स्त्रियं मा हन्तुमर्हसि॥ ४॥**
**बहवो हिंसिता भ्रातः[2] शिशवः पावकोपमाः।**
**त्वया दैव[3]निसृष्टेन पुत्रिकैका प्रदीयताम्॥ ५॥**
**नन्वहं ते ह्यवरजा दीना हतसुता प्रभो !**
**दातुमर्हसि मन्दाया अङ्गे[4]मां चरमां[5] प्रजाम्॥ ६॥**

---

1. B,G,J,V तूर्णं 2. V. ह्यङ्ग ! 3. V. दे° 4. V ममेमां 5. K,V,W °मप्र°

## श्रीधरस्वामिविरचिता भावार्थदीपिका

चतुर्थे चण्डिकावाक्यमाकर्ण्यातिभयाकुलः।
दुर्मन्त्र्यभिहितं मेने कंसो बालादि हिंसनम्॥

**त इति**। तदष्टमं जन्म॥ १,२॥

**स** इति। कालो मृत्युः॥ ३,४॥

**बहव** इति। अङ्ग! हे भ्रातः!॥ ५, ६॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं भगवदवतारं [1]सप्रपञ्चं प्रस्तुत्य अथ ततः प्रभृति कंसोद्योगं प्रस्तौति - **बहिरिति।** यदा वसुदेवः पूर्ववदास्त तदा बहिरन्तश्च सर्वाः [2]पुरस्य द्वारः द्वाराणि पूर्ववदेवाऽऽवृताः पिहिताः ततो बालध्वनिं [3]शिशुध्वनिम्। आकर्ण्य गृहपालाः वसुदेवोधिष्ठितकारागृहपालाः समुत्थिता बभूवुः॥ १॥

ते च अतितूर्णमुपव्रज्य कंससमीपमेत्य देवक्या गर्भजन्म गर्भस्थशिशूत्पत्तिं भोजराजाय कंसाय आचख्युः। कथम्भूतम्? यद्गर्भजन्मैव समुद्विग्नो मृत्यु भयभीतः कंसः प्रतीक्षते तथाभूतमित्यर्थः॥ २॥

स भोजराजः कालोऽयमिति अयमेव तद्वधकालः। अन्यथा प्रवर्धितो मामेव हन्यादिति बुद्ध्या तूर्णं तल्पात् शयनादुत्थितो विह्वलः कातरः अनवहित इति यावत्, अत एव प्रस्खलन् विक्षिप्तप्रगतिः मुक्ता विक्षिप्ता मूर्धजाः केशा यस्य तथाभूतः शीघ्रं सूतिकागृहमगात् ययौ॥ ३॥

तम्, आगतं भ्रातरं कंसं देवी सती देवकी कृपणा दीना करुणं यथा तथा उवाच। तदेवाह - स्नुषेयमिति सार्धद्वयेन। कल्याण! तवेयं स्नुषा भगिनीसुता एनां स्त्रियं हन्तुं त्वं नार्हसि। दैवनिसृष्टेन दैवप्रेरितेन देवेन मत्पुत्रमृत्युतया कल्पितेन [4-]इत्यर्थः। त्वया[-4] बहवः पावकवत् प्रकाशमानाः मम शिशवो हताः। हे भ्रातः! इयम् एका पुत्रिका प्रदीयताम्॥ ४, ५॥

ननु हे भ्रातः अहं तव अवरजा कनीयसी दीना च, हताः सुताः यस्याः तथाभूता च। अतो हे प्रभो! अङ्ग! हे भ्रातः! मन्दभाग्याया मम एकां चरमां [5-]अन्त्यां प्रजां[-5] [6]कन्यकां दातुमर्हसीति॥ ६॥

---

1. K,W. omit सप्रपञ्चं 2. B. पुरद्वारः 3. B. रोदनं 4--4 K,W. omit 5--5 K,W. omit 6. B. कन्यां

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

देवानां देवस्वभावः असुराणामसुरस्वभावः, मध्यमानां मिश्रस्वभावः दुस्त्यज इत्येतदर्थकं प्रतिपाद्यते अस्मिन्नध्याये। तत्र कंसादिषु सन्तोऽसन्त इति द्विजीवाः सन्ति। तदुक्तम् — "पूतना कंस नरक शिशुपालादिषु द्विधा। जीवास्सन्तस्त्वसन्तश्च तत्र बन्ध्वादिरूपिणः॥ विष्णोः सन्त इति ज्ञेया असन्तः शत्रुरूपिणः। शुभजीवप्रकाशेन कदाचिच्छुभबुद्धयः" (गारुडे) इत्यादि। तत्र असतां स्वभावं दर्शयितुमुपक्रमते **बहिरन्त** इति। बालध्वनिं रोदनम्॥ १॥

यस्माद्गर्भात् उद्विग्नः भीतः॥ २॥

सूतीगृहमिति दीर्घश्छान्दसः वैलक्षण्यद्योतको वा॥ ३॥

करुणं दयाजनकं वचनमिति शेषः। स्नुषा पुत्रभार्या॥ ४॥

दैवेन निसृष्टेन प्रेरितेन॥ ५॥

चरमां प्रजां अवरसन्ततिम्॥ ६॥

श्रीशुक उवाच

उपगूह्यात्मजामेवं[1] रुदत्या[2] दीनदीनवत्।
याचितस्तां विनिर्भर्त्स्य हस्तादाचिच्छिदे खलः॥ ७॥
तां गृहीत्वा चरणयोर्जातमात्रां स्वसुस्सुताम्।
अपोभयच्छिलापृष्ठे स्वार्थोन्मूलितसौहृदः॥ ८॥
सा तद्धस्तात् समुत्पत्य[3] सद्यो देव्यम्बरं गता।
अदृश्यतानुजा विष्णोः सायुधाष्टमहा भुजा॥ ९॥
दिव्य स्रगम्बरालेपरत्नाभरणभूषिता।
धनुश्शूलेषुचर्मासिशङ्खचक्रगदाधरा॥ १०॥
सिद्धचारणगन्धर्वैः अप्सरःकिन्नरोरगैः।
उपाहृतोरु बलिभिः स्तूयमानेदमब्रवीत्॥ ११॥

[4-]देव्युवाच[-4]

किं मया हतया मन्द जातः खलु तवान्तकृत्[5]।
यत्र क्वचित्[6] पूर्वशत्रुमाहिंसीः कृपणान्[7] वृथा॥ १२॥
[8]इति प्रभाष्य तं देवी माया भगवती भुवि।
बहुनामनिकेतेषु बहुनामा बभूव ह॥ १३॥

---

1. B,G,J,M गु° 2. B,K,M,W रुदन्त्या; V वदन्त्या 3. M. °त्प्लुत्य 4- -4. B,G,J,K,M,W omit 5. M °कः 6. B,G,J क्व वा 7. M,V °णां 8. V. एवं

**श्रीध० उपगूह्येति।** दीनदीनवत् दीनादपि दीनवत्, न तु तथा; पुत्रस्यान्यत्र नीतत्वात्, सा च योगमायेति ज्ञातत्वाच्च। याचितोऽपि आचिच्छिदे ह[1]स्तात् आकृष्य जग्राह॥ ७॥

**तामिति।** अपोथतत् बलेन चिक्षेप॥ ८॥

**सेति।** सद्य एव देवी भूत्वा॥ ९ - ११॥

**किमिति।** मा मां कृपणां वृथा अहिंसीः हिंसीतवानसि। कृपणानिति पाठान्तरे अन्यानपि शिशून् हनिष्यतीति ज्ञात्वा वारयतीति॥ १२॥

**इतीति।** बहु[2]नामसु निकेतेषु वाराणस्यादिस्थानेषु॥ १३॥

---

1. V omits हस्तात् 2. B,J नामनि°

**वीर०** इत्थमात्मजामुपगूह्य उरसि बाहुभ्यां संवेष्ट्या दीनदीनवत् दीनादपि दीनस्तद्वत् नितरां दीनवत् इत्यर्थः। वत्करणेन स्वसुतस्यान्यत्र स्थितत्वात् वस्तुतो दैन्याभावस्सूच्यते। रुदन्त्या तथा याचितोऽपि खलो दुरात्मा कंसः तां विनिर्भर्त्स्य हस्तात् आचिच्छिदे हृतवान्॥ ७॥

तां जातमात्रामेव न तु कृतनालच्छेदामित्यर्थः। भगिन्याः सुतां चरणयोः गृहीत्वा स्वप्रयोजनार्थं त्यक्तभगिनीतत्सुतास्नेहः शिलापृष्ठे अपोथयत् अताडयत्॥ ८॥

सा विष्णोः अनुजा कन्या तस्य कंसस्य हस्तात् समुत्पत्य ऊर्ध्वमुत्पत्य सद्य एव देवी स्वस्वरूपं बिभ्रती सती अम्बरमाकाशं गता अधिष्ठिता अदृश्यत। कंसादिभिः दृष्टा बभूव। क[1]थम्भूता? आयुधैः सहिता अष्टौ महान्तो भुजा यस्याः॥ ९॥

दिव्यस्रगादिभिः भूषिता अम्बरं वस्त्रम्। आयुधान्येव दर्शयन् विशिनष्टि - धनुरादीन् बिभ्रतो तथा उपाहृताः समर्पिताः, बलयः उपायनानि यैस्तैः, सिद्धादिभिः स्तूयमानेदं वक्ष्यमाणमब्रवीत्॥ १०, ११॥

तदेवाह - **किमिति** । हतयाऽपि मया तव किं प्रयोजनम्? न किञ्चिदपि। हे मन्द ! तव अन्तकृत् नाशकृत् पूर्वशत्रुरशरीरवाण्या पूर्वमुक्तश्शत्रुः यत्र क्वचित्प्रदेशे जात एव खलु, इत ऊर्ध्वं जनिष्यमाणानपि शिशून् हन्यादिति सम्भाव्य वारयति, कृपणान् शिशून् वृथा मा हिंसीः॥ १२॥

इति इत्थं [2]तं कंसं प्रभाष्य सा भगवती पूज्या माया देवी भुवि बहुनामनिकेतेषु नानासंज्ञकस्थानेषु बहूनि पूर्वं भगवदुक्तानि दुर्गादीनि नामानि यस्याः तथाभूता बभूव। हेत्याश्चर्ये॥ १३॥

---

1. B. कीदृशी? 2. K,W. omit तं

**विज०** आचिच्छिदे आकृष्टवान्॥ ७॥

अपोथयत् अताडयत्। स्वार्थेन स्वप्रयोजनेन उन्मूलितं उत्पाटितं सौहृदं स्नेहलक्षणं यस्य स तथा॥ ८॥

अदृश्यत जनेनेति शेषः॥ ९, १०॥

उरवः बलयः पूजा यैस्ते तथा तैः॥ ११॥

त्वया हतया मृतया तव कोऽर्थ इति शेषः। कुत इत्यत्राह - जात इति खलु विचारशून्यस्त्वम्॥ १२॥

माया भगवती दुर्गा इतिशब्द आदिवचनः इत्यादीत्यर्थः। "इति हेतुप्रकरणप्रकारादिसमाप्तिषु" (वैज.को. 8-7-17) इति यादवः॥ १३॥

**तथाऽभिहितमाकर्ण्य कंसः परमविस्मितः।**
**देवकीं वसुदेवं च विमुच्य प्रश्रितोऽब्रवीत्॥ १४॥**
**अहो भगिन्यहो [1]भाव मया वां बत पाप्मना।**
**पुरुषा[2]दैरिवाभ्येत्य बहवो हिंसितास्सुताः॥ १५॥**
**स त्वहं त्यक्तकारुण्यः त्यक्तज्ञातिसुहृत्खलः।**
**[3]कांस्तु लोकान्[-3] गमिष्यामि ब्रह्मदेव मृतःश्वसन्॥ १६॥**
**दैवमप्यनृतं वक्ति न मर्त्या एव केवलम्।**
**यद्वि[4]स्रम्भादहं पापः स्वसुर्निहतवान् [5]शिशून्॥ १७॥**
**मा [6]शोचतं महाभागौ आत्मजान् स्वकृतम्भुजः।**
**जन्तवो न सदैकत्र दैवाधीनाः [7]सहासते॥ १८**
**भुवि भौमानि भूतानि यथा यान्त्यपयान्ति च।**
**नायमात्मा तथैतेषु विपर्यति यथैव भूः॥ १९॥**

---

1. B,G,J,M भाम 2. B.G.J, °द इवापत्यं; K,W °द इवोपेत्य 3- -3. B,G,J कान् लोकान् वै; M हा कान् लोकान् 4. B,G,K, M °श्र° 5. M सुतान् 6. M. शोचेथां 7. B,G,J तदाऽऽसते

**श्रीध० तयेति** परमविस्मितः कथं दैवी वागनृता जातेति॥ १४॥

**अहो** इति। [1]भाव! भगिनीभर्तः! पुरुषादो राक्षसो यथा स्वापत्यमेव हिनस्ति तद्वत्॥ १५ - १७॥

**माशोचतमिति।** हे महाभागौ! स्वकृतम्भुजः स्वारब्धकर्मभोक्तन्। [2-]स्वात्मजान् माशोचतं[-2], किञ्च जन्तवः प्राणिनः सदा नाऽऽसते किन्तु अल्पकालमेवा[3]ऽऽसते। तथाऽपि एकत्र नाऽऽसते किन्तु वियुज्यन्ते, यतो दैवाधीनाः॥१८॥

सदा नाऽऽसत [4]इति यदुक्तं जन्ममरणादि तदपि देहानामेव न आत्मन इत्याह **भुवीति।** भूतानि देहा एव यान्ति [5]अपयान्ति च भवन्ति न भवन्ति चेत्यर्थः। यथा भुवि भौमानि घटादीनि तद्वत्। एतेषु भूतेषु जन्मादिभिः विक्रियमणेषु अयमपरोक्षतया प्रत्यभिज्ञायमान [6]आत्मा न विपर्येति विपर्ययं न प्राप्नोति एकरूप एव वर्तत इत्यर्थः। भौमेषु विक्रियमाणेषु यथा भूः तथेति॥ १९॥

---

1. B,J. भाम! 2- -2. V. omits 3. B,J. omit आसते 4. B,J. add अनेन 5. V. omits अपयान्ति 6. B,J. omit आत्मा

**वीर०** ततः तया मायया अभिहितमाकर्ण्य कंसः सुतरां विस्मितः देवकीं वसुदेवं च विमुच्य निगलात् निर्मोच्य विनीत इदमब्रवीत्॥ १४॥

तदेवाह - **अहो** इति सार्धैः अष्टभिः। भगिनीपतिः भावः। पुरुषाद इव राक्षस इव राक्षसेनेवेत्यर्थः। विभक्तिव्यत्यय आर्षः। उपेत्य समीपमेत्य, मया पाप्मना पापात्मना, वां युवयोः, बहवस्सुताः हिंसिताः। बतेति खेदे॥ १५॥

स तु त्वत्पुत्रहन्ता अहन्तु त्यक्तं कारुण्यं येन, त्यक्ता ज्ञातयः सुहृदश्च येन, तथाभूतः अत एव खलः। अत एव कांस्तु लोकान् प्राप्स्यामि, [1] केवलं स्थावरतां गमिष्यामीति भावः। अत एव ब्रह्महेव श्वसन् जीवन्नपि मृतः मृततुल्यः॥ १६॥

पूर्वन्तु "अस्यास्त्वामष्टमो गर्भो हन्ता" (भाग. 10-1-34) इति दैवमुवाच। इदानीं तु यत्र क्वचित् तव मृत्युर्जात एवेति श्रुतम्। अतो मानुषवत् दैवमप्यनृतं वक्तचेव। यस्यैव वचने विश्वासात् अहं भगिनीसुतान् हतवान् इदमतिजुगुप्सितं कर्म कृतवानस्मि किल॥ १७॥

अथापि महाभागौ विवेकिनौ युवां, आत्मजान् प्रति मा शोचतं शोकं मा कार्ष्टं, तेषामशोच्यत्वं सूचयितुं विशिनष्टि। स्वकृतम्भुजः स्वकृतकर्मफलभोक्तॄन् जन्तवः दैवाधीनाः स्वस्वकृतकर्मानुगुणप्रवृत्तदैववश्याः अत एव सदैकत्र नाऽऽसते नावतिष्ठन्ते, किन्तु तत्तत्कर्मानुगुणजन्ममरणादिभाजो भ्रमन्ति॥ १८॥

सदासहानवस्थाने दृष्टान्तमाह यथा भुवि भौमानि रजांसि यान्ति अपयान्ति अपगच्छन्ति तद्वत् भूतान्यपि कर्मवशात् क्वचित् संयुज्य पुनः वियुज्यन्ते, भौमानां गमनागमनाद्यवस्थावत्त्वेऽपि यथा न भुवः तथा त्वं, तथा शरीरेषु जन्ममरणादिविकारवत्स्वपि तद्धारकतयाऽवस्थित आत्मा जीवः न विपर्येति विपर्ययं न प्राप्नोति नान्यथाभवनं गच्छति, किन्तु एकरूपतया नित्यतया च अवतिष्ठत इत्यर्थः। जन्ममरणाद्यवस्थावत्वस्वाभाव्यात् देहा न शोच्याः, नाप्यात्मा विक्रियाभावान्नित्यत्वाच्चेति भावः॥ १९॥

---

1. B. adds नरकानपि न गमिष्यामि

**विज०** सतां स्वभावं दर्शयति **तथाऽभिहितमिति** ॥ १४॥

बत खेदे। बहवो राक्षसाः यत्क्रूरकर्म कुर्वन्ति सम्भूय तन्मया एकेन कृतमित्यतः पुरुषादैरिति बहुवचनम्॥ १५॥

ब्रह्महा ब्राह्मणं हतवान्, मृतः श्वसन् जीवन्मृतः॥ १६, १७॥

स्वकृतम्भुज; स्वकृतादृष्टभुज इति यत्तन्मा शोचेथां। इतोऽपि शोको न कर्तव्य इत्याह - जन्तव इति। कीटादि प्राणिनः॥ १८॥

नन्वेवं तर्हि देहस्थस्य परमात्मनोप्यागमनापायौ स्यातामिति तत्राह - **भुवीति**। यथा भुवि भौमानि पार्थिवानि भूतानि चतुर्विधानि आयान्ति अपयान्ति च। तथैतेषु भूतेषु स्थितोऽयमात्मा परमात्मा न विपर्येति आगमापायौ नाप्नोति[1]। कथम्? यथा भूरागमनापायौ नाप्नोति तथेत्यर्थः। यथा भूतानि उद्भूतानि भौमानि रजांसि आयान्ति अपयान्ति वायुर्नेति शेषः। अयमात्मा तथा न, अनन्याधीनत्वात्। अन्वयदृष्टान्तमाह - यथा भूः पृथ्वी, कठिनत्वेन स्थिरत्वादिति शेषः॥ १९॥

---

1. B न प्राप्नोति

**[1-]यदा नैवंविधो भेदो[-1] यत आत्मविपर्ययः।**
**देहयोगवि[2]योगौ च संसृतिर्न निवर्तते॥ २०॥**
**तस्माद्भद्रे स्वतनयान् मया व्यापादितानपि।**
**मानुशो[3]च यतः स[4]र्वः स्वकृतं [5-]विन्दतेऽवश[-5]॥ २१॥**

यावद्धतोऽस्मि हन्तास्मीत्यात्मानं मन्यतेऽस्वदृक्।
तावत्तदभिमान्यज्ञो बाध्यबाधकतामियात्॥ २२॥
क्षमध्वं मम दौरात्म्यं साधवो [6]बन्धुवत्सला:।
इत्युक्त्वाऽश्रुमुख: पादौ [7]स्यालस्वस्रोरथाग्रहीत्॥ २३॥
[8]मोचयामास निग[9]ला[10]द्विस्रब्ध: कन्यकागिरा।
देवकीं वसुदेवं च दर्शयन्नात्मसौहृदम्॥ २४॥
भ्रातुस्स[11]मनुतप्तस्य क्षा[12]न्त्वा रोषं च देवकी।
व्यसृजद्वसुदेवश्च प्रहस्य तमुवाच ह॥ २५॥
एवमेतन्महा[13]राज यथा वदसि देहिनाम्।
अज्ञानप्रभवा[14]ऽहंधी: स्वपरेति भिदा यत:॥ २६॥
शोकहर्षभयद्वेष लोभमोहमदान्विता:।
मिथो घ्नन्तं[15] न पश्यन्ति भावैर्भाव[16] पृथग्दृश:॥ २७॥

[17-]श्री शुक उवाच[-17]

कंस एवं प्रसन्नाभ्यां वि[18]स्रब्धं प्रतिभाषित:।
देवकी वसुदेवाभ्यामनुज्ञातोऽविशद्गृहम्॥ २८॥

---

1- -1. B.G.J. यथाऽनेवंविदो भेदो; M यतोऽनेकविधोंऽभेदो; V यथा नैवंविधो भेदो 2. M वियोगश्च; V. नियोगश्च; K.W. वियोगैश्च 3. K.W. °चयतं 4. V. सर्वे 5- -5. V. भुञ्जतेऽवशा: 6. B.G.J. दीन 7. B.G.J. श्याल: ; M श्याल°; V. स्याल: 8. M°क्ष° 9. B.G.J. M °डा° 10. B.G.J. °श्र° 11. M °र्वचनमाश्रित्य 12. B. क्षान्तरोषा; M क्षान्ता रोषंच; V क्षान्त्या रोषं च 13. B.G.J. भाग 14 M °वा हन्ति 15. M °न्ति 16. M.V.° वान् 17- -17. M.V. omit 18. B.G.J.V विशुद्धं; M. विस्रब्ध:

**श्रीध०** एवं विचार्यमाणे सति न शोका[1]वकाश:। अजानतस्तु न निवर्तत इत्याह **यथेति**। [2]यथा यथावत्। [3]नैवंविद: एवमजानत: आत्मविपर्यय: देहात्मबुद्धिर्भवति। यतो विपर्ययाद्भेदो भवति देहाहङ्कारेण हि आत्मनि परिच्छिन्ने सति अहङ्कारास्पदं भिन्नं भवति। यतो भेदात् पुत्रादिदेहैर्योगश्च [4]वियोगश्च तत: संसृति: सुखदु:खे इति यावत्। अज्ञानं न निवर्तत इत्यर्थ:॥ २०॥

एवमुक्तप्रकारेण न [5]एते तव तनया: अहं तु [6]तान् न [7]हत्वान्। तथाप्यज्ञानदृष्ट्या स्वतनयान् मया व्यापादितानपि मानुशोचयति सान्त्वयति - **तस्मादिति**। अज्ञानाश्रयं[8] कर्म वादमाह - यत इति॥ २१॥

कथं तर्हि ब्राह्मणादिहन्तु[9]: तस्य च प्रायश्चित्ता[10]दि श्रवणं अज्ञानमूलमेवेत्याह - **यावदिति** । अस्वदृक् देहाभिमानी[11] [12-]द दाभिमानीति[-12] तस्य देहस्य हननमात्मन्यभिमन्यमा इत्यर्थः ॥ २२ ॥

**क्षमध्वमिति** । स्यालः कंसः, स्वस्रोरिति स्वसृशब्देन द्विवचनानुपपत्त्या मिथुन[13]ग्रहण[14]द्वारा मिथुनलक्षणया स्वसृतत्पत्योरभिधानं, लिङ्गसमवा[15]यन्यायेन प्राणभृत उपदधातीतिवत् । देवकीवसुदेवयोः प्रत्येकं पादावग्रहीदित्यर्थः। स्यालशब्देन वा कथञ्चित् वसुदेवाभिधानं [16]युज्यते। कंस स्वस्रोरिति पाठे तयोः कंस अथाऽग्रहीदिति पाठान्तारे च न काप्यनुपपत्तिशङ्केति विद्वद्भिरूह्यम्[-16] ॥ २३ ॥

**मोचयामासेति** । आत्मसौहृदं प्रियवादादिन दर्शयन् ॥ २४ - २६ ॥

स्वपरभेददर्शि[17]न किं भवति तदाह - **शोकेति**। भावैः [18]भेदनिमित्तभूतैः मिथो भावान्। घ्नन्तं भावमीश्वरम्। पृथग्दृशः ते न पश्यन्ति। किन्तु अहमेव हन्ता हत इति मन्यन्त इत्यर्थः॥ २७॥

**कंस** इति। विशुद्धं यथा भवति [19]तथा॥ २८॥

---

1. B.J. °काद्यव° 2. V. omits यथा 3. B.J अनेवं 4. V नि° 5. V. ते 6. B.J. तावत् 7. B.J. घातित° 8. B.J. add एव 9. B.J °द्वध्यस्य 10. B.J. omit आदि 11. J. adds तावत् 12- -12. B omits 13. B.J. गणन 14. V. omits द्वारा 15. V°वायेन 16- -16. B.J. omit 17. B.J°ने 18. B.J. एव 19. B.J omit तथा

**वीर०** ननु जातोऽहं मृतोऽहं हतोऽहम् अहं हन्मीत्येवनात्मनोऽपि जननमरणहन्तृहन्तव्य भावप्रतीतेः कथं न स विपर्येति इत्यत्र सा प्रतीतिः देहात्मभ्रान्तिमूला। सैव च तस्य देहसंयोगवियोगरूप संसृतिहेतुश्चेत्याह - **यदेति**। यदा एवंविधो भेदः देहात्मनोः वैधर्म्यरूपोभेदः न स्यात् अनुष्ठानपर्यन्तत्वेन नाध्यवसितः स्यात्। यतः अनध्यवसितादेव भेदादात्मनि विपर्ययः देहधर्मप्रतीति र्भवति, तावत् देहसंयोगवियोगैः उपलक्षिता संसृतिः न निवर्तते तत्संयोगादिरूपा संसृतिः न निवर्तते। चशब्दात् हन्तृहन्तव्यप्रतीतिरपि न निवर्तत इत्यर्थः॥ २०॥

तस्माद्देहात्मनोः विलक्षणस्वभावत्वात् अत एव अशोच्यत्वाच्च हे भद्रेः मया व्यापादितानपि व्यापत्तिं प्रापितानपि हतानपीति यावत्, स्वसुतान् प्रति युवां मानुशोचयतम्। णिजर्थस्त्वविवक्षितः। यतः सर्वोऽपि जन्तुः अवशः अस्वतन्त्रः कर्मवश्यः स्वकृतं [1-]स्वकृतकर्मरू[-1]पफलं जन्ममरणादिकं विन्दते लभते॥ २१॥

किञ्च यावदस्वदृक् देहविलक्षणात्मयाथात्म्यदर्शी सन् हतोऽस्मि हननविषयोऽस्मि, हन्ताऽस्मि हननकर्ताऽस्मि इत्यात्मानमभिमन्यते देहात्मभ्रान्त्या देहगतां हन्तृहन्तव्यभावमात्मनि अनुसन्धत्ते तावदेव तदभिमानी तन्मूलकहन्तृहन्तव्य

माचाभिमानी च। अत एव अज्ञस्सन् बाध्यबाधकतां वध्यधातुकभावमिति यावत्। प्राप्नुयात् तत्प्रयुक्तशोकपापादिकं[2] प्राप्नुयादित्यर्थ:॥ २२॥

अतस्साधवो बन्धुवत्सलाश्च यूयं मम दौरात्म्यं क्षमध्वमित्युक्त्वा, अथ अश्रूणि मुखे यस्य तथाभूत:। स्यालस्वस्रो: वसुदेवदेवक्यो: पादावग्रहीत्। पत्नीभ्रातृवाचितया प्रसिद्धोऽपि स्यालशब्द: अत एव प्रयोगात् भगिनी भर्तर्यपि वर्तते॥ २३॥

तत: कन्यकाया गिरा विस्रब्ध: एतौ निर्दुष्टाविति विश्वस्त: स्वस्य सौहृदं दर्शयन्, देवकीं वसुदेवं च निगलात् मोचयामास। पूर्वोक्तमेव मोचनं सप्रपञ्चं स्मारितमिति न पौनरुक्त्यम्॥ २४॥

इत्थं भ्रातु: समनुतमस्य सत: देवकी क्षान्त्वा क्षमां कृत्वा रोषं व्यसृजत्। तथा वसुदेवोऽपि क्षान्त्वा प्रहस्य तं कंसमुवाच॥ २५॥

तदेवाह - **एवमिति** द्वाभ्याम्। हे महाभाग! त्वं यथा वदसि तदेवमेव तथैव, किं मयोक्तं यदनुमन्यस इत्यत्राह देहिनामहन्धी: अहन्ता अहं हत इत्येवंरूपा धी: अज्ञान प्रभवा देहात्मभ्रमजा, यद्वा अहन्धी: देहात्मधी: अज्ञानप्रभवा आत्मयाथात्म्यानवभासमूला। अहन्धियं विशिनष्टि - यतोअहन्धिय: स्वपरेतिभिदा शत्रुमित्रभिदा भवति॥ २६॥

एतदेवोपपादयति - **शोकेति**। पृथग्दृश: आत्मन: पृथग्भूते देहे दृक् आत्माभिमानो येषां तथाभूता:। अत एव शोकदिभि: अन्विता: भावै: अचेतनै: खड्गादिभि; भावमचित्पदार्थं घ्नन्तम् ईश्वरं न पश्यन्ति किन्तु केवलं स्वपरभेदमेव पश्यन्तीति भाव:। तत्तत्कर्मानुगुणप्रवृत्तस्येश्वरस्यैव जन्ममरणादिहेतुत्वात् न केनापि अपराद्धमिति भाव:॥ २७॥

इत्थं विस्रब्धं विश्वासयुक्तं यथा भवति तथा आभाषित: कंस: प्रसन्नाभ्यां देवकीवसुदेवाभ्याम् अनुज्ञात: स्वगृहं प्राविशत्॥ २८॥

---

1- -1. फलरूपं 2. B. मायादिकं

**विज॰** जन्त्वाऽऽगमाऽगमवत् पुत्रादिकं विपर्येति भुव आगमापायभाववत् परमात्मा न विपर्येतीति यदि तर्हि इदं ज्ञानं कस्मान्नोदेतीत्याशङ्क्य भगवन्मायया मुग्धचेतस्त्वेन परमात्मविषयाभेदज्ञानबाहुल्यात्, अनेन संसारानिवृत्ति: तम: प्राप्तिश्च स्यातामित्याह - **यत** इति। अस्वपरविवेक[1]बुध्दयुत्पत्तिप्रभृति परमात्मविषयोऽभेदोऽनेकविध: 'अहं ब्रह्माऽस्मि' इत्यादिको जीवस्य प्रतीयत इति यत: तेन विपरीतज्ञानेन देहयोगादि लक्षणा वास्तवी यथार्था संसृति: न निवर्तत इति यत: आत्मविपर्यय: स्वस्य तम आद्यनर्थप्राप्तिश्च, यत: तस्मादात्मनि स्थितिं कृत्वा मानुशोचेत्यन्वय:। "अहं ब्रह्माऽस्मि, देवोऽस्मि, नास्मि केवल मानुष:" (गारुडे) इत्यादे: सिद्धोऽयमर्थ:। अभेदप्रतीति: असुरजातेरेव। "तल्लक्षणैर्विहीनस्सन् ब्रह्म देवोऽस्मि

वाऽपि तु" (गारुडे) इत्यादे: सर्व: स्वकृतमदृष्टं भुङ्क्ते इति यस्मात्तस्मात् ब्रह्माऽस्मीत्यादिचिन्तनं तर्हि कस्य इत्यत: स्वयोग्यानामेव तद्युक्तम्। "परब्रह्मण एकस्य ब्रह्माऽस्मीति विचिन्तनम्" (गारुडे) इत्यादे: सर्व: परमात्मा स्वकृतं पूर्णं स्वमानन्दं विन्दते, यतोऽवश: अवगतपरमानन्द:। "सर्व: शर्व: शिवस्स्थाणु: (विष्णुसहस्रनामस्तोत्रम् भारते) इति च। सर्व: देवादिश्च स्वकृतं देवोऽस्मीत्यादि यथार्थज्ञानफलं भुङ्क्ते अवशो विष्ण्वधीन:॥ २०, २१॥

तर्ह्यस्य कियन्तं कालं संसारानुवृत्तिरिति तत्राह - **यावदिति**। अश्वदृक् अनात्मानं देहं आत्मात्वेन पश्यतीति तदाभिमानी देहाभिमानी॥ २२ - २५॥

परमात्मा न विपर्येति पुत्रादिकं विपर्येति इति जीवपरभेदज्ञानं मुक्तिसाधनमन्यत् तमस्साधनं यथा वदसि, एतदेव सत्यम्। एतदेव द्रढयति - देहिनामिति। "देवोऽहं मानुषो वेति विशेषं तत्र वाऽपि तु" (ब्रह्माण्डे) इत्यादे:। यातनाशब्दमध्याहृत्य व्याख्येयम्। अहं देवाद्यन्यतम: परमात्मा पदादिजीवराशे: सत्तादिप्रदत्वेनात्यन्तं प्रेष्ठ इति या भिदा तज्ज्ञानं देहिनाम् अज्ञानप्रभवा यातना हन्तीति यत: इत्यन्वय:। ननु उत्तरश्लोके पृथग्दृश इति भेदज्ञानि निन्दावचनात् अत्रापि स एवार्थ: किं न स्यात्? उच्यते - पृथग्दृश इति। पृथक्शब्दप्रयोगबलादन्योर्थस्तस्य, तर्हि स क इत्युच्यते। भगवद्दर्शनविरोधि यद्दर्शनं तत्पृथग्दर्शनम्। "भगवद्दर्शनाद्यस्य विरोधाद्दर्शनं पृथक्" (भविष्यत्पुराणे) इत्यादे:। "स्वरूपभेदो हि परजीवयो: जीवगोमिथ:। परस्परेण वस्तूनां विशेष: शास्त्र दर्शित:" (भविष्यत्पुराणे) इत्यादे:। उक्त एवार्थ इति सन्तोष्टव्यम्॥ २६ - २८॥

---

1. Ma adds बुद्ध्या

[1]तस्यां रात्र्यां [2]व्यतीतायां कंस आहूय मन्त्रिण:।
तेभ्य आचष्ट तत्सर्वं यदुक्तं योग[3]मायया॥ २९॥
आकर्ण्य [4]भर्तुर्गदितं तमूचुर्देवशत्रव:।
देवान् प्रति कृतामर्षा दैतेया नातिकोविदा:॥ ३०॥
एवं चेत्तर्हि भोजेन्द्र पुरग्रामव्रजादिषु।
अनिर्दशान्निर्दशांश्च हनिष्या[5]मोऽद्य वै शिशू[-5]न्॥ ३१॥
किमुद्यमै: करिष्यन्ति देवास्समरभीरव:।
नित्यमुद्विग्नमनसो ज्याघोषैर्धनुषस्तव॥ ३२॥
अस्यतस्ते शरव्रातै: हन्यमानास्समन्तत:।
जिजीविषव उत्सृज्य पलायनपरा ययु:॥ ३३॥

1. M. adds श्रीशुक उवाच 2. K,W. अती° 3. B,G,J,M निद्रया 4. V भर्तृग° 5- -5. M. बालकान्

**श्रीध०** **आकर्ण्येति।** नातिकोविदाः दृष्टमात्रमतयः, [1-] न दीर्घदर्शिनाः [-1] ॥ २९, ३० ॥

**एवमिति।** न निर्गतानि दश दिनानि येषां तान्, अन्यांश्च ॥ ३१, ३२ ॥

**अस्यत** इति। अस्यतः विध्यतः [2] सतः, उत्सृज्य रणं त्यक्त्वा ॥ ३३ ॥

1- -1. V omits 2. V omits सतः

**वीर०** अथ प्रभाते मन्त्रिण आहूय कंसस्तेभ्यो मन्त्रिभ्यो योगमायोक्तमाह ॥ २९ ॥

ततः कंसोक्तमाकर्ण्य [1] देवानां शत्रवः दैतेयाः मन्त्रिणः देवान् [2] प्रति उद्दिश्य कृतः अमर्षो यैः तथाभूताः नातिकोविदाः कार्याकार्यविवेकरहिताः, तं कंसमूचुः ॥ ३० ॥

तदेवाह - **एवमित्यादिना।** एवं दुर्मन्त्रिभिः इत्यतः प्राक्तनेन। एवं चेत् माययैवमुक्तं चेत् तर्हि हे भोजेन्द्र! पुरादिषु अनिर्दशान् अनतिक्रान्तदशदिनान् निर्दशांश्च शिशून् अद्य हनिष्यामः ॥ ३१ ॥

एवं चेत् समरभीरवो देवाः किमस्मान् उद्यमैः प्रयत्नैः करिष्यन्ति न किञ्चिदपि, किञ्च ते तव धनुषो ज्याघोषैरेव नित्यमुद्विग्नं भीतं मनो येषां तथाभूताः ॥ ३२ ॥

अस्यतः शरान् क्षिपतस्तव शरसङ्घैः हन्यमानाः जीवितुमिच्छवः पलायनमेव परं रक्षणोपायो येषां तथाभूताः उत्सृज्य स्वस्थानानीति शेषः समन्ततो ययुः ॥ ३३ ॥

1. B adds ते 2. K,W. omit प्रति

**विज०** अनिर्दशन् अनिर्गतानि दशाहानि यैस्ते तथा तान् अनतिक्रान्तदशाहान् इत्यर्थः। निर्दशान् अतिक्रान्तदशाहान् ॥ २९-३२ ॥

अस्यतः क्षिपतः ॥ ३३ ॥

केचित्प्राञ्जलयो भीता[1] न्यस्तशस्त्रा दिवौकसः।
मुक्तकच्छ[2]शिखाः केचिद्भीताः स्म इति वादिनः॥ ३४॥

न त्वं विस्मृतशस्त्रास्त्रान् विरथान् भयसंव्रतान्[3]।
हंस्यन्या[4]सक्तवि[5-]मुखान्[-5] भग्नचापा[6]नयुध्यतः॥ ३५॥

किं क्षेमशूरैः विबुधैरसंयुगविकत्थनैः।
रहोजुषा किं हरिणा शम्भुना वा वनौकसा॥ ३६॥

किमिन्द्रेणाल्पवीर्येण ब्रह्मणा वा तपस्यता।
तथापि देवास्सापत्न्यान्नोपेक्ष्या इति मन्महे।
ततस्तन्मूलखनने नियुङ्क्ष्वस्माननुव्रतान्॥ ३७॥

यथाऽऽमयोऽङ्गे समुपेक्षितो नृभिः न शक्यते रुढपदश्चिकित्सितुम्।
यथेन्द्रियग्राम उपेक्षितस्तथा रिपुर्महान्[7] बद्धबलो न चाल्यते॥ ३८॥

मूलं विष्णुर्हि देवानां यत्र धर्मस्सनातनः।
तस्य च ब्रह्मगोविप्राः तपोयज्ञास्सदक्षिणाः॥ ३९॥

---

1. B.G.J. दीनाः, V. भीत्या 2. M. कक्ष्या° 3. B.G.J. संवृ° 4. V °व्या° 5- -5. M मनसः 6. V. दर्पा° 7. M° र्महालब्धबलो

**श्रीध०** **नेति।** अन्यासक्तान्। विमुखांश्चेति न हंसि न हिनत्सि॥ ३४, ३५॥

**किमिति।** क्षेमे निर्भयदेशे। शूरैः संयुगादन्यत्र विकत्थनं प्रौढवादो येषां तैः। ननु हरेर्बिभेमि शम्भोश्चेति चेत्तत्राहुः। रहोजुषेति। सर्वदाप्यन्तःप्रविष्टेन क्वचिदपिबहिरदृष्टेनेत्यर्थः। पुरुषप्रवेशरहितमिलावृतवर्ष[1] वनमोको यस्य। तेन शम्भुना वा॥ ३६॥

**किमिति।** यद्यप्युद्यमैः देवाः न किञ्चिदपि कर्तुं समर्थाः तथापि नीतिरनुवर्तितव्येत्याहुः[2] - तथापीति॥ ३७॥

**यथेति** । रूढपदः बद्धमूलः॥ ३८॥

**मूलमिति।** देवानां मूलं विष्णुः। स च यत्र धर्मः तत्राऽऽस्ते। धर्मस्य च मूलं [3-]ब्रह्मगोविप्राः वेदगोब्राह्मणाः[-3]॥ ३९॥

1. B.J. omit वर्ष 2. B.J. सर्तव्ये° 3- -3. B.J. वेपादय इति॥ ३९॥

**वीर०** केचिच्च दिवौकसो देवा भीता: त्वत्त इति शेष:। अत एव त्यक्तानि शस्त्राणि यै: तथाभूता:, केचिच्च मुक्ता: विश्लथा: कच्छा: शिखाश्च येषां, मुक्तकक्ष्यशिखा इति पाठे मुक्तग्रन्थय: शिखा येषां तथाभूता: भीता: स्म इति वदन्त: प्राञ्जलय: तस्थुरिति शेष:॥ ३४॥

अथापि त्वं विस्मृतानि शस्त्राण्यस्त्राणि च यै: मन्त्रशिक्षोपबृंहितान्यस्त्राणि, इताराणि तु शस्त्राणीति विवेक:। विगता रता एषां तान् भयात् सन्नतान् कृतप्रणामान् न हंसि न हतवान् शरणागतरक्षकत्वादिति भाव:। तथा अन्यासक्तान् युद्धं विहाय प्रयोजनान्तरासक्तान् पराङ्मुखांश्च भग्नचापान्[1] अत एव अयुध्यश्च देवान्न हंसि॥ ३५॥

क्षेमे स्वगृह एव शूरै: संयुगात् इतरत्र विकत्थनं प्रागल्भ्यवचनं येषां तै:, विबुधै: किं, न किञ्चिदपि कर्तुं शक्यमित्यर्थ:। आस्तां तावत् सामान्यदेवानां वार्ता देवश्रेष्ठै: हरिहरेन्द्रहिरण्यगर्भैरपि न किञ्चिदित्याहु: - रह इति। रहोजुषा त्वद्भयात् निर्जनदेशसेविना यद्यपि तै: किञ्चिदपि न कर्तुं शक्यं, तथाऽपि सापत्न्यात् शत्रुत्वात् देवा नोपेक्षणीया इति मन्यामहे। तत: तन्मूलखनने सपत्नमूलोन्मूलने निमित्ते अनुव्रतान् भृत्यान् अस्मान् नियुङ्क्ष्व आज्ञापय॥ ३६, ३७॥

सापत्न्यात् नोपेक्ष्या इत्येतदेव सदृष्टान्तमुपपादयन्ति - **यथेति** । यथा अङ्गे शरीरे समुत्पन्न आमयो व्याधि:[2] नृभि:[3] उपेक्षित: अत एव रूढमूल:[4] चिकित्सितुं प्रतिकर्तुं न शक्यते यथा च तावत् योगिभि: उपेक्षित: इन्द्रियग्राम: ततो दुर्निग्रह: तथा रिपुरपि तावदुपेक्षित: ततो रूढबल: चालयितुमपि न शक्यते॥ ३८॥

तर्हि किं तत् सपत्नानां मूलं यद्विनाशितव्यमित्यत्राहु: - **मूलमिति** । सनातन: अनादिनिधनाविच्छिन्नसम्प्रदायवेद[5]बोधितो धर्म: वर्णाश्रमानुगुणो यत्र विष्णौ यत् विष्ण्वधीन: स विष्णु: देवानां मूलं रहस्सेवी स कथं छेत्तव्य इत्यत्राहु: तस्य चेति। ब्रह्म वेद: गावश्च विप्राश्च गोविप्रा: तप इति पृथक्पदं ब्रह्मादय:, तस्य विष्णोर्मूलमित्यनुषङ्ग:॥ ३९॥

1. B. adds भग्नधनुष्कान् 2. B. adds तावत् 3. B. adds यत्नं मूलोन्मूलने तु 4. B. adds तत: 5. B. adds उपवेद

**विज०** कक्ष्या काञ्ची। "कक्ष्याकरिवरत्रायां काञ्च्यां गेहे प्रकोष्ठके" (वैज. को. 6-2-7) इति यादव:॥ ३४॥

क्षेमशूरै: [1]निर्भयस्थानं प्राप्य शूरै:[-1], असंयुगविकत्थनै: रणादन्यत्रविविधजल्पै: रहोजुषा एकान्तसेविना वेदशिरप्रतिपाद्येन वा, वनौकसा कैलासशिखरकान्तारमन्दिरेण भासामाश्रयेण तेजोमूर्तिनित्यर्थ;। "ओकसी मन्दिराश्रयौ" (वैज. को. 6-3-4) इति यादव:। "वनं भास्यप्सुकानने" (वैज. को. 6-3-31) इति च॥ ३५,३६॥

तेषां मूलोत्पाटने॥ ३७॥

अङ्गे शरीरे, आमयः कुष्ठादिः, रूढं पदं व्याप्तं स्थानं येन सः॥ ३८॥

कः साक्षात् मूलमित्यत्राह **मूलमिति**। तस्य विष्णोर्मूलम्॥ ३९॥

---

1- -1. B.M omit

**तस्मात् सर्वात्मना राजन् ब्राह्मणान् ब्रह्मवादिनः।**
**तपस्विनो यज्ञशीलान् गाश्च हन्मो हविर्दुघाः[1]॥ ४०॥**

**विप्रा [2]वेदाश्च भावश्च तपस्सत्यं दमश्शमः।**
**श्रद्धा दया तितिक्षा च क्रतवश्च हरेस्तनूः[3]॥ ४१॥**

**स हि सर्वसुराध्यक्षो ह्यसुरद्विड्गुहाचरः[4]।**
**तन्मूला देवतास्सर्वाः सेश्वरास्सचतुर्मुखाः।**
**अयं [5]वै तद्वधोपायो यदृषीणं विहिंसनम्॥ ४२॥**

**श्रीशुक उवाच**

**एवं दुर्मन्त्रिभिः [6-]कंसः सह[-6] सम्मन्त्र्य दुर्मतिः[7]।**
**ब्रह्महिंसा हितं मेने कालपाशाऽऽवृतोऽसुरः॥ ४३॥**

**सन्दिश्य साधुलोकस्य कदने कदनप्रियान्।**
**कामरूपधरान् दिक्षु दानवान् गृहमाविशत्॥ ४४॥**

**ते वै रजःप्रकृतयः तमसा [8]मूढचेतसः।**
**सतां विद्वेषमाचेरुरारादागतमृत्यवः॥ ४५॥**

**आयुश्श्रियं यशो धर्मं लोकानाशिष एव च।**
**हन्ति श्रेयांसि सर्वाणि [9]पुंसो महदतिक्रमः॥ ४६॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे पूर्वार्धे चतुर्थोऽध्यायः॥ ४॥

1. K.W. °ह: 2. M. देवाश्च 3. B.V °नु: 4. B.G.J.V. °शय: 5. M. च; K.W. हि 6- -6. V. साकं कंस: 7. V °द: 8. K.W. रूढ 9. W. पुंसां

**श्रीध०** **स** इति। किञ्च विप्रादयो हरेरेव तनवो यस्मात् तस्मात् अयमेवोपाय इत्याहु: - अयमिति ॥४० - ४४॥

**त** इति। आरात् समीपमागतो मृत्युर्येषां ते॥४५॥

सतां विद्वेषो न मृत्युमात्रहेतु:, किन्तु बह्वनर्थकारीत्याह - **आयुरिति** ॥४६॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां चतुर्थोऽध्याय:॥४॥

**वीर०** तस्मात् हे राजन्! सर्वात्मना नानोपायेन ब्रह्मवादि त्वादिगुणयुक्तान् ब्राह्मणान् हविस्सान्नाय्यं दुहन्तीति तथा ता गाश्च हन्म: हनिष्याम:॥४०॥

विप्रादयो हरेस्तनू: शरीरम्॥४१॥

स हि विष्णु: सुराणाम् अध्यक्षोऽधिपति:। असुरान् द्वेष्टीति तथाभूतश्च। हृदयगुहानिगूढस्स विष्णुरेव मूलं यासां तथाभूता:। सेश्वरा: इन्द्रादिलोकपालैस्सहिता: चतुर्मुखरुद्रसहिताश्च सर्वा देवता: एवं सति अयमेव तस्य विष्णो: वधोपाय:। कोऽसौ यदृषीणां विहिंसनमित्येष: यद्वा तद्वधोपाय: देववधोपाय: ऋषिविहिंसनेन तच्छरीरे विष्णौ नष्टे सति तन्मूला देवा: स्वयमेव नङ्क्ष्यन्तीति भाव:॥४२॥

इत्थं दुर्मन्त्रिभिस्सह सम्मन्त्र्य आलोच्य स दुर्मति: असुर: कंस: कालपाशेन यमपाशेन आवृत: अ[1]त एव[-1] ब्रह्म हिंसामेव हितं मेने अमन्यत॥४३॥

तत: साधुजनस्य कदने उपद्रवे निमित्ते तत्कदनमेव प्रियं येषां तान् कामरूपधरान् दानवान् दिक्षु आज्ञाप्य स्वयं गृहम् आविवेश॥४४॥

ततस्ते दानवा: रजसा विक्षिप्तस्वभावा: तमसा विमूढं आवृतं चेतो येषाम्। अत एव ते सतामेव विद्वेषणमप्रीतिं दु:खमिति यावत्, चेरु: चक्रु:। कथम्भूता:? सन्निहितमृत्यव: सद्विद्वेषणस्य मृत्युसान्निध्यावहत्वादिति भाव:॥४५॥

न केवलं मृत्युमेव आवहन्ति अपि तु आयुरादीन्यपि हन्तीत्याह - **आयुरिति।** महदतिक्रम: महाद्विषयापचार: पुंसामपचरताम् आयुरादीनि सर्वाणि श्रेयांसि हन्ति नाशयति। श्री: सम्पत्ति: धर्म: पुण्यं, लोका: [2]धर्मप्राप्यफलानि, यद्वा देहानुबन्धिनो जना: आशिष: कामा: ॥ ४६ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां चतुर्थोऽध्याय: ॥ ४ ॥

---

1- -1. K.W. omit 2. W. धर्म्य।

**विज०** हन्म: हनिष्याम:, हविर्दुघा: यज्ञयोग्यं घृतं दुहन्ती:। छन्दसि हकारस्थाने घकार: ॥ ४० - ४३।

आरात् समीपे ॥ ४४, ४५ ॥

विष्ण्वादि महदतिक्रमफलमाह — **आयुरिति** ॥ ४६ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीविजयध्वजतीर्थ विरचितायां पदरत्नावल्यां
टीकायां चतुर्थोऽध्याय: ॥ ४ ॥

(विजयध्वजरीत्या पञ्चमोऽध्याय:)

# पञ्चमोऽध्यायः

## (विजयध्वजरीत्या षष्ठोऽध्यायः)

### —: नन्दव्रजवृत्तान्तः :—

श्रीशुक उवाच

नन्द स्त्वात्मज उत्पन्ने जाता ह्लादो महामनाः।
आहूय विप्रान् [1]वेदज्ञान् स्नात श्शुचि रलङ्कृतः॥ १॥

वाचयित्वा स्वस्त्ययनं जातकर्माऽऽत्मजस्य वै।
कारयामास विधि[2]वत् पितृदेवाऽर्चनं तथा॥ २॥

धेनूनां नियुते प्रादात् विप्रेभ्य स्समलङ्कृ[3]ते।
तिलाद्रीन्सप्त रत्नौ[4]घ शातकु[5]म्भाम्बरावृतान्॥ ३॥

कालेन स्नान शौचाभ्यां संस्कारै स्तपसेज्यया।
शुध्यन्ति दानै स्सन्तुष्ट्या [6]द्रव्यण्यात्माऽऽत्मविद्यया॥ ४॥

सौमङ्गल्यगिरो विप्राः सूतमागधवन्दिनः।
गायकाश्च जगु र्नेदुः भेर्यो दुन्दुभयो मुहुः॥ ५॥

[7]व्रजस्सम्मृष्टसंसिक्तद्वाराजिर गृहान्त[8]रः।
चित्रध्वजपताकास्रक् [9]चेल पल्लव तोर[10]णैः॥ ६॥

गावो[11-]वृ षाश्च वत्सा[-11] श्च हरिद्रातैलरूषिताः।
विचित्रधातु बर्हस्रग्वस्त्रकाञ्चनमालिनः॥ ७॥

महार्हवस्त्राभर[12]ण कञ्चुकोष्णीषभूषिताः।
गोपा स्समाययू राजन् नानोपायनपाणयः॥ ८॥

---

1. B.M. दैवज्ञान् 2. K.W. ०ना 3. M. ०तः 4. A.M. घान् 5. A.B. कौ० *This verse is not found in M. edn. 6. V. मन आत्माऽऽ०

7. M. प्रजाः 8. M.०राः 9. A.B.G.M. चै० 10. M. ०णाः 11- -11. B.G. वृषा वत्सतरा; V हृष्टाश्च वत्साश्च 12. V. °णाः

## श्रीधरस्वामिविरचिता भावार्थदीपिका

पञ्चमे जातकं नन्द स्सूनोः कृत्वा महोत्सवम्।
गत्वाऽथ[1] मधुरां प्राप वसुदेवाऽऽगमोत्सवम्॥

**नन्द** इति। महामनाः उदारचित्तः॥ १, २॥

**धेनूना** मिति। नियुते द्वे लक्षे सप्त तिलपर्वतांश्च प्रादात्। कथम्भूतान् रत्नौघैः रत्नसमूहैः, शात कुम्भाम्बरैः[2] सुवर्णरसाक्तैः वस्त्रैः[3] आवृतान्॥ ३॥

द्रव्याणां गोहिरण्यादीनां मध्ये केषाञ्चि द्दानै रेव शुद्धिः [4-]यथा तथा[-4] अन्नदानादियुक्त जातकर्मादि [5-]स्नानेन देहादि[-5] संस्कारै रेव गर्भाणां शुद्धिरिति दर्शयितुं प्रतिनियतानि शोधकानि दृष्टान्तत्वेनोदाहरति - **कालेनेति।** कालेन भूम्यादि। स्नानेन देहादि। शौचेन अमेध्यलिप्तादि। संस्कारैः गर्भादि। तपसा इन्द्रियाणि इज्यया ब्राह्मणादि। दानै र्द्रव्याणि सन्तुष्ट्या मनः आत्मा तु आत्मविद्यया [6-]शुध्यति[-6]॥ ४॥

**सौमङ्गल्येति।** सौमङ्गल्यगिरः स्वस्तिवाचका विप्रादयो बभूवुः। तत्र — "सूताः पौराणिकाः प्रोक्ता मागधा वंशशंसकाः। वन्दिन स्त्वमलप्रज्ञाः प्रस्तावसदृशोक्तयः" इति[7]॥ ५॥

व्रज इति। सम्मृष्टानि [8-]संलिप्तानि[-8] संसिक्तानि च [9-]द्वारादिकानि[-9] अजिराणि[10] अङ्गणानि गृहान्तराणि गृहमध्यानि च यस्मिन् सः तथा। चित्रध्वजेषु पताकानां स्रजश्च [11-]चैलानि च[-11] पल्लवतोरणानि च तै र्भूषिताः॥ ६॥

**गाव** इति। [12-]हरिद्रातैलैः[-12] रूषिताः लिप्ताः विचित्रा[13] धातवश्च बर्हस्रजश्च वस्त्राणि च काञ्चनमालाश्च अलङ्कारतया विद्यन्ते येषां ते तथाभूताः, गवादयो बभूवु रित्यर्थः॥ ७, ८॥

---

1. V. तु 2. A. B. कौ० 3. A.B. अम्बरैश्च 4- -4. V. यथा 5- -5. A.B. Omit 6- -6. B.V. इति 7. B omits इति 8. 8 A. B omit 9- -9. B.V. द्वाराणि 10. V. omits अजिराणि 11. -11 A. B चैल० 12- -12. V. omits 13. B. ०त्र०

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं "तस्यां रात्र्यां व्यतीतायाम्" (भाग 10-4-29) इत्यादिना मधुरायां प्राभातिकवृत्तान्तः उक्तः। अथ व्रजे तद्वृत्तान्तमाह - नन्दस्तु इत्यादिना "तत आरभ्य" (भाग 10-5-17) इत्यतः प्राक्तनेन। आत्मजे उत्पन्ने सति जात आह्लादो यस्य महामना औदार्यप्रवणं मनो यस्य। तथाभूतो नन्दो वेदज्ञानब्राह्मणान् आहूय स्वयं स्नातः[1] शुचि रलङ्कृतश्च॥ १॥

[2]ततः स्वस्त्यनं माङ्गलिकं सूक्तं वाचयित्वा यथाविधि जातकर्म कारयामास, तथा पितॄणां देवानां च अर्चनं कारयामास॥ २॥

ततः सम्यगलङ्कृते द्वे धेनूनां नियुते लक्षे विप्रेभ्यः प्रायच्छत् तथा रत्नौघैः शात[3]कुम्भाम्बरैः सुवर्णरजताङ्कचस्त्रैः सुवर्णनिष्कैः अम्बरैर्वा दक्षिणार्थं निहितैः आवृतान् सप्त तिलपर्वतान् प्रादात्॥ ३॥

किमर्थमेवं स्नानादिकर्मा[4]ऽकरोत् कारयामास [5]अदाच्चेत्यत्राऽऽह - **कालेनेति।** आत्मा आत्मविद्ययेति दृष्टान्तार्थम्। यथा आत्मविद्यया परमात्मोपासनया आत्मा प्रत्यगात्मा [6]विशुध्यति हेयगन्धरहितो भवति तथा द्रव्याण्यपि कालादिभिरेव शुध्यन्तीत्यभिप्रायेण तद्विशुद्ध्यर्थं अकरोदियर्थः। द्रव्यशब्दोऽत्र[7] अनुबन्धिगेहदेहापत्य देवतापशुहिरण्यादि वित्तधान्येन्द्रियाभिप्रायकः। तत्र कालेन दशादिनात्मकेन गेहस्य शुद्धिः स्नानशौचाभ्यां देहस्य, जातकर्मादि संस्कारैः अपत्यस्य, तपसा मन्त्र[8]जपेनेज्यया च गृहदेवतायाः दानैः पशुहिरण्यधनधान्यानां, सन्तुष्ट्या मनसः इति विवेकः॥ ४॥

तदा विप्राः सौमङ्गल्यगिरः स्वस्तिपाठका बभूवुः। सूतादयो गायकाश्च जगुः पुराणादीनीति शेषः। तत्र सूताः पौराणिकाः, मागधाः वंशावलीपाठकाः, वन्दिनः स्तुतिपाठकाः, भेर्यो दुन्दुभयश्च मुहुर्मुहुर्नेदुः॥ ५॥

सम्मृष्टानि सम्मार्जिन्या शोधितानि संसिक्तानि चन्दनोदकादिभिः सम्यक् स्नापितानि द्वाराणि अजिराणि अङ्गणानि गृहान्तराणि गृहमध्यानि च यस्मिन् तथाभूतो व्रजो बभूव। तथा विचित्रध्वजादिभिः, अलङ्कृत इति शेषः। ध्वजादीना मितरेतरयोगद्वन्द्वः। चित्रपदं प्रत्येकान्वयि द्वन्द्वादौ श्रुतत्वात्। ५॥

गवादयो हरिद्रातैलाभ्यां रूषिताः उपलिप्ताः विचित्राः गैरिकादिधात्वादयः येषां सन्तीति तथाभूता बभूवुः। तत्र बर्हस्रजो मयूरपिञ्छमालाः महार्हाण्यनर्घाणि वस्त्रादीन्येव भूषणाण्यलङ्कारा येषाम्। भूषिता इति पाठे तै भूर्षिता अलङ्कृताः, उपायनानि पाणिषु येषां तथा भूता गोपाः हे राजन्! समाययु राजग्मुः॥ ७, ८॥

---

1. W स्नात्वा 2. W. omits ततः 3. A.B. कौ° 4. W. °मक० 5. A.B. प्रा० 6. A.B. omit वि 7. W. adds आत्मा 8. A.B. जा०

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

भगवदवतार हृष्टमनसो नन्दस्य भगवद्भक्त्यतिशयेन चित्तविश्रमणेन सद्भक्तानां भगवद्भक्तिः चन्द्रोदय इव समुद्रवृद्धिः स्वाभाविकीति प्रकाश्यते अस्मिन्नध्याये। जाताह्लादः प्रादुर्भूतानन्दः॥ १॥

स्वस्त्ययनं माङ्गल्यवचनं तथा पितृदेव गन्धर्वाद्यर्चनं कारयामास नन्दयामास॥ २॥

शातकुम्भान्तरावृतान्[2] गर्भीकृत शातकुम्भान्॥ ३, ४॥

स्वकृतस्तुतिपाठकाः सूताः, परकृतस्तुति जीविनो मागधाः, प्रबन्धस्तुतिपाठकाः वन्दिनः॥ ५॥

द्वारञ्च अजिरञ्च गृहान्तरञ्च द्वाराजिरगृहान्तराणि सम्मृष्टानि संशोधितानि संसिक्तानि चन्दनजलादिना प्रोक्षितानि द्वारादीनि यासां ता स्तथा। चित्र ध्वजपताकया स्रक्चैलपल्लवैश्चैव युता स्तोरणाः यासां ता स्तथा॥ ६॥

विचित्रधातवः बर्हस्रजः पिच्छमाला[3] वस्त्राणि काञ्चनमालाश्च येषां सन्तीति विचित्रधातुबर्हस्रग्वस्त्रकाञ्चनमालिनः॥ ७॥

महार्हाणि महायोग्यानि वस्त्राणि आभरणानि कञ्चुकानि कवचानि उष्णीषाणि शिरोवेष्टनवस्त्राणि भूषणानि येषां ते तथा॥ ८॥

---

1. A.B. ०णे स० 2. A.B. कौ० 3. A.B. पिञ्छ

**गोप्यश्चाऽऽकर्ण्य मुदिता यशोदायास्सुतोद्भवम्[1]।**
**आत्मानं भूषयाञ्चक्रुः वस्त्राऽऽकल्पाञ्जनादिभिः॥ ९॥**

**नव कुङ्कुम किञ्जल्क मुख पङ्कज भूतयः[2]।**
**बलिभि स्त्वरितं जग्मुः पृथुश्रोण्यश्चलत्कुचाः॥ १०॥**

**गोप्य स्सुमृष्टमणिकुण्डलनिष्क कण्ठचः चित्राम्बराः पथि शिखाच्युतमाल्यवर्षाः।**
**नन्दालयं सवलया व्रजती विरेजुः व्यालोलकुन्तल[3] पयोधरहारशोभाः॥ ११॥**

**ता आशिषं[4] प्रयुञ्जाना श्चिरं पाहीति बालके[5]।**
**हरिद्राचू[6-]र्णतैलाद्भिः[-6] सिञ्चन्त्यो[7][8]ऽजन मुज्जगुः॥ १२॥**

**अवाद्यन्तविचित्राणि वादित्राणि महोत्सवे।**
**कृष्णे विश्वेश्वरे[9]ऽनन्ते न[10-]न्दव्रज मुपेयुषि[-10]॥ १३॥**

**गोपाः परस्परं हृष्टाः दधिक्षीरघृताम्बुभिः।**
**आसिञ्चन्तो विलिम्पन्तो नवनीतैश्च चिक्षिपुः॥ १४॥**

नन्दो महामना स्तेभ्यो वासोऽलङ्कारगोधनम्।

★ (ददौ प्रीतमनास्तत्र पुत्रजन्मसुखैधितः।)
सूत मागध वन्दिभ्यो येऽन्ये विद्योपजीविनः।
तै स्तैः कामै रदीनात्मा यथोचित मपूजयत्॥ १५॥

---

1. V °दयम् 2. V. राजयः 3. A,B,G,M कुण्डल 4. A,B,G,M °षः 5. V. पा° 6- -6. W. तैलचूर्णाद्भिः 7. W. °त्यो 8. A,B,G,K,W जन° 9. K,W. °रैंऽशेन 10- -10. A,B,G नन्दस्य व्रज मागते। ★ This additional half verse is found only in V.Edn.

**श्रीध०** **गोप्य** इति। [1-] अ कल्पाः अलङ्काराः [-1] ॥ ९॥

**नवेति।** [2-] न वकुङ्कुमकिञ्जल्कैः मुखपङ्कजेषु भूतिः श्रीः यासां ताः [-2] ॥ १०॥

★ **गोप्य** इति। सुमृष्टानि [3-] उज्ज्वलितानि [-3] मणिमयानि कुण्डलानि यासां ताः, [4] निष्काः पतकानि कण्ठेषु यासां ताः, शिखाभ्यः च्युतानि माल्य वर्षाणि यासां ताः नन्दालयं व्रजतीः व्रजन्त्यः [5-] आर्षत्वात् प्रथमार्थे द्वितीया [-5]। पथि विरेजुः। सवलयाः कङ्कण भूषिताः। [6-] स बलय इति पाठे गृहीतविविधोपायना इत्यर्थः [-6] व्यालोलैः [7] कुन्तलादिभिः शोभा यासां ताः॥ ११॥

★ **ता** इति। जनं सिञ्चन्त्यः अजनं [8-] भगवन्तं प्रति [-8] उज्जगुरिति वा॥ १२ - १४॥

**नन्द** इति। तेभ्यश्चाप्रादात् यथोचित मन्यानपि अपूजयत्॥ १५॥

---

1- -1. B. आकल्पो भूषणम् 2- -2. B omits ★ The commentary on this 11th verse appears in a shorter form in B edn thus कुण्डलं कर्णभूषणं, निष्कं कण्ठाभरणं सबल्यः सोपहाराः॥ ११॥ 3- -3. V. omits 4. V. निष्कानि 5- -5. A omits 6- -6. A. omits 7. A. कुण्ड° ★ This portion of the commentary is not found in B edn 8- -8. A. omits.

**वीर०** तथा गोपानां स्त्रियोऽपि यशोदाया स्सुतोद्भव[1] माकर्ण्य मुदिता हृष्टा वस्त्रादिभिः आत्मान मलञ्चक्रुः। आकल्पा भूषणानि आदिशब्देन चन्दनलेपादि सङ्ग्रहः॥ ९॥

नवाः कुङ्कुमकिञ्जल्का येषु तेषां मुखपङ्कजानां भूतिः श्रीः शोभा यासां ताः। कुङ्कुमानां किञ्जल्कत्वरूपणेन मुखानां पङ्कजत्वरूपणं पुष्कलम्। पृथुश्रोण्यः पृथुजघनाः, चलन्तौ कुचौ यासां ताः बलिभिः उपायनैः सहिताः त्वरितं यथा तथा जग्मुः॥ १०॥

सम्मृष्टानि निर्मलीकृतानि मणिकुण्डलानि यासां ताश्च, निष्काः पदकाख्यभूषणानि कण्ठे यासां ताः इति बहुव्रीहिद्वयगर्भकर्मधारयः। चित्राण्यम्बराणि यासां, पथि शिखाभ्यः च्युतानां गलितानां माल्यानां पुष्पाणां वृष्ट्यो यासां, व्यालोलानां गतिरभसेन चलतां कुण्डलादीनां शोभा यासां ताः वलयैः सहिताः नन्दस्याऽऽलयं प्रति व्रजतीः व्रजन्त्यो विरेजुः॥ ११॥

ताः गोप्यः पाहीति, अस्मा निति शेषः। बालके आशिषः प्रयुञ्जानाः हरिद्रा तैल चूर्णैः हरिद्रायाः तैलमिश्रैः चूर्णैः, अद्भिश्च। यद्वा, हरिद्रया तैलेन चूर्णैः सुधाख्यद्रव्य चूर्णैः अद्भिः दधिमिश्रोदकैश्च परस्परं जनं सिञ्चन्त्य उज्जगुः॥ १२॥

अंशेन बलरामेण सह विश्वेश्वरे श्रीकृष्णे नन्दव्रज मुपेयुषि सति तस्मिन् महोत्सवे विचित्राणि वाद्यानि अवाद्यन्त॥ १३॥

गोपास्तु हृष्टाः परस्परं दध्यादिभिः आसिञ्चन्तो नवनीतै र्विलिम्पन्तश्च ते चिक्षिपुः॥ १४॥

नन्दस्तु विपुलकीर्तिः अत एव तेभ्यः सूतादिभ्यः अन्ये च ये विद्योपजीविनः भरतशास्त्रादिविद्ययोपजीवन्तीति तथा, भूतेभ्यश्च वस्त्रादिकं ददौ , तैस्तै स्तेषा मभीष्टैः उच्चावचैः कामैः यथोचित मदीनात्मा उदारमनाः नन्दः सम्य गपूजयत्॥ १५॥

---

1. W. °दय°

**विज०** आकल्प आभरणम्॥ ९॥

नवकुङ्कुमकिञ्जल्कानि अभिनवकुङ्कुम केसराणीव मुख पङ्कजभूतयः मुखकमलश्रियो यासां ता स्तथा। बलिभि र्युताः, पृथु श्रोण्यः विशालकटितटाः॥ १०॥

व्रजतीः व्रजन्त्यः, लोलत्वं कुण्डलादीनां गमनविशेषेणं, सवलयाः सकटकाः सापाङ्गनयनाः॥ ११॥

हरिद्रा तैलचूर्णाद्भिः जनं सिञ्चन्त्यः अजनं कृष्णमिति केचित्॥ १२॥

उपेयुषि पाप्तवति॥ १३, १४॥

तेभ्यो गोपेभ्यः यथोचितं दत्त्वा अपूजयत्। येऽन्ये विद्योपजीविनः तेभ्यश्च यथोचितं दत्त्वा॥ १५॥

**विष्णो राराधनार्थाय स्वपुत्रस्योदयाय च।**
**रोहिणी च महाभागा नन्दगोपाभिनन्दिता[1]।**
**व्यचर दिव्यवासस्रक्कण्ठाभरणभूषिता॥ १६॥**

तत आरभ्य नन्दस्य व्रजस्सर्वसमृद्धिमान्।
हरे र्निवासात्मगुणै रमाक्रीड मभू न्नृप!॥ १७॥

गोपान् गोकुलरक्षायां निरूप्य मधुरां गतः।
नन्दः कंसस्य वार्षिक्यं करं दातुं कुरूद्वह॥ १८॥

वसुदेव उपश्रुत्य भ्रातरं नन्द मागतम्।
ज्ञात्वा दत्तकरं राज्ञे ययौ तदव[2]मो[3]चनम्॥ १९॥

तं दृष्ट्वा सहसोत्थाय देहः प्राण मिवाऽऽगतम्।
प्रीतः प्रियतमं दोर्भ्यां सस्वजे प्रेमविह्वलः॥ २०॥

पूजित स्सुखमासीनः पृष्ट्वाऽनामय मादृतः।
प्रसक्तधी स्स्वात्मजयो रिद माह विशाम्पते॥ २१॥

---

1. V. °दि 2. K,W. °प° 3. M. लोकनः

**श्रीध० तत** इति। हरे र्निवासेन ये आत्मनि [1]व्रजे गुणाः [2-]सर्वप्रि[-2]मास्पदत्वादयः तै रमायाः आक्रीडं विहारस्थानम्॥ १६,१७॥

**गोपानिति**। वार्षिक्यं प्रतिव[3]र्षं [4-]दातुं योग्यं धनादि[-4]॥ १८॥

**वसुदेव** इति। भ्रातरं सखायम्। तदवमोचनं तस्य नन्दस्य [5-]अवमोचनं[-5] [6-]निवासस्थानम्[-6]॥ १९॥

**तमिति**। सस्वजे आलिङ्गितवान्॥ २०॥

**पूजित** इति। आत्मजयोः रामकृष्णयोः॥ २१॥

---

1. B,V. omit व्रजे 2- -2. A,B. प्रियत्वादयः 3. A°र्ष° 4- -4. A,B. देयम् 5- -5. A,B omit 6- -6. A,B वसतिस्थानम्।

**वीर०** विष्णो र्गृहदैवतस्याराधनार्थं स्वपुत्रस्य अभ्युदयार्थं च दिव्यैः वासःप्रभृतिभिः भूषिता सती महा भाग्यवती रोहिणी नन्देनाऽन्यै र्गोपैश्चाऽभिनन्दिता व्यचरत्॥ १६॥

अथ नन्दवसुदेवयोः यादृच्छिकसमागमं विवक्षुः तावत् व्रजस्य सर्वसम्पत्समृद्धत्वमाह - **तत** इति। तत आरभ्य [1]भगवत्प्रवेशादारभ्य नन्दस्य व्रजः सर्वा स्समृद्धयो भोग्यभोगोपकरणादि समृद्धयोऽस्य सन्तीति तथा। हरेः निवासेन हेतुना ये आत्मगुणाः महोत्सवादयः तैः रमाक्रीडं लक्ष्मी विहारस्थानञ्च अभूत्। हे नृप! आक्रीडमिति नपुंसकत्व मार्षम्, सामान्ये नपुंसकं वा, क्रियाविशेषणं वा॥ १७॥

एवं सति कदाचित् नन्दो गोकुलरक्षायां निमित्ते व्रजरक्षार्थं गोपान् निरूप्या आदिश्य कंसस्य वार्षिक्यं वर्षे देयं करं स्वामिग्राह्यं भागं दातुं हे कुरूद्वह! मधुरां गतः॥ १८॥

तदा वसुदेवो[2] भ्रातर मागतं नन्द माकर्ण्य राज्ञे कंसाय दत्तः करो येन तज्ज्ञात्वा तस्य नन्दस्याऽपमोचनं[3] ययौ। अपमुच्यन्ते गमनोपयुक्तपरिकरबन्धा यत्रेति तदपमोचनं[5] अवतरणस्थानम्॥ १९॥

तमागतं वसुदेवं दृष्ट्वा प्राणं प्रति देह इव, यथा प्राण आगते सति देह उत्तिष्ठतित्वं तद्वत्। अनेन प्राणवन्निरतिशयप्रीतिविषयत्वं सूचितम्। सहसा आशु उत्थाय नितरां प्रीतः प्रेम्णा विह्वलश्च प्रियतमं वसुदेवं दोर्भ्यां सस्वजे आलिङ्गितवान्॥ २०॥

तत स्तेन पूजितो वसुदेवः सुखं यथा तथा आसीनं उपविष्टं नन्द मनामयं आरोग्यं आधिव्याधिराहित्यं आदरयुक्तः पृष्ट्वा हे विशांपते! आत्मजयोः प्रसक्तधीः आसक्तचित्तः इदं वक्ष्यमाण माह॥ २१॥

---

1. A,B °वतः प्र° 2. A, B. add अपि 3. A °व° 4. A,B. add निवेशस्थानं 5. A,B° व°

**विज०** किं फलमुद्दिश्य इति तत्राऽऽह - **विष्णोरिति** ॥ १६॥

रमाक्रीडं लक्ष्मीविहारस्थानं, क्रियाविशेषणं वा॥ १७॥

वार्षिक्यं प्रतिवत्सरं देयम्॥ १८॥

तदवलोकनः तस्य नन्दस्य दर्शनेच्छुः॥ १९-२१॥

**[1-]वसुदेव उवाच[-1]**

**दिष्ट्या भ्रात: प्रवयस इदानी मप्रजस्य ते।**
**प्रजाशाया निवृत्तस्य प्रजा यत्समपद्यत[2]॥ २२॥**

**दिष्ट्या संसार चक्रेऽस्मिन् वर्तमान: पुनर्भव:।**
**उपलब्धो[3] भवानद्य दुर्लभं प्रियदर्शनम्॥ २३॥**

**नैकत्र प्रियसंवास स्सुहृदां चित्र कर्मणाम्।**
**ओघेन व्यूह्यमानानां[4] प्लवानां स्रोतसो यथा॥ २४॥**

**कच्चित्पशव्यं निरुजं[5] भूर्यम्बुतृणवीरुधम्[6]।**
**बृहद्वनं तदधुना यत्राऽऽस्सेत्वं सुहृद्वृत:॥ २५॥**

**भ्रात र्मम सुत: कच्चिन्मात्रा सह भवद्व्रजे।**
**तातं भवन्तं मन्वानो भवद्भ्या मुपलालित:॥ २६॥**

**पुंस स्त्रिवर्गो[8] विहित: सुहृदो[9] ह्यनुभावित:[10]।**
**न तेषु क्लिश्यमानेषु त्रिवर्गोऽर्थाय कल्पते॥ २७॥**

---

1- -1. B,G,K,M,W omit 2. M °जायत 3. V. लब्धा 4. A °युह्य°; V °यूह° 5. A. वि° 6. V. भूम्य° 7. M,V °स्ते 8. A. °ऽभि 9. M °दां 10. M °वत:

**श्रीध० दिष्ट्येति।** पुन र्भव: पुन र्जात इव। तत्र हेतुगर्भं विशेषणम् संसार चक्रे वर्तमान इति[1] ॥ २२, २३॥

दुर्लभत्व मेवाऽऽह - **नैकत्रेति।** प्रियश्चाऽसौ संवासश्च प्रियसंवास:। हे प्रियेति वा। स्रोतस: ओघेन नीयमानानां प्लवन्तीति प्लवा: तृणकाष्ठादय: तेषां यथा एकत्र निवास:[2] नाऽस्ति तद्वत्॥ २४॥

**कच्चि** दिति। पशव्यादिरूपे तस्मिन्वने निर्दोषे गोपयोद्भयादि प्रभूतगोपिकास्तन्यादिना पुत्रक्षेम जिज्ञासया[3] पृच्छति "प्रसक्तधी: आत्मजयो:" (भाग. 10-5-22) इत्युक्तत्वात्॥ २५॥

**भ्रात** रिति॥ भवद्भ्यामुपलालित स्सन् कच्चित्, वर्तत इति शेष:॥ २६॥

पुत्रादर्शनक्लेशेना[4]ऽऽह - **पुंस इति।** सुहृदो बन्धून् प्रति अनुभावित: तदर्थं[5] [6-]सम्पादित:[-6] य स्त्रिवर्ग:, सहि पुंसो विहितो युक्त: शास्त्रेण वा प्रोक्त: न स्वमात्रपर्यवसित:। अत: तेषु क्लिश्यमानेषु [7-]स:[-7] त्रिवर्ग: अर्थाय न कल्पते सुखाय न भवतीत्यर्थ:॥ २७॥

---

1. A adds दुर्लभ मिति च 2. A,B. स्थिति: 3. B,V. विवक्षया 4. A,B. °शा° 5. B, V omit तदर्थं 6- -6. V सम्भावित: 7- -7. B,V omit

**वीर०** तदेवाऽऽह - 'दिष्ट्या भ्रात:!' इत्यादिभिष्षड्भि: हे भ्रात:! अप्रजस्य अनपत्यस्य सत: प्रवयस: वृद्धस्य, अत एव प्रजाशाया सन्तानवाञ्छाया निवृत्तस्य तव अधुना प्रजा पुत्र: समपद्यत जात इति यदेत द्दिष्ट्या! दिष्ट्येत्यानन्दद्योतक मव्ययम्। अय मस्माकं महानानन्दो जात इत्यर्थ:। एव मुत्तरत्राऽपि॥ २२॥

अस्मिन् संसारचक्रे वर्तमान: पुमान्, पुन र्भवतीति पुनर्भव: पुत्ररूपेणोत्पन्न इत्येतत् दिष्ट्या ! तदद्य भवान् मयोपलब्धो दृष्ट इत्येतत् दिष्ट्या। तत्र हेतु: - दुर्लभं हि प्रियस्य दर्शन मिति। यद्वा, अस्मिन् संसार चक्रे वर्तमान

एवाऽहं पुनर्भवः पुनर्जातः, कथञ्चित् कंसभयान्निवृत्तः। पुनर्जात प्राय इत्यर्थः। यद्वा अस्मिन्नेवजन्मनि मया पुनर्जात प्रायोण त्वं उपलब्ध इत्येतत् दिष्ट्या। शृङ्खलितस्य मम प्रियतममव दर्शनं दुर्लभं हि इत्यर्थः॥ २३॥

दुर्लभत्व मेवाऽऽह - **नैकत्रेति।** सुहृदा मेकत्र प्रियसंवासः प्रियश्चाऽसौ संवासश्च, प्रियेण प्रियगोष्ठी पूर्वकं सहवास इति वा। हे प्रियेति वा। न सुलभः। किन्तु दुर्लभ इत्यर्थः। यथा स्रोतसः प्रवाहस्य ओघेन पूरेण व्यूह्यमानानां इतस्ततो विविधं नीयमानानां अतएव चित्रकर्मणां विविधकर्मणां प्लवानां प्लवन्तीति तथा प्लवानां उत्प्लुत्य गच्छतां काष्ठा-दीना मेकत्र वासो दुर्लभः, तद्वत्॥ २४॥

यत्पशव्यं पशुभ्यो हितं निरुजं नीरोगं भूरिबहुलम्, अम्बु जलं, तृणादीनि[1] वीरुधो गुल्मानि च यस्मिन्, यास्मिंश्च त्वं सुहृद्भिः वृतः आस्से तद्वन मधुना कच्चि दास्ते! कच्चि दिति इष्टप्रश्न द्योतकमव्ययम्। कुशलमास्तेकिम्? तदस्माक मिष्ट मित्यर्थः॥ २५॥

तथा हे भ्रातः! मम सुतो बलरामः मात्रा रोहिण्या सह भवतो व्रजे कच्चित्? कथम्भूतः? भवन्त मेव तातं पितरं मन्वानः भवद्भ्यां दम्पतिभ्यां पुत्रवदुलालितः॥ २६॥

अथ सत्यपि सन्ताने तद्दर्शन स्पर्शनोपलालनाद्यभावात् निर्विण्णः किञ्चिल्लोकपरिपाट्याऽऽह - **पुंस** इति। त्रिवर्गः त्रयाणां धर्मार्थकामानां वर्गः, स यदि सुहृदो देहानुबन्धिनः प्रति अनुभावितः अनुभवं प्रापितः तर्हि स पुंसो युक्तः। यद्वा, विहितः शास्त्रानुमतः अन्यथा त्रिवर्गे स्वानुभवमात्रपर्यवसिते सति अत एव हेतोः सुहृत्सु क्लिश्यमानेषु च सत्सु त्रिवर्गोऽर्थाय प्रयोजनाय न कल्पते, व्यर्थ इत्यर्थः॥ २७॥

---

1. B. तृणानि

**विज०** प्रवयसः वृद्धस्य इदानीं प्रजा समजायतेति यत्, अतो दिष्ट्या॥ २२॥

इदञ्चैकं मङ्गल मभूदित्याह - **दिष्ट्येति।** पुनः पुन र्भवतीति पुनर्भवः, तस्मिन् किं चोद्य मिति तत्राऽऽह - दुर्लभ मिति॥ २३॥

दुर्लभत्व मुपपादयति - **नैकत्रेति।** प्रियसंवासः हर्षेण निवासः, प्रियैः संवासो वा। चित्रकर्मणां नानाविधपुण्यपापवतां, स्रोतसो नद्याः ओघेन प्रवाहेण व्यूह्यमानानां बिविधं नीयमानानां प्लवानां काष्ठादीनां, पोतानां वा॥ २४॥

कच्चिदिति सानुनयप्रश्नः। पशव्यं पशुहितं निरुजं नीरोगकरम्॥ २५॥

नन्दस्य कृष्णो मम सुत इति भ्रान्तिं निवारयति **भ्रात** रिति॥ २६॥

त्रिवर्गो धर्मादि: पुंस: विहित:, वेद इति शेष:, स सुहृदामनिमित्तं बन्धूनां जनाना मनुभावत: प्रभावा न्निश्चयाद्वा भवति। हि यस्मात्तस्मात् तेषु सुहृत्सु क्लिश्यमानेषु सत्सु त्रिवर्गोऽर्थाय प्रयोजनाय न कल्पते समर्थो न भवति॥ २७॥

[1-] नन्द उवाच [-1]

अहो ते देवकीपुत्त्रा: कंसेन बहवो हता:।
एकावशिष्टाऽवरजा कन्या साऽपि दिवङ्गता॥ २८॥

नूनं ह्यदृष्टनिष्ठोऽय मदृष्टपरमो जन:।
अदृष्ट मात्मन स्तत्त्वं यो वेद न स मुह्यति॥ २९॥

वसुदेव उवाच
करो वै[2] वार्षिको दत्तोराज्ञे दृष्टा वयञ्च[3] ते।
नेह स्थेयं बहुतिथं[4] सन्त्युत्पाताश्च गोकुले॥ ३०॥

[5-] श्रीशुक उवाच [-5]

इति नन्दादयो गोपा: प्रोक्तास्ते शौरिणा ययु:।
अनोभि रनडुद्युक्तै: तमनुज्ञाप्य गोकुलम्॥ ३१॥

इति श्रीमद्भागवते महापुराणे श्री वैयासिक्यां अष्टदशसाहस्र्यां
श्रीहग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे
नन्द वसुदेवसङ्गमोनाम पञ्चमोध्याय:॥ ५॥

---

1. A, G. omit 2. V, हि 3. A,B,G,M,V व: 4. A,B,G, °तिथं; V विधं 5- -5. A,M,K,V,W omit.

**श्रीध०** नन्दो वसुदेवं सान्त्वयन्नाह - **अहो** इति॥ २८॥

**नून** मिति। अदृष्ट एव निष्ठा समाप्ति र्यस्य स: यदैव[1] पुत्रादिसुखप्रद मदृष्टं हीयते, तदैव[2] ते पुत्रादयो न भवन्तीत्यर्थ:। तथा[3] अदृष्टपरम: अदृष्ट मेवपरमं यस्य स: यद्यपि पुत्रादयो बियुक्ता: तथाऽपि ता नदृष्ट मेव पुन स्सङ्गमयतीत्यर्थ:। एवं अदृष्ट मात्मन स्तत्त्वं अव्यभिचारिकारणं सुखदु:खयो र्यो वेद न स मुह्यति। तस्मा दिदानीं

त्वया न दुःखं भावनीयम्। मृताना[4]मपि वियुक्ताना मपि च कालान्तरे दर्श[5]नयोगवियोग[5] सम्भवात्। अस्मदादिभिरपि कालान्तरे तद्वियोगे [6]सत्यत एव न दुःखं सम्भावनीय मि[6]ति नन्दस्य दैवी वागशेषा भाविसूचिका॥ २९॥

तां बुद्ध्वा वसुदेवो दुःखं त्यक्त्वा नन्द माह - **करो वै** इति। वः युष्माभिः॥ ३०, ३१॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां पञ्चमोऽध्यायः॥ ५॥

---

1. V यथैव 2. V. तथैव 3. V omits तथा 4. V omits अपि 5- -5. A,B योगयोः 6- -6. B,V सत्यपीति।

**वीर०** अथ वसुदेवं सान्त्वयन् आह नन्दः - **अहो** इति द्वाभ्याम्। अहो इति खेदे। क्षेत्रजत्वशङ्काव्यावृत्तये ते इत्युक्तम्॥ २८॥

एव मनुशोच्य अथ तत्त्वबोधेन समाधत्ते - **नून** मिति। अयं परिदृश्यमानो जनो नूनं ध्रुव मदृष्टनिष्ठः अदृष्ट एव निष्ठा समाप्ति र्यस्य सः अदृष्टसमाप्त्यनुसमाप्त सुखदुःखादिक इत्यर्थः। पुत्रोत्पत्तिविपत्तिप्रयुक्त सुख दुःख कारण भूतादृष्टानुरोधित्वात्तदुत्पत्तिविपत्तिप्रयुक्ते सुखदुःखे न नियते इत्यर्थः। "यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ। समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते" (भ.गी. 2-15) इत्युक्तरीत्या सुखदुःखयो रनियतत्वात् तत्र सामान्येन भवितव्य मिति भावः। अतएव [1]अदृष्टपरमः[1] अदृष्ट मेव परमं प्रभुः वशी यस्य सः अदृष्टायत्त इत्यर्थः। एव मात्मनः स्वस्य तत्त्वम्। तस्य सुखदुःखादिमतो भावं तत्त्वम् सुखदुःखादिमत्त्वं अदृष्टं अदृष्टमूलकं अदृष्टायत्तं मत्वा यः पुमान्वेद स न मुह्यति समसुखदुःखो भवतीत्यर्थः। यद्वा सुखदुःखादिकं अदृष्ट मतीन्द्रियं स्वसंवेद्य मात्मनस्तत्वं याथात्म्यं यो वेद देहविलक्षणात्मयाथात्म्यानुभवपरो भवेत् स न मुह्यति देहतदनुबन्धिप्रयुक्तसुखदुःख वैचित्र्यं न प्राप्नोतीत्यर्थः॥ २९॥

एवं विवेकोद्बोधकं नन्दवचो निशम्य नन्दं प्रति प्रकृतं वक्तव्य माह वसुदेवः **कर** इति। राज्ञे कंसाय वार्षिकः करो दत्तः। अतः प्रयोजनं नावशेषित मिति भावः। ते त्वया वयं दृष्टाश्च। अतोऽत्र त्वया बहुदिनं बहूनां दिनानां समूहः तन्न स्थेयम्। अत्यन्तसंयोगे द्वितीया बहुदिन मिति। चो हेत्वर्थः। यतः गोकुले बहव उत्पातास्सन्ति अतो ना[2]ऽत्र स्थेय मित्यर्थः॥ ३०॥

इत्थं शौरिणा वसुदेवेन प्रोक्ता स्ते नन्दादयो गोपा स्तं वसुदेव मनुज्ञाय आपृच्छ्य, तं कंसं वा। अनडुद्भिर्वृषभैः [3]युक्तानि[3] तैः अनोभि श्शकटैः गोकुलं ययुः॥ ३१॥

इति श्रीमद्भागवते दशम स्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां पञ्चमोऽध्यायः॥ ५॥

---

1- -1. W omits 2. W omits अत्र 3- -3. A युक्तै :।

**वीज०** सुता: तेऽपि सुखिन:, कच्चि दिति शेष: ॥ २८ ॥

वसुदेवस्य स्वस्य तत्त्वज्ञान मस्तीति सूचयति **नून** मिति। नूनं प्राय: अयं जन: दृष्टे प्रत्यक्षे कार्ये निष्ठा नितरां स्थिति र्यस्य स:। तथाहि - एवं अदृष्टपरमो न **दृष्ट** मेव जानाति नाऽदृष्ट मित्यर्थ:। अत्र य आत्मन: अदृष्ट मव्यक्तं तत्त्वं वेद स पुमान् न मुह्यति विपरीतज्ञानी न भवति यथातत्त्वं जानाती त्यर्थ: ॥ २९ ॥

नून मिदानीं अस्मिन् काले च उत्पाता अनर्थसूचका: ॥ ३० ॥

अनुडुद्युक्तै: वृषभयुक्तै: ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
दशमस्कन्धे पूर्वार्धे पञ्चमोऽध्याय: ॥ ५ ॥
(विजयध्वजरीत्या षष्ठोऽध्याय:)

# षष्ठोऽध्यायः

## (विजयध्वजरीया सप्तमोऽध्यायः)

### पूतनासंहारघट्टः

श्रीशुक उवाच

नन्दः पथि वचश्शौरेः न मृषेति विचिन्तयन्।
हरिं जगाम शरणमुत्पातागमशङ्कितः॥ १ ॥

कंसेन प्र[1]हिता घोरा पूतना बालघातिनी।
शिशूंश्चचार निघ्नन्ती पुरग्राम[2]व्रजादिषु॥ २ ॥

न यत्र श्रवणादीनि रक्षोघ्नानि स्वकर्मसु।
कुर्वन्ति सात्त्वतां भर्तुः[3] यातुधानश्च तत्र हि॥ ३ ॥

सा खेचर्येकदोपेत्य पूतना नन्दगोकुलम्।
गो[4]पित्वा माययाऽऽत्मानं प्राविशत्कामचारिणी॥ ४ ॥

तां केशबन्धव्यतिषक्तमल्लिकां बृहन्नितम्बस्तनकृच्छ्रमध्यमाम्।
सुवाससं कम्पितकर्णभूषणत्विषो ल्लसत्कु[5]न्तलमण्डिताननाम्॥ ५ ॥

वल्गुस्मितापाङ्गविसर्गवीक्षितैः मनोहरन्तीं वनितां व्रजौकसाम्।
अमंसताऽम्भोजकरेण रूपिणीं गोप्यः श्रियं द्रष्टुमिवाऽऽगतां पतिम्॥ ६ ॥

---

1. A. प्रेषिता 2. K.W. °माकरादिषु 3. V. पत्युः 4. A.B.G.V. योषित्वा 5. K.W. °त्कुण्डल

### श्रीधरस्वामिविरचिता भावार्थदीपिका

षष्ठे सख्युः गिरा नन्दो व्रजं गच्छन् मृतां पथि।
दृष्ट्वा तु राक्षसीं तस्याः मृत्युं श्रुत्वा तु[1] विस्मितः॥

श्रीकृष्णविषये शङ्कमानं राजानं प्रति, अविषये प्रवृत्ता सैव मरिष्यतीति सूचयन्नाऽऽह - **नेति**। यत्र श्रीकृष्णस्य श्रवणादीनि न सन्ति [2-]तत्रैतासां[-2] शक्तिः, साक्षात्तस्मिन्नेव सति का शङ्केति भावः॥ १ - ३॥

**सेति**। योषित्त्वा वेषतो वरां नारीमिव आत्मानं विधाय। [3-]गोपित्वेति पाठान्तरे आत्मानं तिरोधायेत्यर्थः[-3]। ननु [4]तत्र निर्लज्जा निर्विशङ्का च सती कथं परसद्म[5] प्रविष्टा? अत आह कामचारिणीति। न हि कामचारिणीषु इदं चित्रमित्यर्थः॥ ४॥

**तामिति**। तां वनितां पतिं द्रष्टुम् आगताम् अतिरूपवतीं श्रियमिव गोप्योऽमंसतेत्युत्तरश्लोकस्थेनान्वयः[6]। श्रीसाम्यार्थानि विशेषणानि। केशबन्धव्यतिषक्तमल्लिकां - [7-]केशबन्धः केशपाशः तस्मिन् विन्यस्त[-7]मल्लिकाकुसुमां, बृहता नितम्बेन स्तनाभ्यां च उभयत आक्रान्तमिव कृच्छ्रं कृशं मध्यममुदरं यस्यास्तां, सुवाससं [8]शोभने रमणीये वाससी यस्यास्ताम्। कम्पितयोः कर्णभूषणयोः त्विषा उल्लसद्भिः कुन्तलैः मण्डितमाननं यस्यास्ताम्॥ ५॥

**वल्ग्विति** ।वल्गुस्मितापाङ्गविसर्गवीक्षितैः वल्गु रम्यं स्मितं येषु ते तथाभूता अपाङ्गविसर्गा येषु तैः वीक्षितैः व्रजौकसां मनः हरन्तीम् अतो गोपाः [9-]हृष्टमनसस्तु एनां[-9] न निवारितवन्तः इत्युक्तं भवति। गोप्यश्च श्रियमिव मत्वा तूष्णीमासन्। अतः केनाप्यनिवारिता सती प्रविवेशेति भावः॥ ६॥

---

1. A.B. ०ऽथ 2. A.B. तत्रैव तासां 3- -3. A.B. omit 4. A.B. omit तत्र 5. A.B.सद्मनि 6. B.V. ०केना० 7- -7. A.B. धम्मिल्लसंसक्त 8. V. omits शोभने 9- -9. A.B. हृतमनस्त्वेन तां

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ व्रजं प्रति नन्दगमनात् पूर्वमेव तत्र वसुदेवसूचितोत्पातं, भगवता तन्निराकरणप्रकारं[1], निराकृतवतः[2] तस्य रक्षाविधानप्रकारं च आह - नन्द इत्यादिना 'तावन्नन्दादयो गोपा' इत्यतः प्राक्तनेन ग्रन्थेन। **नन्द** इति। यदा नन्दः पथि गतः न तु व्रजं गतः। तदा [3-]सः[-3] शौरिः वसुदेवस्य वचो न मृषा किन्तु तथ्यमेव स्यादिति चिन्तयन् उत्पातागममुत्पातोपनिपातं सम्भावनामाशङ्कितः। यद्वा पथि उत्पातागमाद्वा पक्षिचलनादिरूपात् व्रजे कश्चिदुपद्रवं सम्भाव्य हरिं स्वाराध्यदैवं शरणं जगाम [4]रक्षोपायत्वेनाध्यवास्यत् ॥ १ ॥

तदा नन्दाऽऽगमनात् पूर्वमेव कंसेन प्रहिता प्रेषिता बालघातिनी पूतनाख्या राक्षसी तत्र पुरादिषु शिशून् निघ्नन्ती सती चचार॥ २॥

कृष्णोऽपि तत्कृतः कश्चिदुपद्रवो बभूव किम्? - इत्याशङ्कां तावन्निराह **नेति** । सात्वतामेकान्तिनां भक्तानां भर्तुर्भगवतः श्रवणादीनि गुणश्रवणकीर्तनादीनि। कथम्भूतानि? रक्षोघ्नानि यत्र देशे स्वकर्मसु स्वस्वव्यापारेषु सत्स्वपि न कुर्वन्ति जनाः तत्रैव हि यातुधान्यः राक्षस्यः, न तु श्रवणादि कर्तृजनाधिष्ठितदेशे; किं पुनः साक्षात् भगवदधिष्ठितदेशे इति भावः॥ ३॥

सा पूतना खेचरी कदाचित् गोकुलसमीपमेत्य मायया आश्चर्यविषेण आत्मानं[5] गोपित्वा स्वाऽसाधारणं रूपं तिरोधाय[6]। तत्सामर्थ्यं सूचयन् विशिनष्टि। कामं यथेष्टरूपपरिग्रहेण चरतीति तथा प्राविशत् गोकुलं प्राविशत्। योषित्वा माययेति पाठान्तरम्। तदा मायया अभिमत रूपपरिग्रहोपयुक्ताश्चर्यशक्त्या आत्मानं योषित्त्वा योषितं[7] कृत्वेत्यर्थः॥ ४॥

योषिद्रूपधरां तां वर्णयति - **तामिति**। तां गोप्यः श्रियमिव अमंसतेत्युत्तरेणान्वयः। केशबन्धे व्यतिषक्ताः संसक्ताः मल्लिकाः मल्लिकाकुसुमानि यस्याः बृहद्भ्यां नितम्बाभ्यां स्तनाभ्यां च कृच्छ्रः कष्टः भज्यमान इवावस्थित इति यावत्। सूक्ष्मत्वादिति भावः, स मध्यमः कटिप्रदेशो[8] यस्याः, शोभनं वासो यस्याः चलितयोः कर्णभूषणयोस्त्विषा उल्लसद्भिः कुण्डलैर्मण्डितम्[9] अलङ्कृतम् आननं यस्याः॥ ५॥

वल्गु सुन्दरं स्मितं येषां तैः तत्सहितैः इत्यर्थः। तथाभूतैः अपाङ्गयोः नेत्रान्तयोः विसर्गः प्रसरो[10] येषां तैश्च वीक्षितैः कटाक्षैः व्रजौकसां व्रजः ओकः स्थानं येषां तेषां गोपानां मनोहरन्तीम् अम्भोजकरेण पद्मयुक्त पाणिना उपलक्षितां रूपिणीं प्रशस्तरूपवतीं पतिं कृष्णं द्रष्टुमागतां लक्ष्मीमिव तां वनितां गोप्योऽमंसत अमन्यन्त॥ ६॥

---

1. A.B. र्हरण 2. A.B. निह्नतवतः 3- -3 V. Omits 4. A.B. रक्षणो° 5. V. omits आत्मानं 6. A.B. भाव्य° 7. A.B. द्रूपं 8. W. omits कटि 9. A.B. कुन्तलैः केशैर्म° 10. A.B. ०सा०

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

गुणश्रवणवत् पराक्रमश्रवणमपि ज्ञानसाधनमिति प्रतिपादयति पूतनावधलक्षणं तच्चरितमस्मिन्नध्याये। तत्रोत्पातपरिहारो नारायणशरणप्राप्त्या भवति इत्याशयेनाऽऽह - **नन्द** इति॥ १॥

प्रहिता प्रेषिता पुरं राजमन्दिरं, नानाजनाधिवासो ग्रामः व्रजो गोकुलम्॥ २॥

यातुधान्यः राक्षस्यः सात्त्वतां भर्तुः श्रवणादीनि रक्षोघ्नानि, इतरेषामिति शेषः, न सन्ति। साक्षात् कृष्णो यत्र वसति तत्र का शङ्केति भावः॥ ३॥

गोपित्वा पिधाय ॥ ४॥

केशपाशे केशभारे व्यतिषक्ता निगूढा मल्लिका यस्यां सा तथा। बृहन्नितम्बेन कलशस्तनाभ्यां च कृच्छ्रो भग्नो मध्यमो यस्याः सा तथा ताम्॥ ५॥

अपाङ्गविसर्गः कटाक्षमोक्षः वनितां सम्भजनीयां व्रजौकसो गोपाः, व्रजौकसामिति पाठे मनोहरन्तीमिति सम्बन्धः। श्रियमिव न तु श्रियम्, अमंसत मेनिरे॥ ६॥

बाल[1]ग्रहस्तत्र विचिन्वती शिशून् यदृच्छया नन्दगृहेऽसदन्तकम्।
बालं प्रतिच्छिन्न निजोरुतेजसं ददर्श [2]तल्पेऽग्निमिवाऽऽहितं भसि॥ ७॥

★ विबुध्य तां बालकमारिकाग्रहं चराचरात्[3]मा स निमीलितेक्षणः।
[4]महेश्वरत्वेऽपि च बालभावं विभावयन् किञ्चिदुवाच न प्रभुः॥ ८॥

[5-]अज्ञाय तं साऽथ निशाचरी हरिं[-5] निसर्ग[6] विज्ञात जगद्विचेष्टितम्।
[7-]अनन्तमारोपयदङ्क[-7] मन्तक यथोरगं सुप्तमबुद्धिरज्जुधीः॥ ९॥

तां तीक्ष्णचित्तामतिवामचेष्टितां वीक्ष्याऽन्तरा कोशपरिच्छदासिवत्।
वरस्त्रियं तत्प्रभया च धर्षिते[8] निरीक्षमाणे[9] जननी [10]अ[11]तिष्ठताम्॥ १०॥

[12]तस्मिन् स्तनं दुर्जरवीर्यमुल्बणं घोरा[13] तमादाय शिशोर्ददावथ।
गाढं कराभ्यां भगवान् प्रपीड्य तत् प्राणैस्समं रोषसमन्वितोऽपिबत्॥ ११॥

---

1. M. ग्रही तत्राऽ 2. V. तं चाऽ° ★ The order of the four half verses of the slokas 8 & 9 are found changed in other editions. As per the edition V, the order of the four half verses is as follows:
विबुध्य तां...., आज्ञायमानोऽय......., महेश्वर त्वेऽपि च ........, अनन्तमारोपयत्...... । But the 2nd & 3rd half verses are not found in edn. A & G. 3. A.G. ०त्माऽऽस 4. B.M. महीसुर 5- -5. A.M. अजानमानाथ निशाचरी हरिम्। आशायमानोथ हरिर्निशाचरीम् 6. V. तः 7- -7. तमङ्क मारोपयदन्तकान्तकं 8. M. °ता 9. M. °णा 10. A.B. ह्य० 11. M. °ष्ठत् 12. A. तस्यै 13. A.B.G. ०राऽङ्कमा०

**श्रीध बालग्रह** इति। बालग्रहः पूतना। असदन्तकं बालं ददर्श। असतामन्तकं दृष्ट्वा कथं न बिभेति। तत्राऽऽह - प्रतिच्छन्ननिजोरु तेजसं बालनाट्येन प्रतिच्छन्नं तिरोहितं निजम् उरु तेजो येन तं, कमिव असि भस्मनि आहितमग्निमिवेति [1]भावः॥ ७॥

**विबुध्येति**। चराचरात्मत्वादेव। तां विबुध्य निमीलितेक्षणः आस। स्वयमनन्तं दुष्टानामन्तकं[2] बालमिति[3] मत्वा, सा अङ्कमारोपयत्। यथा उरगं सुप्तम् अबुद्धिश्चासौ रज्जुधीश्च सः अज्ञानतो रज्जुबुद्ध्या गृह्णाति यथा तद्वत्॥ ८,९॥

ननु यशोदारोहिण्यौ तां कथं न न्यवारयताम्? तत्राह **तामिति।** वामं वल्गु। जनन्या इव चेष्टितं यस्यास्तां, वरस्त्रियं च सहसैव अन्तरा गृहमध्ये वीक्ष्य अन्तस्तैक्ष्ण्ये बहिर्मार्दवे[7] च दृष्टान्तः — कोशपरिच्छदासिवत्। मृदुचित्र चर्ममयः कोशः, परिच्छदः आवरणं यस्य असेः खड्गस्य तद्वत् तत्प्रभया च धर्षिते अभिभूते अहमस्य जननी इयं वेति मोहिते च सत्यौ जननी जनन्यौ। निरीक्षमाणे एव केवलम् अतिष्ठतां, न तु निवारितवत्यौ॥ १०॥

**तस्मिन्निति।** तस्मिन् स्थाने दुर्जरं वीर्यं विषं यस्मिन् तं स्तनं, तं श्रीकृष्णम् अङ्कमादाय [9]सा घोरा[9] तस्मै शिशवे ददौ। अथ अनन्तरमेव प्रपीड्य केवलं विषमपथ्यमिति मत्वेव तस्याः प्राणैस्सह अपिबत्॥ ११॥

---

1. A,B omit भावः 2. A,B omit इति 3. A adds एवमपि 4. A, B omit यथा 5. A,V add इति 6. V. °क्ष्ण्येन 7. V °वेन 8. A,B omit तं 9--9 B, V omit

**वीर०** सयोषिद्रूपो बालग्रहः तत्र तत्र व्रजस्थान् शिशून् विचिन्वती अन्वेषयन्ती यदृच्छया नन्दगृहे बालं ददर्श। स्वसौन्दर्यावलोकन परवशाभिः गोपीभिः अनिवारिता ददर्शेत्यर्थः। कथम्भूतम् असता मन्तकं मृत्युम्। तर्हि निर्भया कथं ददर्श इत्यतो विशिनष्टि - प्रतिच्छन्नं तिरोधापितं निजं स्वासाधारणम् उरु अधिकं तेजो येन, भसि भस्मनि आहितं तिरोहितम् अग्निमिव स्थितम्॥ ७॥

तदा स चराचरात्मा सर्वबुद्धिदृग् भगवान्, अत एव तां बालकमारिकाग्रहं बालघ्नग्रहं बुद्ध्वा निमीलिते ईक्षणे येन, तथाभूतः स्वयं [1]महेश्वरत्वेऽपि[1], प्रभुरपि[2] सङ्कल्पमात्रेणैव हन्तुं समर्थोऽपि बालभावं बालत्वं विभावयन् अनुकुर्वन् न किञ्चिदुवाच [3]तूष्णीमासेत्यर्थः[3] ॥ ८ ॥

अथ सा निशाचरी तं बालं हरिं [4]दुष्कृत्प्राणहरं निसर्गतः स्वभावतो विज्ञातं जगतो विचेष्टितं येन तम्। निसर्गेति पदेन तस्य सर्वबुद्धिद्रष्टत्वं स्वाभाविकमेव, न तु कार्यायत्तमित्यभिप्रेतम्। अन्तकमात्मनो मृत्युभूतमज्ञात्वा अनन्तं त्रिविधपरिच्छेदरहितम्। अथापि मनुष्यचेष्टानुकरणेन परिच्छिन्नतां प्राप्तमिव स्थितमिति भाव:। अत एव अङ्क मारोपयत् अङ्के निदधे इत्यर्थ:। यथा अबुद्धि: मूढ: अत एव रज्जुरिति धीर्यस्य स:, सुप्रभुरगम् अङ्के निदधाति तद्वत् ॥ ९॥

रोहिणीयशोदे अपि तां न न्यवारयतामित्याह **तामिति ।** कोशपरिच्छदासिवत् कोशो मृदुलचर्मनिर्मितं परिच्छदमावरणं पिधानं यस्य तम्, असिं खड्गमिव अन्त: तीक्ष्णचित्तां क्रूरतरामपि बहिर्वामचेष्टितां शोभनचेष्टिताम् अनुकूलचेष्टितामिति यावत् । तां वरस्त्रियं श्रेष्ठस्त्रियमिव स्थितम् । परस्त्रियमिति पाठे परस्यान्यस्य कस्यचित् पुंस: [5]स्त्रियमिव स्थितां वीक्ष्य

तस्याः प्रभया धर्षिते अभिभूते जननी जनन्यौ । पूर्वसवर्णदीर्घ आर्षः । निरीक्षमाणे अप्यतिष्ठतां तूष्णीमासातां, न तु न्यवारयतामित्यर्थ : ॥ १० ॥

अथ घोरा घोरचेष्टिता पूतना तं शिशुं कृष्णमादाय शिशोः तस्मिन् मुखे स्तनं ददौ । कथम्भूतम् ? दुर्जरवीर्यं दुःखेनापि जरयितुं जीर्णयितुमशक्यं वीर्यं विषरूपं यस्मिन्, अत एवोल्बणं दुस्सहं वीर्यस्योल्बणत्वात् उल्बणम् । अथ भगवान् रोषसमन्वितः प्रपीड्य, स्तनमित्यनुषङ्गः, प्राणैस्समं प्राणैस्सह[6] तत्स्तन्यमपिबत् । तस्याः प्राणैस्सह स्तनमपिबदिति वा ॥ ११ ॥

---

1- -1. A,B. ईश्वरत्वे सत्यपि 2. A,B. add स्व 3- -3. W omits 4. A,B. दुष्टप्रा° 5. A omits स्त्रियमिव 6. A,B omit प्राणैः

**विज०** बालग्रही बालकमारिका, असदन्तकं, भसि भस्मनि, विचिन्वती मृगयन्ती ॥ ७ ॥

बालकमारिकाग्रहं बालानां मृत्युभूतग्रहं सुरत्वे पूर्णैश्वर्ये देवदेवत्वे वा, सुर - ऐश्वर्ये इति धातुः । मही अतिप्रशस्तोत्सवः मह्यामपीश्वरत्वेऽपि वा ईश्वरत्वात्प्रकटने वचनाभावे च बालभावप्रकाशन हेतुः ॥ ८ ॥

अथ सात्त्विकस्त्रियः स्वभावप्रकटनानन्तरं, यद्वा राक्षस्याः स्वभावः प्रारभ्यते, यद्वा यतो निशाचरी अथ तस्मादजानमाना "मङ्गलानन्तरारम्भप्रश्नकात्स्न्र्येष्वथो अथ" (अम.को. 3-402) इति, "अथातोऽनन्तराप्यर्थविकल्पारम्भमङ्गलाः" (वैज. को. 8-7-14) इत्यमरयादवौ । हरेः पूतनावृत्तचेष्टिताज्ञानं नास्तीत्याशयेनोक्तं - निसर्गेति । ज्ञानाविर्भावतिरोभावौ न स्त इति द्योतनाय निसर्गेति पदम् । देवदत्तज्ञानवत् कतिपयपदार्थज्ञानविषयं नेश्वरज्ञानमित्यतो जगदिति । हरिशब्दस्य अनेकार्थत्वेनात्र किञ्चिद्विवक्षितमित्यत उक्तम् - अनन्तमिति । एककुण्डलोऽनन्त इत्यस्यापि संदिग्धार्थत्वमित्यत उक्तम् - अन्तकमिति रुद्रोमाविशान्तक वचनात् उक्तशङ्कानिस्तारादित्यतो निसर्गेति । इदं लक्षणं नारायणस्यैव, नान्यस्य । "अहं रुद्राय धनुरातनोमि यः सर्वज्ञः" (मुण्ड. उ. 1-1-9) इत्यादेः। पूतना अनन्तं बालम् अङ्कमारोपयत् इत्यन्वयः । हन्तुमितिशेषः । न केवलं हरिमजानमाना अपि तु तमात्मनोऽन्तकम् अजानमाना परिमिताङ्कारोपणं च तमनन्तम् अपरिच्छिन्नं मरणशून्यं वा तमजानमाना चेत्यर्थः । कथमित्यत्र दृष्टान्तमाह अबुद्ध्या अज्ञानेन रज्जुरियमिति धीः ज्ञानं यस्याः सा तथा सुप्तमुरगम् अङ्कमारोपयति, अबुद्धिश्च रज्जुधीश्चेति विग्रहः । तथा च अबुद्धिः अज्ञानी यथा सुप्तमन्तकम् अङ्कम् आरोपयति । रज्जुधीः सुप्तमुरगमिति विभागः केचित् दुष्टान्तकं सुप्तं नाम्ना अनन्तमुरगमित्युरगविशेषो वा। काचित् निशाचरी उलूपिका सुप्तं हरिं सिंहं शिवाबुद्ध्चेति शेषः। "ध्वाङ्क्षारातिर्निशाटन" (हला. को. 2-91) (इत्यमरः) ॥ ९ ॥

अतिवामचेष्टिताम् अधिकक्रूरव्यापाराम् । "अति स्यादधिकार्थोक्तो प्रशंसायामतिक्रम" (वैज.को. 8-7-15) इति यादवः । "वामः क्रूरे मनोहरे" (वैज.को. 6-4-16) इति च । अन्तरा मध्ये कोश एव परिच्छदः परिकरपूरणलक्षणो

*यस्य सोऽन्तराकोशपरिच्छदः, स एव असिरन्तराकोशपरिच्छदासिः, स इव गूढाकारबाह्याभ्यन्तरकोशालङ्कृतखड्गवत्स्थिते*-त्यन्वयः । अन्तराकोशपरिच्छदः वर्णितकोशलक्षणालङ्कारोऽसिः यथा तथा । वामचेष्टितामिति वा । तस्याः पूतनायाः प्रभया वरोद्भूतलक्षणया धर्षिता विह्वलिता, तस्य कृष्ण (स्य) प्रभया वा इदानीमेव पूतनाप्राणवियोगसूचनाय जननी अतिष्ठदिति । सन्धिकार्याकरणं वैदिकप्रयोगानुकरणं वा ॥ १० ॥

तस्मिन् काले दुर्जरवीर्यं जीर्णीकर्तुमशक्यं वीर्यं यस्य स तथा अत एवोल्बणं दुस्सहक्रौर्योपेतम् । अथशब्दो विकल्पार्थः अथ स्तनं ददाविति । विषमिति, तस्याः प्राणैः ॥ ११ ॥

**सा मुञ्च मुञ्चालमिति[1] प्रभाषिणी निष्पीडयमानाऽखिलजीवमर्म्मणि[2] ।**
**विवृत्य नेत्रे चरणौ भुजौ मुहुः प्रस्विन्नगात्रा[3] क्षिपती रुरोद ह[4] ॥ १२ ॥**

**तस्यास्स्वनेनातिगभीररंहसा साद्रिर्मही द्यौश्च चचाल सग्रहा ।**
**रसा दिशश्च[5] प्रतिनेदिरे जनाः पेतुः क्षितौ वज्रनिपातशङ्कया ॥ १३ ॥**

**निशाचरीत्थं व्यथिता व्यसुः[6] क्षितौ[-6] व्यदाय[7] केशांश्चरणौ भुजावपि ।**
**प्रसार्य गोष्ठे निजरूपमास्थिता वज्राहतो वृत्र इवापतन्नृप ॥ १४ ॥**

**पतमानोऽपि तद्देहः त्रिगव्यूत्यन्तरद्रुमान् ।**
**चूर्णयामास राजेन्द्र महदासीत्तदद्भुतम् ॥ १५ ॥**

**ईषामात्रोग्रदंष्ट्रास्यं गिरिकन्दरनासिकम् ।**
**गण्डशैलस्तनं रौद्रं प्रकीर्णारुणमूर्धजम् ॥ १६ ॥**

**अन्धकूपगभीराक्षं पुलिनारोहभीषणम् ।**
**बद्धसेतुभुजोर्वङ्घ्रि शून्यतोयह्रदोदरम् ॥ १७ ॥**

---

1. M मुञ्चेति गिरा 2. M मर्षिणी; K,W. मर्मसु 3. M. विक्लिन्न; W. विरिस्वन्न 4. M. रुराव हि K,W. रुराव ह 5. M. दिशः खं 6. A,B,G,K,W °तस्तना व्यसुः 7. M विकीर्य

**श्रीध० सेति।** चरणौ भुजौ च मुहुर्मुहुः क्षिपती प्रस्विन्नानि स्वेदयुक्तानि गात्राणि यस्यास्सा ॥ १२ ॥

**तस्या** इति। रसाः रसातलानि च ॥ १३ ॥

***निशाचरीति।*** *व्यादाय मुखं विवृत्य [1-]केशादीन् प्रसार्य[-1] निजरूपमास्थिता मरणसमये [2-]कापट्यं न युज्यत इति[-2]* [3]भावः । [4-]विकीर्येति पाठान्तरे केशान् विकीर्य चरणौ भुजावपि प्रसार्येति भावः[-4] । [5-]वृत्रो वज्राहत इव[-5] ॥ १४ ॥

**पतमान** इति । पतन्नपि तस्याः देहः षट्क्रोशमध्यवर्तिनो द्रुमांश्च चूर्णीचकार ॥ १५ ॥

**ईषेति** । ईषामात्रोग्रदंष्ट्रास्यम् ईषा लाङ्गलदण्डः तत्प्रमाणा उग्रा दंष्ट्रा यस्मिन् तत्, तथाभूतमास्यं यस्मिन् तत्, सन्त्रासहेतुत्वेन पुनरष्टभिः पदैर्विशिनष्टि गिरिकन्दरवत् नासिके यस्मिन् तत्, गिरेः च्युतौ स्थूलोपलौ [6-]गण्डशैलौ[-6] ताविव [7]स्थूलौ स्तनौ यस्मिन् तत् । रौद्रं घोरं, प्रकीर्णा अरुणा मूर्धजा यस्मिन् तत् ॥ १६ ॥

**अन्धकूपेति** । अन्धकूपाविव गभीरे अक्षिणी यस्मिन् तत्, पुलिनवदारोहे जघने ताभ्यां भीषणं बद्धाः सेतव इव भुजो ऊरू अङ्घ्री च यस्मिन् तत्, शून्यतोयह्रद इव उदरं यस्मिन् तत् ॥ १७ ॥

---

1- -1. B,V omit 2- -2. A,B कपटमयुक्तमिति 3. B इव । 4- -4. A,B omit 5- -5. V. omits 6- -6. B.V omit 7. A,B omit स्थूलौ

**वीर०** तदा सा अखिलजीवमर्मसु सर्वप्राणमर्मसु पीड्यमाना अलम् एतावता अलम्, आशु मुञ्च मुञ्चेति प्रभाषिणी, नेत्रेविवृत्त्य परिभ्राम्य चरणौ भुजौ च मुहुर्मुहुः प्रक्षिपती स्विन्नानि स्वेदयुक्तानि गात्राणि अङ्गानि यस्याः सा, रुराव जुघोष [1-]हे त्याश्चर्यम्[-1] ॥ १२ ॥

अतिगभीरं [2]रंहः रभसः वेगो वा यस्य तेन, तस्याः स्वनेन सपर्वता मही भूः, सग्रहा द्यौश्च चचाल, रसातलं दिशश्च प्रतिनेदिरे प्रतिदध्वनुः । जनाः वज्रनिपातशङ्कया[3] क्षितौ निपेतुः ॥ १३ ॥

व्यथितौ पीडितौ स्तनौ यस्याः सा निशाचरी, व्यादाय मुखं विवृत्य [4-]केशादीन् प्रसार्य गोष्ठे व्रजे[-4] निजरूपमास्थिता मरणस्य स्वासाधारणरूपगतत्वादिति भावः । हे नृप! वज्रेणाऽऽहतो वृत्रासुर इवापतत् ॥ १४ ॥

तस्याः देहः पतमानः [5]षट्क्रो[6]शमध्यवर्तिनो द्रुमान् चूर्णीचकार। हे राजेन्द्र! तच्छरीरं महदद्भुतमासीत्॥ १५॥

अद्भुतत्वमेव दर्शयितुं [7]तद्रूपं विशिंषन् तद्वीक्ष्य गोपा गोप्यश्च अभिभयुरित्याह - **ईषेति**[8] त्रिभिः। ईषा लाङ्गलदण्डः तत्प्रमाणा उग्रा द्रंष्ट्रा यस्मिन् तत् आस्यं यस्मिन्, गिरिकन्दरे इव नासिके यस्मिन्, गण्डशैलवत् उन्नतौ पृथू च स्तनौ यस्मिन्, रौद्रं भीमं प्रकीर्णा अरुणाश्च मूर्धजाः केशा यस्मिन्, अन्धकूपाविव गभीरे अक्षिणी यस्मिन्, पुलिनवदारोहौ जघने ताभ्यां भीषणं बद्धास्सेतव इव भुजौ ऊरू अङ्घ्री च यस्मिन्, शून्यं तोयं यस्मिन्, तथाभूतो ह्रद इव उदरं यस्मिन् तत्कलेबरं वीक्ष्य गोपा गोप्यश्च सन्तत्रसुः। कथम्भूताः ? पूर्वं पतनात् पूर्वं तस्याः निश्वसितं शब्दः निश्वासमारुतो वा तेन भिन्नानि हृदादीनि येषां तथाभूताः॥ १६, १७॥

1- -1. W. omits 2. A,B. omit रंहः 3. A,B add अशनिनिपातशङ्कया 4- -4 W. omits 5. A,B add अपि 6. A,B omit मध्य 7. W omits तद्रूपं 8. W. °त्यादि।

**विज०** अखिलजीवमर्षिणी समस्तप्राणापहारिणी रुराव रोदनमकरोत्। हि शब्दो हेतौ। श्रोतॄणाम् अनुकम्पाजनकः॥१२॥

रसा पातालं प्रतिनेदिरे प्रतिशब्दं चक्रुः॥ १३॥

व्यसुः विगतप्राणा॥ १४॥

त्रिगव्यूत्यन्तरे षट्क्रोशमध्ये ये द्रुमाः वृक्षाः तान् "गव्यूतिः स्त्री क्रोशयुगम्" (अम. को. 2-18) इत्यमरः॥ १५॥

ईषा रथदारुविशेषः, कन्दरो गुहा, रोगविशेषव्यावृत्यर्थं गिरिरिति विशेषणं, गण्डशैलः स्थूलपाषाणः॥ १६॥

आरोहो नितम्बः बद्धसेतुवत् स्थिरा भुजोर्वङ्घ्रयो यस्य तत् तथा भुजौ ऊरू च अङ्घ्री च भुजोर्वङ्घ्रयः, शून्यं तोयं यस्मिन् सूर्यतोयः स ह्रद इव उदरं यस्य तत् तथा। १७॥

सन्तत्रसु[-1]स्तदुद्वीक्ष्य[-1] गोपा गोप्यः कलेबरम्।
पूर्वन्तु तन्नि[2]ःस्वनित भिन्नहृत्कर्णमस्तकाः॥ १८॥

बालं च तस्या [3]उरसि क्रीडन्तमकुतोभयम्।
गोप्यस्तूर्णं [4]समभ्येत्य जगृहुर्जातसम्भ्रमाः॥ १९।

यशोदारोहिणीभ्यां तास्समं बालस्य सर्वतः[5]।
रक्षां विदधिरे [6]सम्यक् गोपुच्छभ्रमणादिभिः॥ २०॥

गोमूत्रेण स्नापयित्वा पुनर्गोरजसाऽर्भकम्।
रक्षां [7]चक्रुर्गोशकृता द्वादशाङ्गेषु नामभिः॥ २१॥

गोप्यस्संस्पृष्टसलिला अङ्गेषु करयोः पृथक्।
न्यस्यात्मन्यथ बालस्य बीज[8]न्यासमकुर्वत॥ २२॥

अव्यादजोऽङ्घ्रिमणिमां[9]स्तव जान्वथोरू यज्ञोऽच्युतः कटितटं जठरं हयास्यः।
हृत्केशव[10]स्त्युदरमीश इनस्तु कण्ठं विष्णुर्भुजं मुखमुरुक्रम ईश्वरः कम्॥ २३॥

---

1- -1. A,B,G,M सुस्य तद्वीक्ष्य 2. K,W. °श्वसित 3. K,V,W उपरि 4. V. समुत्पत्य 5. M °श: 6. V. तस्य 7. A,B,G चक्रुश्च श°; K.W. च चक्रुश्श° 8. A °जैर्न्यास° 9. A,B,G,M मांस्तव 10. A,B,G,M वस्त्वदुर् ईश

**श्रीध०** पूर्वमेव तस्याः शब्देन भीताः पुनर्दर्शनेनातितत्रसुरित्याह - **सन्तत्रसुरिति**। तस्याः निस्स्वनितं [1]अतिभयङ्कर[1]ं शब्दः तेन भिन्नानि हृत्कर्णमस्तकानि येषां ते॥ १८ - २०॥

**गोमूत्रेणेति**। द्वादशाङ्गेषु ललाटादिषु। केशवादि द्वादशनामभिः॥ २१॥

अनाचान्ता एव प्रथममतिसम्भ्रमेणैव रक्षां कृत्वा किञ्चित् लब्धाश्वासाः पुनस्तात्पर्येण बीजन्यासमकुर्वतेत्याह **गोप्य** इति। संस्पृष्टसलिलाः आचान्ताः आत्मनि प्रथमम् अङ्गेषु करयोश्च पृथक्, अजाद्येकादशबीजानां मध्ये करशुद्धौ त्रीणि, करयोः सन्धिषु चत्वारि चत्वारि। तथाऽङ्घ्र्यादावेकैकस्मिन्नङ्गे। अजाद्येकैकं बीजं [2]विन्यस्य। बालस्यास्य अङ्गेषु तथैवाकुर्वत॥ २२॥

**अव्यादिति**। अङ्घ्रिमङ्घ्री, जानु जानुनी, भुजं भुजौ, कं शिरः॥ २३॥

---

1- -1. A,B omit 2. A,B omit वि

**वीर०** तथा तस्योपरि क्रीडन्तं न कुतोऽपि भयं यस्य तं बालं च वीक्ष्येति पूर्वेणान्वयः, जगृहुरित्युत्तरेण वा। तूर्णं यथा तथा समभ्येत्य जातः तस्याः मरणाद् बालस्य जीवनाच्च जातः सम्भ्रमौ यासां ता गोप्यो जगृहुः आददुः॥ १८, १९॥

ततस्ता गोप्यो यशोदारोहिणीभ्यां [1]सह बालस्य ईश्वरस्य कृष्णस्य गोपुच्छभ्रमणादिभिः उपायैः रक्षां चक्रुः॥ २०॥

तदेव प्रपञ्चयति - **गोमूत्रेत्यादिना**। आदिशब्दग्राह्यान् वा दर्शयति गोमूत्रेणेति। तावत् शिशुं गोमूत्रेण स्नापयित्वा ततो गोरजसा च स्नापयित्वा गोशकृता गोमयेन द्वादशसु [2]द्वादशपुण्ड्र[2]स्थानेषु अङ्गेषु ललाटादिषु [3]केशवादिद्वादशनामभिः रक्षां चक्रुः॥ २१॥

एवमनाचान्ता एव [4]तावत् सम्भ्रमेण रक्षां विधायाऽथ लब्धाश्वासा आचान्ता विशेषतो रक्षां चक्रुरित्याह - **गोप्य** इति। संसृष्टसलिला आचान्ता गोप्य आत्मनि स्वशरीरे करयोः इतरेष्वङ्गेषु पृथक् एकैकशो न्यस्य अकारादिक्षकारान्तानि मातृकाबीजानि विन्यस्य अथ बालस्यात्मनि करयोः अङ्गेषु च बीजन्यासमकुर्वत अकुर्वन्। चिकीर्षिताजादिभगवन्नामघटित विष्णुकवचपठनयोग्यतायै तत्स्थबीजस्फूर्तये च तावत् स्वाङ्गेषु बीजन्यासं विधाय अथ तत्कवचमन्त्रजपपूर्वकरक्षाप्रार्थनायाः सुप्रतिष्ठितत्वाय बालस्याङ्गेषु बीजन्यासं चक्रुरित्यर्थः॥ २२॥

अथ कवचमन्त्रजपपूर्वकरक्षाविधानं दर्शयति **अव्यादित्यादिना** 'इति प्रणये'त्यतः प्रक्तनेन। अजादिशब्दाः योगरूढिभ्यां भगवदसाधारणाः। अजः कर्मायत्तोत्पत्तिरहितः भगवान् अङ्घ्रिम् अङ्घ्री अव्याद्रक्षतु, जानु जानुनी अणिमा अणोर्जीवस्यान्तरात्यतया प्रवेशयोग्यः, पातु। ऊरू, यज्ञः यज्ञाराध्यो यज्ञभुक् तत्फलदश्च कटितटम् अच्युतः आश्रितान् न च्यावयतीत्यच्युतः, हयास्यो हयग्रीवः जठरमव्यात्, हृच्च केशाश्च तेषां समाहारः तत् ईशः पातु। वस्ति मूत्रकोशः वस्त्युदरहृत्केशमिति क्रमोऽत्र विवक्षितः, अव्यादजोऽङ्घ्रिमीश्वरः कमित्युपक्रमोपसंहाराभ्यां पादादिशिः पर्यन्तावयवक्रमस्याऽत्र विवक्षितत्त्वप्रतीतेः। जठरं नाभेरुपरिभागः। तत उपरिभाग उदरमिति विवेकः। केशशब्दोत्र लोमपरः। कण्ठम् इनः सर्वव्यापकः। 'इण् गता, वितिधातुः। यद्वा गत्यर्था बुद्धचर्थाः, सर्वज्ञः। अत एव विष्णुरित्यनेन न पौनरुक्त्यं विष्णुर्व्यापकः "विष्‍लृ व्याप्ताविति धातुः मुखम्, उरवस्त्रिलोकसङ्ग्राहकाः क्रमाः पादविक्षपा यस्य सः, कं मूर्धानम् ईश्वरः। ईस्वरः सर्वान्तरात्मा, ईशः सर्वाधिपतिः इति न पौनरुक्त्यम्। विष्णुशब्देन व्याप्तिमात्रम् ईश्वरशब्देन तु प्रशासनपूर्वक व्याप्त्याधारकत्वम्॥ २३॥

---

1. W omits सह 2- -2. W omits 3. A,B °दिभि 4. W omits तावत् 5. W °दि न्यस्य

**विज०** सन्तत्रसुः भीता अभूवन् तस्याः निःस्वनितेन अशनिवत् क्रूरशब्देन भिन्नानि हृत्कर्णमस्तकानि यासां तास्तथा॥ १८॥

तूर्णं शीघ्रम् ॥ १९, २०॥

गोरजसा गोरेणुना गोशकृता गोमयसहितेन केशवादिनामभिः ललाटादि द्वादशावयवेषु॥ २१॥

संस्पृष्टसलिलाः आचान्ताः अङ्गेषुन्यस्य पृथक् करयोश्च न्यस्य आत्मनि मध्ये देहं च न्यस्य, अथानन्तरं मङ्गलकरं वा बालस्य बीजन्यासम् अष्टाक्षरन्यासम् अकुर्वत॥ २२॥

अत्राजादयो मूर्तिविशेषाः। अङ्घ्रिम् अङ्घ्री, जानु जानुनी, अङ्घ्रिमित्यन्वयः अणिमान् गरिमान् इत्यर्थः॥ २३॥

**चक्राग्रतस्सहगदो हरिरस्तु पश्चात् त्वत्पार्श्वयोर्धनुरसी मधुहा[1]ऽजनश्च।**
**कोणेषु शङ्ख उरुगाय उपर्युपेन्द्र तार्क्ष्यः क्षितौ हलधरः पुरुषस्समन्तात्॥ २४॥**

**इन्द्रियाणि हृषीकेशः प्राणान्नारायणोऽवतु।**
**श्वेतद्वीपपतिश्चित्तं मनो योगेश्वरोऽवतु॥ २५॥**

पृश्निगर्भस्तु ते बुद्धिमात्मानं भगवान् परः।
क्रीडन्तं पातु गोविन्दश्शयानं पातु माधवः॥ २६॥

व्रजन्तमव्याद्वैकुण्ठः आसीनं त्वां श्रियःपतिः।
भुञ्जानं यज्ञभुक् पातु सर्वग्रहभयङ्करः॥ २७॥

डाकिन्यो[2] यातुधान्यश्च कूष्माण्डा[3] येऽर्भकग्रहाः।
भूतप्रेतपिशाचाश्च यक्षरक्षोविनायकाः॥ २८॥

कोटरा रेवती ज्येष्ठा[4] पूतना मातृकादयः।
उन्मादा ये ह्यपस्मारा देहप्राणेन्द्रियद्रुहः॥ २९॥

स्वप्नदृष्टा महोत्पाता वृद्धबालग्रहाश्च[5] ये।
सर्वे नश्यन्तु ते विष्णोर्नामग्रहणभीरवः॥ ३०॥

---

1. K,W °ऽजितश्च 2. V. ढा° 3. K,V,W. कूश्मा° 4. B ष्ठाः 5. M. बृहद्बाल

**श्रीध०** तथा दिक्षू रक्षामकुर्वन्नित्याह - **चक्रीति**। चक्री [1-]पुरतो[-1], [2-]सहगदः गदासहितो[-2] हरिस्तव पश्चादस्तु, त्वत्पार्श्वयोः धनुर्धरो मधुहा, असिधरः अजनश्च [3-]एतौ स्ताम्[-3] शङ्खधरः उरुगायः चतुष्कोणेषु, क्षितौ अधस्तात्[4]॥ २४॥

एवं बहिः रक्षां कृत्वाऽन्तरङ्गमकुर्वन्नित्याह - **इन्द्रियाणीति**॥ २५॥

**पृश्निगर्भ** इति। आत्मानम् अहङ्कारम्॥ २६ - ३०॥

---

1- -1. A,B चक्रसहितो हरिः तव अग्रतोऽस्तु 2- -2. V omits 3- -3. V omits 4. A adds, इत्यर्थः।

**वीर०** एवं पादादिशिरःपर्यन्तं रक्षां विधायाऽथ दिक्षु रक्षां विदधुः। चक्री अग्रतः पुरतश्चक्रधरः पश्चात् पृष्ठतः सहगदो गदासहितो हरिराश्रितार्तिहरः। पार्श्वयोऽस्तुधनुरसी धनुः खड्गौ, बिभ्रताविति शेषः। मधुहा अजितश्च धनुर्धरो मधुहा असिधरः अजितश्चेत्यर्थः। कोणेष्वाग्नेयादिषु शङ्खोऽस्यास्तीति अर्शआदित्वान्मत्वर्थीयोऽच्। उपर्यूर्ध्वायां दिश्युपेन्द्रः। क्षितौ अधस्ताद्धलधरः सङ्कर्षणः। समन्तात् सर्वतः अनुक्ता दिशः काश्चित्सन्ति चेत् तत्र सर्वत्र, पुरुषः सर्वप्राणिहृदयगुहावस्थितः॥ २४॥

एवं बहिरङ्गरक्षां संप्रार्थ्य अथान्तरङ्गरक्षां प्रार्थयामासु: इन्द्रियाणीति। हृषीकाणाम् इन्द्रियाणाम् ईशोऽन्त: प्रविश्य नियन्ता, योगेश्वरो योगनिर्वाहक:॥ २५॥

पृश्नेर्गर्भत्वात् अपत्यत्वात् पृश्निगर्भ:। भगवान् षाड्गुण्यपूर्ण: पर: प्रकृतिपुरुषविलक्षण:। आत्मानमित्यनेन चित्ताहङ्कारौ विवक्षितौ॥ २६॥

सर्वग्रहभयङ्कर इत्येतद्यज्ञभुग्विशेषणम्॥ २७॥

कूश्माण्डादयो ग्रहाऽवान्तरविशेषा :॥ २८॥

देहादीनि द्रुह्यन्तीति तथा॥ २९॥

वृद्धग्रहा बालग्रहाश्च ते सर्वे विष्णोर्नामानि गृह्णन्तीति तथा। तेभ्यो भीरव: भीता: नश्यन्तु॥ ३०॥

**विज॰** मधुसूदनादयश्चत्वार:। चतुर्षुकोणेषु॥ २४, २५॥

आत्मानं मध्यम्॥ २६, २७॥

अर्भकग्रहा: बालग्रहा:॥ २८ - ३०॥

**श्री[1] शुक उवाच[-1]**

**इति प्रणयबद्धाभि: गोपीभि: [2]कृतरक्षणम्।**
**पाययित्वा स्तनं माता [3-]सन्न्यवेशय दात्मजम्[-3] ॥ ३१॥**

**तावन्नन्दादयो गोपा: मधुराया व्रजं गता:।**
**विलोक्य पूतनादेहं बभूवुरतिविस्मिता:॥ ३२॥**

**नूनं [4]बतर्षि: सञ्जातो योगे[5]शो वा [6]समाऽऽस स:।**
**स एव दृष्टो ह्युत्पातो [7]यमाहाऽऽनकदुन्दुभि:॥ ३३॥**

**कलेबरं परशुभिश्छित्त्वा [8]तत्ते व्रजौकस:।**
**दूरे क्षिप्त्वाऽवयवशो [9]ददहु: काष्ठ[10]वेष्टितम्॥ ३४॥**

दह्यमानस्य देहस्य धूमश्चागरुसौ[11]★ रभ:।
उत्थित:. कृष्णनिर्भुक्ति[12] सपद्याहतपाप्मन: ॥३५॥

पूतना लोकबालघ्नी राक्षसी रुधिराशना।
जिघांसयापि हरये स्तनं दत्वाऽऽप सद्गतिम् ॥३६॥

किं पुन: श्रद्धया भक्त्या कृष्णाय परमात्मने।
यच्छन् प्रियतम[13]मं किञ्चित्[14] रक्तास्तन्मातरो यथा ॥३७॥

पद्भ्यां भक्ताहृदिस्थाभ्यां वन्द्याभ्यां लोकवन्दितै:[15]।
अङ्गं यस्यास्समाक्रम्य भगवानपिबत् स्तनम् ॥३८॥

---

1- -1. K,M,V,W omit 2. V कृष्ण 3- -3. M. सन्न्यवीविशदात्मजम्; V. पर्यङ्के सन्न्यवेशयत् 4. K,W° तत्रर्षिर्जातो; V °तर्षिर्ज्ञानी वा 5. A,B,G,M °गे° 6. M समासत:; K,W समागत: 7. A,B,G यदाहाऽऽ°; M यथाऽऽहाऽऽ°; V. यं प्राहाऽऽ° 8. V तत्र 9. B,G न्यदहन् 10. H. °धिष्ठितम् 11. A,G,M °गु° ★ सन्निभ इति वीरराधवादृत: पाठ: 12. A,B,G,M °क्ते V °क्ते: 13. V तरं 14. A, लोके B,G,V किन्तु 15. M °त:

**श्रीध०** **इतीति।** सन्न्यवेशयत् शाययामास॥ ३१, ३२॥

विस्मयमेवाह - **नूनमिति।** बतेति[1] विस्मये। साम्प्रतं स: ऋषि: तप:प्रभावात्[2] योगीशो[3] ज्ञानी वा सम्यगास। अत: [4-]यत् यमाह[-4] स एव उत्पातो[5] दृष्ट इति॥ ३३, ३४॥

विस्मयान्तरमेवाह - **दह्यमानस्येति** । कृष्णेन निर्भुक्ति:[6]। अत एव सपद्याहत: पाप्मा यस्य॥ ३५॥

प्रसङ्गात् कैमुतिक[7]न्यायेन भक्तिवैभवमाह **पूतनेति** ॥ ३६॥

**किमिति।** श्रद्धया आस्तिक्येन, भक्त्या प्रेम्णा, रक्ता: स्निग्धा: तन्मातर इति वत्सापहरणलीलाभिप्रायेण बहुवचनम्।[8] गोगोपिका: तन्मातरो[9]ऽभवन्निति॥ ३७, ३८॥

---

1. A,B omit इति 2. A,B °ववान् 3. A,B °गे° 4--4 B,V. omit 5. B,V omit उत्पात: 6. A,B क्त:। 7. A,B °त्यन्या° 8. A, adds तत्र हि 9. A तदा तन्मा°; B तदा मा°

**वीर०** इत्थं प्रणयेन स्नेहेन बद्धाभिः यन्त्रिताभिः गोपीभिः[1] कृतं रक्षणं यस्य तम्, आत्मजं माता यशोदा स्तनं दुग्धं[2] पाययित्वा सन्न्ययवेशयत् शाययामास॥ ३१॥

तावत् तदा नन्दादयो गोपाः मधुरायास्सकाशात् व्रजमागतास्सन्तः पूतनाया देहमवलोक्य अतीव[3] विस्मिता बभूवुः॥ ३२॥

वसुदेवोक्तं यथार्थमेवाभूदिति सोदाहरणं विस्मयन्ते **नूनमिति।** आनकदुन्दुभिः वसुदेवः समागतो यमुत्पातं प्राह[4] सएवोत्पातोऽधुनाऽस्माभिः दृष्टः। अतः स आनकदुन्दुभिः ऋषिर्योगी वा पूर्वजन्मनि सन्, अधुना एवंरूपेण नूनं सञ्जातः। बतेति विस्मये। ऋषित्वमुत्पत्तिसिद्धातीन्द्रियार्थ दर्शित्वं, योगित्वं तपःप्रभावकृततद्दर्शित्वमिति विवेकः। स यद्गत इति पाठान्तरं,[5-] तदा[-5] वसुदेवः ऋषिर्योगीशो वा सन्नधुनैव सञ्जातः। कुतः यत् यतः गतः समागतः आनकदुन्दुभिः यम् उत्पातमाह सोऽधुना अस्माभिः दृष्ट एवेत्यर्थः॥ ३३॥

ततस्ते व्रजौकसः तत् पूतनाकलेबरम् अवयवशः परशुभिश्छित्वा दूरे क्षिप्त्वा काष्ठैः वेष्टितं कृत्वा ददहुः ॥ ३४॥

विस्मयान्तरमाह - **दह्यमानस्येति।** दह्यमानस्य देहस्य सम्बन्धी यो धूमः सोऽगरुसन्निभः कृष्णागरुतुल्यगन्धः, समुत्थितः सोऽगरुसन्निभो बभूवेति शेषेणवाऽन्वयः। अगरुसौरभ इति पाठान्तरम्[6]। अगरोः सौराभमिव सौरभं यस्य स इत्यर्थः। तत्र हेतुं वदन् देहं विशिनष्टि कृष्णेति। कृष्णस्य भगवतो निर्भुक्त्या हेतुभूतया सपद्येव कास्त्र्न्येन आहतं पापं यस्य तस्य। कृष्ण निर्मुक्तीति पाठान्तरम्। तदा कृष्णेन भगवता हेतुना निर्मुक्तया हेतुभूतयेत्यर्थः॥ ३५॥

यतो हतपाप्माऽत एव मुक्तिम् अनर्हाऽपि प्रापेत्याह **पूतनेति।** अपिशब्दस्य लोकबालघ्न्यादिभिः प्रत्येकं सम्बन्धः। जिघांसया हन्तुमिच्छया। हरये स्तनं दत्त्वापि सद्गतिं सतां प्राप्यां गतिं मुक्तिम् अवाप॥ ३६॥

यतोऽप्रियं गरलं यच्छन्ती मुक्त्यनर्हापि केनचिद् भगवत्सम्बन्धमात्रेणैव सद्गतिमवाप। किं पुनर्भगवद्भक्त्या सद्गतिं प्राप्नुवन्तीत्याह - **किंपुनरिति।** श्रद्धया भगवत्प्रियाचरणोपयुक्त्या त्वरया भक्त्या च परमात्मने कृष्णाय किञ्चित् प्रियतमं यच्छन् समर्पयन् तद्गतिं प्राप्नोतीति किं पुनर्वक्तव्यमित्यर्थः। प्रियं यच्छन् सद्गतिं प्राप्नोतीत्यत्र दृष्टान्तः रक्तास्तन्मातरो ययेति। रक्ता अनुरक्तास्तस्य कृष्णस्य मातरो यशोदादयो यथा प्रियतम स्तन्यं[7] यच्छन्त्यः सद्गतिं प्रापुः तद्वत्॥ ३७॥

ननु मातृणां सद्गतिप्राप्तिरसिद्धेति कथं दृष्टान्ततेत्याशङ्कायां तामपि कैमुत्यन्यायेन सिद्धवत्करोति - **पद्भ्यामिति** सार्धैश्चतुर्भिः। लोकैः वन्दिता ये ब्रह्मादयस्तैरपि वन्द्याभ्यां भक्तानां हृदयकमलस्थाभ्यां पद्भ्यां भगवान् यस्याः पूतनायाः अङ्कं समाक्रम्य स्तनं विषपूर्णं स्तनम् इहापिबत्॥ ३८॥

---

1. W omits गोपीभिः 2. W omits दुग्धं 3. W. अति 4. A,B आह 5- -5. A,B पाठे सः 6. A,B पाठे 7. A omits स्तन्यं

**विज०** प्रणयबद्धभिः बद्धस्नेहाभिः सन्न्यवीविशत् संवेशं निद्रामकारयत् ॥ ३१, ३२ ॥

वसुदेवः ऋषिः त्रिकालदर्शी योगेशः कपिलान्यतमः समासतः संक्षेपतः संकोचं कृत्वा जातदृष्टः अस्माभिरिति शेषः ॥ ३३ - ३५ ॥

पूतनाविष्टोर्वशी सद्गतिं स्वर्गं पूतना तु (सद्गतिं असद्गति) नरकं, 'षद्लृ - विशरणगत्यवसादनेषु' इति धातुः ॥ ३६ ॥

रक्ता अनुरक्ताः ॥ ३७, ३८ ॥

**यातुधान्यपि सा स्वर्गमवाप [1-]जननीगतिम्[-1] ।**
**कृष्णभुक्तस्तनक्षीराः किमु गावो[2]ऽनुमातरः ॥ ३९ ॥**

**पयांसि यासामपिबत् पुत्रस्नेहस्नुतान्यलम् ।**
**भगवान् देवकीपुत्रः कैवल्याद्यखिला[3]र्थदः ॥ ४० ॥**

**तासामविरतं कृष्णे कुर्वती[4]नां सुतेक्षणम्**
**न पुनः कल्पते राजन् संसारोऽज्ञानसम्भवः ॥ ४१ ॥**

**कटधूमस्य सौरभ्य[5-]मवघ्राय व्रजौकसः**
**किमिदं कुत एवेति वदन्तो व्रजमाययुः[-5] ॥ ४२ ॥**

**ते तत्र वर्णितं गोपैः पूतनाऽऽगमनादिकम् ।**
**श्रुत्वा तन्निधनं स्वस्ति शिशो[6]राऽऽसन् सुविस्मिताः ॥ ४३ ॥**

**नन्दः स्वपुत्रमादाय प्रो[7]ष्यागत उदारधीः ।**
**[8]मूर्ध्न्युपाघ्राय परमां मुदं लेभे कुरूद्वह ॥ ४४ ॥**

**य एतत्पूतनामोक्षं [9-]कृष्णस्यार्भकचेष्टितम्[-9] ।**
**[10]निशम्य श्रद्धया मर्त्यो गोविन्दे लभते [11]रतिम् ॥ ४५ ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैय्यासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यायां संहितायां
दशमस्कन्धे पूर्वार्धे षष्ठोऽध्यायः ॥ ६ ॥

---

1- -1. K,W. जगतीपतिम् । 2. A,G,M नु 3. A,B,G. °लप्रदः 4. M.V. °न्ती° 5- -5. V. माघ्राय व्रजमाययुः ॥ ४१ ॥ 6. B,G,V. श्वाऽऽ° 7. B,G. प्रेत्यागतमु° 8. A, मूर्ध्न्यव° 9- -9. A,B,G कृष्णस्याऽऽर्भकमद्भुतम्; V. कृष्णस्याद्भुतमार्भकम् K,W कर्म कृष्णस्य चाद्भुतम् 10. A,B,G. शृणुयात् 11. K,W. गतिम्

**श्रीध०** **य इति** । एतत्[1] आर्भकं अर्भकचरितम् । किं तत्? पूतनामोक्ष इति । "★अत्तुं दैत्यकुलानीशः पूतनायाः शिशुच्छलात् । स्तन्याऽऽपोशनतः प्राणैः प्राणाहुतिमकल्पयत्" ॥ ३९ - ४५ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामि विरचितायां भावार्थदीपिकायां
व्याख्यायां षष्ठोध्यायः ॥ ६ ॥

---

1. V adds पूतनामोक्षं ★ श्रीधरीयोऽयं श्लोकः

**वीर०** सा यातुधानी पूतनाऽपि[1] स्वर्गं निरतिशयानन्दरूपं जगतीपतिं हरिमवाप[2], किमुत कृष्णेन भुक्तं स्तनयोः क्षीरं यासां ताः मातरः जगतीपतिमवापुरिति किमु[3] वक्तव्यमित्यर्थः । पौरवीभद्रामदिरादिमात्रन्तराभिप्रायकं बहुवचनम् । अनुशब्दोऽत्र यथाशब्दार्थकः यथा गावस्तद्वदित्यर्थः ॥ ३९ ॥

तासामपि मुक्तिः असिद्धैवेति दृष्टान्तानुपपत्तिरित्यतः तां विशिनष्टि - यासां गवां पुत्रस्नेहेनैव स्नुतानि पयांसि अलं नितरां भगवान् अपिबत् । कथम्भूतः देवकीपुत्रः कैवल्याद्यखिलार्थदः कैवल्यं प्रकृतिबन्धराहित्यं[6] मुक्तिरिति यावत् । तत्प्रभृति पुरुषार्थचतुष्टयप्रदः[7] कैवल्यादिपुरुषार्थप्रदानाय देवकीपुत्रत्वेनावतीर्ण इत्यर्थः ॥ ४० ॥

कृष्णे अविरतम् अविच्छेदं यथा तथा सुतेक्षणं सुतबुद्धिं कुर्वतीनां तासां मातॄणां हे राजन्! अज्ञानसम्भवः संसारः पुनः न कल्पते न प्रवर्तत इत्यर्थः ॥ ४१ ॥

व्रजौकसः कटधूमस्य शवधूमस्य सौरभ्यमाघ्राय किमिदम् अत्याश्चर्यमिदं कुतो वाऽस्य सौरभ्यमागतमित्येवं वदन्तः व्रजं जग्मुः ॥ ४२ ॥

तो मधुराया आगता नन्दादयः गोपैर्व्रजस्थैर्वर्णितं पूतनाया आगमनादिप्रकारं तस्याः[8] निधनं मरणं शिशोः कृष्णस्य स्वस्ति सुखेनावस्थानं च श्रुत्वा सु नितरां विस्मिता बभूवुः ॥ ४३ ॥

प्रोष्य देशान्तरं गत्वा पुनरागतो नन्दः उदारधीः विपुलानन्दयुक्तबुद्धिः स्वपुत्रमादाय मूर्ध्न्यवघ्राय हे कुरूद्वह! परमां मुदं प्राप ॥ ४४ ॥

प्रकृतपूतनावृत्तान्तादि श्रवणफलमाह - **य** इति । यः पुमान् एतत् पूतनामोक्षम्, एतदिति सामान्याभिप्रायकं क्लीबत्वम् । यच्च कृष्णस्याद्भुतं कर्मचेष्टितं तच्च । युक्तस्समाहितचित्तो निशम्याऽऽकर्ण्य गोविन्दे गतिं लभते, गत्यर्थाः बुद्ध्यर्थाः गतिं ज्ञानं भक्तिमिति यावत् ॥ ४५ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवत चन्दचन्द्रिकायां
व्याख्यायां षष्ठोऽध्यायः ॥ ६ ॥

---

1. W. omits अपि 2. W omits हरिम् 3. A,B omit किमु 4. A,B °द्धेति 5. A,B °ते° 6. A,B सम्बन्ध 7. W. omits प्र 8. A,B तन्नि°

**विज०** अपि स्वर्गं गर्हितं स्वर्गं, नरकमित्यर्थः । "अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु" (अष्टा. 1-4-96) इति पाणिनिः । जने ये नीचाः तैर्गम्यते इति जननी गतिः । स्पष्टोऽन्योऽर्थः । यद्वा जनन्या इव गतिं विचित्रगतिं योग्यतानुसृतगतिम् इत्यर्थः । "इ विचित्रे स्मरे पुमान्" (वैज.को. 8-7-10) इति यादवः । अनेनापि पूतनाया नरकगतिः उर्वश्याः स्वर्गगतिरिति सूचितम् । नु सविकल्पां गतिं योग्यतयेति शेषः । यद्वा अनुयोग्यतासदृशीं, "नु पृच्छयां विकल्पे च पश्चात् सादृश्ययोरनु" (अम. को. 3-403) इत्यमरः ॥ ३९, ४० ॥

सुतेक्षणं पुत्रदर्शनम् ॥ ४१ ॥

कटधूमस्य शवधूमस्य । अन्ये व्रजौकसः ॥ ४२, ४३ ॥

प्रोष्य प्रवासं कृत्वा ॥ ४४ ॥

फलमाह - **य** इति ॥ ४५ ॥

इति श्रीमद्भावते दशमस्कन्धे पूर्वार्धे
श्रीविजयध्वजतीर्थ विरचितायां पदरत्नावल्यां
टीकायां षष्ठोऽध्यायः ॥ ६ ॥

(विजयध्वजरीत्या सप्तमोऽध्यायः।)

# सप्तमोऽध्यायः

## (विजयध्वजरीत्या अष्टमोऽध्यायः)

★ श्री शुक उवाच

एवं बहूनि कर्माणि गोपानां शं सयोषिताम्।
नन्दस्य गेहे ववृधे कुर्व न्विष्णु र्जनार्दनः॥

△ एवं स ववृधे विष्णुः नन्दगेहे जनार्दनः।
कुर्वन्ननिशमानन्दं गोपालानां सयोषिताम्॥

[1-] राजोवाच [-1]

येन येनाऽवतारेण भगवान् हरि रीश्वरः।
करोति कर्ण[2]रम्याणि मनोज्ञानि च नः प्रभो॥ १॥

यच्छृण्वतोऽपैत्यरति र्वितृष्णा सत्त्वं[3]च शुध्यत्यचिरेण पुंसः।
भक्ति र्हरौ तत्पुरुषे[4]षु सख्यं तदेव हा[5]रं वद मन्यसे चेत्॥ २॥

अथाऽन्य दपि कृष्णस्य लो[6]काचरित मद्भुतम्।
मानुषं दे[7]ह मासाद्य तज्जाति मनुरुन्धतः॥ ३॥

★ वि स्तरेणेह कारुण्यात् सर्वपाप प्रणाशनम्।
वक्तु मर्हसि धर्मज्ञ दयालु स्त्वमिति प्रभो॥

श्रीशुक उवाच

कदाचि दौ[8]त्थानिक कौतुकाप्लवे जन्मर्क्षयोगे समवेतयोषिताम्।
वादित्रगीत द्विजमन्त्रवाचनै[9]: चकार सूनो रभिषेचनं सती॥ ४॥

नन्दस्य पत्नी कृतमज्जनादिकं विप्रैः कृतस्वस्त्ययनं सुपूजितैः।
अन्नादि[10] वासस्स्रगभीष्टधेनुभिः सञ्जातनिद्राक्ष मशीशयच्छनैः॥ ५॥

---

★ This additional verse is found in B, W edns. and commented by Viraraghava.

△ A separate verse of almost the same purport is found in B, M ends. and commented by Vijayadhvaja.

1- -1. B विष्णुरात उवाच 2. A रस्यानि 3. M. °त्वं वि 4. A,B,G, च 5. M सारं 6. A,B,G,M तो° 7. A,B,G,K,W लोक° ★ This additional verse is found in B & M ends. and commented by Vijaya dhvaja 8. M °दुत्थापन 9. A,B,G,M °कैः 10. A,B,G,M °च

## श्रीधरस्वामिविरचिता भावार्थदीपिका

उत्क्षिपन् शकटं व्योम्नि तृणावर्तम[1]धः क्षिपन्।
दर्शयन्विश्वमास्ये च कृष्णः क्रीडति सप्तमे॥
कृष्णार्भकसु[2]धा (कथा) सिन्धुसम्प्लवानन्दनिर्भरः।
भूय स्तदेव सम्प्रष्टुं राजाऽन्य दभिनन्दति॥

**येन येनेति।** येन येन मत्स्याद्यवतारेणाऽपि यानि यानि कर्माणि करोति तानि नः [3-]कर्णरम्याणि[-3] कर्णसुखावहानि [4-]मनोज्ञानि[-4] मनः प्रीतिकराणि च भवन्त्येव॥ १॥

तथाऽपि **यदिति** । यच्छृण्वतः पुंसः पुरुषमात्रस्य अरतिः मनोग्लानिः तन्मूलभूता विविधा तृष्णा चाऽपगच्छति, तथा सत्त्व शुद्धि हरिभक्ति हरिदाससख्यानि च भवन्ति। तदेव हारं हरेश्चरितं मनोहरं वा, वद, मन्यसे चेत् अनुग्रहं यदि करोषीति॥ २॥

अत्यौत्सुक्येन पुन र्विशिनष्टि - **अथेति** । अनुरुन्धतोऽनुकुर्वतः॥ ३॥

**कदाचिदिति।** उत्थानं शिशो रङ्गपरिवर्तनम्। तत्र करणीये कौतुकाप्लवे उत्सवाभिषेके तथा तस्मिन्नेव दिने जन्मर्क्षस्याऽपि योगे अ[5]तः महोत्सवे समवेतयोषितां मिलितपुरन्ध्रीणां मध्ये वादित्रादिभि शोभित मभिषेचनं स[6]ती यशोदा चकार॥ ४॥

**नन्दस्येति।** अन्नादिभिस्सुपूजितै र्विप्रैः कृतमङ्गलम् सञ्जातनिद्रे अक्षिणी यस्य तमशीशयच्छायितवती॥ ५॥

---

1. V °मधि 2. V. सदा 3- -3. A,B, omit 4- -4. A,B omit 5. A,B अति 6. V omits सती

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं तावत्पूतनानिर्हरण तन्मुक्तिप्रदानादिरूपं भगवद्बालचेष्टितं मभिधाय अथ चेष्टितान्तराणि विवक्षुः ताव द्राज्ञ स्तत्पिपृच्छिषा मुत्पादयति **एव** मिति। एवंविधानि दुष्टनिर्हरण तन्मुक्तिप्रदानादिरूपाणि अन्यान्यपि बहूनि बालचेष्टितानि सयोषितां सस्त्रीकाणां गोपानां शमानन्दं च कुर्वन् विष्णुर्जनार्दनो भगवान्नन्दस्य गेहे ववृधे एधाम्बभूव तर्हि तानि वद यानि भगवानकरो दिति पिपृच्छिषुः इतरा[1]वतारचेष्टितेभ्यः कृष्णावतारचेष्टितानां वैलक्षण्यं वदन् पृच्छति [2-]राजा[-2] येनेति। भगवान् हरि रीश्वरो येन येन मत्स्याद्यवतारेण यानि यानि कर्माणि करोति चकार तानि नोऽस्माकं [3-]कर्णरम्याणि[-3] श्रोत्रसुखावहानि, तथा हे प्रभो! मनोज्ञानि मनःप्रीतिकराणि च भवन्त्येव[4]॥ १॥

तथाऽपि यत्कृष्णचेष्टितं शृण्वतः पुंसः पुरुषमात्रस्य अरतिः मनोग्लानिः बुद्धे रस्वास्थ्यं वा यस्मिन् सति सुखहेतवोऽपि न सुखाय भवन्ति तथाविधं तत्। विविधा तृष्णा शब्दादिविषयस्पृहा च अपैत्यपगच्छति। अचिरेण सत्त्व मन्तःकरणं च शुध्यति। हरौ भगवति रति रनुरागः, तत्पुरुषेषु भगवद्भक्तेषु सख्यञ्च भवति। तदेव चरित्रं भूयः पुनः भूयो विपुलं यथातथा वद। तदेव हारमिति पाठे हारं मनोहारि चेष्टित मित्यर्थः। मन्यसे चेत् वक्तुमिष्टं मन्यसे चेत् वद। स्वतन्त्र स्त्वम्, अहं त्वां नियोक्तु मप्रभु रिति भावः॥ २॥

किन्तदित्यत्राऽऽह **अथेति**। मानुषं लोक मासाद्य मानुषावतारं प्राप्य तज्जातिं मानुषजाति मनुरुन्धतोऽनुकुर्वतः कृष्णस्य यदन्य दपि पूतनानिर्हरणरूपबालचेष्टिता दन्यदपि अद्भुतं लोकाचरितं बालचेष्टितं वदेत्यनुषङ्गः॥ ३॥

एवमापृष्टोऽन्यान्यपि बालचेष्टितानि विवक्षुः तावत् शकटासुरवधात्मकं चेष्टितं वर्णयति - **कदाचिदि**त्यादिना एकदेत्यतः प्राक्तनेन। औत्थानिककौतुकाप्लवे, [5]उत्थानं गृहाद्बहिश्शिशोर्निष्क्रमणं, तत्सम्बन्ध्यौत्थानिकं, तस्मिन् कौतुके उत्सवे यः आप्लवः स्नानं यस्मिन्, तस्मिन् दिने जन्मर्क्षेण रोहिणीनक्षत्रेणाऽपि योगे सति महोत्सवे समवेतानां समुदितानां योषितां मध्ये वादित्रादिभिः शोभितमभिषेचनं सूनोः सती यशोदा चकार ॥ ४॥

अन्नाद्यैरन्यैर्वासोभिः स्रग्भिरन्यैश्च [6]अभीष्टार्थैः धेनुभिश्च सुपूजितैर्विप्रैः कृतं स्वस्त्ययनं यस्य, कृतं मज्जनादिकं यस्य, आदिशब्देन अङ्गरक्षादिकं विवक्षितम्। सञ्जातनिद्रे अक्षिणी यस्य, तं सुतं नन्दस्य पत्नी [7-]यशोदाऽपि तं[-7] शनैः [8-]निद्राभङ्गभयादिति भावः[-8]। अशीशयत् शाययामास॥ ५॥

---

1. W °रचे° 2- -2. W omits 3- -3. A,B omit 4. A,B add इत्यर्थः 5. A,B omit उत्थानं 6. A,B स्वाभीष्टैः 7- -7. W omits 8- -8. W omits

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

भगवति भक्तिकरणार्थं अनन्यसाध्यमाहात्म्यं वर्ण्यतेऽस्मिन्नध्याये। तत्र शुकः परीक्षितः प्रश्नबीजमुत्थापयन् वृत्तानुवादसूचनपूर्वकं कृष्णकथामाह - **एवमिति** । एवमुक्तप्रकारेण जनार्दनः दुष्टजनान् अर्दयति हिनस्तीति। 'अर्द -हिंसायाम्' इति धातुः॥

कर्णरम्याणि श्रोत्रसुखजनकानि, मनोज्ञानि मनःप्रीतिजनकानि॥ १॥

अरतिस्तत्र वितृष्णा विशिष्टतृष्णा, विषयेषु रागबुद्ध्यभावो वा। सत्त्वमन्तःकरणम्॥ २॥

तोकचरितं बालचरितम्॥ ३॥

ननु वक्त्रे मह्यं किं ददासीति तत्राह - दयालुरिति॥

उत्थापनकौतुकाप्लवे बहिर्निष्क्रमणोत्सवसम्भ्रमणे उत्सवहेतुकः प्लवः इतस्ततः प्लुतिः यस्मिन् स तथा तस्मिन्, जन्मर्क्षयोगे कृष्णस्य जन्मनक्षत्रसंयोगो यस्मिन् तस्मिन् दिवसे इति शेषः। कासां प्लव इति तत्राह समवेतेति। सम्मिलित

स्त्रीणाम्। "क्रमनिम्न महीभागे कविप्लुतिखगप्लवाः" (वैज.को. 6-1-37) इति यादवः। स्त्रीणां मध्ये सती प्रशस्तकर्मा ॥ ४ ॥

अन्नाद्यवास आदयो येषां ते तथा तैः विप्रैः कृतस्वस्त्ययनं माङ्गल्यवचनं यस्य स तथा। सञ्जाता निद्रा ययोस्ते तथा ते अक्षिणी यस्य स तथा, तं अशीशयत् शायितवती, शयनगतमकरोदित्यर्थः ॥ ५ ॥

### शकटासुरभञ्जनवृत्तान्तः

औत्थानिकौत्सुक्यमना मनस्विनी समागतान्पूजयती व्रजौकसः।
नैवाऽशृणोद्वै रुदितं सुतस्य सा रुदन् स्तनार्थी चरणावुदक्षिपत् ॥ ६ ॥

[1]अधश्शयानस्य शिशो[2]रनोऽल्पक प्रवालमृद्वङ्घ्रिहतं व्यवर्तत।
विध्वस्त नानारसकुप्य भाजनं व्यत्यस्त चक्राक्षविभिन्नकूबरम् ॥ ७ ॥

दृष्ट्वा यशोदाप्रमुखव्रजस्त्रियो[3] ह्यौत्थानिके कर्मणि यास्समागताः।
नन्दादयश्चाद्भुतदर्शनाकुलाः कथं स्वयं वै शकटं विपर्यगात् ॥
★ इ ति ब्रुवन्तोऽतिविवादमोहिता जनास्समन्तात्परिवव्रुरार्तवत् ॥ ८ ॥

[4-]तदोचुरव्यक्त[-4]मतीन्गोपान्गोपीश्च बालकाः।
रुदताऽनेन पादेन क्षिप्तमेतन्न संशयः ॥ ९ ॥

न ते श्रद्दधिरे गोपा बालभाषितमित्युत।
[5-]अप्रमेयं बलं तस्य बालकस्य[-5] न वै[6] विदुः ॥ १० ॥

रुदन्तं सुतमादाय यशोदा ग्रहशङ्किता।
[7]कृतस्वस्त्ययनं विप्रैः सूक्तैः स्तनमपाययत् ॥ ११ ॥

पूर्ववत्स्थापितं गोपैर्बलिभिस्सपरिच्छदम्।
विप्रा हुत्वाऽर्चयाश्चक्रुर्दध्यक्षतकुशाम्बुभिः ॥ १२ ॥

---

1. M अन° 2. M,V° रथाऽ° 3. A,B,G, M °य औ° ★ This additional half-verse is not found in A & G. edns. 4- -4. A,B,G,V ऊचुरव्यवसित; M ऊचुस्तदव्यक्त 5- -5. M अनन्तस्याऽप्रमेयस्य बलं तस्य 6. A,B,G,V ते 7. V कृत्वा

**श्रीध०** **औत्थानिकेति**। उदक्षिपत् ऊर्ध्वं चालितवान् ॥ ६ ॥

**अध** इति। तस्य अधः शकटस्य अधस्तात् प्रेङ्खे शयानस्य शिशोरल्पकश्चाऽसौ प्रवालवत् मृदुश्च योऽङ्घ्रिः तेन हतम्, अनः शकटं व्यवर्तत विपर्यस्तमपतत्। कथम्? विध्वस्तानि नानारसवन्ति कुप्यभाजनानि स्वर्णरजता[1]तिरिक्त कांस्यादिमयानि यथा भवन्ति तथा। चक्रे च अक्षश्च चक्राक्षाः व्यत्यस्ताश्चक्राक्षा यस्मिन्। विभिन्नः कूबरो युगन्धरो [2]यस्य तच्च तच्च यथा भवति तथा व्यवर्ततेति ॥ ७ ॥

**दृष्ट्वेति।** अद्भुतदर्शनेनाऽऽकुला बभूवुः। तदेवाऽऽह कथमिति। विपर्ययगात् विपरीतमपतदिति॥ ८,९॥

**नेति ।** न श्रद्दधिरे विश्वासं न जग्मुः । उत अपि, बालस्यैतन्न सम्भवति, एते च बालाः किं जानन्तीति ॥ १० ॥

**रुदन्तमिति ।** रक्षोघ्नैः सूक्तैः [3]रक्षां कृत्वा ॥ ११ ॥

भगवत्प्रभावानभिज्ञविप्रचेष्टितं विडम्बयन्नाह - **पूर्ववदित्यादिना ।** बलिभिश्शक्तैः । यद्वा अष्टदिक्षु बलिभि: सहितं सपरिकरं यथापूर्वं स्थापितं विप्रा दध्यादिभिरर्चयामासुः । हुत्वा ग्रहादिहोमं विधाय ॥ १२ ॥

---

1. V°तव्यति 2. V यस्मिन् 3. A,B omit रक्षां

**वीर०** औत्थानिके उत्सव एव औत्सुक्यं युक्तं मनो यस्यास्तथाभूता मनस्विनी औदार्यप्रवणमना स्सा यशोदा समागतान् व्रजौकसः पूजयन्ती सुतस्य रुदितं ना[-1]ऽशृणोत्[-1] न शुश्राव। स हि स्तनार्थी रुदन् चरणावुदक्षिपत् ऊर्ध्व मचालयत् ॥ ६ ॥

तदा अधः व्योम्न्यापततोऽसुरात्मकस्य शकटस्याऽधोलम्बमानप्रेङ्ख इत्यर्थः । शयानस्य शिशोः श्रीकृष्णस्य अल्पकश्चाऽसौ प्रवालवन्मृदुश्च योऽङ्घ्रिस्तेन हतम् अनः शकटं व्यवर्तत विपरीतमवर्तत। तदेव दर्शयितुं विशिनाष्टि । विध्वस्तानि नाना रसवन्ति कुप्यभाजनानि स्वर्णरजतव्यतिरिक्तकांस्यादिमयानि [2]भाजनानि यस्मिन् व्यत्यस्ते चक्रे अक्षश्चक्राधारदारुविशेषश्च यस्मिन्, विभिन्नः कूबरो युगन्धरो यस्मिन् तच्च॥ ७॥

**दृष्ट्वेति।** यशोदाप्रभृतयो व्रजस्त्रियो याश्चौत्थानिके कर्मणि समागतास्ताः, नन्दादयो गोपाश्च दृष्ट्वा अद्भुतदर्शनेनाऽऽकुलाः सम्भ्रान्ताः कथमेतच्छकटं स्वयमेव विपर्ययगात् विपरीतमभूत् इत्येवं ब्रुवन्तः, ब्रुवन्तश्च ब्रुवत्यश्च ब्रुवन्तः। ''पुमान् स्त्रिया'' (अष्टा०. 1-2-69) इत्येकशेषः। अतीव विषादेन दुःखेन मोहिताः जना यशोदादयः आर्तवत् समन्तात्सर्वतः परिवव्रुः परिविवेष्टिरे॥ ८॥

तदा अव्यक्ता शकटागमनतद्विपर्ययाद्यगोचरा मतिर्येषां तान् गोपान् गोपीश्च प्रति बालकाः कृष्णस्य समन्ततः क्रीडन्तो बालका ऊचुः, किमिति? एतच्छकटमनेन बालकेन कर्त्रा पादेन क्षिप्तं विपर्ययं प्रापितम्, अत्र न संशयः कार्य इति॥ ९॥

ते नन्दादयो[3] न श्रद्दधिरे विश्वासं न जग्मुः, बालस्यैतन्न सम्भवति, एते च बालका किं जानन्तीति, बालकस्याऽप्रमेयमपारं बलञ्च न वै विदुः ॥ १०॥

ततो रुदन्तं सुतमादाय यशोदा बालग्रहशङ्किता। कर्तरि क्तः। बालग्रहमाशङ्कमाना, अत एव विप्रैः कर्तृभिः, सूक्तैः रक्षोघ्नमन्त्रैः करणैः, कृतं स्वस्त्ययनं यस्य तं कृतानिष्टपरिहारककर्माणं शिशुं स्तनमपाययत्॥ ११॥

ततो बलिभिश्शक्तैः अथवा अष्टदिक्षु बलिभिः गृहशान्तिकारिभिः पूजात्मकैस्सहितं, सपरिकरं यथापूर्वं स्थापितं विप्राः दध्यादिभिरर्चयामासुः। हुत्वा ग्रहादि होमं विधाय [4] ॥ १२॥

---

1- -1. W omits 2. A,B पात्राणि 3. A,B add गोपाः 4. A,B add अर्चयाञ्चक्रुरित्यर्थः।

**विज०** कदा तु, उत्थानकम् उत्सुकयति पश्यतीति उत्थानकौत्सुक्यम्। स्वार्थे ष्यञ् प्रत्ययः। तादृशं मनो यस्यास्सा तथा। मनस्विनी प्रशस्तमनाः उदक्षिपत् क्षिप्तवान्॥ ६॥

अथ उत्क्षेपानन्तरम्। अनः शकटं व्यवर्तत विपरीत मधोमुखमपतत्। अल्पकौ अणुतरौ प्रवालवन्मृदू अङ्घ्री अल्पकप्रवालमृद्वङ्घ्री ताभ्यां हतं पीडितम्। ध्वस्तानि इतस्ततो विक्षिप्तानि नानारसपूर्णकुप्यात्मभाजनानि यस्मिन् तत्तथा। कुप्यानि द्वीपान्तरस्थमृद्विशेषरचितानि चक्रं रथाङ्गं वृत्तदारु। अक्षो नाम चक्रप्रोतदारुविशेषः। कूबरो युगन्धरः। व्यत्यस्तौ न्यञ्चितौ चक्राक्षौ विभिन्नो विशीर्णः कूबरश्च यस्य तत्तथा॥ ७॥

तत् विपर्यगात् विपरीतं गतम्॥ ८॥

अव्यक्तमतीन् अनिश्चितबुद्धीन्, न व्यक्ता मतिर्येषां तेऽव्यक्तमतयः तान् कुलवृद्धान्॥ ९॥

बालभाषितवत् बालभाषितमिति विकल्प्य संशय्य। "उताऽप्यर्थ-विकल्पयोः" (अम. को. 3-398) इत्यमरः॥ १०, ११॥

स्थापितम्, अन इति शेषः। बलिभिः प्राणशक्तिमद्भिः सपरिच्छदं सपरिकरम्॥ १२॥

**[1]येऽसूयाऽनृतदम्भेर्ष्या हिंसामानविवर्जिताः।**
**न तेषां सत्यशीलानामाशिषो विफलाः कृताः[2]॥ १३॥**

**इति बालकमानीय[3] सामर्ग्यजुरुपाकृतैः।**
**जलैः पवित्रौषधिभिरभिषिच्य द्विजोत्तमैः॥ १४॥**

**वाचयित्वा स्वस्त्ययनं नन्दगोपस्समाहितः॥**
**हुत्वा चाऽग्निं द्विजातिभ्यः प्रादादन्नं महागुणम्॥ १५॥**

**[4]गावश्च सर्वगुणोपेता वासस्स्रग्रुक्ममालिनीः।**
**[5]आत्मजाऽभ्युदायार्थाय [6-]प्रादात्ते चा[-6]दात्ते चाऽन्वयुञ्जत॥ १६॥**

**विप्रा मन्त्रविदो युक्ता स्तैर्याः प्रोक्तास्तदा[7]ऽऽशिषः।**
**ता निष्फला भविष्यन्ति न कदाचिदपि स्फुटम्[8]॥ १७॥**

1. M स्तेया° 2. M क्वचित् 3. B,G. °दा° 4. A,B,G,K, W गावः 5. M पुत्रस्याऽ° 6- -6. प्राग्जातेश्वाऽ° 7. A,B,G, M °था° 8. V ध्रुवम्

**श्रीध० ये** इति। असूया गुणेषु दोषाविष्करणम्। ईर्ष्या अक्षान्तिः। [1-]असूयादिभिः विवर्जिताः[-1] तेषामाशिषः कृतास्तैः प्रयुक्ताः॥ १३॥

**इतीति।** इत्येवमभिप्रेत्य सामर्ग्यजुर्भिः उपाकृतैः [2]संस्कृतैः। पवित्रा ओषधयो येषु जलेषु तैः [3] द्विजोत्तमैः कर्तृभिः अभिषिच्य अभिषेकं कारयित्वा॥ १४॥

**वाचयित्वेति।** हुत्वा हावयित्वा ॥ १५॥

**गा** इति। [4]गाश्च प्रादात्। [5-]ते च विप्राः[-5] अन्वयुञ्जत आशिषो [6]अयुञ्जन्। [7-]ते 'शतमन्वयुः' इति पाठान्तरे शतं तद्दत्त गोशतं अन्वयुः। स्वीकृतवन्त इत्यर्थः। यद्वा शतं शतसंख्याकाः ते विप्रा इति[-7]॥ १६॥

**विप्रा** इति। तत्तथैव बभूवुरित्यर्थः॥ १७॥

1- -1. A, V omit 2. A अभिमन्त्रितैः 3. A,B add कृत्वा 4. A,B गावः गाश्च 5- -5. A,B omit 6. A,B युयुजुः 7- -7. A,B omit

**वीर०** ततो, येऽसूयादि दोषविवर्जिताः तेषां सत्यशीलाना मननृतवादशीलानामाशिषः कदाचिदपि विफला न भवन्तीति बुद्ध्वा बालकमादायेत्यन्वयः। [1] असूया गुणेषु सत्स्वपि दोषाविष्करणम्, अनृतं मिथ्याभाषणम् । दम्भो वञ्चनम्। ईर्ष्या त्वक्षमा, हिंसा भूतद्रोहः मानोऽहङ्कारः, द्विजोत्तमैः कर्तृभिः सामर्ग्यजुर्मन्त्रैः, उपाकृतैः संस्कृतैः, पवित्रा ओषधयो येषु तैर्जलै रभिषिच्य स्नापयित्वा, स्वस्त्ययनं वाचयित्वा च नन्दाख्यो गोपः समाहितचित्तः हुत्वा [2]अग्निं हावयित्वा महागुणं षड्रसोपेतमन्नं द्विजातिभ्यः प्रादात् [3] ॥ १३ - १५॥

साधुत्वबहुक्षीरत्वादिभिस्सर्वैर्गुणैर्युक्ताः। वासांसि स्रजः हेममालाश्चाऽऽसां सन्तीति तथा ताः, गाश्च आत्मजस्य अभ्युदयार्थं द्विजातिभ्यः प्रायच्छत्। ते च मन्त्रविदो युक्तास्समाहिताः द्विजातयः अन्वयुञ्जत प्रयुयुजिरे, आशिष इति शेषः॥ १६॥

यदभिप्रायेणाऽऽशिषोऽन्वयूयुजन्, ताश्च तथैव बभूवुरित्याह। तैर्विप्रै र्या आशिषस्तदा प्रोक्तः ताः कदाचिदपि स्फुटं नूनं निष्फलाः न भविष्यन्ति॥ १७॥

1. A,B add तत्र 2. W omits अग्निं 3. A,B add प्रायच्छत्

**विज०** इति कृत्वा स्थिता एव विप्राः सत्याशिष इत्याह - **य** इति॥ १३॥

उपाकृतैः संस्कृतैः॥ १४, १५॥

पुत्रस्याभ्युदयार्थाय अभ्युदयप्रयोजनाय जातैः प्राक्सङ्कल्पिता इति शेषः। प्राग्जातेरग्रजस्य बलभद्रस्य वा॥ १६, १७॥

## तृणावर्तनिराकरणवृत्तान्तः

**एकदाऽऽरोहमारूढं लालयन्ती सुतं सती।**
**गरिमाणं शिशोर्वोढुं न सेहे गिरिकूटवत्॥ १८॥**

**भूमौ निधाय तं गोपी विस्मिता भारपीडिता।**
**महापुरुषमादध्यौ [1-]जगतामास[-1] कर्मसु॥ १९॥**

**दैत्यो नाम्ना तृणावर्तः कंसभृत्यः प्रचो[2]दितः।**
**चक्रवातस्वरूपेण जहाराऽऽसीनमर्भकम्॥ २०॥**

**गोकुलं सर्वमावृण्वन् मुष्णंश्चक्षूं[4]षि रेणुभिः।**
**[3]ईरयन्सुमहाघोरशब्देन प्रदिशो [5]दिशः॥ २१॥**

**मुहूर्तमभवद्गोष्ठं रजसा तमसाऽऽवृतम्।**
**सुतं यशोदा नाऽपश्यत् [6]तस्मिन् न्यस्तवती यतः॥ २२॥**

**नाऽपश्यत्कश्चि[7]दात्मानं परश्चापि विमोहितः।**
**तृणावर्त[8]विसृष्टाभिः शर्कराभिरुपद्रुतः॥ २३॥**

---

1- -1. M जगामाशु च 2. A.B.G°णो 3. A.K.W पू० 4. K.W. च 5. K.V.W दश 6. V तत्र 7. A,B,G,M °श्चना° 8. G,M नि°

**श्रीध०**★ "उत्क्षिप्य मृदुपादेन शकटं व्योम्नि लीलया। तृणावर्तं पदाऽऽपीड्य भुव्यपातय दर्भकः"॥

**एकदेति**। आरोहमुत्सङ्गम्॥ १८॥

**भूमाविति**। तृणावर्तात् [1]स्वमृत्युपरिहाराय कृष्णेनैवाऽऽत्मन उत्सङ्गादुत्ताराय च कृतं भारमजानती उत्पातशङ्कया महापुरुषमादध्यौ। श्रीकृष्णोदरवर्तिनां जगतां भारेण पीडिता विस्मिता च सती। यद्वा, जगतां मध्ये कर्मसु आस, बभूव, न तु जगदुदरं [2]तं वेदेत्यर्थः॥ १९, २०॥

**गोकुलमिति।** ईरयन् [3]नादयन्नित्यर्थः। [4-]पूरयन्नित्यपि पाठान्तरम्[-4]॥ २१॥

**मुहूर्तमिति।** यतो यत्र न्यस्तवती [5]तत्र तस्मिन् स्थाने नाऽपश्यत्॥ २२, २३॥

---

★ श्रीधरीयोऽयं श्लोकः। 1. V स्वाऽपमृ° 2. V तु 3. A,B निनाद° 4- -4. A,B omit 5. A,B omit तत्र

**वीर०** अथ तृणावर्तासुरवधात्मकमन्यदपि भगवतो बालचेष्टितं विवक्षुस्तावत् उपोद्घातरूपं चेष्टितमाह - **एकदेति** द्वाभ्याम्। कदाचित् सती यशोदा आरोहमुत्सङ्गमारूढं बालकं सुतं [1] लालयन्ती गिरिकूटवत् गिरिशृङ्गस्येव शिशोः गरिमाणं भारं [2]वोढुं न सेहे नाऽऽसहत। तृणावर्तात् मातुरपमृत्युपरिहाराय चिकीर्षितकार्योपयोगाय च तदङ्कादवरोढुञ्च भगवता कृतं भारं न सेहे इति भावः॥ १८॥

कदाचिदप्यस्य शिशोरेवंविधो गरिमा न दृष्ट इति विस्मिता भारेण पीडिता च शिशुं भूमौ निधाय उत्पातशङ्कया महापुरुषं भगवन्तम् आदध्यौ ध्यातवती। ततो जगतां कर्मसु गार्हियकर्मसु आस प्रवृत्ता बभूव। यद्वा, श्रीकृष्णोदरवर्तिनां जगतां भारेण पीडिता सती। यद्वा, जगतां मध्ये कर्मसु आस, न तु जगदुदरं तं [3]वेदेत्यर्थः॥ १९॥

तदा तृणावर्ताख्यो दैत्यः कंसस्य भृत्यः तेन प्रचोदितः चक्रवातरूपेणाऽऽगत्य आसीनं [4-]यशोदया त्यक्तम्[-4] अर्भकं [5] जहार गृहीतवान्॥ २०॥

कथम्भूतस्सन्? कृत्स्नं गोकुलं चक्रवातरूपेणाऽऽवृण्वन्, व्याप्नुवन् रेणुभिर्व्रजौकसां चक्षूंषि [6]मुष्णन् पिधापयन् महता घोरेण च शब्देन दश च दिशः पूरयन्। ईरयन्निति पाठे नादयन्॥ २१॥

तथा गोष्ठं मुहूर्तं रजसा तमसा च परागान्धकाराभ्यामावृतमभूत्। [7]तदा च यशोदा, यतो यत्र न्यस्तवती निहितवती तत्र देशे सुतं नाऽपश्यत् न ददर्श॥ २२॥

तथा कोऽपि जनः परमन्यमात्मानञ्च नाऽपश्यत्। कुतः? यतो विमोहितः। तत्र हेतुः तृणावर्तेन विसृष्टाभिः प्रयुक्ताभिः शर्कराभिः सिकताभिः उपद्रुतः ॥ २३॥

---

1. A,B add श्रीकृष्णं 2. W omits वोढुं 3. A,B add भगवन्तं 4- -4. W omits 5. A,B add श्रीकृष्णं 6. W omits मुष्णन् 7. A,B तथा

**विज०** ईरयन् शब्दयुक्ताः कुर्वन्नित्यर्थः॥ १८ - २१॥

यतो यत्र न्यस्तवती तस्मिन् स्थले॥ २२॥

शर्कराभिः अणुतरशिलाभिः॥ २३॥

इति खरपवनचक्रपांसुवर्षे सुतपदवीमबलाऽविलक्ष्य[1] माता।
अतिकरुणमनुस्मरन्त्यशोच द्भुवि पतिता मृतवत्सका यथा गौः॥ २४॥

रुदितमनुनिशम्य तत्र गोप्यो भृशमनुतप्तधियोऽश्रुपूर्णमुख्यः।
रुरुदुरनुपलभ्य नन्दसूनुं पवन उपारतपांसुवर्षवेगे॥ २५॥

तृणावर्तश्शान्तरयो वात्या रूपधरो हरन्।
कृष्णं नभोगतो गन्तुं नाऽशक्नोद्भूरिभारभृत्॥ २६॥

तमश्मानं मन्यमान आत्मनो गुरुमत्तया।
गले गृहीत उत्स्रष्टुं नाऽशक्नोदद्भुतार्भकम्॥ २७॥

गलग्रहणनिश्चेष्टो दैत्यो निर्गत लोचनः।
अव्यक्तरावो[2] न्यपतत्सहबालो व्यसुर्व्रजे॥ २८॥

तमन्तरिक्षात्पतितं शिलायां विशीर्णसर्वावयवं करालम्।
पुरं यथा रुद्रशरेण विद्धं स्त्रियो रुदत्यो[3] ददृशुस्समेताः॥ २९॥

★ [4]आदाय मात्रे प्रतिहृत्य विस्मिताः कृष्णञ्च तस्योपरि[5] लम्बमानम्।
तं स्वस्तिमन्तं पुरुषादनीतं विहायसा मृत्युमुखात्प्रमुक्तम्॥
गोप्यश्च[6] गोपाः किल नन्दमुख्या लब्ध्वा पुनः प्रापुरतीव मोदम्॥ ३०॥

---

1. M °चक्षमाणा 2. K,M वाक्यो 3. K,M,V,W °न्त्यो ★ The first pada of this verse is printed as second pada and the second pada of the same verse is printed as first pada, in V Edition. 4. B,G प्रा° 5. A.B,G,V °रसि 6. M °स्स°

**श्रीध०** **इतीति।** खरपवनचक्रात् पांसु वर्षे सति॥ २४॥

**रुदितमिति।** उपारतः शान्तः[1] पांसुवर्षस्य वेगो यस्मिन् तथाभूते पवने सति। तत्र तस्या रुदितमनुनिशम्य गोप्यो रुरुदुः॥ २५॥

**तृणावर्त** इति। वात्या चक्रवातः, तद्रूपधरः कृष्णं हरन् शान्तरयः कथञ्चिन्नभोगतः ततःपरं गन्तुं भा[2]रातिरेका[2]त् नाऽशक्नोदित्यर्थः॥ २६॥

**तमिति** । गुरुमत्तयाऽतिगौरवेण [3] तं [4] अश्मानं [5] पर्वतप्रायं मन्यमानः तेनैवाऽऽत्मनो गले गृहीतः[6] तं त्यक्तुमिच्छन्नपि नाऽशक्नोदित्यर्थः॥ २७ - २९॥

**आदायेति।** तस्योरसि लम्बमानं कृष्णमादाय मात्रे प्रतिहृत्य समर्प्य विस्मिताश्च बभूवुरिति। विहायसा गगनमार्गेण पुरुषादेन [7] तृणावर्तेन नीतं तथाऽपि मृत्युमुखात्प्रमुक्तं पुनर्लब्ध्वा मोदं प्रापुरिति [8] ॥ ३० ॥

---

1. A,B omit शान्त: 2- -2. A,B omit 3. V adds भारेण 4. A,B, add तथा 5. A,B, add अश्मवन्तं 6. A,B °तत्वात् 7. A दैत्येन; B omits the word 8. V adds उत्तरेणान्वय:

**वीर०** इतीत्थं खरात् कठिनात् पवनचक्रात् पांसुवर्षे सति सुतपदवीमविलक्ष्य अदृष्ट्वा अबला माता यशोदा अतिकरुणं यथा तथा अनुस्मरन्ती भुवि पतिता। यथा मृतवत्सा गौस्तद्वत् शुशोच ॥ २४ ॥

ततस्तस्या रुदितमाकर्ण्य भृशं नितरामनुतमा: धियो मनांसि यासां अश्रूणि मुखेषु यासां तथाभूता: गोप्य: तत्राऽऽगत्य नन्दसूनुं श्रीकृष्णमनुपलभ्याऽदृष्ट्वा रुरुदु:। उपारत: पांसुवर्षस्य वेगो यस्मिंस्तथाभूते सति पवने तत्र तस्या रुदितमनुनिशम्येत्यन्वय: ॥ २५ ॥

वात्या चक्रवात: तद्रूपधरस्तृणावर्त: कृष्णं हरन् शान्तवेग: कथञ्चिन्नभोगत: तत:परं नभो गन्तुं नाऽशक्नोत्। तत्र हेतु: भूरिभारभृत् [2] ॥ २६ ॥

तं बालं गुरुमत्तया आत्मन: स्वस्य अश्मानं कूपे पिपतिषो: कण्ठलग्नपाषाणतुल्यं मन्यमान:। यद्वा, आत्मन: स्वस्मादपि गुरुमत्तया अश्मानं बालव्याजम् [3] अश्मानं मन्यमानस्तेन दृढं गले गृहीत: तमुत्स्रष्टुं त्याजयितुं नाऽशक्नोत् ॥ २७ ॥

गले ग्रहणेनैव निश्चेष्टो, निर्गते उद्गते लोचने यस्य स दैत्य: अव्यक्तमस्पष्टं वाक्यं वचो यस्य स तथाभूत: निर्बद्धगलत्वादिति भाव:। बालेन [4] सहितो व्यसुर्गतप्राणो व्रजे न्यपतत् ॥ २८ ॥

अन्तरिक्षाच्छिलायां पतितम्, अत एव विशीर्णास्सर्वावयवा: यस्य तम्, दैत्यं रुद्रशरेण विद्धं पुरमिव करालं भयङ्करं सङ्घीभूता रुदन्त्यश्च स्त्रियो ददृशु: ॥ २९ ॥

ततस्तस्य दैत्यस्य उरसि लम्बमानं कृष्णमादाय मात्रे यशोदायै प्रतिगृह्य समर्प्य विस्मिता बभूवु:। विहायसा गगनमार्गेण पुरुषादेन दैत्येन नीतम् अथाऽपि मृत्युमुखात् प्रमुक्तं स्वस्तिमन्तं जीवन्तं बालं [5] लब्ध्वा नन्दप्रधाना गोपा गोप्यश्च नितरां मोदं हर्षं प्रापु: किल ॥ ३० ॥

---

1. W omits श्रीकृष्णं 2. A,B add इति। 3. A,B परं 4. A,B add श्रीकृष्णेन 5. W omits लब्ध्वा

**विज०** इतिशब्द: प्रकारवचन: आदिवचनो वा। "इति हेतुप्रकरणप्रकारादिसमाप्तिषु" (वैज. को. 8-7-17) (इत्यमर:)। खरश्चण्ड: पवनो वायु: तेन चक्रपांसव: मण्डलीकृतरजांसि, तेषां वर्षे समूहे सुतपदवीं अविचक्षमाणा विगतदर्शना अपश्यन्तीत्यर्थ:। पुत्रमनुस्मरन्ती निरन्तरसञ्चिन्तनोपेता अत एव भुवि पतिता अबला अतिकरुणम् अशोचदित्यन्वय: ॥ २४ ॥

उपारत: उपरत: शान्त: पांसुवर्षवेगो यस्य पवनस्य स तथा। तस्मिन्सत्यपि कृष्णस्य अन्तरिक्षगमनात् भुव्यदर्शनं उपरिचक्षुर्दौर्बल्यादित्यर्थ: ॥ २५ ॥

ननु मूर्तद्रव्यादर्शनं देशान्तरसंयोगात् देशान्तरप्रवेशलक्षणसंयोगाद्वेति उभयथा सम्भाव्यते। अत्र कथमिति स्त्रीणां शङ्काम् अपनेतुमुपक्रमते तृणावर्त इति। शान्तरय: निवृत्तवेग: ॥ २६ ॥

अश्मानं श्वेतपाषाणम् ॥ २७ ॥

निर्गतलोचन: निष्क्रान्तनेत्रमांसपिण्ड:। अव्यक्तवाक्य: वचनावृत्तिरहित: ॥ २८ ॥

पुरं त्रिपुरसंज्ञम् ॥ २९, ३० ॥

**★ अहो बताऽत्यद्भुतमेष रक्षसा बालो निवृत्तिं गमितोऽभ्यगात्पुन:।**
**हिंस्र: स्वपापेन विहिंसित: खल: साधुस्समत्वेन भयाद्विमुच्यते ॥ ३१ ॥**

**किं नस्तपश्चीर्णमधोक्षजार्चनं पूर्तेष्टदत्तं[2] किमु भूतसौहृदम्।**
**यत्सम्परेत: पुनरेव[3] बालको दिष्ट्या स्वबन्धून्प्रणयन्नुपस्थित: ॥ ३२ ॥**

**[4]दृष्ट्वाऽद्भुतानि बहुशो नन्दगोपो बृहद्वने।**
**वसुदेववचो भूयो मानयामास विस्मित: ॥ ३३ ॥**

**एकदाऽर्भकमादाय स्वाङ्कमरोप्य भामिनी।**
**प्रस्नुतं पाययामास स्तनं स्नेहपरिप्लुता[5] ॥ ३४ ॥**

**-: स्तन्यपानसमये जृम्भणव्याजेन मात्रे विश्वरूपप्रदर्शनघट्ट: :-**

**पीतप्रायस्य जननी सुतस्य[6] रुचिरस्मितम्।**
**मुखं लालयती राजन् जृम्भतो ददृशे जगत्[7] ॥ ३५ ॥**

**खं रोदसी ज्योतिरनीकमाशा सूर्येन्दुवह्निश्वसनाम्बुधींश्च।**
**द्वीपान्नगांस्तद्दुहितॄर्वनानि भूतानि यानि स्थिरजङ्गमानि ॥ ३६ ॥**

**सा[8] वीक्ष्य विश्वं सहसा राजन्सञ्जातवेपथु:।**
**सम्मील्य मृगशाबाक्षी नेत्रे आसीत्[9]सुविस्मिता ॥ ३७ ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे
तृणावर्तमोक्षो नाम सप्तमोऽध्याय: ॥ ७ ॥

★ समेत्य चैकत्र कृताशिषाऽमला विचारयामासुरुपायमत्र। This additional half-verse is found in A Edn. only. 1. K,W °त्र 2. A,B,G,K,W °त्तमुत; V °त्तं श्रुत 3. V °ष 4. V दृष्ट्वोत्पातानि 5. M °तम् 6. A,B,G सा तस्य 7. A,B,G,M इदम् 8. M सं 9. V चा°

**श्रीध०** परस्परं हर्षकथामाहुः- **अहो बतेति।** निवृत्तिं गमितो मृत्युं प्रापितः। कोऽत्र विस्मयो, युज्यत एवैतदिति। तेष्वेव केचिदाहुः - हिंस्र इति॥ ३१॥

**किमिति** । नोऽस्माभिः चीर्णं कृतम्। पूर्तं वापीकूप[1]तटाकादि निर्माणम्। इष्टं पञ्चयज्ञाग्नि होत्रादि, दत्तं दानं, यद्यस्मात् तप आदेः प्रणयन् हर्षयन्॥ ३२ - ३४॥

★तृणावर्तागमे दृष्टगौरवाशङ्किनीं प्रसूम्। बोधयन् दर्शयामास जृम्भमाणो मुखे जगत्।

**पीतेति।** पी[2]तमस्यास्तीति पीतः तत्प्रायः पीतप्रायः। पीतविदितादिशब्दानां पानादिमति व्युत्पन्नत्वात् विभक्ताभ्रातर इत्यादिवत्[-2]। [3-]यद्वा, पीतप्रायः स्तनो येन इति उत्तरपदलोपसमासो वा[-3]॥ ३५॥

**खमिति** । [4-]खं स्वर्गाकाशं[-4], नगान् गिरीन्। तद्दुहितॄर्नदीः॥ ३६, ३७॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां सप्तमोऽध्यायः॥ ७॥

1. A,B omit तटाक ★ श्रीधरीयोऽयं श्लोकः 2- -2. A,B omit 3- -3. A,B पीतप्रायस्य पीतः प्रायः स्तनो येन तस्य॥ ३५॥ 4- -4 A,B omit

**वीर०** अथ गोपादीनां मिथस्सन्तोषवादमाह - **अहो** इति द्वाभ्याम्। रक्षसा निवृत्तिं गमितो विनाशं प्रापितः एष बालः पुनरभ्यगात्। अहो अत्याश्चर्यमेतत्। कोऽत्र विस्मयः। युक्तमेवैतदिति। तेष्वेव केचिदाहुः हिंस्र इति। हिंस्रः क्रूरः खलः स्वपापेनैव निहतः। साधुस्तु समत्वेन स्वस्मिन्नितरेषु च समभावेन भयान्मुक्तो भवतीति॥ ३१॥

[1-]तत्राऽपि केचिदाहुः[-1] - **किमिति।** नोऽस्माभिः तपआद्यन्यतमं किञ्चिच्चीर्णं पूर्वजन्मनि सम्पादितं स्यात्। कुतः? यत् यस्मात् सम्परेतो मृतोऽपि बालकः पुनरपि स्वबन्धून् रमयन् उपस्थितः। दिष्ट्या अयं महानानन्दो जात इत्यर्थः। अन्यथैतद्दुर्लभमिति भावः। तपः कृच्छ्रचान्द्रायणादि। पूर्तं स्मार्तं कर्म, तटाकादिनिर्माणं वा। इष्टं श्रौतं, दत्तं दानम्, तेषां समाहारद्वन्द्वः। प्रणयन्निति पाठे, प्रणयन् हर्षयन् उपस्थित इत्यर्थः॥ ३२॥

एवं विधान्यन्या[2]न्यपि अद्भुतानि बहुशो बृहद्वने बृहति व्रजप्रान्तवने दृष्ट्वा नन्दगोपो विस्मितः पुनः वसुदेवस्य वचो "नेह स्थेयं बहुदिनं सन्त्युत्पाताश्च गोकुले" (भाग. 10-5-30) इत्येतद्वचो मानयामास सत्यमेवाऽभूदित्य मन्यत॥ ३३॥

अथ भगवान् तृणावर्तागमे प्रदर्शितस्य गरिम्णो मूलं दर्शयामासेत्याह - **एकदेति।** प्रस्नुतं, कर्तरि क्तः , स्तनं प्रस्नुवन्तं स्तनं[3] पाययामास। कथम्भूता? स्नेहेन परिप्लुता परितो व्याप्ता ॥ ३४ ॥

हे राजन्! पीतप्रायस्य पीतप्रायस्तनस्य कृतस्तन्यपानस्येत्यर्थः। पीतमिति भावे क्तः। पीतं पानमस्याऽस्तीति पीतम्। अर्शआदित्वात् मत्वर्थीयोऽच्। तत्प्रायः। यद्वा, भुक्ता ब्राह्मणा इतिवत् कर्तरि क्तः। प्रायशब्दः सदृशवाची सन्नपि अत्र अनतिरिक्तार्थपरः। तस्य सुतस्य रुचिरं सुन्दरं स्मितं यस्मिन् तन्मुखं लालयन्ती चुम्बनादिना लालनं कुर्वती जृम्भत आस्यं विवृण्वतः तस्य[4] मुखे इदं वक्ष्यमाणं खाद्यात्मकं जगत् ददर्श। मुख इति पाठान्तरम्। तदा रुचिरस्मितं सुतं लालयन्ती पीतप्रायस्य जृम्भतः [5] सुतस्य मुखे इदं जगत् ददृशे[6] इत्यन्वयः॥ ३५॥

तद्दृष्टजगदन्तर्भूतपदार्थानाह - **खमिति।** खमाकाशम्। रोदसी द्यावापृथिव्यर्थकमव्ययम्। ज्योतिरनीकं शुक्राङ्गारकादिज्योतिश्चक्रम्। सूर्यादीनामितरेतरयोगद्वन्द्वः। नगान् गिरीन्, तद्दुहितॄर्नदीः। यानि स्थावरजङ्गमात्मकानि भूतानि तानि च ददृश इत्यन्वयः॥ ३६॥

हे राजन्! सा मृगशाबाक्षी यशोदा सुतस्य मुखे खादियुक्तं विश्वमवलोक्य सञ्जातो वेपथुः शरीरकम्पो यस्यास्तथाभूता स्वकीये नेत्रे निमील्य विस्मिता बभूव॥ ३७॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां सप्तमोऽध्यायः॥ ७॥

---

1- -1. W omits 2. W omits अपि 3. A,B omit स्तनं 4. A,B सुतस्य 5. A,B add मुखं विवृण्वतः 6. A,B ददर्श

**विज०** समत्वेन गुणेन। "अधो न क्षीयते जातु यस्मात्तस्मादधोक्षजः" (भार. उद्यो. 69-10) इति भारतवचनात् अधोक्षजशब्दो निरुक्तः। वापीकूपतटाकादि पूर्तम्। "अग्निहोत्रं तपस्सत्यं वेदानाञ्चानुपालनम्। आतिथ्यं वैश्वदेवञ्च इष्टमित्यभिधीयते। "शरणागतसन्त्राणं भूतानाञ्चाप्यहिंसनम्। बहिर्वेदि च यद्दानं तद्दत्तमित्यभिधीयते॥" प्रणयन् स्नेहं कुर्वन्। "प्रणयः प्रसरस्समौ" (अम.को. 3-138) इत्यमरः॥ ३१, ३२, ३३॥

भामिनी तेजस्विनी॥ ३४॥

इदं वक्ष्यमाणं ददृशे, आस्ये इति शेषः॥ ३७॥

रोदसी द्यावापृथिव्यौ, ज्योतिरनीकं ज्योतिर्गणम्। तेषां पर्वतानां दुहितॄः नदीः॥ ३६॥

मृगशाबाक्षी मृगबालाक्षी॥ ३७॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थ विरचितायां पदरत्नावल्यां
टीकायां दशमस्कन्धे पूर्वार्धे सप्तमोऽध्यायः॥ ७॥
(विजयध्वजरीत्या अष्टमोऽध्यायः)

# अष्टमोऽध्यायः

## (विजयध्वजरीत्या नवमोऽध्यायः)

### श्रीबादरायणिरुवाच[1]

गर्गः पुरोहितो राजन् यदूनां सुमहातपाः।
व्रजं जगाम नन्दस्य वसुदेव प्रचोदितः॥ १ ॥

तं दृष्ट्वा परमप्रीतः प्रत्युत्थाय कृताञ्जलिः।
आनर्चाऽधोक्षजधिया प्रणिपात पुरस्सरम्॥ २ ॥

रूपविष्टं कृतातिथ्यं गिरा सूनृतया मुनिम्।
नन्दयित्वाऽब्रवी द्ब्रह्मन् पूर्णस्य करवाम किम्॥ ३ ॥

महद्विचलनं नृणां गृहिणां दीनचेतसाम्।
निःश्रेयसाय भगवान् कल्पते नाऽन्यथा क्वचित्॥ ४ ॥

ज्योतिषा मयनं साक्षात् यत्तज्ज्ञान मतीन्द्रियम्।
प्रणीतं भवता येन पुमान्वेद परावरम्[2]॥ ५ ॥

त्वं हि ब्रह्मविदां श्रेष्ठः संस्कारान्कर्तु मर्हसि।
बालयो रनयो र्नृणां जन्मना ब्राह्मणो गुरुः॥ ६ ॥

### गर्ग[3] उवाच

यदूना मह माचार्यः ख्यातश्च भुवि सर्वतः।
सुतं मया संस्कृतं ते मन्यते देवकी सुतम्॥ ७ ॥

कंसः पापमतिः सख्यं तव चाऽऽनकदुन्दुभेः।
देवक्या अष्टमो गर्भो न स्त्री भवितु मर्हति॥ ८ ॥

इति सञ्चिन्तयन् श्रुत्वा देवकी[4]दारिकावचः।
अपि हन्ताऽऽगताशङ्कः तर्हि तन्नोऽनयो महान्[5]॥ ९ ॥

---

1- -1. A.B.G. श्रीशुक उवाच 2. V. °प° 3. V. adds आचार्यः 4. A.B.G. °क्याः 5. A.B.G. भवेत्

## श्रीधरस्वामिविरचिता भावार्थदीपिका

अष्टमे नाम कर्माऽस्य बालक्रीडा कुतूहले।
मृद्भक्षणा[1]ऽभियोगे च विश्वरूपं निरूप्यते॥
विश्वरूपादि बालस्य निशम्याऽऽशङ्किनः पितुः।
नामकृद्वर्ग वाक्येन निजं तत्त्व[2]मसूसुचत् ॥ १ - ३ ॥

पूर्णश्चेत् कथं धनिनां गृहमागतः? तत्राऽऽह - **महदिति।** महतां स्वाश्रमा[3]दन्यत्र विचलनं न स्वार्थम्, किन्तु गृहिणां मङ्गलाय। ननु तर्हि त एव महद्दर्शनार्थं किमिति ना[4]ऽऽगच्छन्ति? तत्राऽऽह - दीनचेतसां कृपणानां क्षणमपि गृहं त्यक्तुमशक्नुवता मित्यर्थः॥ ४ ॥

त्वया बालयोः नामकरणादि करणीयम् इति वक्तुं तस्य ज्ञानातिशयमाह - **ज्योतिषामिति।** यदतीन्द्रिय ज्ञानसाधनं ज्योतिषामयनं तत्प्रतिपादकं ज्योतिश्शास्त्रमित्यर्थः। तत्साक्षाद्भवता प्रणीतम्। येनान्योऽपि पुमान् परा[5]वरं परं कारणं पूर्वजन्मकृतं कर्म, अ[6]वरं कार्यं अ[7]स्मिन् जन्मनि भाविफलं तद्वेद। उक्तञ्च जातके यदुपचितमन्यजन्मनि शुभाशुभं तस्य कर्मणः प्राप्तिम् व्यञ्जयति शास्त्र मेतत्तमसि द्रव्याणि दीप इव इति॥ ५ ॥

विवक्षित माह - **त्वं हीति।** दैवज्ञो मन्त्रविच्च त्वम्। अतो नामकरणादिसंस्कारान् कर्तुमर्हसीत्यर्थः। नन्वेतद्गुरुणा करणीयम्? इति चेत्तत्राऽऽह नृणामिति॥ ६ ॥

अत्युत्साहिनं नन्दं प्रति गुप्तमेतत्कार्य मित्यभिप्रायेण प्रत्याचक्षाण इवाऽऽह - **यदूनामिति।** भवतु तथापि त्वमत्राऽऽगत इति को विद्यादिति चेदत आह - ख्यात श्चेति। ततः किमत आह देवकीसुतमिति। कंसो मन्यते म[8]न्येत, कल्पयेदित्यर्थः॥ ७ ॥

**कंस** इति। ननु यदुकुमार इति कथञ्चिज्जानातु। तत्र च वसुदेवस्य सु[9]तः त[10]त्राऽपि देवक्यां जात इति कुतो जानीयात्? तत्राऽऽह। पापमतिरित्यादि॥ ८ ॥

**इतीति।** "किं मया हतया मन्द" (भाग 10-4-12) इत्यादि देवकी कन्यावचः श्रुत्वा "देवक्या अष्ठमोगर्भो न स्त्री भवितु मर्हति" (भाग 10-8-8) इति नित्यं सञ्चिन्तमन् सामान्येन क्वचिदस्तीति ज्ञात्वा भुवयोश्च सख्यं सञ्चिन्तयं स्त्वद्गृहे भवेदिति सम्भाव्य मत्संस्कारलिङ्गेन चा[12]ऽऽगताशङ्कः आगताऽऽशङ्का यस्य सः अपि यदि हन्ता हनिष्यति तर्हि तदा तत् नो महाननयः स्यादिति॥ ९ ॥

1. V. °णाऽऽदि 2. V. असूचयत् 3. V. व्या° 4. V. न ग° 5. V. °प° 6. V. °प° 7. A.B. त° 8. V. omits मन्येत 9. V. पुत्रः 10. V. omits तत्राऽपि 11. B. adds कंसः 12. V वाऽऽ०

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ गर्गेण कृतनामकरणसंस्कारस्य तत्सूचितमाहात्म्यस्य भगवतो मात्रे विश्वरूप प्रदर्शनं तद्विस्मापनादिरूपं च चरित्रमाहाऽष्टमे **गर्ग** इति। गर्गो यदूनां पुरोहितः। अत एव वसुदेवेन प्रचोदितः नन्दस्य व्रजं जगाम॥ १ ॥

अधोक्षजधिया भगवद्बुद्ध्या नमस्कार पूर्वकं यथा तथा आनर्च अर्चितवान् नन्द इति शेषः॥ २ ॥

अतिथये निवेदितम् अन्नादिक आतिथ्यम् तत्कृतं भुक्तं येन तं सूपविष्टं गर्गं सूनृतया मधुरया गिरा नन्दयित्वा हर्षयित्वा अब्रवीत्। उक्ति मेवाह ब्रह्मन्नित्यादिना यदूना महमित्यतः प्राक्तनेन। हे ब्रह्मन्! पूर्णस्य आप्त कामस्य तव किं करवाम? न किमप्यपूर्वप्रीतिकरं कर्म कर्तुं प्रभवामेत्यर्थः। यद्वा पूर्णस्य परब्रह्मानन्दानुभव पूर्णस्य तव किं करवाम किङ्करा वयमित्यर्थः ॥ ३ ॥

पूर्णश्चेदहं कथं धनिनां गृहमागतः? तत्राऽऽह - **महद्विचलनमिति**। हे भगवन्! महतां भवतां विचलनं स्वाश्रमादन्यत्र सञ्चारः विषयासङ्गदीनचेतसां मादृशां गृहिणां निःश्रेयसायैव कल्पते। अन्यथा तु कदाचिदपि न कल्पते, न तु स्वार्थम्; किन्तु मादृशा मनुग्रहार्थमेवेत्यर्थः॥ ४ ॥

त्वया बालयो र्नामक्रिया कार्येति वक्तुं तस्य विज्ञानातिशय माह — **ज्योतिषामयनमिति**। यज्ज्ञानमतीन्द्रियं अतीन्द्रियज्ञानसाधनं ज्योतिषामयनं गमनप्रतिपादकं ज्योतिश्शास्त्र मित्यर्थः। तत्साक्षाद्भवता प्रणीतम्। येन ज्योतिषामयनेन अन्योऽपि पुमान् परापर मतीत मागामि च वेद॥ ५ ॥

विवक्षितमाह — **त्वमिति** । भो ब्रह्मविदां श्रेष्ठ! त्व मनयोः बालकयो स्संस्कारान् नामकरणादीन् कर्तु मर्हसि। दैवज्ञत्वात् मन्त्रवित्त्वाच्च त्वमेव कर्तु मर्हसीति भावः। ननु, नाऽहं त्वद्गुरुः इत्यत्राऽऽह — नृणां 'जन्मना ब्राह्मणो गुरुः' 'नृणाम्' इति सामान्य निर्देशेन ब्राह्मणानां क्षत्रियादीनाञ्च ब्राह्मणमात्र स्स्वभावतो गुरु रित्यभिप्रेतम्॥ ६ ॥

अत्युत्साहिनं नन्दं प्रति गुप्तमेतत्कार्य मित्यभिप्रायेण प्रत्याचक्षाण इवाऽऽह - **यदूनामिति**। यदूना माचार्यत्वेन भुवि प्रसिद्धोऽहं यदि त्वत्पुत्रं संस्कुर्याम्, तर्हि मया संस्कृतं त्वत्पुत्रमपि देवकीसुतमेव पापमतिः कंसो मन्यते, मत्कर्तृक संस्कारेण लिङ्गेन देवकीसुत मेवाऽध्यवस्यतीत्यर्थः। ननु यदुकुलाचार्येण त्वया संस्कृतं कथञ्चिद्यदुकुमारं जानातु, तत्र वसुदेवस्य पुत्रः तत्राऽपि देवक्यां जात इति कुतो जानीयात्! तत्राऽऽह — सख्यमित्यादि। नन्दवसुदेवयोः सख्यं प्रसिद्धमेव वर्तते। अशरीरवाण्याऽभिहितो देवक्या अष्टमो गर्भो न स्त्रीभवतु मर्हति, किन्तु

पुमानेव। स मद्भयाद्वसुदेवेन सख्यु स्सन्निधौ निहित इत्येवं देवकीदारिका वच श्चिन्तयन् गताशङ्कः गतसंशयः हन्तापि हन्यात्। तर्हि तन्नोऽस्माकं महा ननयः अनीतिः अनुचितं स्यात् इत्युक्त्वा गर्गः तूष्णीं बभूवेत्यर्थः ॥ ७ - ९ ॥

---

1- -1. A.B. omit 2- -2. W. omits 3. W. omits यद्वा 4- -4. W. omits 5. A.B. व्या दिस 6. A.B. omit अतीन्द्रियं 7. A.B. तत्प्रति 8- -8. W. omits.

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

हरे स्तत्तदवतारे तत्तद्योनिविहितं कर्म कर्तव्य मिति देवजनशिक्षणार्थं तद्विधीयतेऽस्मिन्नध्याये॥ १ ॥

आनर्च पूजितवान्॥ २ ॥

सूनृतया यथार्थ मधुरया। पूर्णस्य कृतकृत्यस्य॥ ३ ॥

महतां पुंसां विचलनं गमनम्॥ ४ ॥

ज्योतिषामयनं ग्रहाणां राशे राश्यन्तर गमनगोचरं ज्योतिश्शस्त्रं; ज्ञायते अनेनेति ज्ञानं, अतीन्द्रियं त्रिकालविषयम् परावरम् अतीतानागत विषयम्॥ ५ ॥

संस्कारान् गर्भाधानादीन् संस्कारकर्ता मदन्यःकिं न स्यात्? इति तत्राह — नृणामिति॥ ६ ॥

तत्र नन्दं गर्गो वक्तीत्याह - गर्ग इति। चशब्दो हिशब्दार्थः। योऽहं यदूना माचार्य इति सर्वतो भुवि ख्यातो हि। ततः किं कंसेन ज्ञातेऽनर्थो भविष्यतीति, स क इत्याह सुतमिति॥ ७ ॥

'कसि हिंसायां' इति धातोः हिंसाशीलः, अतएव पापमतिः। तर्हि तं कृष्णं हन्ता हनिष्यति। तदा नो महाननयोऽन्यायोऽपराधः भविष्यतीति शेषः। कथमयं कंसो मया संस्कृतं ते सुतं देवकी सुतं मन्यते? निमित्त माह सख्यमिति। तवाऽऽनक दुन्दुभेश्च सख्य मस्तीति जानाति। अतोऽनयो स्सुत विनिमयो भविष्यतीति मन्यते। निमित्तान्तरमप्यस्ती त्याह देवक्या इति। यश्चिन्तयन्निति हेतोः तव हन्ता क्वचिज्जात इति निश्चायकेन कन्यावचसापि तस्य तद्धननिवृत्ति र्न भवतीत्याशयेनाऽऽह श्रुत्वेति। गताशङ्को नष्टहनन शङ्कः। आगताशङ्कोऽपि वा॥ ८, ९ ॥

नन्द उवाच

अलक्षितो[1]ऽस्मिन्रहसि मामकैरपि गोव्रजे।
कुरु द्विजाति संस्कारं स्वस्तिवाचनपूर्वकम्॥ १० ॥

[2-]श्रीशुक उवाच[-2]

एवं सम्प्रार्थितो विप्रः स्वचिकीर्षितमेव तत् ।
चकार नामकरणं गूढो रहसि बालयोः ॥ ११ ॥

[3-]गर्ग उवाच[-3]

अयं वै[4] रोहिणीपुत्रो रमयन् सुहृदो गुणैः।
आख्यास्यते राम इति बलाधिक्याद्बलं विदुः॥
यदूना मपृथग्भावा त्सङ्कर्षण मुशन्त्युत॥ १२ ॥

आसन्वर्णास्त्रयो ह्यस्य[5] गृह्णतोऽनुयुगं तनूः।
शुक्लो रक्त स्तथापीत इदानीं कृष्णतां गतः॥ १३ ॥

प्रागयं वसुदेवस्य क्वचिज्जात स्तवाऽऽत्मजः।
वासुदेव इति श्रीमान् अभिज्ञा स्सम्प्रचक्षते॥ १४ ॥

बहूनि सन्ति नामानि रूपाणि च सुतस्य ते।
गुणकर्मानुरूपाणि तान्यहं वेद नो जनाः[6]॥ १५ ॥

[7-]आधास्यत्येष वः श्रेयः[-7] गोप गोकुल नन्दनः।
अनेन सर्वदुर्गाणि यूय मञ्ज स्तरिष्यथ॥ १६ ॥

पुराऽनेन व्रजपते साधवो दस्युपीडिताः।
अराजके[8] रक्ष्यमाणा जिग्यु[9] र्दस्यून्समोधिताः॥ १७ ॥

य एतस्मिन् महाभागाः[10] प्रीतिं कुर्वन्ति मानवाः।
नाऽरयोऽभिभवन्त्येतान् विष्णुपक्षानिवाऽसुराः॥ १८ ॥

तस्मा न्नन्दात्मजोऽयं ते[11] नारायण समो गुणैः।
श्रिया कीर्त्याऽनुभावेन गोपायस्व[12] समाहितः॥ १९ ॥

---

1. M. ०ते 2- -2. omit 3- -3. M.K.V.W. omit 4. A.B.G.M. हि 5. K.W. य० 6. K.W. जनः 7- -7. A.B. एष वः श्रेय आधास्यत् 8. M. के ऽर० 9. V. जघ्नु० 10. K.W. ०ग; V. °गे 11. V. तु 12. K.W. सु.

**श्रीध० अलक्षित** इति। द्विजति सं[1]स्कारं द्विजातीना मवश्यं कर्तव्यं[-1] संस्कारमात्रं केवलं स्वस्तिवाचन पूर्वकं कुर्विति॥ १०, (११)॥

**अयमिति** । यदूनामपृथग्भावात् कुतश्चिद्धेतोः विप्रतिपद्यमानानां यदूना मपृथग्भावात्। भावो भावनं तस्मात्। अन्योन्यशिक्षया सर्वैकमत्यकरणादित्यर्थः। सम्यक्कर्षत्येकी करोतीति, सङ्कर्षणमप्युशन्ति मन्यन्ते वक्ष्यन्तीत्यर्थः। गर्भसङ्कर्षणन्तु न प्रकाशयति॥ १२॥

**आसन्निति।** अस्य तव पुत्रस्य। अतः कृष्ण इत्येकं नाम भविष्यति॥ १३॥

**प्रागयमिति।** सामान्योक्त्या ऋषिरयं जन्मान्तरगतं नाम कथयतीति नन्दो मन्य तेस्म। अत एनं वासुदेव इति सम्प्रचक्षत इति॥ १४॥

**बहूनीति।** गुणानुरूपाणि ईश्वरः सर्वज्ञ इत्यादीनि। कर्मानु रूपाणिगो[2]विन्दः गोवर्द्धनोद्धरणः इत्यादीनि, तानि सर्वाण्यहमपि नो वेद जना अपि नो विदुरिति॥ १५॥

जातकफलमाह — [3-]**आधास्यतीति।** एष परमपुरुषः श्रेयः मुक्तिं अञ्जः झटिति[-3] आधास्यत् आधास्यति॥१६॥

**पुरेति।** अनेन रक्ष्यमाणाः समेधिताश्च दस्यून् जि[4]ग्युरिति॥ १७ (१८, १९)॥

---

1- -1. V. omits 2. A. B. गोपतिः 3- -3. एषइति आधास्यत् आधास्यति॥ १६॥ 4. V. जघ्नु०

**वीर० एवमुक्तवन्तं गर्गं प्रत्याह नन्दः अलक्षित** इति। अस्मिन् गोकुले मामकै र्मदीयै रप्यलक्षित: रहसि निर्जने देशे स्वस्तिवाचनपूर्वकं द्विजातिसंस्कारं द्विजातीनामवश्य कर्तव्यं संस्कारं तूर्यघोषादिरहितं कुर्वित्यर्थ:॥ १०॥

इत्थं सम्यक्प्रार्थितो द्विजो गर्ग: स्वेन कर्तुमिष्टमेव त[1]त् बालकयोर्नामकरणं रहसि गूढस्सन् चकार॥ ११॥

तदेव दर्शयति - **अयमित्यादिना।** गुणैस्सुहृदो रमयन्निति तस्मिन्नामशब्दस्य प्रवृत्ति निमित्त प्रदर्शनम्, बलाधिक्यादिति बलशब्दस्य, तथा यदूना मपृथग्भावात् कुतश्चिन्निमित्ता द्विप्रतिपत्स्यमानानां तेषामन्योन्य सा[2]मरस्यघटनेन ऐकमत्यसम्पादन रूपा[3]त् प्रवृत्तिनिमित्तात् सङ्कर्षणशब्दाभिधेय मुशन्ति इच्छन्ति, जना इति शेषः। सम्यक् कर्षति आकर्षति वैमुख्य निवर्तनेन एकतां नयतीति सङ्कर्षण मुशन्तीत्यर्थः। गर्भ सङ्कर्षणात् सङ्कर्षण:, सङ्कर्षणाख्यस्य अनन्तस्यांशत्वा द्वा सङ्कर्षण इति व्युत्पत्तिद्वयमप्यभिप्रेतम्॥ १२॥

परमात्मत्वं सूचयन्निव तिरोधापयन्निव नामानि चकरेत्यभिप्रायेणाऽऽह - **आसान्निति।** प्रतियुगं तनू र्विग्रहान् गृह्णत: उपाददत: अस्य तव पुत्रस्य शुक्लादय स्त्रयो वर्णा आसन्। अधुना तु कृष्णतां प्राप्त:। अत: कृष्ण इत्येकं नाम भविष्यति। अनुयुगं तनूः गृह्णत इत्यनेन परमपुरुषत्वं सूचितम्। "कृषिर्भूवाचकश्शब्दो णश्च निर्वृतिवाचक:। तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते" (भार. 5-68-5) इत्यादिव्युत्पत्त्यन्तराणि त्वभिप्रेतानि॥ १३॥

आधुनिकमपि वसुदेवापत्यत्वमाच्छादयन् प्राह — **प्रागयमिति।** अयं श्रीमान् प्राग्वसुदेवापत्यत्वात् वासुदेव इत्यभिज्ञाः सम्प्रचक्षते। अनया सा[4]म्योक्त्या ऋषिरयं जन्मान्तरगतं नाम कथयतीति नन्दो मन्यते स्म। "वसन्ति यत्र भूतानि वसत्यत्रेति वै यतः। ततस्स वासुदेवेति विद्वद्भिः परिगीयते" (विष्णु पु. 6-5-75) इति व्युत्पत्तिस्त्वभिप्रेता। श्रीमानित्यनेन श्रियः पतित्वं सूचितम्॥ १४॥

तथा गुणकर्मानुरूपाणि बहून्यस्य नामानि सन्तीत्याह — **गुणेति।** यानि गुणानुरूपाणि भगवान्नारायण इत्यादीनि कर्मानुरूपाणि, मधुसूदन इत्यादीनि बहूनि नामानि। तानि अहं मादृशो मुनिरेव वेद, नतु त्वादृश इत्यर्थ:। अने[5]नापि परमपुरुषत्वं सूचितम्। यद्वा, अहमेव न वेद, किं पुनस्त्वादृशो न वेदेत्यर्थः॥ १५॥

जातकफलमाह — **एष** इति। व: युष्माकम्, एष श्रेय ऐहिकमामुष्मिकञ्चाऽऽधास्यति। गोपान् गोकुलं [6-]गवां कुलं[-6] च नन्दयतीति नन्दनः। अनेन सुतेन हेतुभूतेन यूयं सर्वाणि दुर्गाणि दु:खानि अञ्ज: आशु तरिष्यथ। अञ्ज इति तत्त्वशीघ्रार्थकमव्ययम्॥ १६॥

हे व्रजपते! अराजके संरक्षकरहिते जगति, अत एव दस्युभिर्दुष्टसत्त्वै: पीडितास्साधवो धर्मानुवर्त्तिन: अनेन त्वत्पुत्रेण पुरा पूर्वजन्मनि समेधिता रक्ष्यमाणाश्च दस्यून् जिग्यु: जितवन्त:। अनेन "परित्राणाय साधूनां विनाशाय च दुष्कृताम्, धर्मसंस्थापनार्थाय" (भ.गी. 4-8) इति भगवदुक्ति रभिप्रेता। अधुनापि साधुपरित्राणार्थमेव जात इति च भावः॥ १७॥

हे महाभाग! अस्मिन् त्वत्पुत्रे पुरा पूर्वजन्मनि समेधिता ये मानवा: प्रीतिं कुर्वन्ति तान् अरयश्शत्रवो नाभिभवन्ति। यथा विष्णुरेव पक्ष आश्रयो येषां तान् देवान् असुरा: तद्वत्। अत्र प्रीतिशब्देन प्रीत्यात्मिका भक्तिरभिप्रेता। अरिशब्देन प्रकृतिसम्बन्ध प्रयुक्त काम क्रोधादय:। ये [7]अस्मिन् भक्तिं कुर्वन्ति [8]ते मुक्ता भवन्तीति भावः। विष्णु पक्षानिवाऽसुरा इति दृष्टान्तेनाऽयं साक्षाद्विष्णु: यूयन्तु देवांशप्रभवा:। कंसादयस्तु आसुर सम्पत्त्याऽभिजाता इत्यभिप्रेतम्॥ १८॥

तस्मादेवम्भाविगुणत्वात् हे नन्द ! श्रिया कीर्त्या प्रभावेन अन्यैश्च गुणैर्नारायण तुल्योऽयं भविता। अत एनं समाहितस्सावधानचित्तस्त्वं गोपाय पालय॥ १९॥

---

1. A,B तदा 2. A,B सामादि 3. A, B add समानानां तेषामन्योन्यस्य कर्षणात् 4. A,B सामान्योक्त्या 5. A,B नात्रापि 6- -6. A,B omit 7. A,B एतस्मिन् 8. A,B add मानवाः

**विज०** मामकैरप्यलक्षिते अज्ञाते अस्मिन् व्रजे, तत्राऽपि रहसि॥ १०॥

आशीर्वचनपूर्वकं नामकरणप्रकारमाह चकारेति॥ ११॥

यदूनां मध्ये उशन्ति इच्छन्ति॥ १२॥

तनूः शरीराणि॥ १३॥

क्वचिन्मथुरायां निग्रहगृहे, अभिज्ञाः तद्धितप्रत्ययविवेकज्ञाः ॥ १४॥।

न केवलमस्य वर्णनिमित्तं नाम गुणानुगुणानि नामानि सन्तीत्याह - **बहूनीति** । "कृषिर्भूवाचकश्शब्दः" (भार 5-68-5) इति वचनात् गुणानुगुणं कृष्णेति नाम, मधुहननकर्मानुरूपं मधुसूदनेति॥ १५॥

यदि यूयम् अभजिष्यन् (अभजिष्यत) तर्हि युष्माकन्तु श्रेय आधास्यत् अकरिष्यत् आशास्यतीति वा। अञ्जः सम्यक्॥ १६॥

पृथ्ववतारे अराजके राष्ट्रे अरक्ष्यमाणाः॥ १७॥

विष्णुपक्षान् विष्णुसहायान्। "पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु" (वैज.को 6-1-35) इति यादवः॥ १८, १९॥

**इत्यात्मानं समादिश्य गर्गे च[1] स्वगृहं गते।**
**नन्दः प्रमुदितो मेने आत्मानं[2] पूर्णमाशिषाम्॥ २०॥**

**बालक्रीडासु विश्वरूपप्रदर्शनघट्टः**

**कालेन व्रजता[3] तात! गोकुले रामकेशवौ।**
**जानुभ्यां सह पाणिभ्यां रङ्गमाणौ[4] विजहतुः[5] ॥ २१॥**

**तावङ्घ्रियुग्ममनुकृष्य सरीसृपन्तौ घोषप्रघोषरुचिरं[6] व्रजकर्दमेषु।**
**तन्नादहृष्टमनसावनुसृत्य लोकं मुग्धप्रभीतवदुपेयतुरन्ति मात्रोः॥ २२॥**

**तन्मातरौ निजसुतौ गृणया स्नुवन्त्यौ[7] पङ्काङ्गरागरुचिरावुपगूह्य[8] दोर्भ्याम्।**
**दत्त्वा स्तनं[9] प्रपिबतोः स्म[10] मुखं निरीक्ष्य मुग्धा स्मितात्पदशनं ययतुः प्रमोदम्॥ २३॥**

**[11]यर्ह्यङ्गनादर्शनीयकुमारलीला वन्तर्व्रजे तदबलाः प्रगृहीतपुच्छैः।**
**वत्सैरितस्तत उभावनुकृष्यमाणौ प्रेक्षन्त्य उज्झितगृहा[12] जहृषुर्हसन्त्यः[13]॥ २४॥**

**शृङ्ग्यग्निदंष्ट्र्यसिजलद्विजकण्टकेभ्यः क्रीडापरावतिबलौ[14] स्वसुतौ निषेद्धुम्।**
**गृह्याणि कर्तुमपि यत्र न तज्जनन्यौ शेकात आपतुरलं मनसोऽनवस्थाम्॥ २५॥**

कालेनाल्पेन राजर्षे रामः कृष्णश्च गोव्र[15]जे।
[16]आ कृष्टजानुभिः पद्भिर्विचङ्क्र[17]मतुरञ्जसा॥ २६॥

---

1. V °ण 2. V ह्या° 3. A,B,G,M °ताऽल्पेन 4. A,B,G रिङ्ग°; V. रम° 5. M चेरतुः 6. M °र° 7. M स्र° 8. A,B,G गु°; M गृ° 9. V स्तनौ 10. V सु 11. M ह्यगितातिरमणीय 12. M उत्स्मृत 13. M जगृहु° 14. A,B,G,V चलौ 15. A,B,G,M °कुले 16. A,B,G,M अघृष्ट 17. A,B,G, M °क्र°

**श्रीध०** **इतीति।** इति आत्मानं प्रति समादिश्य। आत्मानं कृष्णं च[1] [2-]गर्गे गते सति[-2], आशिषामाशीर्भिः [3-]नन्दः पूर्णं विष्णुं मेने अमंस्त[-3]॥ २०॥

★ बालक्रीडाचमत्कारैः कृष्णो रामेण संयुतः।
परमानन्दमाधत्त व्रजे नन्दयशोदयोः॥
पूर्णत्वमेव दर्शयन्नाऽऽह - **कालेनेति**॥ २१॥

**ताविति।** अनुकृष्य पुनः पुन राकृष्य सरीसृपन्तौ अतिशयेन चलन्तौ। [4]कथम्? घोषाः कटिपादभूषण किङ्किण्यः तेषां प्रघोषेण [5]निनादेन रुचिरं यथा [6]भवति तथा। [7]तेषां [8]घोषाणां नादेन हृष्टं मनो ययो स्तौ। लोकं [9]इतस्ततो गच्छन्तं जन मनुसृत्य त्रिचतुराणि पदान्यनुगम्य मुग्धवत् प्रभीतवत् मातोः अन्ति समीपे उपेयतुः उपजग्मतुः॥ २२॥

तदिति। तदा च तन्मातरौ निजसुतौ दोर्भ्या मुपगू[10]ह्य प्रमोदं ययतुः कथम्भूते? घृणया कृपया स्तुवन्त्यौ [11]क्षरत्पयः पूर्णपयोधरे सत्यौ पङ्केनाङ्गरागेण च रुचिरौ कथम्भूतं मुखं निरीक्ष्य? मुग्धं मन्दस्मितं यस्मिन्, अल्पा दशनाश्च यस्मिन्, तच्च, तच्च॥ २३॥

**यर्हीति।** यर्हि अङ्गनानां दर्शनीया कुमारलीला ययोः तथाभूतौ जातौ तदाऽन्तर्व्रजे व्रजस्य मध्ये तदबला व्रजाङ्गनाः [12]तौ प्रेक्षन्त्यः प्रेक्षमाणा विस्मृतगृहकृत्याः हसन्त्यो जहृषुः हृष्टा बभूवुः। कथम्भूतौ? ताभ्यां प्रगृहीतानि पुच्छानि येषां तै र्वत्सै रितस्ततोऽनुकृष्यमाणौ॥ २४॥

**शृङ्गीति।** [13]अतिचलौ [14]अतिचपलौ[-14] तौ शृङ्ग्यादिभ्यो निषेद्धुं गृहोचितानि कर्माणि चकर्तुं यत्र यदा तज्जनन्यौ न शेकाते तदाऽ[15]लं मनसोऽनवस्था मापतुरिति। ★ [16]गृहिणां गृहसौख्यस्य परा [17]तुष्टिः प्रदर्शिता। कृष्णचापल चौर्याणि सहैवाखिल सद्म[18]सु। प्रजल्पन्त्य स्समागत्य गोप्यो गोप्यै मुदं ददुः॥ २५, २६॥

---

1. A,B वा 2- -2. B, V omit 3- -3. A,B omit ★ श्रीधरीयोऽयं श्लोकः 4. V omits कथम् 5. B.V omit निनादेन 6. A,B omit भवति 7. V omits तेषां 8. B omits घोषाणां 9. V त° 10. A.B °गु° 11. A,B omit क्षरत् 12. V. omits तौ 13. B omits अतिचलौ 14- -14. V omits 15. V omits अलं ★ श्रीधरीयोऽयं सार्धश्लोकः 16. A,B omit गृहिणां 17. A,B काष्टा 18. A,B °तः।

**वीर०** इतीत्थमात्मानं प्रतिसमादिश्य गर्गे स्वगृहं गते सति ततो नन्दः प्रमुदितः आशिषा अभिमतार्थजातेन पूर्णप्रायमात्मानममन्यत ॥ २० ॥

अथ भगवतः काश्चिद्बालक्रीडा अनुवर्णयन् विश्वरूपप्रदर्शनादिकमाह - **कालेनेति** । गच्छता अतिक्रममाणेन कियता **कालेन व्रजे रामकेशवौ** सहजानुभ्यां पाणिभ्याञ्चेत्यर्थः । **रङ्गमाणौ चङ्क्रमणं कुर्वन्तौ** सरीसृपन्ताविति यावत् विजहृतुः [1]क्रीडां चक्रतुः[-1] ॥ २१ ॥

विहारमेव वर्णयति - **ताविति**। तौ रामकेशवौ घोषप्रघोषरुचिरं घोषाः पादभूषणकिङ्किण्यः तेषां प्रघोषेण, व्रजगतश्लाघ्यध्वनिना वा रुचिरं यथा तथा व्रजकर्दमेषु अङ्घ्रियुग मनुकृष्य पुरःप्रसारितजान्वनुगतं यथा तथा पश्चाद्गतजानुसमाकृष्येत्यर्थः। सरीसृपन्तौ पुनःपुनरतिशयेन वा चरन्तौ तेषां घोषाणां नादेन तस्य घोषस्य व्रजस्य नादेन वा हृष्टं मनो ययोस्तौ। लोकमितस्ततः पर्यटन्तं जनमनुसृत्य त्रिचतुराणि पदान्यनुगम्य मुग्धवत् प्रभीतवच्च मात्रोः रोहिणीयशोदयोः अन्ति समीपमुपेयतुरुपजग्मतुः॥ २२॥

तदा तयो रामकेशवयोः मातरौ घृणया करुणया स्तुवन्त्यौ पयःपूर्णस्तनाभ्यां पयस्स्रवन्त्यौ पङ्करूपेणाङ्गरागेण रुचिरौ सुतौ बाहुभ्यामुपगुह्य उरसि संवेष्ट्य स्तनं दत्त्वा मुखे निधाय प्रपिबतोस्सुतयोर्मुग्धं सुन्दरं स्मितम् अल्पा दशनाः सूक्ष्मा दन्ताश्च यस्मिन्, तन्मुखमवलोक्य प्रमोदं प्रापतुः॥ २३॥

यर्हि यदा अङ्गनानां दर्शनीयाः कुमारलीला ययोस्तौ तथाभूतौ [2]अन्तर्व्रजे व्रजमध्ये व्रजस्था अबलाः प्रेक्षमाणाः विस्मृतगृहकृत्या हसन्त्यो जहृषुः। कथम्भूतौ? ताभ्यां प्रगृहीतानि पुच्छानि येषां तै र्वत्सैः इतस्ततोऽनुकृष्यमाणौ। जगृहुरिति पाठे ता गृहीतवत्य इत्यर्थः॥ २४॥

नितरां क्रीडासक्तौ। अतिचलाविति पाठे क्रीडापरौ अत एव अतिचलौ सर्वतश्चरन्तौ। अतिबलावित्यपि पाठः। शृङ्ग्यादिभ्यस्स्वसुतौ निषेद्धुं वारयितुं गृह्यानि गृहोचितानि कर्माणि कर्तुञ्च यदा तयोर्जनन्यौ न शेकाते नाऽशक्नुताम्, निषेधगार्हे युगपत् कर्तुमसमर्थे अभूतामित्यर्थः। शृङ्गिणो हरिणादयः, दंष्ट्रिणः शुनकादयः, द्विजा मयूरादयः पक्षिणः। तदा ते मातरौ अलं नितरां मनसोऽनवस्थामकुशलतां प्रापतुरिति। गृहिणां सौख्यस्य पराकाष्ठा प्रदर्शिता॥ २५॥

हे राजर्षे! आकृष्टजानुभिः पद्भिः विचङ्क्रमतुः कदाचिज्जानुभ्यां क्रमणं कदाचित् पद्भ्यां गमनं चेति मिश्रं चक्रतुरित्यर्थः॥ २६॥

---

1- -1. W omits 2. W omits अन्तर्व्रजे

**विजं० इत्यादि**। आत्मानं नन्दम्, आत्मानं स्वम्॥ २०॥

व्रजता गच्छता, रङ्गमाणौ चेष्टमाणौ वा॥ २१॥

सरीसृपन्तौ पुनः पुनः भृशं गच्छन्तौ सर्पन्तौ, घोषाणां किङ्किणीनां प्रघोषेण प्रकृष्टेन शब्देन रुचिरः, घोषप्रघोषरुचिरः स चाऽसौ व्रजः तस्य कर्दमेषु "आभीरपल्ली किङ्किण्यो र्घोषो गोपाल शब्दयोः" इति वचनात्। तन्नादेन किङ्किणी स्वरेण हृष्टमनसौ मुग्धप्रभीतवत् लोकं बहिर्जनमनुसृत्य विडम्ब्य मात्रोः यशोदारोहिण्योः अन्ति अन्तिके समीपे उपेयतुः प्राप्तवन्तौ॥ २२॥

घृणया दयया स्तन्यं स्रवन्त्यौ। अङ्गरागश्चन्दनम्। मुग्धं कोमलं स्मितं मन्दहासश्च अल्पदशना अणुतरा दन्ता यस्य तत् मुग्धस्मितं बाल्यदशनाश्च अस्मिन्निति वा॥ २३॥

अतिरमणीयाः कुमारलीलाः बालक्रीडा ययो स्तौ तथा तौ, यर्हि यदा अन्तर्व्रजे व्रजमध्ये आगता आगतौ। "द्वासुपर्णा" (मुण्ड. उ. 3-1-1) इति वत्। तदबलाः व्रजयोषितः तदा प्रेक्षन्त्य उत्स्मृतगृहाः विस्मृतगृहव्यापाराः॥ २४॥

शृङ्गिणो गवादयः। दंष्ट्रिणः सारमेय प्रभृतयः। गृह्याणि गृहकर्माणि अनवस्थां व्याकुलताम्॥ २५॥

न घृष्टानि अघृष्टानि तानि च जानूनि येषां ते तथा तैः विचक्रमतुः पादविक्षेपं चक्रतुः॥ २६॥

ततश्च[1] भगवान् कृष्णो[2] वयस्यै र्व्रजबालकैः।
सहरामो व्रजस्त्रीणां चिक्रीडे जनयन्मुदम्॥ २७॥

कृष्णस्य गोप्यो रुचिरं[3] वीक्ष्य कौमार चापलम्।
शृण्वन्त्याः[4] किल तन्मातुरिति होचुस्समागताः॥ २८॥

वत्सान्मुञ्चन्क्वचिदसमये[5] क्रोशसञ्जात हासः
स्तेयं स्वाद्वत्त्यथ दधिपयः कल्पितैः स्तेययोगैः।
मर्कान्भोक्ष्यन्विभजति स चे न्नास्ति भाण्डं भिनत्ति
द्रव्यालाभे स[6] गृहकुपितो यात्युपक्रोश्य तोकान्॥ २९॥

हस्ताग्राह्ये रचयति विधिं पीठकोलूखलाद्यै-
श्छिद्रं ह्यन्तर्निहित वयुनः[7] शिक्य भाण्डेषु तद्वित्[8]।
ध्वान्तागारे धृतमणिगणं स्वाङ्गमर्थप्रदीपं
काले गोप्यो यर्हि गृहकृत्येषु सुव्यग्रचित्ताः[9]॥ ३०॥

एवं धार्ष्ट्यान्यु[10]शति कुरुते मेहनादीनि वास्तौ
स्तेयोपायैः विरचितकृतिः सुप्रतीको यथाऽऽस्ते।
इ[11]त्थं स्त्रीभि स्सभयनयन श्रीमुखालोकिनीभिः
व्याख्यातार्था[12] प्रहसितमुखी न ह्युपालब्धुमैच्छत्॥ ३१॥

★एकदा क्रीडमाना स्ते रामाद्या गोपदा[13]रकाः।
कृष्णो मृदं भक्षितवानिति मात्रे न्यवेदयन्॥ ३२॥

सा गृहीत्वा करे पु[14]त्रमुपालभ्य हितैषिणी।
यशोदा भयसम्भ्रान्त प्रेक्षणाक्ष मभाषत॥ ३३॥

1. A,B,G. °स्तु; V °स्स 2. M विष्णु: 3. M °रादीन 4. A,B,G,K,W °त्या: 5. M °यान् 6. K,W स्वगृह; M. सुभृश 7. M °ने 8. M तद्वत् 9. A सुष्ठु 10. M °द्वि° 11. K,W एवं 12. M °र्थ ★ अधिकपाठ: - गोप्य:कदाचन पृथक्पृथगूह्य कृष्ण मेत्येकदैव गदितुं प्रसृतास्तदाग:। दृष्ट्वा तदन्त्यथ तमेव निजानदृष्ट्वा सर्वाश्च ता निववृतुस्स्वगृहान्सलज्जा: ॥ found in K,V 13. M बालका: 14. B,G,M. कृष्ण°

**श्रीध०** असमये अदोहकाले। क्रोशे सञ्जात हास:। [1-]सञ्जातो हासो यस्य स:[-1]। स्तेयं चौर्यार्जितम्। [2-]न तु दत्तम्[-2] तत्राऽपि स्वादु, नेतरत्। दधि च पयश्चाऽत्ति। किञ्च भोक्ष्यन् [3-]भोक्ष्यमाण: स्वयं भुञ्जाम इत्यर्थ:[-3] मर्कान् मर्कटान्प्रति विभज्य ददाति। तेषां मध्ये तृप्तत्वेन कोऽपि नाऽत्तिचेत् तर्हि भाण्डं भिनत्ति। क्वचिद्द्रव्यस्याऽलाभे सति [4]स [5]कृत्स्न: गृहाय धक्ष्यामीति कुपितो याति। यद्वा सगृहागृहिण: तेभ्य: कुपित:, तेषां तोकान् [6]बालान् पर्यङ्कादिषु सुप्तान् [7-]प्रहारनोदनादिभि:[-7] उपक्रोश्य [8]रोदयित्वा यातीति॥ २७, २८, २९॥

कल्पितै: स्तेय योगै: इत्युक्तं, तत्प्रपञ्चयति हस्तेति [9]द्वाभ्याम्। तुङ्गशिक्यस्थभाण्डेषु अन्तर्निहिते दध्यादौ वयुनं ज्ञानं यस्य स च्छिद्रं रचयति तद्वित् छिद्ररचनादिवित्। ध्वान्तयुक्ते गृहे स्वाङ्गमेवार्थ प्रदीपं रचयति। विशेषतो धृतमणिगणम् यर्हि काले यस्मिन् [10-]स मये, अत्र च्छन्दोभङ्ग: आर्ष[-10]:॥ ३०॥

**एवमिति**। रे रे चोर [11-]इत्याद्युक्त श्रीकृष्ण:[-11] 'त्वमेव चोर: अहं गृहस्वामी' इत्यादीनि धाष्टर्यानि [12-]प्रगल्भ वचांसि[-12] उशति जल्पति हे कमनीये यशोदे। यद्वा उशति वास्तौ स्वर्चिते गृहे मेहनादीनि [13-]पुरीषोत्सर्गादीनि[-13] कुरुते। एवं स्तेयोपायै: विरचिता कृति: कर्म येन स:। त्व तत्समीपे सुप्रतीक: साधुरिवास्ते। [14-]यद्वा सुप्रतीक: दिग्गजवत् अदृश्य: आस्ते इत्यर्थ[-14]: सभये नयने यस्मिंस्तच्च तच्छ्रीयुक्तं मुखञ्च तदालोकिनीभि: [15-]स्त्रीभि: इत्थं[-15] व्याख्यातार्थो प्रख्यापित [16-]जन्मफला तत्तत्कर्मफला वा[-16] उपालब्धुं [17-]निर्भर्त्सनादिकं कर्तुं[-17] आक्षेप्तुं [18-]इति यावत्[-18] नैच्छत्॥ ३१॥

कदाचित् अपराधान्तरे उपालभत। तदा मातु: महदाश्चर्यम् अभूदिति कथयन्नाह **एकदेति** ॥ ३२॥

**सेति**। उपालभ्य निर्भर्त्स्य। भयेन सम्भ्रान्तप्रेक्षणे चपल निरीक्षणे अक्षिणी यस्य तम्॥ ३३॥

1- -1. B, V omit 2- -2. V omits 3- -3. A,B omit 4. V omits स: 5. A,B omit कृत्स्न: 6. B omits बालान् 7- -7. A,B omit 8. V प्ररुदितान् कृत्वा 9. A,B omit द्वाभ्याम् 10- -10. A,B omit 11- -11. A,B इत्याक्षिप्तस्सन् 12- -12. A,B प्रागल्भ्यानि 13- -13. B omits 14- -14. A,B omit 15- -15. B, V omit 16- -16. V कर्मफलका 17- -17. A,B omit 18- -18. A,B omit

**वीर०** ततो वयस्यै स्तुल्यवयस्कैः व्रजबालकै: सह रामेण सहित: कृष्णो व्रजस्त्रीणां हर्षं जनयन् चिक्रीडे॥ २७॥

रुचिरं सुन्दरं कौमार प्रयुक्तं चापल्य मवलोक्य तस्य कृष्णस्य मातु: [1-]यशोदाया[-1]: शृण्वत्या: सत्या:, इति वक्ष्यमाणप्रकारेण ऊचु:॥ २८॥

तदेवाऽऽह - **वत्सानित्यादिना** सार्धद्वयेन। असमये क्वचित् वत्सान् मुञ्चन् क्रोशेन जनानामाक्रोशेन सञ्जातो हासो यस्य तथा भूतो भवति। स्तेयं चौर्यार्जितं न तु दत्तम्। तत्राऽपि स्वादु नेतरत् दधिपयश्चात्ति

खादति। कल्पितैः स्तेय योगैः चौर्योपायैः स्वयं भोक्ष्यमाणाः मर्कान्प्रति विभज्य ददाति। तेषा मपि मध्ये तृप्तः कोऽपि नास्ति चेत्[2] तर्हि भाण्डं भिनत्ति। 'मर्कं भोक्ष्यन्विभजति स चेन्नाऽस्ति, इति पाठे मर्कं नवनीतम्। "मर्कन्तु दधिसारस्यान्नवनीतं प्रचक्षते" इत्यभिधानात्। विभजति सखिभ्य इति शेषः। यद्वा स मर्कटो नास्ति चेत् स्वभुक्तावशिष्ट नवनीतोपेतं भाण्डं भिनत्तीत्यर्थः। क्वचित् नवनीतादि द्रव्यालाभे सति प्रच्छन्ननिहिततया तदलाभे सति स्वगृहकुपितः अस्मद्गृहेभ्यः कुपितः। स गृहेति पाठे स कृष्णः। यद्वा, सगृहा गृहिणस्तेभ्यः कुपितः, तेषां तोकान् पर्यङ्कादिषु सुप्तान् उपक्रोश्य रोदयित्वा याति॥ २९॥

कल्पितैः स्तेययोगैः इत्युक्तं तत्[3] प्रपञ्चयति **हस्ताग्राह्य** इति। उच्चस्थे नवनीतादिभाण्डे हस्तेन ग्रहीतु मशक्ये सति पीठकोलूखलाद्यै र्विधिं तद्ग्रहणसाधन विधानं रचयति। शिक्यस्थभाण्डेषु अन्तर्निहिते दध्यादौ वयुनं ज्ञानं यस्य स तथाभूतः च्छिद्रं रचयति शिलोत्क्षेपणादिभिः च्छिद्रं करोति। तद्वित् च्छिद्ररचनादिवित् ध्वान्तागारे अन्धकारावृतगेहे[4] धृतमणिगणं दिव्यमणिभूषितम्, अत एवार्थप्रदीपं तत्तदर्थप्रकाशकं स्वाङ्गं रचयति सन्निधापयति यस्मिन् काले गोप्यो गृहकर्मसु प्रवणचित्ता स्तदैवं करोतीत्यन्वयः॥ ३०॥

एवं कुर्वन् चोरोऽयमित्युक्तश्चेत् धाष्टर्यानि प्रागल्भ्यानि उशाति जलपति "त्वमेव चोरः, अहमेव गृहस्वामी" इति वदतीत्यर्थः[5] वास्तौ स्वर्चिते गृहे मेहनादीनि मूत्रोत्सर्जनादीनि कुरुते स्तेयोपायै र्विरचिता कृतिः कर्म येन तथा भूतोऽपि त्वत्समीपे यथा सुप्रतीक स्साधुः तद्वदास्ते। एव मित्थं सभये नयने यस्मिन् तच्च तच्छ्रीयुक्तं मुखं तत्कृष्णमुख मवलोकिनीभिः[6] स्त्रीभिः व्याख्याताः प्रख्यापिताः अर्थाश्चौर्यादिव्यापाराः यस्याः तथा भूताऽपि प्रहसितं मुखं यस्यास्सा यशोदा उपालब्धुं पुत्र माक्षेप्तुं नैच्छत्॥ ३१॥

कदाचिदपराधान्तरे सत्युपालभत। तदा तु महदाश्चर्यमभूदिति कथयन्नाह - **एकदेति।** [7]श्लोकार्थः स्पष्टः[-7] ॥३२॥

सा यशोदा हितमिच्छन्ती कृष्णं करे गृहीत्वा उपालभ्य निर्भर्त्स्य भयेन सम्भ्रान्तप्रेक्षणे चपलालोकने अक्षिणी यस्य तं कृष्ण मभाषत॥ ३३॥

---

1- -1. W omits 2. W omits चेत् 3. W omits तत् 4. A,B गृहे 5. W जल्पती° 6. A,B °मालो° 7- -7. A,B स्पष्टोऽर्थः।

**विज०** रुचिरश्च तत् अदीन मुदारश्च तत् कुमारभावोचितं चपलत्वं यासु तास्तथा। तन्मातुः शृण्वत्याः ताः, इति वक्ष्यमाणप्रकारेण ऊचुः॥ २७, २८॥

असमयान् अप्राप्तदोहनवेलान्। अस्मदादीनां क्रोशेन सञ्जातो हासो यस्य स तथा। अथ कदाचित् स्वेनकल्पितैः स्तेययोगैः चौर्योपायैः स्तेयं चौर्यपन्नं दधिपयश्च स्वाद्वत्ति पिबति च। स कृष्णः मर्कं बालं मार्जरं वा वानरं वा भोक्ष्यन् भोजयिष्यन् विभजति विभागं करोति। नास्ति चेत् नवनीतादि भाण्डं भिनत्ति। कदाचित् उपायानां भावेऽभावे च द्रव्यालाभे दध्यादि द्रव्याप्राप्तौ कुपितः ताडनादिना बालान् अनुक्रोश्य रोदयित्वा याति इत्यन्वयः। "मर्को मनसि वायौ च तोके मार्जार कीटयोः" (वैज.को. 6-1-45) इति च॥ २९॥

स्तेययोगं दर्शयति - **हस्तेति।** **ह्रस्वत्वेन** हस्ताऽग्राह्ये सति हस्तेन **ग्रहणार्थं** **पीठकाद्यैः** विधिमुपायं प्रकारं रचयति शिक्यस्थितभाण्डेषु मध्ये **अन्तर्निहित** **वयुने** अन्तर्निक्षिप्त नवनीतभाण्डे **तद्वत्** यथा लब्धुं सुशकं तथा च्छिद्रं लगुडादिना विवरं करोतीत्यन्वयः। गृहान्धकारे क उपाय इति तत्राऽह ध्वान्तागार इति। अन्धकारावृतगेहे धृतमणिगणं धृतसूर्यादि प्रकाशाधिक प्रकाशरत्नगणसंवीतं स्वाङ्गं स्वदेहं अर्थप्रदीपं पदार्थप्रकाशकं कृत्वेति शेषः। कस्मिन् समये इत्यत्राऽऽह काल इति॥ ३०॥

एवं तदा धाष्टर्यात् निर्भयत्वात् विशति गृहमिति शेषः। उपविश्य च वास्तौ देहल्यादौ मेहनादीनि पुरषोत्सर्जनादीनि करोति। स्तेयोपायैः स्तेयव्यापारैः विरचितकृतिः निर्मितचौर्यव्यापारः। शोभनानि प्रतीकानि अङ्गानि यस्य स चार्वङ्गः सच्चरित्रः पुरुषो यथा तथाऽऽस्ते इत्यन्वयः, सुप्रतीको मार्जारो वा म[1]ध्यस्थो वा[1]। सभयं नयनं यस्मिंस्तत् सभयनयनं च श्रीमुखं च सभयनयन श्रीमुखं श्रियायुक्तं मुखं श्रीमुखम्। श्रीमुखम् आस्यावलोको यासामस्तीति सभयनयनश्रीमुखावलोकिन्यः ताभिर्व्याख्यातः प्रकाश्य कथितोऽर्थः सुतविषयो व्यापारो यस्या स्सा तथा उपालब्धुं निर्भर्त्सयितुम् इत्थंशब्दः समाप्तिवचनः ॥ ३१, (३२)॥

भयेन सम्भ्रान्तानि अनवस्थितानि चञ्चलानि प्रेक्षणानि दर्शनानि यस्य तत्तथा तच्चाक्षि यस्य स तथा तम॥ ३३॥

---

1- -1. A,B omit

[1]यशोदोवाच[1]

कस्मान्मृद [2]मदान्तात्मन् भवान्भक्षितवान्रहः।
वदन्ति तावका ह्येते कुमारास्तेऽग्रजोऽप्ययम्॥ ३४॥

[3]श्रीकृष्ण उवाच[3]

नाऽहं भक्षितवानम्ब सर्वो मिथ्याभिशंसिनः।
यदि [4]सत्यगिरस्तर्हि समक्षं पश्य मे मुखम्॥ ३५॥

यद्येवं तर्हि व्यादेही त्युक्तस्य भगवान् हरिः।
व्यादत्ताऽव्याहतैश्वर्यः क्रीडामनुजबालकः॥ ३६॥

सा तत्र ददृशे विश्वं जगत्स्थास्नु च खं दिशः।
साद्रिद्वीपाब्धिभूगोलं सवाय्वग्नीन्दु तारकम्॥ ३७॥

ज्योतिश्चक्रं जलं तेजो [5]नभस्स्वर्विवराणि च।
वैकारिकानीन्द्रियाणि मनोमात्रा गुणास्त्रयः॥ ३८॥

एतद्विचित्रं सहदेव काल स्वभाव कर्माशय लिङ्गभेदम्।
सूनो स्तनौ वीक्ष्य विदारितास्ये व्रजं सहाऽऽत्मान मवापशङ्काम्॥ ३९॥

**किं स्वप्न एतदुत देवमाया किं वा मदीयो बत बुद्धिमोहः[6]।**
**अथो अमुष्यैव[7] ममार्भकस्य यः कश्चनौत्पत्तिक आत्मयोगः॥४०॥**

**अथो[8] यथावन्न[9] वितर्कगोचरं चेतो मनः कर्मवचोभि रञ्जसा।**
**यदाश्रयं येन यतः प्रतीयते सुदुर्विभाव्यं प्रणताऽस्मि तत्पदम्॥४१॥**

**अहं ममाऽसौ पतिरेष मे सुतो व्रजेश्वरस्याखिलवित्तपा सती**
**गोप्यश्च गोपास्सहगोधनाश्च मे[11] यन्माययेत्थं कुमतिः स मे गतिः॥४२॥**

---

1- -1. G. M omit 2. M मदीना ° 3- -3. M श्रीभगवानुवाच 4. M.V °त्यं 5. A,B,G नभस्वान् वियदेव च; M. नभस्स्वर्वियदेवच; V. विवराणि रसातलम् 6. M. भेदः 7. M °ष्यापि 8. A,B,G,V अथो 9. M °तन्न 10. K.W °मी° 11. M ये; V omits मे

**श्रीध०** अदान्तात्मन्! चपलगात्र! [1-]यद्वा उद्धतस्वभाव[-1]! रहः एकान्ते [2-]अग्रजोऽपि बलरामोऽपि वदतीत्यर्थः[-2]॥३४॥

**नेति** । नाऽहं भक्षितवानिति, [3-]सर्वे मिथ्याभिवादिनः[-3] नहि बाह्यं किञ्चिन्मया [4]भक्षितम् मत्कुक्षा वादावेव सर्वमस्तीति भावः। समक्षं प्रत्यक्षम्॥३५॥

**यदीति**। व्यादेहि मुखं प्रसारयेति। व्यादत्त प्रसारितवान् [5-]स्वकुक्षिस्थ नानासृष्टि वैचित्र्यं मात्रे दर्शनाय प्रवृत्त इति सूचयन्नाह[-5] अव्याहतेति ॥३६॥

**सेति**। तत्र तस्मिन् **मुखे विश्वं** ददृशे ददर्श - तत्प्रपञ्चयति। जगज्जङ्गमम्। स्थास्नु स्थावरम्। ख मन्तरिक्षलोकम्। साद्रिद्वीपाब्धि भूगोलं पर्वत द्वीप समुद्र सहितं [6]भूगोलं [7]भूलोकम्। वायुः [8]प्रवहः अग्निः वैद्युतः, इन्दुश्च तारकाश्च तत्सहितम्॥३७॥

**ज्योतिरिति**। ज्योतिश्चक्रं स्वर्लोकम्। वैकारिकाणि देवाः मन इति वैकारिकशब्देन गृहीतमपि देववैलक्षण्यात् पुनरुक्तम् । इन्द्रियाणि च तैजसानि मात्रा स्तामसाः शब्दादयः॥३८॥

**एतद्विति**। एवमेतद्विचित्रं विश्वं सह एकदैव वीक्ष्य विचित्रतामाह - जीवश्च गुणक्षोभकः, कालश्च परिणामहेतुः स्वभावश्च जन्महेतुः , कर्म च तत्संस्कारः [9]आशयश्च - एतैः लिङ्गानां चराचरशरीराणां भेदो यस्मिंस्तत्। तनौ तत्र व्रजं च सहात्मानं स्वसहितं क्वचिद्वीक्ष्य। सूनोः त्वे विदारिते आस्ये शङ्कमवाप॥३९॥

[10]तामेवाऽऽह - **किं स्वप्न** इति। परितो विलोक्याऽऽह - नाऽयं स्वप्नः। तर्हि किं देवस्य हरेर्माया? [11] तथा चेदन्ये किं न पश्यन्ति? तर्हि किं वा मदीय एव कश्चिद्बुद्धिमोहो धीविपर्यासो दर्पणे मुखवत्। एवं तर्ह्ययं कृष्णोऽपि कथमन्तः प्रतीयते । [12-]न हि दर्पणे दर्पण प्रतीतिः[-12] अन्तर्बहिश्चैकरूपेण च कथं जगत्प्रतीयते । तथा सति बिम्बप्रतिबिम्बयो रिव परस्परं वैपरीत्येन प्रतीतिः स्यादित्याशङ्क्य अन्यथा वितर्कयति - अथो इति। [13]अथो

ग्वड्ल्र श्लश्ल ग्लन्नद्भव्यद्र ग्ढाङ्कत्व्यद्रप्लव्यफ ऋड्यप्लज्ज द्रः कश्चन अचिन्त्यय [14] आत्मयोगः स्वीय मैश्वर्यम्? औत्पत्तिकः स्वाभाविकः ॥ ४० ॥

चरमं पक्षमाश्रित्य अयमीश्वर इति निश्चित्याह - **अदो इति** । चेत श्चित्तम् । चि[15]त्तादिभिर्न वितर्कगोचरम् जगत् यदाश्रयं यदधिष्ठानम् । येन करणाधिष्ठात्रा । यतो बुद्धिवृत्त्यभिव्यक्तात् । नन्विद मवितर्क्यं भवतु । तत्पदं कीदृक्? अत आह - सदुर्विभाव्यमिति । इदमत्यन्त मचिन्त्य मित्यर्थः ॥ ४१ ॥

एवं प्रपञ्चप्रतीत्या उन्नीतं तत्त्वं पुनर्जीवसंसृति हेतुमायाश्रयत्वेनो[16]न्नयन्त्याह **अहमिति** । यशोदानामाऽहम्, असौ मम पति; । अमुष्य व्रजेश्वरस्य [17-]अखिल वित्तपा[-17] अखिल वित्तादिष्ठात्र्यहं सती जाया । एष कृष्णो मे सुतः, गोप्यादयश्च मदीयाः , इतीत्थं कुमतिः यन्मायया, स एष मे शरणमिति ॥ ४२ ॥

---

1- -1. A,B omit° 2. A,B omit 3. A,B omit 4. A,B भक्ष्यते 5- -5. A,B omit 6. V omit भूगोलं 7. A,B भूर्लो° 8. V पवनः 9. A adds °रभूतः 10. V °माह 11. A adds इति 12- -12. B.V omit 13. A.B omit अथो 14. V adds इति 15. V तदादि° 16. V °यन्तीत्याह 17. A,B omit

**वीर॰** भाषणमेवाऽह - **कस्मा** दिति। हे अदान्तात्मन् ! चपलगात्र उद्धतस्वभावेति वा। कस्माद्धेतोः भवान् रहसि मृदं भक्षितवान् नाऽहं भक्षितवानित्यत्राऽऽह वदन्तीति। [1-]तव सम्बन्धिन एव त्वं[-1] भक्षितवानिति वदन्तीत्यर्थः ॥ ३४ ॥

एवमुक्तः कृष्ण आह - **नाऽह** मिति। हे अम्ब ! नाऽहं भक्षितवान् मत्कुक्षौ सर्वमादावेवास्तीति भावः। एते वदन्तीत्येत त्प्रक्षिपति सर्व इति। यद्येते, सत्या गिरो वाचो येषां तथा भूता स्तर्हि समक्षं प्रत्यक्षं मम मुखं पश्य ॥ ३५॥

एव मुक्तया जनन्या, तर्हि मुख मास्यं व्यादेहि विवृतं कुर्वित्युक्तः भगवान् हरिः व्यादत्त विवृतमकरोत् व्यात्ताननं विश्वरूपप्रदर्शनोपयुक्तेन धर्मेण विशिनाष्टि - अव्याहत मवतारदशायामपि अप्रच्युतमैश्वर्यम् ईश्वर(रा)साधारणं "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" (श्वेता. उ. 6-8) "सत्यकामः सत्यसङ्कल्पः" (छान्दो. उ. 8-1-5) इत्यादि वेदान्तावगतं सर्वशक्तित्वादि कल्याणगुणजातं यस्य सः। तर्ह्येवम्भूतस्य जीववत् कुतो मनुष्यबालकत्वापत्ति स्तत्राऽऽह - क्रीडया निमित्तभूतया मनुजबालकः न तु कर्मणेति भावः॥ ३६॥

सा यशोदा तत्र विवृते आस्ये विश्वं ददर्श। तदेव प्रपञ्चयति। जगत् जङ्गमं स्थास्नु स्थावरम् खमन्तरिक्षलोकः, पर्वतद्वीपसमुद्र सहितः [2] भूलोकः, वायुः प्रवहश्च अग्निः वैद्युतश्च इन्दुश्च तारकाश्च तत्सहितं ज्योतिश्चक्रं, जलम् आवरणजलम्, तेजः सूर्यादि ज्योतिः, नभः आकाशः, [3] स्वर् स्वर्ग लोकः [3] विवराणि अतलादीनि, वैकारिकाणि सात्त्विकाहङ्कारकार्याणि, श्रोत्रादीनि, दशेन्द्रियाणि, मनश्च मात्रा स्तामसानि, शब्दादि तन्मात्राणि पञ्च, त्रयो गुणाः सत्त्वरजस्तमांसि ॥ ३७, ३८ ॥

एव मेतद्विचित्रं विश्वं सह एकदैव वीक्ष्य विचित्रतामेव विशिनष्टि। जीवाः क्षेत्रज्ञाः सर्वोत्पत्ति निमित्तगुण क्षोभकश्च, कालः परिणाम हेतुः, स्वभावश्च जन्महेतुः, कर्म च आशयो वासना च तैः, लिङ्गानां शरीराणां भेदो यस्मिंस्तत्, सहात्मानम् आत्मना यशोदया कृष्णेन च सहितं व्रजञ्च सूनोः तनौ, तत्राऽपि विदारिते व्यात्ते आस्ये अवलोक्य शङ्कां संशय माप॥ ३९॥

शङ्कामेव दर्शयति - **किमिति।** एषः शिशोः [4] अल्पवदने विश्वदर्शनरूपं किं स्वप्नः? जागरावस्थायां न हि स्वप्न स्सम्भवतीति विमृश्य वितर्कयति - उत देवमायेति। तथा चेत् घटपटादीनिव सर्वे किं न पश्यन्तीति विमृश्य शङ्कते किं वेति। बुद्धिमोहो बुद्धिविपर्यासः, भ्रम इति यावत् तथा चेत् पुनः पुनर्दर्शनेऽपि यथावत्कथं प्रतीतिः? अतो न बुद्धिमोह इति विमृश्याऽऽशङ्कते - अथो इति। अथो अथवा मदीयस्यामुष्यार्भकस्यापि, सतः यः कश्चन अचिन्त्य औत्पत्तिकः उत्पत्तिसिद्धः, स्वाभाविक इति यावत् आत्मयोगः आत्मनः परमात्मनः स्वस्य योगः कुक्षिस्थाखिल विश्वत्वादिकल्याण गुणयोगः तन्मूलक इति॥ ४०॥

चरमं पक्षमाश्रित्य अयमीश्वर इति निश्चित्य तं प्रणमति **अद** इति। चेतसा बुद्ध्या मनःकर्मणा मनोव्यापारेण वचोभिश्च अञ्जसा तत्त्वत आशु वा, यथावत् याथात्म्येन अदो विश्वं न वितर्क्यगोचरं नानाविधतर्कागोचरं यदाश्रयं यदाधेयं, यतः उत्पद्यत इति शेषः ये जीवति प्रमीयते यस्मिन् लीयते "यतो वा इमानि भूतानि" (तैत्ति. उ. 3-1) इति श्रुत्युर्थ प्रत्यभिज्ञान सामर्थ्यात्, यतो येन प्रमीयत इति पदापेक्षितानां जायते जीवति यस्मिन्निति पदाना मध्याहारः, तत्सुदुर्विभाव्यम् इदमित्थन्तया चेतो मनः कर्मवचोभि स्तर्कयितुं मशक्यं पदम्, पद्यते गम्यते प्राप्यत इति पदम्, मुमुक्षुप्राप्यं परमात्म स्वरूपं प्रणतास्मि नमस्कृतवत्यस्मि। न वितर्कगोचरमिति कार्यस्य जगत स्तर्कागोचरत्व मुक्तम्। तत्कुत इत्यपेक्षायां, कारणस्य तथा विधत्वात् इत्यभिप्रायेण सुदुर्विभाव्य मित्युक्तम्। प्रतीयत इति पाठे यतः प्रतीयते व्यज्यते उत्पद्यत इत्यर्थः॥ ४१॥

मम अहम्ममते यत्सङ्कल्पायत्ते, स एव मम तन्निवृत्त्युपाय इति अध्यवस्यति **अहमिति।** ममाऽसौ नन्दः पीतः, एष मे सुतः सगोपास्सह गोधनाश्च गोप्यो मे मदीयाः, अहं सती व्रजेश्वरस्य नन्दस्याखिलवित्तपा समस्तद्रव्य गोप्त्री अस्मीति। कुमतिः अहम्ममताबुद्धिः यन्मायया यस्य सङ्कल्पेनाऽभूत् स एव भगवान् मम गति रहम्ममता निवृत्त्युपायः॥ ४२॥

1- -1. W omits 2. A,B भूर्लोकः 3- -3. A,B स्वः स्वर्लोकः 4. A,B add अस्य

**विज०** तत्र किं प्रमाणमिति तत्राऽऽह वदन्तीति॥ ३४॥

मिथ्यावादित्वं प्रत्यक्षतो दर्शयामीत्याशयेनाऽऽह यदीति॥ ३५॥

यद्यसत्यगिरो बालाः, यदि त्वया न मृद्भक्षिता तर्हि मुखं विदारयेत्याह - **यद्येव** मिति। व्यादत्त विदारितवान्। क्रीडार्थं मनुजबालकः प्रशस्तमानुषबालवपुः॥ ३६॥

जगज्जङ्गमं स्थावरम्। सामान्योक्तं विशिनष्टि खमित्यादिना। खं प्रदेशः भूगोलं भूमण्डलम्। वाय्वग्नी भूमौ॥ ३७॥

ज्योतिश्चक्रं अश्विन्यादि नक्षत्रमण्डलं जलतेजसी बाह्याभ्यन्तर गते नभः क्रतु विशेषः, अन्तरिक्षं वा, स्वः स्वर्गः परलोको वा, वियद्बाह्यं सर्वगतं वा। वैकारिकाणीन्द्रियाधिष्ठातृ दैवतानि ॥ ३८॥

स्वभावः सात्त्विकादिः, कर्म अदृष्टम्, आशयः संस्कारः, लिङ्गं लक्षणं, सूक्ष्मशरीरं वा बुद्ध्यादि समूहो वा। भेदः तत्तद्वस्तु व्यावर्तकधर्मः॥ ३५॥

शङ्कां प्रकटयति **किमिति**। औत्पत्तिकः स्वाभाविकः आत्मयोगः आत्मैश्वर्यातिशयः॥ ४०॥

"ब्रह्मविदाप्नोति परम्" (तैत्ति.उ. 2-1) इत्युपनिषद्वेद्यं ब्रह्मैव मम पुत्रतां प्राप्तमिति यस्मात्तस्मात्ति मया बोद्धुमशक्यमिति न दूषणं, किन्तु ब्रह्मादिभिः सुष्ठु दुर्विभाव्य मित्याशयेनाऽऽह - **अद** इति। अदो वस्तु यथा यादृशं तत्तादृशमिति चेतो मनः कर्मवचोभिः - चेतो ब्रह्मा, मनो रुद्रः कर्म पुष्करनामा देवः इन्द्रो वा, वचो वह्नि बृहस्पति र्वा, उमा वा, अञ्जसा साक्षादेतैः कृतविविधतर्कगोचरं विरचितनानानुमान विषयं न भवति। विरुद्ध तर्क गोचरं न भवतीति किमिति योज्यम्। नन्विदं तर्हि शून्यप्राय मिति तत्राऽऽह - यदाश्रय मिति। यत्पदं आश्रयो यस्य तद्यदाश्रयं, जगदिति शेषः। प्रलये ब्रह्माश्रयत्वेन तिष्ठतीत्यनेन जगद्ब्रह्मणोः भेदः सिद्धः। स्थितिकाले च येन जीवनं सिध्यति सृष्टिकाले च यतः प्रतीयते अभिव्यज्यते उत्पद्यत इत्यर्थः। "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयान्त्यभिसंविशन्ति" (तैत्ति. उ. 3-1) इति श्रुतिः। अनेन जन्मादिकारणत्वं स्वलक्षण मित्युक्तं भवति। ननु घटादिवत् किमिति न ज्ञायत इति तत्राऽऽह - सुदुर्विभाव्यमिति। सुखेन दुःखेन च विभाव्यं विशिष्टत्वेन विरुद्धत्वेन च ज्ञेयम्। "सुदुश्शोभन दुःखयोः" इति यादवः, "नैषा तर्केण मति रापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ"! (कठ. उ. 2-9) इति श्रुतेः। द्वैतवादिभिस्सम्यक्, अद्वैतवादिभिरसम्यक् ब्रह्म ज्ञेयम्। तत्र द्वैतवादिनः सम्यक् ज्ञानेन स्वयोग्या मुक्तिः अद्वैतवादिनः प्रमाणविरुद्धज्ञानेन तम इति विवेकः।

अन्य मीशस्य महिमान मिति वीतशोकः। "तांस्ते प्रेत्याभिगच्छन्ति ये के चाऽऽत्महनो जनाः" (बृह. उ. 4-4-11, ईश. उ. 3) इत्यादि श्रुतेः। त्वमुभयविधेषु का? इति तत्राऽऽह प्रणतेति। पद्यत इति पदं स्वरूपं नम्यनेतृभावस्य भेदनिष्ठत्वेन द्वैतनिष्ठैवाऽहमित्यर्थः॥ ४१॥

नित्यपरतन्त्रे आत्मनि स्वातन्त्र्यबुद्धि रभेद बुद्धिरित्याशयेनाऽऽह अह मिति। व्रजेश्वरस्य नन्दस्य अखिलवित्तानि पाति रक्षतीति अखिलवित्तपा, यस्य हेर्मायया इच्छया इत्थं कुमतिः आत्मनः स्वातन्त्र्य बुद्धि रह मभूवम्, अतः स हरि र्मे गतिः मत्स्वातन्त्र्य बद्धि मपनुद्य स्वस्वातन्त्र्य ज्ञापकत्वेन आश्रयोऽस्त्वित्यन्वयः॥ ४२॥

इत्थं विदिततत्त्वायां[1] गोपिकायां[2] स ईशवरः।
वैष्णवीं व्यतनोन्मायां प्रजास्नेहमयीं[3] विभुः॥ ४३॥

सद्योनष्टमतिर्गोपी[4] साऽऽरोप्यारोहमात्मजम्[5]।
प्रवृद्धस्नेह कलिल[6] हृदयाऽऽसीद्यथा[7] पुरा॥ ४४॥

त्रय्या चोपनिषद्भिश्च सांख्ययोगैश्च सात्वतैः।
उपगीयमान माहात्म्यं हरि साऽमन्यताऽऽत्मजम्॥ ४५॥

राजो वाच

नन्दः किमकरो द्ब्रह्मन् श्रेय एवं[8] महोदयम्।
यशोदा च[9] महाभागा पपौ यस्याः स्तनं[10] हरिः॥ ४६॥

पितरौ नान्वविन्देतां कृष्णोदारार्भकेहितम्[11]।
गायन्त्यद्याऽपि कवयो यल्लोकशमलापहम्[12]॥ ४७॥

श्रीशुक उवाच

द्रोणो वसूनां प्रवरो धरया सह भार्यया।
करिष्यमाण आदेशं[13] ब्रह्मण स्त मुवाच ह॥ ४८॥

जातयो र्नौ महादेवे भुवि विश्वेश्वरे हरौ।
भक्तिः स्यात्परमा लोके ययाऽञ्जो[14] दुस्तरं[15] तरेत्॥ ४९॥

अस्त्वित्युक्तस्स ए[16]वेह द्रोणस्स भगवान् व्रजे[-16]।
जज्ञे नन्द इति ख्यातो यशोदा सा धराऽभवत्॥५०॥

ततो भक्तिर्भगवति पु[17]त्रभूते जनार्दने।
दम्पत्योर्नितरा मासी द्गोपगोपीषु भारत॥५१॥

कृष्णो ब्रह्मण आदेशं सत्यं कर्तुं व्रजे वि[18]भुः।
सहरामो वसंश्चक्रे तेषां प्रीतिं स्वलीलया॥५२॥

इति श्रीमद्भागवते महापुराणे श्री वैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे पूर्वार्धे विश्वरूपप्रदर्शनेऽष्टमोध्यायः॥८॥

---

1. A °याः 2. A. °याः 3. B, G पुत्र 4. A,B,G,M स्मृति° 5. K,W आरो° 6. K.W °त 7. M °या सा य° 8. A एव 9. K.W वा 10. W स्तनौ 11. M कृष्णरामार्भ° 12. A कस्य म° 13. G.V °शान् 14. W ययांऽहो 15. A.G.V दुर्गतिं 16- -16. A,G,V एवेह व्रजे द्रोणो महायशाः; B. भगवान् व्रजे द्रोणो महायशाः; M एतन व्रजे द्रोणो महायशाः 17. A,B, G पुत्री 18. M भुवि

**श्रीध०** **इत्थमिति**। वैष्णवीं स्वीयाम् ॥४३॥

**सद्य** इति। प्रवृद्धेन स्नेहेन कलिलं व्याप्तं हृदयं यस्यास्सा, पुरेवाऽऽसीत्॥४४॥

मायाबलोद्रेकमाह - **त्रय्येति**। त्रय्या [1-]कर्मकाण्डरूपया[-1] इन्द्रादिरूपेण उपनिषद्भिः ब्रह्मेति, सांख्यैः पुरुष इति, **योगैः** परमात्मेति, सात्त्वतैः भगवानिति उपगीयमानं माहात्म्यं यस्य तम्॥४५॥

अतिविस्मयेन पृच्छति - **नन्द** इति। महोदयं महानुदय उद्भवो [2]यस्य तत्॥४६॥

**पितराविति**। ययोः प्रसन्नोऽवतीर्णस्तौ पितरावपि यं नान्वविन्देतां न प्राप्नुताम्। कृष्णस्योदारं महदर्भकेहितं बाललीलाम्। यच्च कवयो गायन्ति, [3-]तद्योऽविन्दत्[-3] स किं श्रेयोऽकरोदिति॥४७॥

**द्रोण** इति। ब्रह्मण आदेशान् गोपालनादिलक्षणान्॥४८, ४९॥

**अस्त्विति**। स एवेह द्रोणो जज्ञे। स च नन्द इति ख्यातः, सा च धरा यशोदाऽभवत्॥५०॥

**तत** इति। गोपगोपीनामपि वस्तुस्वभावादस्त्येव भक्तिः तयोः पुनः नितरामिति ॥ ५१ ॥

**कृष्ण** इति। स्वलीलया पुत्रभावानुकारिण्या ॥ ५२ ॥

इति श्रीमद्भागवते दशमस्कन्धे
श्रीधरस्वामि विरचितायां भावार्थदीपिकायां
व्याख्यायां अष्टमोऽध्ययायः ॥ ८ ॥

---

1- -1. V omits 2. A यस्मात्, V. यस्मिन् 3- -3. तद्योगिनौ विन्दन्ति

**वीर०** इत्थं गोपिकायां यशोदायां विदितं तत्त्वं बालस्य याथात्म्यं यया तथाभूतायां सत्यामेव स कृष्णरूपः ईश्वरो विभुः विष्णोः स्वस्य सम्बन्धिनीं प्रजास्नेहमयीं पुत्रस्नेहप्राचुर्यवहां मायां व्यतनोत् विस्तारितवान् ॥ ४३ ॥

सद्यस्तथैव नष्टा स्मृतिः पुत्रे परमात्मत्व स्मृतिः यस्याः स्सा गोपी पुत्रमारोह मङ्कमारोप्य पूर्ववत्प्रवृद्धेन स्नेहेन कलितं व्याप्तं हृदयं यस्या स्तथाभूता बभूव ॥ ४४ ॥

मायावैभवं प्रकटयितु माह - **त्रय्येति।** त्रय्या वेदपूर्व भागेन तद्बोधित तत्तत्कर्माराध्यत्वेन्, उपनिषद्भिः वेदोत्तरभागैः सर्वकारणत्वोपास्यत्व प्राप्यत्वादिना, सांख्यै र्योगैश्च ज्ञानयोग कर्मयोगानुगृहीत भक्तियोगैक प्राप्यत्वेन, सात्त्वतैः पञ्चरात्र संहिताभिः परव्यूहविभवार्चारूपत्वेन उपगीयमानं माहात्म्यं यस्य तं हरिं[3] सा विदित्वाऽपि तथैव केवल मात्मज ममन्यत ॥४५॥

श्रुतैवंविध यशोदानन्द भाग्यातिशयस्तत्कारणं पृच्छति राजा **नन्द** इति द्वाभ्याम्। हे ब्रह्मन् ! एव मेवंविधं महानुदय उत्तरफलं यस्य तच्छ्रेयः यतः कारणादभवत्, तत्किमकरोन्नन्दो यशोदा चेति **प्रश्नः**। महाभाग्यमेव सूचयन् यशोदां विशिनष्टि, यस्याः स्तनं हरिः पपा वपिबत् ॥ ४६ ॥

कुतश्च कारणात् पितरौ देवकी वसुदेवौ कृष्णस्योदारं विपुलमर्भकेहित मर्भकचेष्टितं नान्वविन्देतां न प्राप्नुतां न दृष्टवन्तौ इति प्रश्नान्तरम्। ईहितं विशिनष्टि, यत्कृष्णोदारार्भकेहितं लोकस्य शृण्वतो वदतश्च जनस्य दुरितापहन्तृ कवयो नारदादयोऽद्यापि गायन्ति [4]ईदृशेहि[-4]तादर्शननिमित्तं किमिति प्रश्नार्थः ॥ ४७ ॥

इत्थं मापृष्ट आह शुकः - **द्रोण** इति। वसूनां प्रवरः [5]प्रकृष्टो द्रोणः धरया धराख्यया भार्यया सह ब्रह्मणश्चतुर्मुखस्याऽऽदेशान् गोरक्षणादिरूपान् करिष्यमाणस्तं ब्रह्माणमुवाच भूभारावतरणाय भगवानवतरिष्यति पयःप्रदानेनापि

भगवन्त माराधयितुं गोरूपेण मुनयश्च स्वांशैः जनिष्यन्ते। त्वन्तु गोरक्षणार्थं भार्यया सह गोपेषु जनिष्यसे - इत्येवं ब्रह्मणोक्त स्तमाहेत्यर्थः॥ ४८॥

उक्तमेवाऽऽह - **जातयोरिति।** भुवि लोके जातयो नौ आवयोः भुव्यवतीर्णे विश्वेश्वरे महादेवे ब्रह्मादीनामपि देवे भगवति [6-]हरौ आश्रितार्ति हरे[-6] परमा भक्तिः स्यात्। यथा भक्तिः स्यात् तथाऽनुगृहाणेत्यर्थः। तत्प्रार्थनायां हेतुं वदन् तां विशिनष्टि। यया भक्त्या दुस्तरम् उपायान्तरेण तरितु मशक्यं संसृतिनिमित्तं पाप मञ्जः आशु तरेत्॥ ४९॥

**अस्त्विति।** तथैवास्त्विति ब्रह्मणोक्तः स एव भगवान् द्रोण एवेह लोके व्रजे नन्द इति ख्यातो जज्ञे [7]तथा सैव धरा यशोदा अभवत् यशोदारूपेण जज्ञे॥ ५०॥

हे भारत! गोपगोपीषु मध्ये दम्पत्योः यशोदानन्दयोः पुत्रभूते अपुत्रेऽपि पुत्रतां प्राप्ते जनार्दने भगवति ततो ब्रह्मवरात् भक्तिरासीत्॥ ५१॥

कुतस्तयोः पुत्रभूतः [8]हरिः तत्राऽऽह **कृष्ण** इति। ब्रह्मणश्चतुर्मुखस्य आदेशं वरदानात्मकं सत्यं कर्तुं स्वस्य तयोः पुत्रभूतस्य लीलया बालचेष्टया तेषां नन्दादीनां प्रीतिश्च कर्तुं रामेण सहितो व्रजे वासं वसतिं चकार। चतुर्मुखादेश एव नन्दयशोदयोरुक्तश्रेयःप्राप्तौ देवकी वसुदेवयोः कृष्णोदारार्भकिहितालब्धौ च कारणमित्यर्थः॥ ५२॥

इति श्रीमद्भागवते दशमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्र चन्द्रिकायां
व्याख्यायां अष्टमोऽध्यायः॥ ८॥

---

1. A,B, add पुत्र 2. A,B °लं 3. A,B add आश्रितार्तिहरं 4- -4. A,B ईदृशकृष्णोदारार्भकिहि° 5. A,B श्रेष्ठः 6- -6. W omits 7. W omits तथा 8. W omits हरिः

**विज०** प्रजास्नेहमयीं पुत्रस्नेहमयीं पुत्रस्नेहरूपाम्॥ ४३॥

प्रवृद्धस्नेहकलिलहृदया, अभूदिति शेषः॥ ४४॥

प्रजास्नेहमयीं मायां शृङ्गग्राहिकतयैव दर्शयति - त्रय्येति। त्रय्यां "अग्निमीळे" (ऋक्.सं. 1-1-1) इत्यादिकया। उपनिषद्भिः "एष पन्था" (बृह.उ. 4-4-9) इत्यादिकाभिः सत्त्ववान् हरिः, तद्विषयैस्सात्वतैः सांख्य योगैः पञ्चरात्रादिशास्त्रैः यद्वा सांख्य योगैः यदार्थज्ञान प्रतिपादकैः ब्रह्मतर्कादिभिः, सात्त्वतैः पञ्चरात्रादि वैष्णवतन्त्रैः॥ ४५॥

श्रेयः पुण्यं, पूर्वजन्मनीति शेषः। "स्याद्धर्म मस्त्रियां पुण्यश्रेयसी सुकृतं वृषः" (अम. को. 1-132) इत्यमरः। महानुदयः फलं यस्मात्तत्तथा। महान् भागो भाग्यं यस्या स्सा महाभागा। "भागाः भाग्यांश तुर्यांशाः" (वैज. को 6-1-41) इति यादवः॥ ४६॥

कृष्णरामनाम्नोः अर्भकयोः बालयोः ईहितं चेष्टितं विन्दति लभिमार्थोऽप्यत्र ज्ञानार्थः। चेष्टानुकूलज्ञानलाभं नाप्नुवन्ताविति। "विद ज्ञाने तु वेत्तीति, विद्लृलाभेतु विन्दति" इति वचनात्। लोकशमलापहं जनपापहरम्॥४७॥

प्रत्यारभ्यते कथान्तरमिति शेषः। "प्रत्यारम्भे प्रसिद्धौ ह" (वैज. को. 8-7-8) इति यादवः॥ ४८॥

महादेव इत्यनेन शङ्करोऽत्रोच्यत इति शङ्काव्यावृत्त्यर्थं विश्वेति। लोके जनमध्ये॥ ४९, ५०॥

गोपगोपीषु मध्ये नितराम्॥ ५१, ५२॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीविजयध्वजतीर्थ विरचितायां पदरत्नावल्यां
टीकायां अष्टमोऽध्यायः॥ ८॥
(विजयध्वजरीत्या नवमोऽध्यायः)

# नवमोऽध्यायः

## (विजयध्वजरीत्या दशमोऽध्यायः)

[1]श्री शुक[-1] उवाच

एकदा गृहदासीषु यशोदा नन्दगेहिनी।
कर्मान्तरनियुक्तासु निर्ममन्थ स्वयं दधि॥ १॥

यानि यानीह गीतानि तद्बालचरितानि च।
दधिनि[2]र्मन्थने काले स्मरन्ती तान्यगायत॥ २॥

क्षौमं वासः पृथुकटितटे बिभ्रती सूत्रनद्धं पुत्रस्नेहस्नुतकुचयुगं जातकम्पञ्च सुभ्रूः।
रज्ज्वाकर्षश्रमभुजचलत्कङ्कणौ कुण्डेले च। स्विन्नं वक्त्रं कबरविगलन्मालती निर्ममन्थ॥ ३॥

तां स्तन्यकाम आसाद्य म[3]थ्नतीं जननीं हरिः।
गृहीत्वा दधिमन्थानं न्यषेधत्प्रीतिमावहन्॥ ४॥

तमङ्कमारूढपाययत्स्तनं स्नेहस्नुतं सस्मितमीक्षती मुखम्।
अतृप्तमुत्सृज्य जवेन सा यया वुत्सिच्यमाने पयसि त्वधिश्रिते॥ ५॥

[4]स जातकोपः स्फुरितारुणाधरं सन्दश्य दद्भिर्द[5]धिमन्थभाजनम्।
भित्वा मृषाश्रु ईषदश्मना रहो ज[6]घास हैयङ्गव मन्तरं गतः॥ ६॥

उत्तार्य गोपी सुशृतं पयः पुनः प्रविश्य सन्दृश्य च दध्यमत्रकम्।
भग्नं विलोक्य स्वसुतस्य कर्म तत् जघास तत्रापि न तत्र पश्य[7]ति॥ ७॥

---

1- -1. M.V बादरायणिः 2. M निर्मथने 3. A,B,G,V M मथ्नन्तीं 4. B.G.K.M. सञ्जात 5. A.M. मण्ड 6. V. जहार 7. A.B.G.M.V. ०ती

## श्रीधरस्वामिविरचिता भावार्थदीपिका

नवमे पय उत्सिक्ते गत्वा गोप्यथ तत्कृतम्।
विलोक्यभाण्डभङ्गादि कृष्णं दाम्ना बबन्ध तम्॥
तनूदराश्रितं[1] विश्वं दृष्ट्वा विस्मित चेतसः (सा)।
बन्धन द्व्यङ्गुलापूर्त्या पूर्णता [2]मन्वदर्शयत्॥

**एकदेति।** स्वयं दधि निर्ममन्थ॥ १॥

**यानीति।** तदा चाऽगायतेति चकारान्वयः ॥ २॥

**क्षौममिति।** सूत्रनद्धम् काञ्चीबद्धम्। रज्जोराकर्षेण श्रमो ययो स्तयोः **भुजयोः** चलन्तौ कङ्कणौ च। कबरा द्विगलन्त्यो मालत्यो यस्याः सा॥ ३, ४॥

**तमिति।** अधिश्रिते चुल्ली मारोपिते उत्सिच्यमाने अतितापेन [3-]बहिर्निर्गच्छति सतीत्यर्थः[-3] ॥ ५॥

**स** इति। दृषदश्मना शिलापुत्रेण [4-]पेषण्यश्रमेणेत्यर्थः[-4]। अन्तरं गृहमध्यं गतः। रह एकान्ते [5]हैयङ्गवं नवनीत मभक्षयत्॥ ६॥

उत्तार्येति। सुशृतं सुतप्तम्। दधिमन्थन स्थानं प्रविश्य भिन्नं सन्दृश्य दृष्ट्वा॥ ७॥

---

1. V ०तू० 2. V. सोऽन्व 3- -3. A.B. उद्रिच्यमाने॥ ५॥ 4- -4. A.B. omit 5. A.B. omit हैयङ्गवं

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

इत्थं प्रदर्शित विश्वरूपस्य कृष्णस्य अथ अपरिमेयता रूपपूर्णता प्रदर्शनमाह नवमेन **एकदेति।** गृहदासीषु कर्मान्तरनियुक्तासु [1-]व्यापारान्तरेषु आदिष्टासु[-1] [2]सतीषु अत एव यशोदा स्वयमेवं दधि निर्ममन्थ॥ १॥

तस्य श्रीकृष्णस्य बालचेष्टितानि गद्यपद्यादिरूपेण कविभिः निबद्धानि तानि सर्वाणि तदा दधिनिर्मथन काले अगायत च॥ २॥

कथम्भूता ममन्थेत्यत्राऽऽह - **क्षौममिति।** वासःप्रभृतीनां द्वितीयान्तानां बिभ्रतीत्यनेनाऽन्वयः। पृथुकटितटे सूत्रनद्धं काञ्चीबद्धं क्षौमं [3]वासः वस्त्रं जातः निर्मथनानुकूलव्यापारजः कम्पो यस्य तत् पुत्रस्नेहेन स्नुतयोः पयस्स्राविणोः कुचयोः युगं च रज्ज्वाकर्षणे श्रमो ययो स्तयोः भुजयोः चलन्तौ कङ्कणौ च कुण्डले च स्विन्नं प्रस्वेदभरितं वक्त्रञ्च बिभ्राणा कबरा द्विगलन्त्यो मालत्यो यस्याः शोभने भ्रुवौ यस्याः तथाभूता निर्ममन्थ, अगायत चेत्यर्थः॥ ३॥

तामेवं निर्मन्थतीं जननी मासाद्य समीपमेत्य स्तन्यं कामयमानो हरिः श्रीकृष्णः तस्याः प्रीति मावहन् दधिमन्थनदण्डं गृहीत्वा न्यषेधत् [4]निवारयामास॥ ४॥

तं निषेधन्तमङ्कमुत्सङ्ग मारूढं [5]सुतं स्नेहेन स्नुतं स्तनमपाययत्। कथम्भूता? स्मितेन सहितं सुतस्य मुखमीक्षती तदा अधिश्रिते चुल्ल्यारोपितेपयसि क्षीरे उत्सिच्यमाने गाढाग्निसम्पर्कात् पात्रात् बाहिर्निर्गच्छति [6]सति अतृप्तं स्तन्यपानादतृप्तं पुत्र मुत्सृज्य सा यशोदा जवेन ययौ जलप्रक्षेपादिना क्षीरतापं शमयितुं जगाम॥ ५॥

सः उत्सृष्टः कृष्णः सञ्जात कोपः दद्भिर्दन्तैः स्फुरितं चलन्त मरुण मधर मधरोष्ठं सन्दश्य मृषा अश्रूणि यस्य तथा भूतो दृषदश्मना पेषण्यश्मना दधिमन्थभाण्डं निर्भिद्यान्तरं गृहमध्यं गतः हैयङ्गवं नवनीतं जघास एकान्ते नवनीत मभक्षयदित्यर्थः॥ ६॥

तदा गोपी यशोदा सुशृतं सुपक्वं पय उत्तार्य चुल्ल्या अवरोप्य पुनस्तत्र प्रविश्य दध्यमत्रकं दधिमथनभाण्डं भग्नं विलोक्य च तत्सुतस्य कर्मप्रति जहास हसितवती, तं सुतं तत्र न पश्यति नाऽपश्यच्च॥ ७॥

---

1- -1. A.B. ०रे प्रविष्टासु दासीषु 2. A. omits सतीषु 3. A.B. omit वासः 4. W. omits नि 5. A.B. कृष्णं 6. A.B. omit सति

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अत्र अतीताध्याय सङ्गति रनुसन्धेया। नन्दस्य गेहिनी भार्या॥ १॥

दध्नो निर्मथनं यस्मिन् स तथा। तस्मिन् काले॥ २॥

क्षुमनाम कृमितन्तुना कृतं क्षौमं सूत्रेण काञ्च्या नद्धं बद्धं पुत्रस्नेहातिशयेन स्नुतयो क्षरितयोः कुचयो र्युगं, पुनः कीदृशम्? जातः आविर्भूतः कम्पश्चलनं यस्य त त्तथा तत्। शोभने भ्रुवौ यस्या स्सा सुभ्रूः बद्धया रज्ज्वा आकर्षः, तेनोत्पन्नः श्रमः आलस्यं तेनोपेतयोः भुजयोश्चलन्तौ कङ्कणौ खणखणायमानशब्दयुक्तत्वात् तथाविधौ, स्विन्नं स्वेद जलोपेतं कबरात्केशबन्धात् विगलती मालती मल्लिका यस्या स्सा कबरविगलन्मालती। अत्र द्वितीयान्तपदस्य बिभ्रतीत्यनेनान्वयः। पृथु विशालम्॥ ३॥

न्यषेधत् निवारितवान्॥ ४॥

अतृप्त मलम्बुद्धिमप्राप्तम्, अधिश्रिते चुल्ल्यां निहिते अधिकं पाकं प्राप्तेवा पयासि उत्सिच्यमाने उद्रिच्यमाने सति, पयः अवरोपयितुमिति शेषः॥ ५॥

दद्भिर्दन्तैः दधिमण्डभाजनं दधिमस्तु पूर्णपात्रं "दधिमण्डो भवेन्मस्तु" (हला को 2-166) इति हलायुधः। दृषदश्मना शिलापुत्रकेण मृषाश्रुः अविद्यमाननेत्रजलः दुःखोत्पन्नबाष्पो न भवतीत्यर्थः। हैयङ्गवं नवनीतम्। अन्तरं बहिर्भावं अन्तर्धानं वा गृहान्तरं वा। "अन्तरः परिधानीये बाह्ये स्वीयेऽन्तरात्मनि। क्रतुमध्येऽवकाशे च तादर्थ्येऽवसरेऽवधौ। विशेषविवरान्तार्धिष्ववसान विनार्थयोः" (वैज. को 7-5-1,2) इति यादवः॥ ६॥

उत्तार्य चुल्ल्या अन्यत्र निधाय दध्यमत्रकं दधिभाण्डं भग्नं भिन्नम्। स्वसुतस्य तत्कर्म विलोक्याऽऽलोक्य॥७॥

—: यमलार्जुनभञ्जनकथारम्भ :—

उलूखलाङ्घ्रे रुपरि व्यवस्थितं मर्काय कामं ददतं [1-]शुचिस्मितम्[-1] ।
हैयङ्गवं चौर्यविशङ्कितेक्षणं निरीक्ष्य पश्चात्सुतमागमच्छनैः॥ ८॥

ता मात्तयष्टिं प्रसमीक्ष्य सत्वर स्ततोऽवरुह्या[2]प ससार भीतवत्।
गोप्यन्वधावन्नय माप योगिनं क्षमं प्रवेष्टुं तपसेरितं मनः॥ ९॥

अन्वञ्चमाना जननी बृहच्चलच्छ्रोणीभराक्रान्त गतिस्सुमध्यमा।
जवेन वि[3]स्रंसित केशबन्धनच्युत प्रसूनानुगतिः परामृशत्॥ १०॥

कृतागसं तं प्ररुदन्त मक्षिणी क[4]षन्त मञ्जन्मषिणी स्वपाणिना।
उद्वीक्ष्यमाणं भयविह्वलेक्षणं हस्ते गृहीत्वा भिषयन्त्यवागुरत्॥ ११॥

---

1- -1. A.B.G. शिचि स्थितम्; M. यथेप्सितम् 2. M. °मि 3. M. भ्रंशित 4. V. ०र्ष०

श्रीध० उलूखलेति। उलूखलाङ्घ्रेः परिवर्तितस्योलूखलस्योपरि। [1]स्थित्वा [2]शिचि शिक्ये। चौर्येण विशङ्कितं चञ्चल मीक्षणं यस्य तं [3]सुतम्। [4-]मर्काय मर्कटाय। मर्कशब्दोऽत्र मार्जारादीनामुपलक्षकः। यद्वा मर्कं नवनीतं तदर्थ मागताय सखिजनायेत्यर्थः[-4]॥८॥

**तामिति।** तपसा [5]ऐकाग्र्येण ईरितं तदाकारतां नीतं, अत एव [6-]क्षमं योग्यं प्रवेष्टुं योगिनां मनोऽपि यं नाऽऽप, तम्, अथ वा अन्वधावत् केवलं, न त्वाऽऽप, यतो योगिनां मनोऽपि यं[-6] प्रवेष्टुं न क्षम मिति॥९॥

**अन्वञ्चमानेति।** अन्वञ्चमाना एवं कृष्ण मनुगच्छन्ती, बृहत्यो श्चलन्त्योः श्रेण्यो र्भरेणाऽऽक्रान्ता स्तब्धा गति र्यस्या स्सा, विस्रंसितात् [7-]शिथिलीकृतात्[-7] केशबन्धनाच्युतैः प्रसूनैरनुगति रनुगमनं यस्या स्सा। यद्वा जवेन कम्पितात् केशबन्धात्पु[8]रः पतितानि प्रसूनान्यनु पश्चात् गतिः यस्या स्सा। परामृश द्भूतवती॥१०॥

**कृतागसमिति।** अञ्जन्मषिणी अञ्जन्ती सर्वतः[9] प्रसरन्ती मषी क[10]ज्जलं ययो स्ते[11] अक्षिणी स्वपाणिना कर्षन्तं सम्मर्दयन्तम्। भिषयन्ती। ह्रस्व श्छान्दसः भीषयन्ती भयमुत्पादयन्ती। अवागुरदभर्त्सयत्। [12-]अ पागुरादिति पाठान्तरे अपगुरणं मनसा द्रोहचिन्तन मकरोदित्यर्थ[-12]ः॥११॥

---

1. A.B. omit स्थित्वा 2. V. omits शिचि 3. V. omits सुतं 4- -4. A.B. omit 5. V. एकाग्रेण 6- -6. V. omits 7- -7. A.B. omit 8. V. पुनः पुनः 9. V. ०त्र 10. A.B. omit कज्जलं 11. V. adds अन्तर्मर्षिणीत्यपि पाठान्तरम्। 12- -12. A.B. Omit.

**वीर०** उलूखलाङ्घ्रे रुपरि अधोमुखविन्यस्तोलूखलस्योपरि व्यवस्थितं मर्काय मर्कटाय, मार्जारायेति केचित्, नवनीतार्थमागताय सखीजनाय वा हैयङ्गवं नवनीतं काममिष्टं यथा तथा ददतं प्रयच्छन्तं चौर्येण विशङ्किते चञ्चले ईक्षणे यस्य तम्। निरीक्ष्य पश्चात्पृष्ठतः शनै राजगाम॥८॥

ता मागताम्, आत्ता उद्धृता यष्टिः यया ताम् प्रसमीक्ष्य त्वरया सहितः ततः उलूखलाङ्घ्रेः अवरुह्य भीतवदपससार पलायितवान्। तदा सा तमपसरन्तं सुत मन्वधावत्। "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" (तैत्ति. उ. 2-4) इत्युक्तरीत्या वाङ्मनसा परिच्छेद्य वैभवं पद्भ्या मन्वधावत् इत्येतदहो विचित्रमित्यभि प्रायेण विशिनष्टि। यं कृष्णं योगिनां मनोऽपि प्रवेष्टुं न क्षम मसमर्थमास तमन्वधावत्। कथम्भूतं मनः तपसा ईरितं प्रवणीकृतम्॥९॥

अन्वञ्चमाना अनुधावन्ती बृहत्योः श्रोण्योः भरेणाऽऽक्रान्ता स्तब्धा गति र्यस्याः, शोभनो मध्यमः मध्यप्रदेशो यस्याः, जवेन हेतुना विस्रंसितात् केशबन्धनात् च्युतैः प्रसूनैः अनुगति रनुगमनं यस्या स्सा जननी परामृशत् पस्पर्श, जग्राहेत्यर्थः॥१०॥

तं हस्ते गृहीत्वा भिषयन्ती भयं प्रापयन्ती अवागुरत् ताडयितु मुद्यतहस्ताऽभूत्। कथम्भूतम्? कृतमागोऽपराधो येन तम्। अञ्जन्ती सर्वतः प्रसरन्ती मषिः कज्जलं ययो स्ते अक्षिणी स्वपाणिना कषन्तं मर्दयन्तं, भयेन विह्वले चकिते ईक्षणे यस्य॥ ११॥

**विज०** उलूखलाङ्घ्रेः उलूखलबुध्नस्य। चौर्येण विशङ्किते किञ्चिदुन्मीलन मीलने कुर्वाणे ईक्षणे यस्य स तथा तम्। पश्चात् पृष्ठतः॥ ८॥

अभिससार गमनं प्रारब्धवानित्यर्थः। गोप्या कृष्णानुधावनं न तत्त्वबुद्ध्या कृतम्, किन्तु भ्रान्ति बुद्ध्येत्याशयेनाऽऽह न य मिति। तपसा ईरितं प्रेरितम्, क्षमं समर्थम्॥ ९॥

अन्वञ्चमाना जवं विहाय शनैः अनुगच्छती (न्ती) अञ्चुगतिपूजनयो रिति धातुः। हंसीव गमनवतीत्यर्थः। शनै र्गमने निमित्तमाह बृहदिति। बृहत्योः स्थूलयोः चलत्योः श्रोण्यो र्भरिणाऽऽक्रान्ता स्तब्धगति र्यस्यास्सा तथा। विभ्रंशितात् विस्रस्तात् केशबन्धात् च्युतानां प्रसूनानां अनुगति र्यस्या स्सा तथा परामृशत् पस्पर्श, जग्राह वा॥ १०॥

अञ्जन्मषिणी, अञ्जिता मषिः अञ्जनं ययो स्ते अञ्जन्मषिणी अक्षिणी नेत्रे कषन्तं निष्पीड्य कलुषयन्तं भीषयन्ती अवागुरत् ताडनार्थं हस्त मुद्धृतवती॥ ११॥

**त्यक्त्वा यष्टिं सुतं भीतं विज्ञायार्भक वत्सला।**
**इयेष किल तं बद्धुं दाम्नाऽतद्वीर्यकोविदा॥ १२॥**

**न चान्त र्न बहिर्यस्य न पूर्वं नाऽपि चापरम्।**
**पूर्वापरं बहिश्चान्त र्जगतो यो जगच्चयः[1]॥ १३॥**

**तं मत्वाऽऽत्मज[2] मव्यक्तं मर्त्यलिङ्ग मधोक्षजम्।**
**गोपिकोलूखले दाम्ना बबन्ध प्राकृतं यथा॥ १४॥**

**तद्दाम बध्यमानस्य स्वार्भकस्य कृतागसः।**
**द्व्यङ्गुलोन मभूत्तेन सन्दधेऽन्यच्च गोपिका॥ १५॥**

**यदाऽऽसी त्तदपि न्यूनं तेनाऽन्यदपि सन्दधे।**
**तदपि द्व्यङ्गुलं नूनं यद्यदादत्त बन्धनम्॥ १६॥**

**एवं स्वगेहदामानि यशोदा सन्दाधत्यपि।**
**गोपीनां [3]विस्मयन्तीनां स्मयन्ती विस्मिताऽभवत्॥ १७॥**
**[4]स मातुः स्विन्न गात्राया विस्रस्तकबर स्रजः।**
**दृष्ट्वा परिश्रमं कृष्णः कृपयाऽऽसीत्स्वबन्धने॥ १८॥**

---

1. M. ०न्मयः 2. M. ०ऽर्भक० 3. A.B.G.M. सु 4. A.B.G.M. स्व

**श्रीध० त्यक्त्वेति।** इयेष ऐच्छत्। अतद्वीर्यकोविदा तत्प्रभावनभिज्ञा॥ १२॥

अकोविदत्वमा[1]ह - **न चान्तरिति** पञ्चभिः [2]श्लोकैः। बन्धनं हि बहिः परिवृतेन दाम्ना अन्तरावृतस्य भवति। तथा पूर्वापर विभागवतो वस्तुनः पूर्वं दामतो धृत्वा परितः परिवेष्टनेन भवति, नत्वेतदस्तीत्याह — न चान्तरिति। किञ्च व्यापकेन व्याप्यस्य बन्धो भवति। तच्च विपरीतमित्याह - पूर्वापरमिति। किञ्च तद्व्यतिरिक्तस्य चाऽभावान्न बन्ध इत्याह जगच्च य इति॥ १३॥

**तमिति।** तं मर्त्यलिङ्गमधोक्षज मात्मजं मत्वा बबन्धेति॥ १४॥

**तदिति।** द्व्यङ्गुलोनं द्वाभ्यां अङ्गु[3]लीभ्यामून मपूर्णम्॥ १५, १६॥

**एवमिति।** स्मितं कुर्वन्तीनां मध्ये स्वयमपि हसन्ती विस्मय माप॥ १७, १८॥

---

1. V ०मेवाह 2. A.B. omit श्लोकैः 3. A.B. ०ला०

**वीर०** तं तदा अपगुरन्त्यपि सा सुतं भीतं विज्ञाय अर्भकवत्सला अतएव यष्टिं त्यक्त्वा। तत्प्रभावानभिज्ञा दाम्ना रज्ज्वा बद्धुमियेष एच्छत्खलु॥ १२॥

[1]नन्तु किं तद्वीर्यम्, यदनभिज्ञानात् बन्धुमियेषेत्यतः तद्दर्शयन् तदनभिज्ञा प्राकृत मिव बबन्धेत्याह - **नेति** द्वाभ्याम्। बन्धो हि बहिरेव संवीतेन दाम्ना अन्तरा गृहीतस्य भवति। तथा पूर्वापर विभागवतो वस्तुनः पूर्वं दामतो धृत्वा परितः परिवेष्टनेन। न त्वेतदस्तीत्याह - **न चान्तरिति।** किञ्च व्यापकेन व्याप्यस्य बन्धो भवति। तच्च विपरीतमित्याह पूर्वापरमिति। **यो जगतः कृत्स्नस्य पूर्वं पूर्वावधिः अपरमुत्तरावधिश्च बहिश्चान्तश्च व्याप्य वर्तते तस्य जगदन्तर्भूतेन व्याप्येन दाम्ना** कथं बन्धनं भवेदित्यभिप्रायः। किञ्च सर्वस्य तत्कारणतया तदन्तरात्मकत्वेन तच्छरीरतया च तत्पृथक्सिद्धवस्त्वन्तराभावात् स्वनिष्ठवस्तुसाधनकं बन्धनं न सम्भवतीत्यभिप्रायेणाऽऽह जगच्च य इति। कार्यकारणशरीरात्मभावनिबन्धन मिदं सामानाधिकरण्यम्॥ १३॥

मर्त्यस्येव लिङ्गं शरीरं यस्य तमुक्तविध मधोक्षजं मत्वा [2]केवलमात्मजं मत्वा[-2] गोपी दाम्ना साधनेनोलूखले बबन्ध बन्धनोद्यमं चकार यथा प्राकृतं केवलमर्त्यम् तद्वत्॥ १४॥

कृताऽऽवासोऽतएव बध्यमानस्य सत: तद्बन्धनार्थं उपात्तं दाम द्व्यङ्गुलोनं[3] द्वाभ्याम् अङ्गुलिभ्या मपूर्णम् अभूत्[4]। तेन द्व्यङ्गुलोनेन दाम्ना सहाऽन्यत् दामान्तरं सन्दधे॥ १५॥

यत्सहितं दाम तदपि न्यूनमभवदित्येवं यद्यदादत्त सन्धातुं जग्राह तत्सर्वं न्यून मेवाऽभूत्॥ १६॥

एवं स्वगृहस्थानि सर्वाणि दामानि सन्दधत्यपि सन्दधत्येव नतु तथाऽपि निवृत्तेत्यर्थ:। तद्वीक्ष्य विस्मयन्तीनां गोपीनां मध्ये स्वयं विस्मिता बभूव॥ १७॥

तदा स्विन्नं प्रस्वेदभरितं गात्रं यस्या: विस्रस्तं कबरं स्रजश्च यस्यास्तस्या: स्वमातु: परिश्रमं दृष्ट्वा तस्यां कृपया स्वबन्धने अनुगुण आसीत्॥ १८॥

---

1. W. omits ननु 2- -2. W. omits 3. A.B. add अभूत् 4. A.B. अभवत्

**विज०** दाम्ना वत्सपाशेन अतद्वीर्यकोविदा कृष्ण माहात्म्य मजानती॥ १२॥

यशोदाया अज्ञानं प्रकटयितुं तत्स्वरूपं निरूपयति - **न चेति**। यस्यान्त: स्वतन्त्रं वस्तु नैवास्ति। यस्य बहिश्च वस्तु नास्ति। सर्वत्र सत्त्वेन अन्तर्बाह्य विशेषाभावात्, यस्मात् पूर्वमपरं नास्त्येव अविनाशित्वेन सिद्धत्वात् य: कृष्ण: जगत: पूर्वमपरं बहिरन्तश्च वर्तत इति शेष:। जगतो विनाशित्वात् परिच्छिन्नत्वाच्च यश्च जगन्मय:। तत्सत्ताया अपि तदधीनत्वेन तत्त्वव्यपदेश:॥ १३॥

तदव्यक्तं ब्रह्मसंज्ञं कृष्णमर्भक मणुतरबालं मत्वा "तदव्यक्तमाह हि" (ब्र.सू. 3-2-22) इति सूत्रम्। मर्त्यलिङ्गं मनुष्य लक्षण शरीरम्। अक्षजमिन्द्रियं ज्ञानं तदध: कृतं यस्मात्स तथा, इन्द्रियागोचर मित्यर्थ: अनेनाव्यक्तपदं विवृतमिति ज्ञात०यम्॥ १४॥

अनेनापि कृष्णस्य ब्रह्मत्वं निश्चयितुं शक्यमित्याशयेनाह — **दद्दामेति**। येन बबन्ध तद्दाम द्व्यङ्गुलोनमभूदित्यन्वय:। गोपिका यदा तेन द्व्यङ्गुलोनेनान्यद्दाम सन्दधे तदपि न्यूनमासीदिति॥ १५, १६॥

एवं स्वगेहसमस्तदामसञ्चयसमाप्तौ सुतमाहात्म्यं दृष्ट्वा स्मयन्ती मन्दं हसन्ती विस्मिताऽभवदित्यन्वय:॥१७॥

"अणिमालघिमा योगशक्ति: स्वाभाविकी हरे:" इत्यभिप्रेत्याह स्वमातुरिति। मातृविषयकृपया स्वबन्धने आसीत् स्वयमेव बद्धोऽभूदित्यन्वय:॥ १८॥

**एवं सन्दर्शिता ह्यङ्ग हरिणा [1]भक्तवश्यता।**
**स्ववशेनाऽपि कृष्णेन यस्येदं सेश्वरं वशे॥ १९॥**

**नेमं विरिञ्चो[2] न भवो न श्रीरप्यङ्ग संश्रया।**
**प्रसादं लेभिरे गोपी[3] यं[4] तं प्राप विमुक्तिदात्॥ २०॥**

**नाऽयं सुबोधो[5] भगवान्देहिनां गोपिकासुत:।**
**ज्ञानिनाश्चात्मभूतानां[6] यथाभक्तिमता मिहा॥ २१॥**

**कृष्णस्तु गृहकृत्येषु व्यग्रायां मातरि प्रभु:।**
**अद्राक्षी दर्जुनौ पूर्वं गुह्यकौ धनदात्मजौ॥ २२॥**

**पुरा नारदशापेन[7] वृक्षतां प्रापितौ मदात्।**
**नलकूबरमणिग्रीवा वित्याख्यातौ[8] श्रियान्वितौ॥ २३॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे
गोपी प्रसादो नाम नवमोऽध्याय:॥ ९॥

---

1. B,G भृत्य 2. A विरञ्चो न ; M विरिञ्चिर्न 3. M. गोप्यो 4. A,B,G,M यत्तत् 5. A,B,G,K. सुखापो; M. सुखाप्यो 6. B,G, भू° 7. M शापात्तौ 8. A,B,G,M °ति

**श्रीध०** न चैवं स्वातन्त्र्यभङ्ग इत्याह - **एवमिति।** सेश्वरं [1]ब्रह्मेन्द्रादीश्वरसहितम्[-1] इदं विश्वं यस्य वशे यदधीन मित्यर्थ:॥ १९॥

भगवत्प्रसादमन्येपि भक्ता लभन्ते, इदन्त्वतिचित्रमिति सरोमाञ्चित माह - **नेति।** विरिञ्च: पुत्रोऽपि, भव: स्वात्माऽपि, श्री जायाऽपि॥ २०॥

फलितमाह - **नाऽयमिति।** देहिनां देहाभिमानिनां तापसादीनां ज्ञानिनां निवृत्ताभिमानिनामपि॥ २१॥

भक्तै र्बद्धस्यापि अन्यमोचकत्वं[3] वक्तुमाह[-3] कृष्णस्त्विति॥ २२, २३॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामि विरचितायां भावार्थदीपिकायां
व्याख्यायां नवमोऽध्याय:॥ ९॥

---

1- -1. A,B omit 2. A,B °ना° 3- -3. A,B °त्वमाह

**वीर०** नचैतावता स्वातन्त्र्यभङ्ग इत्याह **एवमिति।** स्ववशेन स्वतन्त्रेणापि। स्ववशत्वमेवाऽह यस्य वशे अधीनतायां ब्रह्मादीश्वरसहितमिदं जगद्वर्तते तेन कृष्णेन हरिणैव मित्थम् अङ्ग। हे राजन् भक्तवश्यता सन्दर्शिता। सर्वत्र स्वतन्त्रोप्यहं भक्तेषु परतन्त्र इति दर्शयितुमबध्यतेत्यर्थः। तथाचाऽहुः श्रीवत्साङ्कमिश्राः "अनन्याधीनत्वं तव किल जगुर्वैदिकगिरः पराधीनं त्वान्तु प्रणतपरतन्त्रं मनुनहे (वरद. स्तवः 20 ) इति। तथा चोक्तं भगवताऽप्यष्टमे (नवमे) "अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज !" (भाग. 9-4-63) इति॥ १९॥

ननु सत्यं भक्तपरतन्त्र इति गोपी तु न भक्ता इति कथं तत्पारतन्त्र्यमीश्वरस्य इत्यत्राऽऽह **नेममिति** । भक्ति प्रयोजनं हि भगवत्प्रसादः तंच यादृशं निग्रहानुग्रहादि पर्यन्तविधेयत्वरूपं विमुक्तिदाद्भगवतो गोपी लेभे न तादृशं ब्रह्मरुद्रौ साक्षाद्वक्षःस्थलाश्रया लक्ष्मीरपि लेभिरे । प्रेमपूर्वकानुध्यानात्मिका हि भक्तिः सा गोप्यामप्यविशिष्टेति भावः॥ २०॥

तथा च भक्तानामेवाऽयं सुलभो नाऽन्येषामित्याह - **नाऽयमिति।** अयं भगवान् गोपीसुतो यथेह भक्तिमतामात्मा स्वयमेव पोतः भवार्णवतरणे प्लवस्थानीयो येषां तेषां ज्ञानिनां यथा सुखापः सुखप्राप्यः न तथेतरेषां देहिनामित्यर्थः। सुबोध इति पाठे सुखेन बोद्धुं शक्य इत्यर्थः॥ २१॥

अहो अत्याश्चर्य मेतत्, यत्संसृतिबन्धब्रह्मशापादिमोचनोऽपि भगवान् लौकिकेन दाम्ना बद्ध इत्यभिप्रायेण यमालर्जुन मुक्तिप्रदत्वरूपं चरित्रान्तरं प्रस्तोतु माह - **कृष्णस्त्विति।** मातरि उलूखले बद्धवत्यां यशोदायां गृहकृत्येषु व्यग्रायां प्रवण चित्तायां सत्यां बद्धः कृष्णः प्रभुः विप्रशापादिमोचनसमर्थः पूर्वं धनदस्य कुबेरस्य आत्मजौ गुह्यकौ यक्षौ नलकूबरमणिग्रीवाख्यौ श्रिया युक्तौ सन्तौ पुरा मदाच्छ्रीमदात् निमित्ता। न्नारदस्य कुपितस्य शापेन वृक्षतां तरुजन्म प्रापितौ अर्जुनौ अर्जुनाख्यौ वृक्षौ ददर्श॥ २२, २३॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवत चन्द्रचन्द्रिकायां
व्याख्यायां नवमोऽध्यायः॥ ९॥

---

1- -1. A,B भवताऽपि अष्टमे स्कन्धे उक्तम् 2- -2. A,B ब्रह्मा रुद्रः 3. A, B °पिकासुतो 4- -4. A,B omit

**विज०** यत् तत् यं तम्॥ १९, २०॥

निरन्तरनिरतिशयभक्तिप्रमदैव भगवत्कर्षण निपुणेत्याशयेनाह **-नाऽयमिति।** आत्मैव परमात्मैव पोतो नौ येषां ते तथा तेषाम्॥ २१॥

पूर्वजन्मनि गुह्यकौ अधुना अर्जुन नाम्ना ककुभवृक्षौ॥ २२॥

शापनिमित्तमाह - मदादिति। किं नामाना विति तत्राऽऽह - नलेति। मदकारणमाह श्रियेति॥ २३॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीविजयध्वज तीर्थविरचितायां पदरत्नावल्यां
टीकायां नवमोऽध्यायः॥ ९॥
(विजयध्वजरीत्या दशमोऽध्यायः)

# दशमोऽध्यायः

## (विजयध्वजरीत्या एकादशोऽध्यायः)

राजोवाच

कथ्यतां भगवन्नेत त्तयोश्शापस्य कारणम् ।
यत्तद्विगर्हितं कर्म [1]येन देव ऋषेस्तमः[-1] ॥ १ ॥

[2]श्रीशुक उवाच

रुद्रस्यानुचरौ भूत्वा सुदृप्तौ धनदात्माजौ ।
कैलासोपवने रम्ये मन्दाकिन्यां मदोत्कटौ ॥ २ ॥

वारुणीं मदिरां पीत्वा मदाघूर्णितलोचनौ ।
स्त्रीजनैरनुगायद्भिश्चेरतुः पुष्पिते वने ॥ ३ ॥

अन्तःप्रविश्य गङ्गायामम्भोजवनराजिनि ।
चिक्रीडतुर्युवतिभिर्गजाविव करेणुभिः ॥ ४ ॥

यदृच्छया च देवार्षि[3]र्गतवांस्तत्र [4]कौरवः
अपश्य [5-]न्नारदो देवौ[-5] क्षीबाणौ समबुध्यत ॥ ५ ॥

---

1- -1. A,B,G येन वा देवर्षेस्तमः, V. देवर्षेर्येन वा तम; K.W. येन वा देवर्षिः कुपितः 2. K,W श्रीबादरायणिः 3. A,B,G °र्भग° 4. V. नारदः 5- -5. V °द्गुह्यकौ दृष्ट्वा

## श्रीधरस्वामिविरचिता भावार्थदीपिका

दशमेऽपातयद्[1]राजन्नन्तरा यमला र्जुनौ ।
तत्र [2]ताभ्यां च देवाभ्यां कृष्णः स्तुत इतीर्यते ॥

**कथ्यतामिति** । यद्विगर्हितं कर्म । येन वा देवर्षेर्भगवतोत्तमस्यापि तमः क्रोधः तदेतत्कथ्यतामिति ॥ १-३ ॥

**अन्तरिति**। गङ्गायां अन्तः मध्ये कथम्भूते अम्भोजानां वनानि। तेषां राजयः ताः विद्यन्ते यस्मिन् तस्मिन् ॥ ४ ॥

**यदृच्छयेति**। (तत्र) [3]तस्मिन् अपश्यत् दृष्ट्वा च क्षीबाणौ मत्तौ समबुध्यत ॥ ५ ॥

1. A,B °द्रिष्ण° 2. A,B °त्या° 3. A,B omit तस्मिन्

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एव मुक्ते लब्धप्रश्नावसरः पृच्छति राजा कथ्यतामिति। यद्विगर्हितं कर्म येन वा देवर्षि र्भगवतश्रेष्ठः कुपितः तदेतत्कर्म तयोः शापस्य कारणम् हे भगवन्! कथ्यताम् देवर्षेः येन वा तम इति पाठे देवर्षेः भागवतोत्तमस्यापि तमः क्रोध इत्यन्वयः॥ १॥

[1-]तस्य उत्तरमाह मुनि[-1]ः रुद्रस्येत्यादि श्लोकद्वयं, स्पष्टार्थम्॥ २, ३॥

गङ्गायामन्तर्मध्ये, कथम्भूते? अम्बुजानां वनानि तेषां राजयो यस्मिन् तस्मिन्, व्रीह्यादित्वादिनिः। करेणुभिरिभीभिः गजा विव युवतिभिः सह चिक्रीडतुः [2-]क्रीडां गतवन्तौ[-2]॥ ४॥

हे कौरव! भगवान् देवर्षिः यदृच्छया [3-]तत्राऽऽगतौ[-3] देवौ तौ ददर्श क्षीबाणौ मदान्धौ समबुध्यत [4]ज्ञातवांश्च॥ ५॥

1- -1. W omits 2- -2. W omits 3- -3. W omits 4 W omits ज्ञातवान्

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

हरेरेव संसारान्मोक्ष इति दर्शयितुं नलकूबरमणिग्रीवयोः शापमोक्षप्रकारं निरूपयत्यस्मिन्नध्याये। तत्र राजा शुकं पृच्छति राजेति। यद्विगर्हितं निन्दितं कर्म तत् कथ्यतां येन कर्मणा देवर्षेः तमोगुणकार्य क्रोधोऽभूत्॥ १,२॥

वारुणीं [1]वरुणाज्जाताम्॥ ३॥

अम्भोजवनराजिनि, जल इति शेषः॥ ४॥

क्षीबाणौ मत्तौ अश्लील वचनौ वा॥ ५॥

1. B,M वा°

**तं दृष्ट्वा व्रीडिता देव्यो विवस्त्राश्शापशङ्किताः।**
**वासांसि पर्यधुश्शीघ्रं विवस्त्रौ नैव गुह्यकौ॥ ६॥**

**तौ दृष्ट्वा मदिरा मत्तौ श्रीमदान्धौ सुरात्मजौ।**
**तयो रनुग्रहार्थाय शापं दास्यन्निदं जगौ॥ ७॥**

[1]नारद उवाच[-1]

नह्यन्यो जुषतो जोषान् बुद्धिभ्रंशो रजोगुणः।
श्रीमदा[2]दाभिजात्यादि[3]र्यत्र स्त्रीद्यूतमासव[4]म्॥ ८॥

हन्यन्ते पशवो यत्र निर्दयै रजितात्मभिः।
मन्यमानैरि[5]मं देहमजरामृत्यु नश्वरम्॥ ९॥

देवसंज्ञितमप्यन्ते [6]क्रिमिविड्भस्म संज्ञितम्।
भूतध्रु[7]क्तत्कृते स्वार्थं किं वेद निरयो यतः॥ १०॥

---

1- -1. K,M,V,W omit 2. V °दान्धाभि 3. M °देः 4. A,B,G,V °वः 5. A,V °दं 6. A,B,G,M वृ° 7. M. कुरुते

**श्रीध०** कुत इत्यत आह - **तमिति**॥ ६॥

**ताविति**। अनुग्रहार्थाय अनुग्रहश्च मदनाशः अर्थश्च श्रीकृष्णदर्शनं तदर्थमिदं वक्ष्यमाणम्॥ ७॥

**नहीति**। जोष्यान् प्रियान् विषयान्। जुषतस्सेवमानस्य पुंसः श्रीमदादन्यः आभिजात्यादिः सत्कुलविद्यादि जनितो मदः। अन्यो वा रजोगुणः रजःकार्यं हास्यहर्षादिरूपः नहि तथा बुद्धिभ्रंशः बुद्धिं भ्रंशयतीति तथा॥ ८॥

किन्तु श्रीमद एवेति, तदेवाह **हन्यन्त** इति। यत्र श्रीमदे इमं नश्वरं देहं अजरामृत्यु। अजरं अमृत्यु च यथा तथा मन्यमानैः॥ ९॥

**देवेति**। नरदेव भूदेवसंज्ञितमपि श्वादिभि र्भक्षितं विट्सज्ञितं दग्धं भस्म संज्ञितं अन्यथा क्रिमिसंज्ञितम्। तत्कृते तदर्थं यो भूत ध्रुक् भूत [1]द्रोही यथा भूतद्रोहान्निरयो भवति स किं स्वार्थं वेद नैव वेदेत्यर्थः॥ १०॥

---

1. A,B द्रोग्धा

**वीर०** कुत इत्यत्राह - **तं दृष्ट्वेति**। [1]देव्यो विवस्त्राः अत एव तं दृष्ट्वा व्रीडिताः शापात् शङ्किताः वासांसि[-1] [2]पर्यधुः परिहितवत्यः[-2]। गुह्यकौ तु नैव पर्यधातां किन्तु विवस्त्रौ नग्नावेव आसाताम्॥ ६॥

सुरस्य कुबेरस्य आत्मजौ दृष्ट्वा मदनाश रूपानुग्रहार्थं शापं दास्यन् तावत् इदं वक्ष्यमाणं [3]जगाद अनुग्रहार्थाय भविष्यद्भगवद्दर्शनरूपप्रयोजनाय चेति केचिद्व्याचक्षते॥ ७॥

[4]तदेवाऽह **नेति**[-4]। जोष्यान् प्रियान् जुषतः सेवमानस्य पुंसः श्रीमदात् संपत्प्रयुक्तमदात् अन्य आभिजात्यादिः आदिशब्देन विद्यादि सङ्ग्रहः। आभिजात्यादि जनितो मदश्श्रीमदवत् बुद्धि भ्रंशकरः रजोगुणकार्यकामक्रोधादिवर्धको नहि, किन्तु श्रीमद एव नितरां बुद्धि भ्रंशकरो रजोगुणश्चेत्यर्थः। तदाह यत्रेत्यादिना। यत्र यस्मिन् श्रीमदे सति स्त्रीसङ्गद्यूत मधुपानादि रूप दुर्व्यसनानि सम्भवन्ति॥ ८॥

किञ्च यत्र श्रीमदे सति इमं देहं जरादि रहितं मन्यमानैः अत एव अजितेन्द्रियैः अत एव निर्दः पशवो हन्यन्ते ॥ ९ ॥

इममित्यनेन अभिप्रेतं विशदयति **देवेति।** देवसंज्ञितमपि नरदेव भूदेवस्वर्देवादि संज्ञितमपि शरीरमन्ते तदारम्भक प्रारब्धावसाने क्रिम्यादि संज्ञितमेव। दग्धं चेत् भस्मसंज्ञितं, [5]श्वभिर्भक्षितं चेत् विट्संज्ञिकं अन्यथा क्रिमिसंज्ञितमित्यर्थः। तत्कृते एवंविधशरीरसुखार्थं यो भूतानि द्रुह्यतीति तथा। यतो भूतद्रोहान्निरयो नरकः स पुमान् किं वेद न किमपि; हितं अहितं च न जानातीत्यर्थः॥ १० ॥

---

1- -1. K,T,W omits 2- -2. A,B आदधुः। 3. A,B आह 4- -4. W omits 5. A,B श्वादि°

**विज०** पर्यधुः संवेष्टितवत्यः॥ ६, ७ ॥

किं तद्गीतमिति तत्राह - **न हीति।** विषयान् जुषतः सेवमानस्य पुंसः जोष्यात् सेव्यात् विषयात् श्रीमदात् श्रिया धनसम्पदोत्पन्नमदादाभिजात्यादेः अभिजननिमित्तमदात् विद्यानिमित्तमदाच्च अन्यः बुद्धिभ्रंशः ज्ञाननाशकरो रजोगुणः रजो विकारो नास्ति, विषयादिरेव ज्ञाननाशकर इत्यर्थः। तत्कथमत्राह यत्रेति। यत्र विषयाभिजात्य धनमदेषु स्त्रियो द्यूतमासवं असुतर्पणं मद्यपानं भवति। हिशब्दोऽवधारणे "हि हेतावधारणे" (वैज.को. 8-7-9) इति यादवः। अन्यो नास्त्येव, मद्यपानादयो भवन्त्येवेत्यर्थः। आसव इति पाठे मद्यमित्यर्थः॥ ८ ॥

सन्तु स्त्र्यादयः, ततः किमत्राह **हन्यन्त** इति। यत्र स्त्र्यादिषु सत्सु इमं नश्वरं देह मजरामृत्युनश्वरं जरामृत्युरहितं मन्यमानैः पशवो भूतादि हननमत्र बहुविधं - देहवियोग कारणं, धनापहरणं, देशोच्चाटनं, अभिमान भङ्गकरण मित्यादि॥ ९ ॥

यज्ञे पश्वालम्भन वत् परलोक विषयत्वेन पुण्यसाधनायेदं हिंसनं किं, न स्या दित्यत्राह - भूतध्रुगिति। नायं स्वार्थः किन्तु पारलोक्य प्राप्तानन्द इत्यत्राह किमिति। किंशब्दः आक्षेपार्थः। "प्रश्ने क्षेपे विकल्पे किम्" (वैज को 8-7-3) इति यादवः। दैनन्दिन जीवन मन्तरेण किमपि न जानातीत्यन्वयः। किमिति न वेदेति तत्राह निरय इति। यतो निर्गमनरहितं तमो भवतीत्यर्थः। 'अयगताविति' धातुः। हिंसामात्रेण तमसोऽभावे हिंसा विशेषेण तमः स्यात्। तथाहि नित्यभूतत्वात् सत्त्वोद्भोतं ब्रह्म तद्द्रोहः सर्वेशस्य ब्रह्मणोऽनीशेन दुःखिना जीवेन सहैकत्वकथनोपासने प्रथमहिंसा, सार्वज्ञ्यादि गुणान् श्रुतानपहाय निर्गुणत्वचिन्तनं द्वितीया, तदवताराणां दुःख श्रमाज्ञानादिकल्पनं तृतीया, प्रत्यक्षादि प्रमाणसिद्धस्य प्रपञ्चस्य तद्विवर्तत्व कथनं चतुर्थीत्यादिकम्। एवं विधस्य तमः प्राप्तिः स्यादिति निरूप्यत इत्यर्थः॥ १० ॥

**देहः किमन्नदातु[1]स्स्वं निषेक्तुर्मातु[2]रेव वा ।**
**मातुः पितुर्वा [3-]क्रेतुर्वा[-3] बलिनाऽग्नेः शुनोपि वा॥ ११ ॥**

**एवं साधारणं देह मव्यक्तप्रभवाप्ययम्।**
**को विद्वानात्मसात्कृत्वा हन्ति जन्तू[4]नृतेऽसतः॥ १२ ॥**

★ असतश्श्रीमदान्धस्य दारिद्र्यं परमा[5]ञ्जनम्।
आत्मौपम्येन भूतानि दरिद्रः परमीक्षते॥ १३॥

यथा कण्टकविद्धा[6]ङ्गः जन्तोर्नेच्छति तां व्यथाम्।
जीवसाम्यं गतो लिङ्गैर्न तथाऽविद्धकण्टकः॥ १४॥

दरिद्रो निरहं स्तम्भो मुक्तस्सर्व मदैरिह।
कृच्छ्रं यदृच्छयाऽऽप्नोति तद्धि [7]तस्य परन्तपः॥ १५॥

1. M ०स्स्यात् 2. B.G. च 3- -3 A, B, G बलिनः क्रेतुरग्नेः 4. A ०न्कृ० ★ An extra Sloka (obviously Repeated) is found in M. Edn. मन्यमानै रिमं देहमजरामृत्यु नश्वरम्। देवसंज्ञितमप्यन्ते कृमिविड्भिस्मसंज्ञितम्॥ This verse is commented by Vijayadhvajateertha 5. A.B.G. ०म० 6. A.B.G.M.V. ०ङ्गः 7. K.W. ह्यस्य

**श्रीध०** इदानीं देहे अहम्भावो[1]ऽपि न घटत इत्याह - **देह** इति। निषेक्तुः पितुः मातुर्वा मातुः पितुः मातामहस्य वा पुत्रिका पुत्रीकरणे॥ ११॥

**एवमिति**। अव्यक्त प्रभवाप्ययम् अव्यक्तात्प्रभवस्तस्मिन्नेवाप्ययो यस्य तं, आत्मसात्कृत्वा [2-]आत्मीयमिति[-2] मत्वा, असतो मूढाद्दते॥ १२॥

एवं श्रीमदविचेष्टित मुक्त्वा तत्प्रतीकारं निश्चिनोति **असत** इति। परं श्रेष्ठं, दारिद्र्यमेव केवलमिति वा। कुत इत्यत आह — आत्मौपम्येनेति। ततो न द्रुह्यतीति भावः॥ १३॥

सदृष्टान्तमाह —**यथेति**। मुखम्लाना[3]दिलिङ्गैः सर्वेषां जीवानां सुख दुःखे समे इति ज्ञातवानित्यर्थः॥१४॥

किञ्च दारिद्र्यमे[4]व मोक्षमपि साधयतीत्याह **दरिद्र** इति श्लोक चतुष्टयेन। निरहंस्तम्भः निर्गतः अहङ्काररूपः स्तम्भो यस्मात्सः॥ १५॥

1. V. omits अपि 2- -2. A,B आत्मेति 3. A.B. °न्यादि 4. A.B. omit एव.

**वीर०** ननु, अन्ते यत्किञ्चित्संज्ञिकमस्तु जीवद्दशायां स्वाधीनतया देहसुखार्थं यतितव्य मेवेत्यत्र तद्दशायामपि न नियतं स्वत्व मस्तीत्याह **देह** इति। अग्नेश्शुनोऽपि वेति दृष्टान्तार्थं देहो यथा अन्ते अग्ने श्शुनश्च स्वं तथा जीवद्दशायामपि नियमो न अन्नदात्रादीनां स्वं किं न भवति इत्यर्थः। किमित्यनेन लोके प्रसिद्धिर्द्योत्यते। तावदन्नपरिणामरूपत्वाद्यस्यान्नेन वर्धते तस्य स्वम्। तथा रेतः प्रभवत्वान्निषेक्तु गर्भाधातुः तथा मातुः पितुः[1] मातामहस्य च पुत्रीकरणकाले तथा सङ्कल्पात् पितृवन्मातृपितरं प्रत्यपि पारतन्त्र्यौचित्त्यादिति भावः। विक्रेतुः द्रव्य दानेन स्वीकर्तुः, बलिनो बलाद्ग्रहीतुः॥ ११॥

एवं साधारणं नत्वेकस्यैव नियतस्वं, अव्यक्तात्प्रकृतेः प्रभवः उत्पत्तिः तस्मिन्नेवाप्ययो लयश्च यस्य तं, तमिमं देहं आत्मसात्कृत्वा आत्मेति मत्वा असतो मूढान् ऋते विना विद्वान् कः पुमान् जन्तून् हन्ति? देहाभिमानिनश्चेत् हन्युः विद्वांस्तु न हन्यादेवेत्यर्थः। यद्वा एवमिमं देहं साधारणमव्यक्तं प्रभवाप्ययं च विद्वान् जानं श्चेत् असतोऽसाधारण देहाभिमानिनः पुरुषान्विना कोऽपि पुमान् आत्मसात्कृत्वा आत्मत्त्वेन मत्वा जन्तून् हन्यात्। एवं विद्वांस्तु पुनर्देहात्माभिमानेन न हन्यात्। साधारणमविद्वांसस्तु देहात्माभिमानेन हन्युः इत्यर्थः। अविद्वानिति वा च्छेदः। तदा साधारणमव्यक्तप्रभवाप्ययं च अविद्वानजानं श्चेत् ततः तज्ज्ञान्विना अन्यः कश्चित् देहात्माभिमानेन हन्यादित्यन्वयः॥ १२॥

एवं श्रीमदस्यानर्थमूलतां प्रदर्श्य अथ तत्प्रतीकारार्थं निश्चिनोति **असत** इति। तत्कुत इत्यत्राह आत्मौपम्येनेति। दरिद्रः केवलमात्मदृष्टान्तेन भूतानीक्षते यथा स्वस्याऽऽघातादिना दुःखादिकं तथा [2]परस्यापीत्यात्मौपम्येन भूतानि पश्यन् न तेभ्यो द्रुह्यतीत्यर्थः॥ १३॥

उक्तमेवार्थं सदृष्टान्त माह **यथेति**। यथा कण्टक विद्धाङ्गिः लिङ्गैः अन्तर्गत सुखदुःखादिव्यञ्जक मुखविकासम्लानतादि निमित्तैः जीवसाम्यं गतः स्वेतर जीवानां स्वस्य च तौल्यं मन्वानः तां कण्टकवेधजां व्यथां दुःखं कण्टकवेधां वा नेच्छति तथैवमविद्धकण्टको [3]न, नेच्छतीति नेत्यर्थः॥ १४॥

किञ्च दारिद्र्यं परम्परया मुक्ति साधन मपीत्याह — **दरिद्र** इति चतुर्भिः। निरहंस्तम्भः निर्गताहङ्कार [4]रूपगर्वः सर्वैः अभिजनवित्तविद्याप्रयुक्तैः मदैः मुक्तः यदृच्छया स्वप्रयत्न मन्तरेणैव कृच्छ्रं कायशोषणादिकं प्राप्नोति तत्कृच्छ्रं मेवास्य [5]परं केवलं उत्कृष्टं वा तपः॥ १५॥

---

1. W. adds तत्पितुः 2. A.B. प्राणिमात्रस्यापी० 3. A.B. omit न 4. A.B. स्तम्भः 5. A.B. omit परं

**विज०** ननु उत्तर श्लोके देहस्यानिर्वाच्यत्व मुच्यते। देहस्य जगदन्तः पातित्वेन जगद्ब्रह्म विवर्तमिति कथयतः कथं तम इत्याशङ्क्य अत्र साधारणत्व मेवोच्यते प्रातिसद्भावादित्याशये नाह - **देह** इति। अन्नदातुः पोषयितुः निषेक्तुः गर्भाधानकर्तुः मातुः पितुः मातामहस्य, विक्रेतुः द्रव्यादि प्रदानेन, बलिनः बलात्कारेण ग्रहीतुः॥ ११॥

अव्यक्तात्प्रकृतेः प्रभव उत्पत्तिः अव्यक्ते अप्ययः प्रलयो यस्य स तथा तम्। आत्मसात् आत्मत्वेन, असतः ऋते॥ १२॥

प्रसङ्गात् प्रागुक्तं स्मारयति मन्यमानैरिति। कीदृशम्? प्रथमं देवसंज्ञितं मरणे कृम्यादि संज्ञितं भवति। देवोऽयं भट्टारकोऽयं, कृमिक्लिन्नः विष्ठाकुलः भस्मित इति॥

ननु श्रीमदान्धस्य आन्ध्यपरिहाराय किमौषधं तर्हीति तत्राह **असत** इति। असतः हननादिकर्तुः दारिद्र्यं दरिद्रभावः कथं तदञ्जनं आन्ध्यनाशनं अभूदिति तत्राह आत्मेति। आत्मौपम्येन आत्मसाम्येन भूतानि सुखासुखसंसक्तानि॥१३॥

अत्र दृष्टान्तमाह **यथेति**। तां कण्टकव्यथां जन्तोः आत्मव्यतिरिक्तस्य तल्लिङ्गैः सुखदुःख विकास काष्ट्यादि सूचकै र्जीविषु सुखादिमत्तया साम्यं साधर्म्यं गतो ज्ञातवान्, अविद्धकण्टकः तथा न॥१४॥

ननु दारिद्र्यं परमं सुखमित्युक्तम्। तस्यापि दुःखानुभवः प्रतीयते तत्कथमिति तत्राह — **दरिद्र** इति। निरहंस्तम्भः अहम्मानवर्जितः विद्यादि सर्वमदैर्मुक्तः दरिद्रः यदृच्छया दैवेच्छया यत्कृच्छ्रं आप्नोति तत्कृच्छ्रमस्य दरिद्रस्य परं तपो भवति। "एतद्वैष परंतपो यद्वयाधित स्तप्यते (बृह. उ. 5-11-1) इति श्रुतिः हिशब्दगृहीता॥१५॥

**नित्यं क्षुत्क्षामदेहस्य दरिद्रस्यान्न काङ्क्षिणः।**
**इन्द्रियाण्यनु[1] शुष्यन्ति हिंसापि विनिवर्तते[2]॥१६॥**

**दरिद्रस्यैव युज्यन्ते साधवस्समदर्शिनः।**
**सद्भिः क्षिणोति तत्तर्षं[3] तत[4] आराद्विशुध्यति[5]॥१७॥**

**साधूनां सम चित्तानां मुकुन्दचरणैषिणाम्।**
★ **दर्शनान्तो भवेद्बन्धः पुंसोऽक्ष्णोस्सवितुर्यथा॥**
**उपेक्ष्यैः किं धनस्तम्भैरसद्भिरसदाश्रयैः॥१८॥**

**तदहं मत्तयोर्माध्व्या वारुण्या श्रीमदान्धयोः।**
**तमोमदं हरिष्यामि[6] स्त्रैणयोरजितात्मनोः॥१९॥**

---

1. A. ०ण्याऽऽशु 2. V. च 3. A. सन्तर्षं B, G तं तर्षं 4. V. तमः 5. M. ०द्धि सिद्ध्यति; V. ०द्भिनश्यति ★ This half verse is found only in V. Edn. 6. V. °नि

**श्रीध० दरिद्रस्येति**। युज्यन्ते स्वत एव सङ्गच्छन्ते[1], तर्षं तृष्णां, [2-]आ[-2]राच्छीघ्रम्॥१६, १७॥

ननु साधूनामपि धनिक एव[3] प्रियः स्यात् न दरिद्र इति तत्राह **साधूनामिति**। धनेन स्तम्भो गर्वो येषां तैः॥१८॥

**तदिति**। तमोमदं अज्ञान कृतं मदम्॥१९॥

---

1. V ०न्ति 2- -2 A.B. omit 3. A.B. omit एव

**वीर०** तदेवाह **नित्यमिति।** क्षुधा क्षामः क्षीणो देहो यस्य। तत्र हेतुः **अन्नकाङ्क्षिणः।** तत्रापि हेतुः दरिद्रस्य। इन्द्रियाणि शुष्यन्ति, अत एव हिंसा च निवर्तते॥ १६॥

**एवंविधस्य दरिद्रस्यैव समदर्शिनः** साधवो युज्यन्ते संङ्गता भवन्ति। ननु परिशुष्केन्द्रियस्यापि विषयतृष्णानपायात् श्रीमदान्धात् कोऽस्य विशेष इत्यत्राह - **सङ्गतैः सद्भिः हेतुभिः तत्तर्षं** विषयतृष्णां क्षिणोति क्षपयति। **यद्वा तत्तर्षं** कर्तृ कलीबत्व मार्षम्। क्षिणोति नश्यति। ततः तत्तर्षक्षयात् आरात् समनन्तरमेव विशुध्यति प्रकृतिसम्बन्धरूपाशुचिरहितो भवति। विसिध्यतीति पाठे मुक्तो भवतीत्यर्थः॥ १७॥

ननु धनमेव स्वापेक्षितं, अत आह — **साधूनामिति।** मुकुन्दचरणमेव निरतिशयपुरुषार्थरूपं मन्वानानां समचित्तानां स्वतुल्य भूतान्तर दर्शिनां साधूनां, अत एव **उपेक्ष्यैः धनस्तम्भैः** स्तम्भहेतुभिः धनैः **असद्भिः** अनर्थ मूलमदहेतुत्वेन दुष्टैः अत एव **असतामाश्रयैः,** ते आश्रयो येषां तैरिति वा **एवं विधैः धनस्तम्भैः** किं न किञ्चिदपि प्रयोजन मित्यर्थः। यद्वा साधूनामपि धनिक एव प्रियः स्यात् इत्यत्राह — साधूनामिति। धनेन स्तम्भो येषां तैः असदाश्रयैः सदाश्रयरहितैः तत्समागमरहितैः इत्यर्थः। अत एव उपेक्ष्यैः असद्भिः किमिति॥ १८॥

तत् तस्मात् श्रीमदनिवृत्तेरेव पुरुषार्थपर्यवसायित्वात् वारुण्या माध्व्या। सुरया मत्तयोः श्रीमदेन अन्धयोः अजितेन्द्रिययोः स्त्रीवश्ययोः युवयोः तमोमदमज्ञानकृतं मदं हरिष्यामि अपनेष्यामि॥ १९॥

**विज०** ननु कृच्छ्रानुभवः कथङ्कारं तपो भवति इत्याशङ्क्य तं प्रकारं दर्शयति **नित्यमिति।** अनुशुष्यन्ति देह शोष मनुशोषं गच्छन्ति इन्द्रियप्राबल्य दौर्बल्ये प्रवृत्तिनिवृत्ती स्यातां, ते च अन्नसत्ताभावादिना स्याताम्। अन्नाभावादिन्द्रिय प्राबल्यसाध्या हिंसालक्षणा प्रवृत्ति र्नश्यतीत्यर्थः॥ १६॥

ततः किमत आह — **दरिद्रस्येति।** युज्यन्ते सङ्गम्यन्ते, सत्सङ्गतिर्भवतीत्यर्थः। तत्फलमाह — सद्भिरिति। "रसोप्यस्य परं दृष्ट्वा निवर्तते" (भ. गी. 2-59) इति स्मृतेः। विषय तृष्णा निवर्तत इत्यर्थः। ततः विषयतृष्णा निवृत्तेरारात् क्षिप्रं सिध्यति मुक्तो भवतीति। "आरात् दूरसमीपयोः" (अम. को. 3-397) इति च॥ १७॥

सच्छिक्षया विद्यादिमदान्धानामपि दरिद्रस्येव श्रेयः किं न स्यादित्याशङ्क्य सतामुपेक्षणीयत्वेन सत्सङ्गत्या श्रेयस्सिद्धिर्दवीयसीत्याशयेनाह - **साधूनामिति।** महतां दर्शने धनेन स्तम्भः प्रावण्यगुण रहितैः असतामाश्रयभूतैः॥१८॥

नन्वस्तु प्रकृते भवतैतयोः किं क्रियते, दण्ड, उत उपेक्षा वा इत्याशङ्क्य दण्ड एव क्रियत इत्याह - **तदहमिति।** माध्व्या मधुकृतया॥ १९॥

**यदिमौ लोकपालस्य पुत्रौ भूत्वा तमःप्लुतौ[1] ।**
**न विवाससमात्मानं विजानीतः सुदुर्मदौ॥ २०॥**

अतोऽर्हत[3] स्थावरतां स्यातां नैवं यथा पुनः।
स्मृतिस्स्यान्मत्प्रसादेन तत्रापि मदनु ग्रहात्॥ २१॥

वासुदेवस्य सान्निध्यं लब्ध्वा दिव्यशरच्छते।
वृत्ते स्वर्लोकतां भूयो [4-]लब्ध्वा भक्तौ[-4] भविष्यतः[5] ॥२२॥

श्रीशुक उवाच

[6-]स एवमुक्त्वा[-6] देवर्षि र्गतो नारायणाश्रमम्।
नलकूबरमणिग्रीवा वासतुर्यमलार्जुनौ॥ २३॥

ऋषे र्भगवतमुख्यस्य सत्यं कर्तुं वचो हरिः।
जगाम शनकैस्तत्र यत्राऽऽस्तां यमलार्जुनौ॥ २४॥

---

1. A तमाऽऽप्लुतौ 2. W. विजानाते 3. M. ०थः 4- -4. A.B. G.K.W लब्ध भक्तो 5. M ०थः 6- -6. K, W एवमुक्त्वा तु

**श्रीध० यदिति।** तम ःप्लुतौ तमोव्याप्तौ॥ २०॥

[1]शपति — **अत** इति। अनुगृह्णाति। स्यातां नैव मित्यादिना। मत्प्रसादेन स्मृतिः स्यात्॥२१॥

**वासुदेवस्येति।** स्वर्लोकतां देवत्वं पुनर्लब्ध्वा मदनुग्रहात् लब्धभक्ती भविष्यत इति॥ २२, २३॥

प्रस्तुतमाह - **ऋषेरिति।** [2-]अस्मिन् श्लोके पूर्व श्लोके चाक्षराधिक्यमार्षम्[-2]॥ २४॥

---

1. V. omits शपति 2- -2. A.B. omit

**वीर०** यद्यस्मात् लोकपालस्य पुत्रौ भूत्वापि इमौ भवन्तौ तमसा व्याप्तौ विवाससं नग्नमात्मानं न विजानाते॥ २०॥

अतः स्थावरतामर्हतः विवाससं आत्मानमजानतोः वस्त्राच्छादन रहिततरु जन्म युक्तमिति भावः। इत्थं शप्त्वाऽनुगृह्णाति स्यातामित्यादिना। एवमेव सर्वदा स्थावराकृती यथा न स्यातां तथार्हतः। यद्वा किमर्थ मेवं निरपराधयोश्शापं प्रयच्छसीत्यत्राह पुरा तरुजन्मनः प्राक् यथा स्यातां यादृशौ श्रीमदान्धौ स्यातामेवं तरुजन्मनः पश्चान्मा भूतामित्येवं, अनुग्रहार्थं शाप इत्यर्थः। प्रकारान्तरेणाप्यनुगृह्णाति तत्रापि स्थावरत्वेऽपि मत्प्रसादेन हेतुना स्मृतिः पूर्वजन्म स्मृतिः स्यात्॥२१॥

तथा मदनुग्रहाद्धेतोः दिव्य वर्ष शतान्ते वासुदेवस्य वसुदेवसूनोः भगवतः सान्निध्यं लब्ध्वा वृत्ते तरुत्वे अतीते सति पुन स्वर्लोकतां देवत्वं लब्ध्वा वासुदेवे लब्धा भक्तिः याभ्यां तथा भूतौ भविष्यतः॥ २२ ॥

स देवर्षिः इत्थं उक्त्वा बदर्याश्रमं गतः नलकूबरमणिग्रीवौ सहजाता वर्जुनौ वृक्षौ आसतुः॥ २३ ॥

भागवत मुख्यस्य नारदस्य तद्वचः सत्यं कर्तुं हरिः[1] श्रीकृष्णश्शनैः उलूखलमाकर्षन् यत्र यमलार्जुनौ स्थितौ तत्र जगाम॥ २४ ॥

---

1. W omits हरिः

**विज०** तमःप्लुतौ अज्ञानावृत्तौ विवाससं वस्त्रहीनं आत्मानं न विजानीत इति यतः अतः ॥ २० ॥

स्थावरतां प्राप्तुमर्हथः तत्र स्थावरत्वेपि॥ २१ ॥

स्मृतेः फलमाह - वासुदेवस्येति॥ २२ ॥

यमलार्जुनौ सहोत्पन्नार्जुनौ॥ २३, २४ ॥

**देवर्षिर्मे प्रियतमो यदिमौ धनदात्मजौ।**
**तत्तथा साधयिष्यामि यद्गीतं तन्महात्मना॥ २५ ॥**

**इत्यन्तरेणार्जुनयोः कृष्णस्तु यमयोर्ययौ।**
**आत्मनिर्वेशमात्रेण तिर्यग्गतमुलूखलम्॥ २६ ॥**

**बालेन [1-]निष्कर्षयताऽन्वगुलूखलं[-1] तत् दामोदरेण तरसोत्कलिताङ्घ्रि बन्धौ।**
**निष्पेततुः[2] परमविक्रमितातिवेप[3] स्कन्धप्रवालविटपौ[4] कृत[5] चण्डशब्दौ॥ २७॥**

**तत्र श्रिया परमया ककुभः स्फुरन्तौ सिद्धावुपेत्य कुजयोरिव जात वेदाः[6]।**
**कृष्णं प्रणम्य शिरसाऽखिल लोकनाथं बद्धाञ्जली विरजसाविदमूचतुस्स्म[7] ॥ २८॥**

-: शाप विनिर्मुक्तनलकूबरमणिग्रीवकृत श्रीकृष्ण स्तुतिः-

[8-]गुह्यकौ ऊचतुः[-8]

कृष्ण कृष्ण महायोगिन् त्वमाद्यः पुरुषः परः।
व्यक्ताव्यक्तमिदं विश्वं रूपं ते ब्रह्मणो[9] विदुः॥ २९॥

---

1- -1. M निष्कृष्टमुलू° 2. V °षतः 3. पवन 4. M °ल 5. M °पैः 6. M°दौ 7. V °स्तौ 8- -8. A नलकूबरमणिग्रीवौ ऊचतुः; B,G,K,M,W omit 9. B,G,M ब्राह्मणाः

**श्रीध०** किमिति सत्यं कर्तव्यं तत्राह - **देवर्षिरिति।** यद्यतः तत्ततः [1-]इमौ आलक्ष्य यद्गीतम्[-1]॥ २५॥

**इतीति।** यमयोर्यमलयोः सहजातयोः [2-]इत्यर्थः। आत्म निर्वेश मात्रेण[-2] आत्मनः कृष्णस्य तन्मध्य प्रवेशमात्रेण। [3-]अन्वञ्चत् तत् उलूखलमिति पाठे अनु पश्चात् पृष्ठभागे अञ्चत् शोभमानमित्यर्थः[-3] ॥ २६॥

**बालेनेति।** अनु अञ्चतीत्यन्वक्। तत्र हेतुः दामोदरेणेति। [4-]अत एव तन्निष्कर्षयता। तेन उत्कलिताङ्घ्रि बन्धौ[-4] उत्कलितः उत्पाटितः अङ्घ्रि बन्धो मूलबन्धो ययोस्तौ। परमस्य श्रीकृष्णस्य [5-]विक्रमितं विक्रमः[-5] न अतिवेपः कम्पो येषु ते स्कन्धप्रवालविटपा ययो स्तौ॥२७॥

**तत्रेति।** ककुभः प्रति सर्वतः स्फुरन्तावित्यर्थः। यद्वा दिशः प्रकाशयन्ताविति। [6-]अथवा ककुभ स्फुरन्तावित्येकं पदं, ककुभयोर्जुनवृक्षयोः स्फुरन्तौ प्रथमं च्छायारूपेण प्रतिफलन्ता विति। "इन्द्रद्रुः ककुभोऽर्जुनः" (अम. को. 2-91) इति निघण्टुः।[-6] [7]कुजयोः वृक्षयोः स्थितोऽग्निर्यथा मूर्तिमानुपैति तथोपेत्य विरजसौ निर्मदौ[8][9] ॥ २८॥

गोपालं मां युवां देवौ किमिति' प्रणमत इति चेत् तत्राहतुः **कृष्णेति।** हे कृष्ण! हे कृष्ण! महायोगिन्! अचिन्त प्रभावस्त्वं न गोपालः किन्तु परः पुरुषः यतः आद्यः कारणभूतः तत्रापि न निमित्तमात्रं, किन्तु उपादानमपि त्वमेवेत्याशयेन तुष्टुवतुः व्यक्ताव्यक्तमिति। स्थूल सूक्ष्ममिदं (ब्रह्मणः) ते[10] रूपं[11] विदुः। [12-]ब्रा ह्मणा विदुरिति पाठे ब्राह्मणाः तत्त्वज्ञा[-12] ः॥ २९॥

---

1- -1. A,B omit 2- -2. A,B omit 3- -3. A,B omit 4- -4. A,B omit 5- -5. V विक्रमितेन 6- -6. A,B omit 7. A,B add तत्र 8. A निर्गतमदौ 9. A,B add निरहङ्कारिणौ नष्टगर्वौ इति यावत् 10. A adds तव 11. A,B add ब्राह्मणाः ब्रह्मविदो 12- -12. A,B omit

**वीर०** तद्वचः सत्यं कर्तुमित्येतदेव प्रपञ्चयति [1-]देवर्षिरिति द्वाभ्याम्[-1] यतो देवर्षिः [2]नारदः मम प्रियतम: तत् तस्मात् तेन महात्मना धनदात्मजौ उद्दिश्य यत् गीतं [3]तत्तथैव साधयिष्यामि [4]करिष्यामि इत्यभिप्रायेण यमयोः अर्जुनयो: अन्तरेण मध्ये ययौ, तदा आत्मन: स्वस्य[5] प्रवेशमात्रेण उलूखलं तिर्यक्पतितमभूत्॥ २५,२६॥

अन्वञ्चती त्यन्वक् अनुसरत् तं उलूखलं निष्कर्षयता [6]आकर्षता[-6] दामोदरेण हेतुना तरसा बला दुत्कलितौ उत्पाटितौ अङ्घि बन्धौ मूलभागौ ययोः परमस्य श्रीकृष्णस्य विक्रमितेन अतिवेपः कम्पो येषु ते स्कन्धादयो ययोः कृतः चण्डः शब्दो याभ्यां तथा भूतौ निष्पेततुः॥ २७॥

तत्र तदा तयोः वृक्षयोः वा परमया श्रिया शोभया ककुभो दिशः स्फुरन्तौ प्रकाशयन्तौ कुजयोः वृक्षयोः स्थितोऽग्निः यथा मूर्तिमान् बहिरुद्गच्छति तद्वत् उत्थितौ सिद्धौ भूत्वा उपेत्य कृष्णसमीपमेत्य कुजयोः जातवेदा इव सिद्धौ उपेत्य, उत्थायेति वा। अखिल लोकानां नाथमीश्वरं कृष्णं शिरसा प्रणम्य बद्धोऽञ्जलिः याभ्यां विगतं रजः रजोगुणकार्यं ययोः तौ सात्विकावित्यर्थः निर्मलाविति वा। तौ नलकूबरमणिग्रीवाविदं वक्ष्यमाणमूचतुः॥ २८॥

गोपालं[7] मां युवां देवौ किमिति प्रणतौ इत्यत्राहतुः - हे कृष्ण! कृष्ण[8]! महायोगिन्! अचिन्त्यप्रभाव! न केवलं गोपबालस्त्वम्, अपि तु परमपुरुषः। कोऽसौ य आद्यो जगत्कारणभूतः ननु कार्य कारणयोः प्रायशः सालक्षण्यदर्शनात् कथं चिदचिदात्मकस्य जगतस्तद्विलक्षणोऽहं कारणमित्यत्राहतुः - व्यक्तं नामरूपाभ्यां अव्यक्तं चेदं विश्वं ब्रह्मणः सर्वशक्तित्वादि कल्याणगुणै र्बृहतः तव रूपं शरीरं विदुः वेदान्ता आमनन्तीत्यर्थः । वेदान्ताश्च "यस्य पृथिवी शरीरम्", "यस्यात्मा शरीरम्" (बृह उ. 3-7-3,4) "यस्याक्षरं शरीरम्" (सुबा. उ. 7-1) इत्याद्याः सूक्ष्म चिदचिच्छरीकत्वेन कारणभूतः स्थूल चिदचिच्छरीरकत्वेन कार्यावस्थश्च त्वमेवेति भावः ॥ २९॥

---

1- -1. W omits 2. W omits नारदः 3. W omits तथैव 4. W omits करिष्यामि 5. A,B add कृष्णस्य 6- -6. W omits 7. A,B °पबालं 8. W omits कृष्ण!

**विज०** अन्तरेण मध्ये आत्मनिर्वेशमात्रेण [1]वृक्षयोः मध्ये प्रवेशमात्रेण[-1] आत्मनः सान्निध्यमात्रेण वा तिर्यगतं तिरश्चीनम्॥ २५, २६॥

यदा बालेन दामोदरेण तत् उलूखलं निष्कृष्टमाकृष्टं तदा तावर्जुनौ निष्पेततुः। कीदृशौ? उत्कलिताङ्घ्रिबन्धौ उन्मूलितमूलौ पवनस्य तदानीं उद्भूतवायोः विक्रमितेन पराक्रमेणातिवेलैः वेलां सीमानमतिक्रान्तैः स्कन्धैः प्रवालैः विटपैः "अति स्यादधिकार्थोक्तौ प्रशंसायामतिक्रमे" (वैज.को. 8-7-15) इति॥ २७॥

तत्र तस्यां अवस्थायां कुजयोः वृक्षयोः जातवेदौ अग्नी इव उपेत्य अभिव्यज्य विरजसौ शापमोक्षेण सत्त्वस्वभावमापौ बद्धाञ्जली सिद्धौ यक्षौ शिरसा अखिललोकनाथं कृष्णं प्रणम्य इदं वक्ष्यमाण मूचतुः स्म गुणस्मरण पूर्वक मुक्तवन्तावित्यन्वयः। "स्मृतौ वृत्ति निषेधे स्म" (वैज. को. 8-7-7) इति च। ककुभो दिशः स्फुरन्तौ प्रकाशयन्तौ॥ २८॥

व्यक्ताव्यक्तं कार्यकारणात्मकं रूप्यत्वात्प्रतिमात्वेन सन्निधियोग्यत्वात् रूपमुच्यते। नतु साक्षाद्रूपम्। "रूप्यत्वात्तु जगद्रूपं विष्णोः साक्षात्सुखात्मकम्" (वामने) इत्यादिस्मृतेः। ब्राह्मणाः वैदिकाः॥ २९॥

1- -1. A,B omit

त्वमेकः सर्वभूतानां देहाऽस्वात्मेन्द्रियेश्वरः।
त्वमेव कालो भगवान्[1] विष्णुरव्यय ईश्वरः॥ ३०॥

त्वं महान् प्रकृतिः सूक्ष्मा रजस्सत्त्वतमोमयी।
त्वमेव पुरुषोऽध्यक्ष स्सर्वक्षेत्र विकारवित्[2]॥ ३१॥

गृह्यमाणैः त्वमग्राह्यो विकारैः प्राकृतैर्गुणैः।
कोन्विहार्हति विज्ञातुं प्राक्सिद्धं गुणसंवृतः[3]॥ ३२॥

तस्मै तुभ्यं भगवते वासुदेवाय वेधसे।
आत्मद्योतै[4]र्गुणै[5]श्छन्नमहिम्ने ब्रह्मणे नमः॥ ३३॥

यस्यावतारा ज्ञायन्ते शरीरे[6]ष्वशरीरिणः।
तैस्तैरतुल्यातिशयैः [7-]वीर्यैर्देहिष्व[-7]सङ्गतैः॥ ३४॥

1. K,W °वन् 2. V कृत् 3. M संस्थितेः 4. A,B,G,V °तगु° 5. V °णच्छन्न 6. V °रि° 7- -7 M तिर्यग्योनिष्व°; V वीर्यै देहेष्व°

**श्रीध०** ब्राह्मणा विदुरिति पाठे ब्राह्मणाः तत्त्वज्ञाः नियन्तापि त्वमेवेति ऊचतुः - **त्वमेक** इति। देहः असवः प्राणाः आत्मा, अहङ्कारः इन्द्रियाणि च तेषा मीश्वरः । नन्वस्य कालो निमित्तं प्रकृतिरुपादानं प्रकृतेर्जातो महान् विश्वात्मतया परिणमते पुरुषः कर्ता नियन्ता च किमत्राहम्। अत आहतुः सार्धेन त्वमेवेति। यतो भगवानीश्वरो विष्णुः त्वं अतः कालो नाम तव लीला॥ ३०॥

**त्वमिति**। प्रकृतिः शक्तिः। पुरुषोंऽशः महान् कार्यम् अतस्त्वमेव सर्वमित्यर्थः॥ ३१॥

ननु अहमेव चेत् सर्वं तर्हि कीटादि[1]ज्ञानेन मज्ज्ञानं किं न भवति भवति[2] चेत् सर्वोऽपि ब्रह्मवित्स्यात्, अतः आहतुः - **गृह्यमाणैरिति**। दृश्यत्वेन वर्तमानैः [3-]बुद्ध्याद्यहङ्कारैः[-3] तद्विकारैः इन्द्रियादिभिः द्रष्टा त्वं न गृह्यसे इति भावः। ननु तर्हि जीवो जानातु नैवेत्याहतुः कोन्विहेति। जीवाद्युत्पत्तेः प्रागेव स्वप्रकाशतया सिद्धं त्वां को हि जानाति गुणसंवृतः देहाद्यावृत्तः॥ ३२॥

अतो दुर्ज्ञेय[4] इत्यौत्कण्ठचेन[-4] केवलं प्रणमतः **तस्मा** इति। आत्मनः स्वस्मात् द्योतः प्रकाशो येषां तैः, गुणैः छन्नो महिमा यस्य अभ्रैरिव रवेः [5]रस्मयः तस्मै॥ ३३॥

अहो अहम् ईश्वरः इति कुतो ज्ञातः तत्राऽऽहतुः **यस्येति** ॥ ३४॥

---

1. A,B घटादिज्ञाने 2. A,B add इति 3- -3. A,B बुद्ध्यहङ्कारेन्द्रि° 4- -4. A,B °यत्वात् 5. A,B omit रश्मयः

**वीर०** न केवलं उपादान कारण मेव अपि तु निमित्तकारणमपि इत्यभिप्रायेण तदुपयुक्तगुणवत्तां आहतुः **त्वमिति।** एकशब्देनाधिष्ठात्रन्तरव्यावृत्तिः सर्वभूतानां यानि देहादीनि तेषामीश्वरः नियन्ता, [1] असवः प्राणाः, आत्मा मनः भवन्ति देवमनुष्यादिरूपेण जायन्त इति भूतानि क्षेत्रज्ञास्तेषां देहादिसम्बन्धोपादानो पयुक्तसार्वज्ञ्यादिगुणयोगेनान्तःप्रविश्य नियन्तेत्यर्थः। एवं निखिलजगत्कारणत्वं तच्छरीरकत्वं चोक्तम्। अथ तदुभयनिबन्धनं जगदन्तर्भूतकालादि सामानाधिकरण्य माहतुः त्वमेव काल इति। यद्वा त्वमेक इति स्थितिकारणत्वमुक्तम् त्वमेव काल इति लय काणत्वम्। कालो मृत्युः त्वं महान् इत्यादिना सामानाधिकरण्य मुच्यत इति विवेकः। हे भगवन्! अव्यय इत्यनेन कारणत्वप्रयुक्त दोषपरिहारः भगवानित्यनेन अवतारदशायामपि षाड्गुण्यपूर्तिरुक्ता। विष्णु रित्यनेन देवता विशेषत्वम्॥ ३०॥

त्वं महान् महत्कारणत्वात् तच्छरीरकत्वाच्च तत्समानाधिकरणः एव मुत्तरत्रापि द्रष्टव्यम्। न केवलं महानेव अपि तु तत्तत्कारणभूता रजआदि गुणत्रयात्मिका सूक्ष्मा नामरूपविभागानर्हा प्रकृति रपि त्वमेव, तथा पुरुषो जीव स्त्वमेव। कथम्भूतः? अध्यक्षः देहप्रभृति जीवपर्यन्तानां अधिष्ठाता, क्षेत्राणि शरीराणि बुद्धिपर्यन्तेन्द्रिय सहितानि तानि वेत्तीति तथा, युगपत् क्षेत्रेन्द्रिय वृत्तिविदित्यर्थः ॥ ३१॥

'रूपं ते ब्रह्मणो विदु'रित्यनेनैवंविधं त्वां केवलं वेदान्ता एव विदुः न त्विन्द्रियाणीत्यभिप्रेतम्। तदेव विशदयन्तावुपपादयतः **गृह्यमाणैरिति।** प्राकृतैः गुणैः विकारैः गुणपरिणामरूपैः इन्द्रियैः त्वमग्राह्यः ग्रहीतुं विषयीकर्तुमशक्यः। तत्र हेतुं वदन्तौ गुणान्विशिंष्टः गृह्यमाणैरिति। यथा श्रोत्रादिभिः गृह्यमाणाश्शब्दादयो न श्रोत्रादीन् गृह्णन्ति तथा त्वया गृह्यमाणा विकाराः त्वां न गृह्णन्तीति भावः। नन्वग्राह्यस्य मम कारणत्वसमव्याप्तोपास्यत्वानुपपत्तिः, ततश्च कारणत्वानुपपत्ति रित्यत्राहतुः कोन्विति। गुणैः गुणकार्यैः इन्द्रियैः संवृत आवृतः सहित इति यावत् को नु पुमान् प्राक्सिद्धं गुणेभ्यः प्रागेव तत्कारणतया तत्प्रकाशतया च सिद्धं त्वामिह ज्ञातुं विषयीकर्तुं अर्हति गुणसंवृतः को वार्हतीत्यनेन [2]योगविशुद्धमनास्तु ज्ञातुमर्हतीति सूचितम्। अनेन अनुपास्यत्वं परिहृतम्। यद्वा, ननु तर्हि जीवो जाना त्वित्यत अहतुः कोन्विति॥ ३२॥

एवमुक्तविधस्य भगवतः सर्वज्ञत्वं जीवैः दुर्ज्ञेयत्वं च अनुसन्दधतौ नमस्कुरुतः - **तस्मा** इति। तस्मै कृष्ण कृष्णेत्यादिनोक्त गुणविशिष्टाय भगवते षाड्गुण्यपूर्णाय साधु परित्राणार्थं[3] वसुदेवाऽऽत्मजत्वेनावतीर्णाय सर्वकर्त्रे आत्मद्योतै गुंणैः [4]...स्य प्रकाश्यमानैर्गुणैः[-4] छन्नमहिम्ने जीवानां दुरवबोध महिम्ने। 'आत्मज्योतिर्गुणच्छन्नमहिम्न' इति पाठे आत्मज्योतिः स्वयंप्रकाशश्च

गुणाच्छन्नमहिमा चेत्यर्थः। स्वरूपेण गुणैश्च निरतिशयबृहते तुभ्यं नमः॥ ३३॥

वासुदेवायेत्यनेनाभिप्रेतं विवक्षू तावत्सर्वावतारयाथात्म्य माहतुः **यस्येति।** शरीरेषु[5] मर्त्यादिशरीरिणां मध्ये अशरीरिणः कर्मकृतशरीररहितस्य यस्य तव अवतारास्सर्वे निस्समाभ्यधिकैः कर्मकृत देहि ष्वसङ्गतैः असम्भावितैः तैस्तैः तत्तदवतारप्रतिनियतैः वीर्यैः ज्ञायन्ते कर्मकृतदेहिभ्यो विलक्षणत्वेन ज्ञायन्त इत्यर्थः॥ ३४॥

---

1. A,B add तत्र 2. A,B omit योग 3. A °य 4- -4. W omits 5. A,B °रेषु

**विज०** सन्निधियोग्यं दर्शयति **त्वमिति।** सर्वभूतानां देहे आत्मनो मनसः इन्द्रियाणामीश्वरः स्वविषयशक्तिप्रदः न केवलमन्तरेव प्रवर्तकः बहिरपि सर्वशक्तिमत्त्वात् तच्छक्तिप्रबोधक इति भावेनाह त्वमिति। तदुक्तं "विष्णुः सर्वगुणोद्रेकात् काल इत्यभिधीयते" (वामने) इति। कलकामधेनौ इति धातुः। विष्णुः व्यापन शीलः व्याप्तस्याकाशवत् उत्पत्ति विनाशौ स्यातामिति नेत्याह अव्यय इति। 'जातस्य हि ध्रुवो मृत्युः" (भ.गी. 2-27) इति स्मृतेः। अन्तर्यामीति वा आत्मान्तर्यामीति॥ ३०॥

प्रकृत्यादेः अचेतनत्वेन सतःप्रवृत्त्यनुपपत्तेः तत्सत्ताया अपि तदधीनत्वेन तत्त्वव्यपदेशो युक्त इति भावेन स्तौति- **त्वमिति।** महान् महत्तत्त्वं पूर्णगुणत्वेन पुरुषशब्दवाच्योऽपि त्वमेवेत्याह त्वमिति। अध्यक्षः साक्षी, साक्षित्वं व्यनक्ति- सर्वेति। सर्वक्षेत्राणां कारणभूतानि प्राणा श्रद्धार्थः खं वायुरित्यादीनि विकारशब्दवाच्यानि वेति जानाति तत्त्वेन पश्यतीति सर्वक्षेत्र विकारवित्॥ ३१॥

नन्वव्यक्तो हरिः इति पुरस्तादुदीरितं तत्कथं दृश्यते त्वग्रयया बुध्या इतीन्द्रिय विषयत्वोक्तेः। अत्राह गृह्यमाण इति। स्वयमेवः स्वात्मानं गृह्णाती नत्त्वन्य इत्यर्थः। तदुक्तं स्वात्मना गृह्यमाण इति। किमेवं विवेकः क्रियत इति तत्राह अग्राह्य इति। विकारैः प्राकृतैः महदहङ्काराद्यभिमानिभिः ब्रह्मादिभिः अग्राह्यः। ननु नित्य समीपस्थाभिर्दुर्गादिभिः ग्राह्य एवेत्यत्राह - गुणैरिति। सत्वादिभि र्गुणाभिमानिनीभिरपि। ननु "वेदाहमेतं पुरुषं महान्तम्" (पु.सू. 2-1) इति श्रुतेः। ब्रह्माद्यवेद्यः कथमुच्यत इति तत्राह क इति। अत्र संस्थितिशब्देन उत्पत्तिर्लक्ष्यते स्थितेरुत्पत्त्यपेक्षत्वात्। इह जीवराशौ कः पुमान् गुणभूतस्य हरेः क्रीडायां अन्त रङ्गस्य जगतः स्थितेरुत्पत्तेः प्राक् सिद्धं "आनीदवात स्वधया तदेकम्" इति श्रुति सिद्धं ब्रह्म विज्ञातुमर्हति शक्नोति। अर्हति चेत् "क एव ब्रह्म जानाति स्त्रियः सतीस्तां उभे पुंसं आहुः" इत्यादि श्रुतिः। इदमपि दर्शनं तत्प्रसादेनेत्यङ्गीकर्तव्यम्। "यमेवैष वृणुते तेन लभ्यः" (कठ.उ. 2-22) इति श्रुतेः। यद्वा उत्पत्तेः प्राक् सिद्धं निरञ्जनत्वेन स्थितं को नु विज्ञातुमर्हति लिङ्गाभावात्। कथं गुणानां ज्ञापकानां लिङ्गानां संस्थितेः विनाशनात् जगतो नष्टत्वादिति॥ ३२॥

ननु तद्विषयज्ञानाभावे तदुपासनाभावेन मोक्षाशा व्यर्थेत्याशङ्क्य नम इत्येवकार्यं तस्यापि तत्प्रीतिजनकत्वप्रतीतेः इति भावेनाह **तस्मा** इति। किं निमित्तमेतत् विज्ञापनमिति तत्राह - आत्मेति। आत्मना त्वया द्योतन्ते कार्ये शक्तिमत्तया प्रकाशन्त इत्यात्मद्योताः तैः गुणैः सत्त्वादिभिः छन्नो गूहितः महिमा यस्य स तथा तस्मै। "तुच्छ्येनाभ्वपिहितम्, यदासीत्तपसस्तन्महिनाजायतैकम्" (ऋक्. सं. 10-129-3) इति श्रुतेः। पिहितत्व मितरापेक्षया न स्वस्य अपरिच्छिन्नत्वेनानाच्छाद्यत्वादिति भावेनाह - ब्रह्मण इति। तदुक्तं "छन्नोऽन्येषां न तु स्वस्य भगवान् पुरुषोत्तमः" (महाकौर्मे) इति। वेधसे कर्त्रे॥ ३३॥

इदानीं कृष्णो नाम साक्षात् नारायणावतार एव न देवदत्तवत् कश्चि च्छरीरीति ज्ञापयितुं हरेः विविधावताराः देहस्था अदेहस्था इति। तत्र देहस्था अन्त र्याम्यादयो मस्त्याद्याः अदेहस्ता इति भावेनाह - **यस्येति**। यस्य हेरवताराः शरीरेष्वन्तर्यामित्वेन ज्ञायन्ते, अशरीरेषु शरीर व्यतिरिक्त बाह्य स्थलेषु अशरीरिणः मत्स्यादिरूपत्वेन ज्ञायन्ते। कैः साधनैः इत्यत्राह तैस्तैरिति। ये ये मनसो नियमादयः शास्त्र विहिताः तै स्तै रतुल्यैः अन्यातिशयैरधिकैः मनो नियमादिभिः अतुल्यातिशयत्वं कथमत्राह तिर्यग्योनिष्विति। तिर्यग्योनिषु वराहादि सम्बन्धिनीषु, असद्भतैः असम्भाव्यैः। तदुक्तं - "तस्यावतारा देहस्था अदेहस्था इति द्विधा" (महाकौर्मे) इत्यादि। यद्वा तैस्तैरतुल्यातिशयैः माहात्म्यविशेषैः भूम्युद्धरणं मन्दरधारण गोवर्धनोद्धारणलक्षणैरिति॥ ३४॥

**स भवान् सर्वलोकस्य भवाय विभवाय[1] च।**
**अवतीर्णोंऽशभागेन साम्प्रतं पतिराशिषाम्॥ ३५॥**

**नमः परमकल्याण [2-]नमस्ते विश्व[-2]मङ्गल।**
**वासुदेवाय शान्ताय यदूनां पतये नमः॥ ३६॥**

**अनुजानीहि नौ भूमन् [3]तवाऽनुचरकिङ्करौ।**
**दर्शनं नौ भगवत[4] ऋषेरासीदनुग्रहात् ॥ ३७॥**

**वाणी गुणानु कथने श्रवणं[5] कथायां हस्तौ च कर्मसु मनस्तवपादयोर्नः[6]।**
**स्मृत्यां शिरस्तव [7]निवास जगत्प्रणामे दृष्टिस्सतां दर्शनेऽस्तु भवत्तनूनाम्॥ ३८॥**

**श्रीशुक उवाच**

**इत्थं सङ्कीर्तितस्ताभ्यां भगवान् गोकुलेश्वरः।**
**दाम्ना चोलूखले बद्धः प्रहसन्नाह गुह्यकौ॥ ३९॥**

---

1. M प्र 2- -2. B,G नमः परम 3. M सदाऽनु 4. M °तो 5. A,B,G,M °णौ 6. M °र्नौ 7. M सुप्रवर

**श्रीध० स** इति। भवाय उद्भवाय विभवाय विगतो भवो यस्मिन् तस्मै कैवल्यायेत्यर्थः॥ ३५, ३६॥

**अनुजानीहीति।** नौ आवां अनुचरः कुबेरो नारदो वा, तस्य किङ्करौ भगवतः तव दर्शनम्॥ ३७॥

तत्र गतयोः आवयोः पूर्वस्वभावो माभूत्। किन्तु [1-]एवं प्रार्थयावहे इत्याहतुः[-1] **वाणीति।** [2]नः "अस्मदो द्वयोश्च" इति द्विवचनस्थाने बहुवचनम्[-2]। अस्मत्सङ्गिनां सर्वेषा[3-]मित्यभिप्रयोण[-3] वा बहुवचनम्। तव निवासभूतं यज्जगत् तस्य प्रणामे त्वन्निवासभूतमिति बहुमानेन जगतः प्रणामे शिरोऽस्त्वित्यर्थः भवत्तनूनां भवतो मूर्तीनाम्॥ ३८॥

**इत्थमिति।** संकीर्तितः संस्तुतः॥ ३९॥

---

1- -1. A,B omit 2- -2. V न इति 3- -3. A,B °मपीति

**वीर०**[1] अंशभागेन बलरामेण सह यद्वा सङ्कल्परूपज्ञानेन न तु करेणेनेति भावः। साम्प्रतमधुना अवतीर्णः। यद्वा, साम्प्रतमिति युज्यत इत्येतदर्थको निपातः। यतो भवानाशिषां पतिः प्रभुः दाता अतो भवार्थं विभवार्थं च अंशेनावतीर्ण इति युक्त मेवेत्यर्थः॥ ३५॥

प्रकृतावता[2]रसाधारण गुणान् अनुसन्दधतौ नमस्कुरुतः विश्वमङ्गलावहत्वम्, अमङ्गलतरुजन्म विमोचनेन अपरोक्ष मेव प्रदर्शित मिति तथा सम्बोधनाभिप्रायः। स्वयं अमङ्गलस्य अन्येषां मङ्गलावहत्वम् अनुपपन्न मिति तदपि सिद्धमेवत्यभिप्रायेण परमकल्याणेति सम्बोधनम्। शान्ताय ऊर्मिषट्करहिताय अशनायापिपासाशोक मोहजरामृत्यवः षडूर्मयः॥ ३६॥

इत्थं संस्तुत्य, आत्मनोः कृतार्थत्वाय तद्दासपर्यन्तदास्यं प्रार्थयमानौ विज्ञापयतः - **अनुजानीहीति।** हे भूमन्! निरवधिकानन्दशालिन्! तवानुचरौ किङ्करौ यथा भवा[3]व तथा अनुशाधीत्यर्थः। किमिदं प्रार्थयेथे इत्यत्र ऊचतुः ऋषेः तवानुचरस्य अनुग्रहादेव भगवतः षाड्गुण्यपूर्णस्य पुरुषार्थनिधेः तव दर्शनं नौ आवयोरासीत् महाफलत्वात् त्वद्दासदास्यमेव अनुगृहाणेति भावः॥ ३७॥

किञ्च आवयोः वाण्यादयः त्वद्गुणानुकथनादिप्रवणा यथा स्युः तथाऽनुगृहाणेत्यूचतुः - **वाणीति।** [4-]तव गुणानुवादे[-4] श्रवणे श्रोत्रे, कर्मसु पूजारूपेषु [5]हस्तौ, तव पादयोः स्मृत्यां स्मरणे मनोऽस्तु। निवासो जगद्यस्य तस्य सम्बुद्धिः जगतो निवासेति वा। आर्षः परनिपातः तव प्रणामे शिरः, भवत्तनूनां [6]भवतो मूर्तीनां सतां च दर्शने दृष्टिः अस्तु। यद्वा तव सतां तावकानां सतां च प्रणामे शिरः अस्तु भवत्तनूनां दर्शने दृष्टिरस्तु॥ ३८॥

इत्थ मित्यादि श्लोकः स्पष्टार्थः॥ ३९॥

1. A.B. add स भवानिति सर्वस्य साधुलोकस्य आशिषा समाहित स्वर्गापवर्गादि पुरुषार्थानां भवाय उत्पादानाय विभवाय उत्तराभिवृद्धये च पतिः तासां पालकाश्च भवितुमित्यर्थः। 2. A.B. ०रा० 3. A.B. ०वः 4- -4. w omits 5. w. omits हस्तौ 6. A.B त्वन्मू०

**विज०** स त्वादृशो भवान् जनस्य भवाय पुण्यलक्षण भद्राय प्रभवाय महत्त्व वर्धनाय, साम्प्रतं यदुकुलेऽवतीर्णेसी त्यन्वयः। आशिषां शुभानां पतिः पालयिता दाता च भागेनांशेन॥ ३५॥

इदमेव रूपं मूलरूपादन्यूनमहिमेति भावेनाह - **नम** इति॥ ३६॥

भूमन्! अनवच्छिन्नज्ञानानन्दस्वभाव! सदानुचरावनुगतावुक्त कारिणौ च तौ अनुजानीहि अनुज्ञां कुरु यदृच्छया प्राप्तमहत्सङ्गमो भवद्दर्शन साधनमभूत् - किं पुनर्बुद्धिपूर्वकमिति भावेनाह - दर्शनमिति॥ ३७॥

इतः परं श्रीमदादिक मावयो र्न भवितव्यं यत इन्द्रियाणां विषय व्यापारः स्यात् स न स्यात्। किन्तु तव गुणादावेव वाण्यादीन्द्रियव्यापारः स्यादिति प्रार्थयते - **वाणीति**॥ ३८, ३९॥

**श्री भगवानुवाच**

**ज्ञातं मया पुरैवैतद्दृषिणा करुणात्मना।**
**यच्छ्रीमदान्धयोर्वाग्भिः वि[2-]भ्रंशोऽनु[-2]ग्रहः कृतः॥ ४०॥**

**साधूनां समचित्तानां सुतरां मत्कृतात्मनाम्।**
**दर्शना[3]न्तो भवेद्बन्धः पुंसोऽक्ष्णोस्सवितुर्यथा॥ ४१॥**

**तद्गच्छतं मत्परमौ [4-]नलकूबर सादनम्[-4]।**
**सञ्जातो मयि भावो[5] वामीप्सितः परमो[6]ऽभवः॥ ४२॥**

**श्री[7-]शुक उवाच**

**इत्युक्तौ[8] तं परिक्रम्य प्रणम्य च पुनः पुनः।**
**बद्धोलूखलमामन्त्र्य जग्मतुर्दिशमुत्तराम्॥ ४३॥**

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे महापुराणे वैयासिक्यां
अष्टादश साहस्र्यां श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
नारद शापो नाम दशमोऽध्यायः॥ १०॥

1. A.B.G.K.W. मम 2- -2. M. शापस्साऽनु 3. A.B.G.M. ०नाम्नो 4- -4. M नरवाह निकेतनम्। 5. V. वोऽयमी० 6. M. ०मोत्सवः 7- -7. V. omits 8. B.G. तौ ; V. तु

**श्रीध०** **ज्ञातमिति।** वाग्भिः "नह्यन्यो जुषतो जोष्यान्" (भाग 10-10-8) इत्यादिभिः[1] श्रीविभ्रंशरूपोऽनुग्रहः कृतः इति॥ ४०॥

युक्तमेवैतदित्याह - **साधूनामिति।** साधूनां स्वधर्मवर्तिनां समचित्तानां आत्मविदां, सुतरां मत्कृतात्मनां मय्यर्पितचित्तानां तेषां कृपातिरेकात् सुतरामित्युक्तम्। सवितुर्दर्शनादक्ष्णो यथा बन्धो न भवेत् तद्वत्॥ ४१॥

**तदिति।** प्राधान्यादेकस्य सम्बोधनं हे नलकूबर! युवां तत्तस्मात् सादनं सदनं[2] स्वनिकेतनं[3] मत्परमौ सन्तौ गच्छतम्। वां[4] युवयोः ईप्सितः[5] अपेक्षितः मयि प्रेमा जात एव, अभवः न भवो यस्मिन् सः॥ ४२॥

**इतीति।** बद्धोलूखलं बद्धं उलूखलं यस्मिन् तम्॥ ४३॥

इति श्रीमद्भागवते दशम स्कन्धे पूर्वार्धे
श्रीधरसस्वामि विरचितायां भावार्थदीपिकायां
व्याख्यायां दशमोऽध्यायः॥ १०॥

1. V. ०द्याभिः 2. A.B. omit सदनं 3. A.B. ०तं 4. V. omits वां 5. B.V. omit ईप्सितः

**वीर०** तदेवाह - **ज्ञातमिति।** वाग्भिः "न ह्यन्यो जुषतो जोष्यान्" (भाग. 10-10-8) इत्यादिभिः श्रीमदान्धयोर्युवयोः श्री विभ्रंश रूपोऽनुग्रहः कृत इति यदेतत् पुरैव मम मया ज्ञातम्॥ ४०॥

युक्त मेवैत दित्याह - **साधूनामिति।** मत्कृतात्मनां मय्यर्पित चित्तानां साधूनां दर्शनमन्तो यस्य सः, दर्शनावधिकः पुंसो बन्धो भवेत् यथा सवितुः दर्शनान्तोऽक्ष्णो र्बन्धः तमोरूपः तद्वत्॥ ४१॥

हे नलकूबर! युवां तत् तस्मात् सादनं सदनं स्वनिकेतनं प्रति गच्छतम्। कथम्भूतौ? अहमेव परा मा यस्मात्सः ययोस्तौ, न विद्यते भवः संसारो यस्मात्सोऽभवः, मयि भावोऽभिप्राय विशेषः प्रीत्यात्मकः, वां युवयोः सञ्जात एव॥ ४२॥

इत्थमुक्तौ तौ बद्धं उलूखलं यस्मिन् तं कृष्णं परिक्रम्य पुनः पुनः प्रणम्य आमन्त्र्याऽऽपृष्ट्वोत्तरां दिशं जग्मतुः॥ ४३॥

इति श्रीमद्भागवते दशम स्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवत चन्द्रचन्द्रिकायां
व्याख्यायां दशमोऽध्याय: ॥ १० ॥

**विज०** सानुग्रहः शाप: मोक्षलक्षणानुग्रह सहित: ॥ ४० ॥

मत्कृतात्मनां मय्येव सन्निहित मनसाम् ॥ ४१ ॥

नरवाहो वैश्रवण: तस्य निकेतनं गृहम् ॥ ४२ ॥

बद्धोलूखलं उलूखल बद्धं श्रीकृष्णम् ॥ ४३ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीविजयध्वजतीर्थ विरचितायां पदरत्नावल्यां
टीकायां दशमोऽध्याय: ॥ १० ॥

(विजयध्वजरीत्या एकादशोऽध्याय:)

# एकादशोऽध्यायः

## (विजयध्वजरीत्या द्वादशोऽध्यायः)

[1]श्रीशुक उवाच[-1]

गोपा नन्दादयः श्रुत्वा द्रुमयोः पततो रवम्।
त[2]त्राऽऽजग्मुः कुरु श्रेष्ठ निर्घात[3]भयशङ्किताः॥ १॥

भूम्यां निपतितौ तत्र ददृशु र्यमलार्जुनौ।
बभ्रमु स्त दविज्ञाय लक्ष्यं पतन कारणम्॥ २॥

उलूखलं विकर्षन्तं दाम्ना बद्धञ्च बालकम्।
कस्येदं कुत आश्चर्य मुत्पात [4]इति कातराः॥ ३॥

बाला [5]ऊचु रनेनेति [6-]तिरश्चीन[-6] मुलूखलम्।
विकर्षता मध्यगेन ★ पुरुषाव प्य चक्ष्महि॥ ४॥

न ते तदुक्तं जगृहुः न घटेतेति तस्य [7]तत्।
बालस्यो त्पाटनं तर्वोः केचि त्सन्दिग्ध चेतसः॥ ५॥

---

V. 1- -1. बादरायणि रुवाच 2. V. तत्र 3. M. रव 4 M. भय 5. A प्रो० 6- -6. A,B,G तिर्यग्गत° ★ V. adds here two more padas between 3rd and 4th padas - thus निहतौ यमलार्जुनौ। वृक्षाभ्यां निर्गतौ दिव्यौ । 7. K,W वै।

## श्रीधरस्वामिविरचिता भावार्थदीपिका

एकादशे समागत्य बृन्दावन मथार्भकैः ।
वत्सान् पालयताऽनेन हतौ वत्सबकासुरौ ॥

**गोपा** इति। निर्घातो वज्रपात[1] इति भयेन शङ्किताः॥ १॥

**भूम्यामिति।** तल्लक्ष्यं प्रत्यक्षितः [2-]पुरतो दृश्यमपि[-2] पतनकारणमविज्ञाय बभ्रमुः॥ २॥

लक्ष्यं कारणं दर्शयति - **उलूखलमिति।** भ्रम[3]प्रकारमाह - कस्येदं राक्षसादेः कर्म, कुतो वा कारणात्? [4]अहो! आश्चर्यम्। [5-]उत्पत इति[-5] कातराः भीतास्सन्तः बभ्रमुरित्यर्थः॥ ३॥

**बाला** इति। मध्यगेन वृक्षयोः मध्यगतेन [6-]पतितावित्यूचुः[-6]। न केवलमेतावत्, वृक्षाभ्यां निर्गतौ दिव्यौ पुरुषावपि अचक्ष्महि दृष्टवन्तो वयमिति॥ ४॥

**नेति।** केवलं तार्किकाः [7]ते न जगृहुरेव अन्ये तु सन्देहयुक्तचित्ता बभूवुरिति॥ ५॥

---

1. A. adds स्यात् 2- -2. A. दृश्यं पुरतो दृष्ट्वापि इत्यर्थः । 3. B.J. कारण° 4. A. omits अहो 5- -5. A. उत्पातोऽयमिति 6- -6. A,B,J omit 7. B,J,V omit ते

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

**गोपा** इति। पततोः द्रुमयोः अर्जुनयोः रवं ध्वनिं श्रुत्वा हे कुरुश्रेष्ठ! किं वज्रपातोऽभवदित्येवं भयेन वितर्कयन्तो नन्दादयो गोपाः तत्राऽऽजग्मुः॥ १॥

तल्लक्ष्यं प्रत्यक्षतः पुरतो दृश्यमपि पतन कारणमविज्ञाय बभ्रमुः भ्रान्ता बभूवुः॥ २॥

किं तल्लक्ष्यं पतनकारणं यदज्ञानात् बभ्रमुः? तत्राह - **उलूखलमिति।** एवंविधं बालकमेव पतनकारणं लक्ष्यमविज्ञाय बभ्रमुः इत्यन्वयः। भ्रममेव दर्शयति - कस्येति। इदं तरुनिपातनरूपं कर्म कस्य सम्बन्धि? इदं कुतः कारणात्, अहो आश्चर्यम्। नः उत्पातः इत्येवं [1]भयेन कातराः भीतास्सन्तो बभ्रमुः इत्यर्थः। कस्येति कर्तृसन्देहः। कुत इति निमित्त सन्देहः, उत्पात इति निश्चयः॥ ३॥

एवं बम्भ्रम्यमाणान् प्रति तत्रत्या बाला ऊचुः। किमिति? तिरश्चीनं उलूखलं विकर्षता वृक्षयोः मध्यगतेन अनेन बालेन इदं कर्म कृतं न केवलमेतावत्, अन्यदपि [2-]किञ्चिद्दृष्टमित्याहुः[-2]- वृक्षाभ्यां निर्गतौ दिव्यौ पुरुषावपि अचक्ष्महि दृष्टवन्तो वयमिति॥ ४॥

एवमुक्तानां तेषां मध्ये केचित् केवलतार्किकाः इदं न [3]घटते इति वदन्तः तद्बालकैः भाषितं न जगृहुः न विश्वसितवन्तः अन्येतु बालस्य बालकर्तृके तर्वोः उत्पाटने सन्दिग्धं संशययुक्तं चेतो येषां तथा बभूवुः॥ ५॥

1. K.W. omit भयेन 2- -2. K.W. omit 3. A.B. घटेत

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

हरेः बालक्रीडाचरित चारुतर निरवद्यमहिमश्रवणमननोपासनानि मुक्तिसाधनानि ज्ञानसाधनत्वेन भवन्तीति भावेन तन्माहात्म्यं अस्मिन्नध्याये निरूप्यते। तत्राऽऽदौ पूर्वाध्यायोक्त यमलार्जुन भङ्ग लक्षण महिमान मशेषं वक्ति - **गोपा** इत्यादिना। निर्घातरवशङ्किताः मेघनिर्घोष [1-]शङ्किताः[-1] कस्य आगामि फलसूचकं उत आश्चर्यं सहसा दृश्यमनं यदद्भुतं भविष्य दनिष्टसूचकं अदृष्टमात्र प्रयुक्तं उत्पातः तन्निमित्त भयेन कातराः व्याकुलचित्ताः। उत्पातयति कातरा इति केचित् पठन्ति॥ १, २, ३॥

द्वौ पुरुषौ अचक्ष्महि दृष्टवन्तः॥ ४॥

तदुक्तं बालोक्तम्॥ ५॥

1- -1. Ma omits

उलूखलं विकर्षन्तं दाम्ना बद्धं स्वमात्मजम्।
विलोक्य नन्दः प्रहस[1]द्वदनो विमुमोच ह॥ ६॥

★ क्रीणीहि[2] भोः फलानीति [3-]श्रुत्वा मातर मच्युतः[-3]।
[4]फलार्थी धान्य मादाय ययौ सर्वफलप्रदः॥ ७॥ △

फलविक्रयिणी तस्य च्युतधान्यं करद्वयम्।
फलै रपूरय द्रत्नैः फलभाण्ड मपूरि च॥ ८॥ ०

गोपीभिः स्तोभितो[5]ऽनृत्य द्भगवान्बालव त्क्वचित्।
उद्गायति क्वचिन्मुग्ध स्तद्वशो दारु यन्त्रवत्॥ ९॥

बिभर्ति क्वचिदाज्ञप्तः पीठकोन्मान [6]पादुकम्।
बाहुक्षेपञ्च कुरुते स्वानाञ्च प्रीतिमावहन्॥ १०॥

---

1. V. °सन्बन्धनात् ★ 7th & 8th verses are not found in M. edn. 2. V. °ध्वं भो 3- -3. V. वचः श्रुत्वातु सत्वरः ; K.W. पृष्ट्वा मातरमच्युतः 4. V. कराभ्यां △ These five extra half verses are found in V. edn. as follows फलक्त्वे हि धान्यानि मया नीतानि भूरिशः। **गृहीष्व तवमानेन मानय त्वं फलानि मे ॥ फलविक्रयिणी तस्य वचश्श्रुत्त्व महात्मनः। आयान्त मरविन्दाक्षं करिपोत मिवागतम्॥ प्रेक्षामाणा मुहुःफुल्लैः नयनै रच्युतं तदा।** ○ Two additional verses are found in V. edn. as follows. फलानीमानि सर्वाणि गोपीभ्योऽभ्यददात् प्रभुः। वयस्यैर्व्रजवीथ्यां स क्रीडन् सर्व फलप्रदः॥ उत्तिष्ठन्तौ प्रस्स्वलन्तो चरन्तौ रामकेशवौ। पद्भ्यां गन्तुं शक्नुवन्तौ कथञ्चित्तद्व्रजाङ्गणे॥ 5. M.V. नृत्यन् 6. V. दारुकान्

**श्रीध०** [1-]भगवन्माया विमोहितस्य नन्दस्याऽऽचरितमाह **उलूखलमिति**[-1]॥ ६ (७,८)॥

ज्ञास्यन्ते मामिति शङ्कमानोऽतीव बाल्य मनुकरोति स्म तदाह - **गोपीभि** रिति। स्तोभितः करतालादिना प्रोत्साहितः॥ ९॥

**बिभर्तीति।** इदमानयेत्याज्ञप्तः आनेतुं असमर्थ इव बिभर्ति, केवलं पीठादि [2-]उन्मानं प्रस्थादि[-2]। बाहुक्षेपं करचालनं च॥ १०॥

---

1- -1. V. omits 2- -2. A.B.J omit

**वीर०** अथ भगवन्मायामोहितस्य नन्दस्याऽऽचरितमाह **उलूखलमिति।** प्रहसत् वदनं यस्य स नन्दो विलोक्यं तं दामबन्धादमोचयत्॥ ६॥

अत्र क्वचित् पुस्तकेषु - "क्रीणीहि भोः फलानीति पृष्ट्वा मातरमच्युतः। फलार्थी धान्यमादाय ययौ सर्वफलप्रदः॥ फलविक्रयिणी तस्य च्युतधान्यं करद्वयम्। फलैरपूरयद्रत्नैः फलभाण्डमपूरि च॥ इति [1-]श्लोकद्वयं अधिकं दृश्यते[-1]। तत्र भोः कृष्ण फलानि क्रीणीहीति बन्धं मोचितवता नन्देनोक्तः अच्युतः स्वयं स्वार्गापवर्ग फलदोऽपि केवलं प्राकृतबाल इव फलार्थी सन् मातरं पृष्ट्वा धान्यमञ्जलिना आदाय ययौ॥ ७॥

तथा फलविक्रयणी स्त्री तस्य अच्युतस्य च्युतं धान्यं यस्मात् तत् करयोः द्वयं फलैः अपूरयत्। फलविक्रयिण्याः यत्फलभाण्डं तद्रत्नैः अपूरि, पूरितमभूत्। तत् करद्वयात् च्युतेन धान्येन रत्नात्मकतामापन्नेनफलभाण्डं पूरितमभूदित्यर्थः॥ ८॥

अथ भगवतः कांश्चित् बाल्यानुकारप्रकारान् दर्शयति **गोपीभिरिति।** क्वचित्स्तोभितः उपच्छन्दनेन उद्योगं प्रापितः। [2]करतलादिना प्रोत्साहितो वा उद्गायति सति गोपीजने इति शेषः। दारुयन्त्रवत् दारुनिर्मित पाञ्चालिकावत् तद्वशगः गोपी वश्यः मुग्धैवाऽनृत्यत्। नृत्यन्निति पाठे तद्वशः गोपीजनवशगस्सन् नृत्यन् उद्गायति॥ ९॥

क्वचिदाज्ञप्तः आनयेति नियुक्तः, पीठकादिक मानेतुं असमर्थ इव बिभर्ति उवाह, पीठकं विष्टरं[3] उन्मानं प्रस्थादि। पीठभाजनपादुकमिति पाठे भाजनं कांस्यादिपात्रं तथा बाहुक्षेपं भुजचलनं कुरुते। किं कुर्वन्? गोपीनां प्रीतिमावहन्॥ १०॥

1- -1. A.B. इत्यादि श्लोकाः अधिकाः दृश्यन्ते 2. K. ०ता० 3. K. °रः

**विज०** उन्मानं प्रस्थं पादुकं पादपीठं पादरक्षणं वा॥ ६ - १०॥

दर्शयं स्तद्विदांलोके [1]ह्यात्मनो [2]भक्तवश्यताम्।
व्रज [3]स्योवाह वै हर्षं भगवान् बालचेष्टितैः॥ ११॥ ★

सरित्तीरगतं कृष्णं भग्नार्जुन मथाऽऽह्वयत्।
○ नो[4]पेयातां यदाऽऽहूतौ क्रीडासङ्गेन पुत्रकौ॥
यशोदां प्रेषयामास रोहिणी पुत्रवत्स[6]ला॥ १२॥

क्रीडन्तं [7]सा सुतं बाले रति[8]केलं सहाग्रजम्।
यशोदा[9]ऽजोहवी [10]त्कृष्णं पुत्रस्नेह[11]स्नुतस्तनी॥ १३॥

कृष्ण कृष्णारविन्दाक्ष! तात! [12]एहि स्तनं पिब।
अलं विहारैः [13]क्षुत्क्षान्तः [14-]तद्भवान्भोक्तु मर्हति[-14] ॥ १४॥

हे रामाऽऽगच्छ ताताऽऽशु सानुजः कुल नन्दन!
प्रात रेव कृताऽऽहारः [15-]क्रीडाश्रान्तोऽसि पुत्रक[-15] !॥ १५॥

---

1. A,B,G,M आ° 2. A,B,G,V,M भृत्य 3. M ° स्योद्वाहयन् ह° ★ Here V adds a half verse - गोपीनामन्तिके क्रीडन् भगवान्लोकभावनः। △ This half verse is found A & V edns. रामं च रोहिणी देवी क्रीडन्तौ बालकै र्भृशम्। 4. V °प° 5. V लीला° 6. A,G °लाम् 7. M स्व° 8. V वेगं 9. K,V चाह्वयत् 10. M,V वीक्ष्य 11. M स्नुत 12. V चै° 13. V क्षुच्छ्रान्तः; W क्षुद्भ्रान्तः 14. A,G क्रीडाश्रान्तोऽसि पुत्रक! 15- -15. A,G तद्भवान् भोक्तुमर्हति।

**श्रीध०** **दर्शयन्निति।** तत् ऐश्वर्यं विदन्ति ये तेषां तद्विदाम्। एवं व्रजस्य हर्षं उवाहेति॥ ११ - १५॥

**वीर०** तद्विदां भगवद्वैभववेदिनां भक्त वश्यताञ्च दर्शयन्। एवं बालचेष्टितैः व्रजस्य व्रजस्थ जनस्य हर्षमुवाह आवहत्॥ ११॥

अथ तन्मायामोहितयोः यशोदारोहिण्योः कानिचिदाचरितान्याह - **सरिदित्यादिना**। भग्नौ अर्जुनौ येन तं सरितो यमुनायाः तीरस्थं[1] कृष्णमाह्वयत् एहीत्याहूतवती। यदा आहूतौ[2] क्रीडासङ्गेन नागच्छतां[3] तदा पुत्रवत्सला रोहिणी यशोदां प्रेषयामास॥ १२॥

सा रोहिण्या[4] प्रेषिता यशोदा अतिवेलं वेलां भोजनादिवेलां, अतिक्रान्तं बालकैस्सह क्रीडन्तं सरामं सुतं कृष्णमवलोक्य स्नेहेन स्नुतौ स्तनौ यस्यास्तथा भूता आजुहाव॥ १३॥

आह्वान प्रकारमेव दर्शयति - **कृष्णेति**[5] ॥ १४, १५॥

---

1. A.B. गतं 2. A.B. add अपि 3. A.B °च्छेतां 4. K.W ° णी ° 5. A.B. add सार्धैः चतुर्भिः

**विज०** तद्विदां भगवानेव अयं अवतीर्ण इति जानतां नारदादीनाम्॥ ११॥

नोपेयातां समीपं नाऽऽगतौ। अजोहवीत् आह्वयामास॥ १२ - १५॥

**प्रतीक्षते त्वां[1] दाशार्ह[2] भोक्ष्यमाणो व्रजाधिपः।**
**एह्यावयोः प्रियं[3] देहि स्वगृहान्यात[4] बालकाः॥ १६॥**

**धूलिधूसरिताऽङ्ग[5] स्त्वं! तात[6] मज्जन मावह! ★**
**जन्मर्क्षन्तेऽद्य[7] भवतो[8] विप्रेभ्यो देहि गा श्शुचिः॥ १७॥**

**पश्य पश्य वयस्यां स्ते मातृमृष्टा स्व[9] लङ्कृतान्।**
**त्वञ्च स्नातः कृताहारो विहरस्व स्वलङ्कृतः॥ १८॥**

**इत्थं यशोदा तमशेष शे[10]खरं मत्वा सुतं स्नेहनिबद्धधी नृप।**
**हस्ते गृहीत्वा सहराम मच्युतं नीत्वा स्ववाटं कृतवत्यथोदयम्॥ १९॥ ★**

**[11-]श्री शुक उवाच[-11]**

**गोप वृद्धा महोत्पाता ननुभूय बृहद्वने।**
**नन्दादय स्समागम्य व्रजकार्य ममन्त्रयन्॥ २०॥**

1. K.W. °वां° 2. K.M.W °र्हो 3. A.B.G.M. धेहि 4. V. यान्ति 5. K.W. तं तेऽङ्ग 6. A.B.G. पुत्र! ★ तिन्त्रिणी फलसंयुक्तं स्नानीयं तैलसंयुतम्। कल्पयित्वा प्रतीक्षेऽहं चिरं चञ्चल चेष्टितः॥ These two additional half verses are found in V edn after the first half of 17th verse 7. A.B.G °मद्य; K.W. °ह्याद्य 8. M भविता; V. भवति 9. K.W. °नल° 10. V. नाथं * The following verse is found in M. edition after the verse beginning with इत्थं यशोद:- अथ नन्द स्स माहूय गोपा निद मभाषत। श्वोऽतो बृन्दावनं योमो यत्ता भवथ मा चिरम्॥ 11- -11. A.G. omit

**श्रीध०** ★ "तं तु बृन्दावनं रन्तु मन्तः कृष्णेन यन्त्रिताः। स्वतन्त्रा इव नन्दाद्या मन्त्रमेत ममन्त्रयन्" ॥ **गोपवृद्धा** इति। व्रजकार्यं गोकुलस्य हितकृत्यम्॥ १६ - २०॥

★ श्रीधरीयोऽयं श्लोकः।

**वीर०** [1]दशार्हो व्रजाधिपो नन्दो भोक्ष्यमाणो वां भवन्तौ प्रतीक्षते। युवयोः आगमनं प्रतीक्षमाण आस्ते। आवयोः रोहिण्याः स्वस्याश्च प्रियं देहि। हे बालकाः! रामकृष्णानुचराः स्वगृहान् प्रति गच्छत॥ १६॥

[2] मज्जनं स्नानमावह कुरु। अद्य अस्मिन् अहनि भवतो [3]जन्मर्क्षं जन्मनक्षत्रम्। अतः शुचिः स्नातः विप्रेभ्यो गाः देहि॥ १७॥

मातृभिः स्नापितान् स्वलङ्कृतांश्च वयस्यान् [4]त्वत्सवयस्कान् पश्य त्वमपि स्नातः स्वलङ्कृतः, कृतः आहारो येन तथा भूतो विहरस्व॥ १८॥

इत्थम् अशेषाणां बालानां शेखरं श्रेष्ठं ब्रह्मादिभ्योऽपि श्रेष्ठमिति वा। तथाभूतमपि तं केवलं सुतं मत्वा स्नेहेन निबद्धा धीः यस्याः तथाभूता हे नृप! सरामं अच्युतं हस्ते गृहीत्वा स्ववाटं स्वगृहं नीत्वा अथोदयं माङ्गलिकं कर्म कृतवती चकार॥ १९॥

एवं स्थिते कदाचित् गोपवृद्धाः पूतनाशकटादिकृतान् महोत्पातान् अनुभूय समागम्य समेत्य व्रजकार्यं गोकुलस्य हितकृत्यं आमन्त्रयन् आलोचितवन्तः बृन्दावनं गन्तु मिच्छता कृष्णेन अन्तरात्मना प्रेरिता आमन्त्रयन्निति भावः ॥ २० ॥

---

1. A.B दाशार्ह! 2. A.B add अहो 3. A.B omit जन्मर्क्षं 4. A.B समानव°

**विज०** व्रजाधिपः नन्दगोपः धेहि देहि। हे बालकाः ॥ १६ ॥

धूलिधूसरिताङ्गः धूलिधूसरित सर्वं शरीरः ॥ १७, १८ ॥

स्ववाटं स्वव्रजम् ॥ १९, २० ॥

**:- बृन्दावन प्रस्थानकथाप्रारम्भः :-**

**तत्रोपनन्द नामाऽह गोपो ज्ञान वयोऽधिकः।**
**देशकालार्थतत्त्वज्ञः प्रियकृद्राम कृष्णयोः ॥ २१ ॥**

**उत्थातव्य मितोऽस्माभि र्गोकुलस्य हितैषिभिः।**
**आयान्त्यत्र महोत्पाताः [1]प्रजानां नाशहेतवः ॥ २२ ॥**

**मुक्तः कथञ्चि द्राक्षस्या बालघ्न्या बालको[2]ऽप्यसौ।**
**हरे रनुग्रहान्नून मनश्चोपरि नाऽपतत् ॥ २३ ॥**

**चक्र वातेन नीतोऽयं दैत्येन विपदं वियत्।**
**शिलायां पतित स्तत्र परित्रात स्सुरेश्वरैः ॥ २४ ॥**

**यन्न म्रियेत द्रुमयो रन्तरं प्राप्य बालकः।**
**असा वन्यतमो वाऽपि [3-]तत्राऽप्य[-3]च्युत [4]रक्षणम् ॥ २५ ॥**

---

1. B,G बालानां 2. A,B,G,M ह्यसौ 3- -3 B,G तदप्य° V तत्राप्य° 4. V रक्षितम्।

**श्रीध० चक्रवातेनेति ।** विपदं वीनां पक्षिणां पदं विहारस्थानं, वियत् [1] नभः विगतप्रतिष्ठं वा, [2-] अपरिच्छिन्न मित्यर्थः [-2] ॥ २१ - २४ ॥

**यदिति ।** अन्यतमो वा कश्चिद्बालः अच्युतेनैव रक्षणमासीत् ॥ २५ ॥

1. V omits नभः 2- -2. A,B,J omit

**वीर०** तत्रोपनन्दनामा कश्चिद्गोप: स च गोपानां मध्ये ज्ञानेन वयसा च अधिकः देशकालानुगुण कर्तव्य प्रयोजनाभिज्ञः रामकृष्णयोः प्रियकृत्तावन्नन्दादीनाह ॥ २१ ॥

उक्तमेवाह **उत्थातव्यमित्यादिना ।** 'तच्छ्रुत्वे' त्यतः प्राक्तनेन । गोकुलस्य हितमिच्छद्भिः अस्माभिः इतो व्रजात् उत्थातव्यं निर्गन्तव्यम् । प्रजानां अत्रत्यानां नः नाशहेतवो बहवः उत्पाताः आयान्ति आयास्यन्ति ॥ २२ ॥

अतीतास्त्वपरोक्षदृष्टा एवेत्याह - **मुक्त** इति । कथञ्चित् दैववशात् मुक्तः तथा भगवदनुग्रहात् अनः शकटमपि बालस्योपरि नापतत् ॥ २३ ॥.

तथा चक्रवातेन वीनां पक्षिणां पदं विहारस्थानं वियदाकाशं प्रति अयं बालो दैत्येन नीतः, वियदाकाशं ततो विपदम् आपदं च नीत इति वा । सुरेश्वरैः अस्मदिष्टदैवतैः परित्रातः ॥ २४ ॥

कुतः यत् यस्मात् द्रुमयोः [1] अर्जुनयोः पततोः अन्तरं मध्यं प्राप्यापि [2] असौ बालकः अन्यतमो वाऽपि कश्चित् न मृतः तच्चाप्यच्युतेन [3] अस्मदिष्ट दैवतेन [4] रक्षणमासीत् ॥ २५ ॥

---

1. A,B उभयोः 2. A,B omit अपि 3. A,B तदप्य ° 4. A,B add एव

**विज०** तत्र नन्दादिषु ॥ २१ ॥

इत उत्थातव्यम् ॥ २२ ॥

अनश्च शकटश्च ॥ २३, २४ ॥

असौ कृष्णो बालकः कृष्णादन्यतमो बालको न म्रियेत इति यत् तदप्यच्युत रक्षणम् अन्यबालकस्य मरणाभावः ॥ २५ ॥

याव दौत्पातिकोऽरिष्टो व्रजं नाऽभिभवे दितः।
ताव द्बाला नुपादाय यास्यामोऽन्यत्र सानुगाः ॥ २६ ॥

वनं बृन्दावनं नाम पशव्यं नव काननम्।
गोपगोपीगवां सेव्यं पुण्याद्रि तृणवीरुधम् ॥ २७ ॥★

तत्तत्राऽद्यैव यास्याम श्शकटान् युङ्क्त[1] मा चिरम्।
गोधना न्यग्रतो यान्तु भवतां यदि रोचते ॥ २८ ॥

श्रीशुक उवाच
तच्छ्रुत्वैकधियो गोपाः साधु साध्विति वादिनः।
व्रजान्[2] स्वान्स्वा न्समायुज्य[3] ययू रूढपरिच्छदाः ॥ २९ ॥

वृद्धान् बालान् स्त्रियो राजन् सर्वोपकरणानि[4] च।
अनस्स्वारोप्य गोपाला यत्ता आत्तशरासनाः ॥ ३० ॥

---

★ तच्छ्रुत्वैकधियो गोपाः सर्वे नन्दपुरोगमाः। उपनन्दवचो राजन् प्रतिनन्द्य गृहा न्ययुः ॥ The above verse is found in M edition, after the verse beginning with वनं बृन्दावनम्। 1.M. Ma युङ्ध्य 2. M रथान् 3. V °यो° 4. M स्क°

**श्रीध० यावदिति।** अरिष्टः अनर्थः। इतः स्थानात् ॥ २६ ॥

**वनमिति।** पशव्यं पशुभ्यो हितम्। नवानि काननानि स्थलान्तराणि[1] विद्यन्ते यस्मिन् तत् ॥२७,२८॥

**तदिति।** एकधियः विप्रतिपत्तिरहिताः। व्रजान् शकटव्यूहान्[2] रूढाः शकटेष्वारोपिताः[3] परिच्छदाः यैस्ते ॥ २९ ॥

**वृद्धानिति।** यत्ताः कृतप्रयत्नाः ॥ ३० ॥

---

1. A.B.J. अवान्त° 2. A. यूथान् 3. A.B.J. °टादिष्वा०

**वीर०** यावदुत्पात प्रयुक्तोऽरिष्टोऽनर्थो व्रजं नाभिभवेत् न पीडयेत् तावदेव बालानादाय अन्यत्र[1] यास्यामः ॥२६॥

क्व यास्याम इत्यत्राह — **वनमिति।** यत् बृन्दावनाख्यं वनं तत्र अद्यैव यास्यामः। कथम्भूतम्? पशव्यं पशुभ्यो हितं नवानि काननानि पर्यन्त वनानि यस्मिन् गोपादीनां सेव्यं वासयोग्यं पुण्याः रमणीया अद्र्यादयो यस्मिन् ॥ २७ ॥

शकटान् युङ्क्त प्रस्थानयोग्यान् कुरुत। गोधननि च अग्रतो यान्तु। यदि मदुक्तं भवतां रोचते तर्ह्युत्थातव्यमिति शेषः ॥ २८ ॥

तर्हि गोधनानि यान्त्विति तावदुपनन्दवचः श्रुत्वा गोपा एकधियः विप्रतिपत्तिरहितः व्रजान् शकटव्यूहान् समानीय रूढाः शकटेषु आरोपितः परिच्छदाः उपकरणानि यैस्ते, ययुः जग्मुः ॥ २९ ॥

तदेव प्रपञ्चयति — **वृद्धानिति।** हे राजन्! वृद्धादीन्[2] अनस्सु शकटेषु आरोप्य यत्ताः[3] सन्नद्धाः आत्तानि गृहीतानि शरासनानि धनूंषि यैस्तथा भूताः ॥ ३० ॥

---

1. K.W. omit अन्यत्र 2. K.W. omit वृद्धादीन् 3. A.B. omit यत्ताः

**विज०** औत्पातिकः उत्पातसम्बन्धी अनर्थकरः इतो बृहद्वनात् तावत् ततः पूर्वमेव ॥ २६ ॥

पशव्यं पशुभ्यो हितं, पुण्याद्रयः पुण्यवृक्षाः तृणानि वीरुधगुल्मानि यत्र तत्तथा तद्वीरुधशब्दोऽकारान्तोऽप्यस्ति। "पर्वताद्री नगावगौ" (अम.को. 3-175) इति च ॥ २७ ॥

युङ्ध्वं योगं कुरुध्वम् ॥ २८ ॥

तदुपनन्दस्य वचनं एकधियः एकस्मिन्नर्थे गतबुद्धयः[1]। रूढपरिच्छदाः शकटाधिष्ठित भाण्डादिसाधनाः ॥ २९ ॥

अनस्सु शकटेषु ॥ ३० ॥

---

1. A.B. नत

गोधनानि पुरस्कृत्य शृङ्गाण्यापूर्य सर्वतः।
तूर्यघोषेण महता [1-]ययुः सह पुरोहिताः[-1]॥ ३१॥

गोप्यो रूढरथा [2-]नूत्नकुच[-2]कुङ्कुमकान्तयः।
कृष्णलीलां जगुः [3]प्रीता [4]निष्ककण्ठ्यस्सुवाससः॥ ३२॥

[5]तथा यशोदारोहिण्यावेकं शकटमास्थिते।
रेजतुः कृष्णरामाभ्यां तत्कथा श्रवणोत्सुके[6]॥ ३३॥

बृन्दावनं [7]सम्प्रविश्य सर्वकालसुखावहम्।
तत्र चक्रुर्व्रजावासं शकटै रर्धचन्द्रवत्॥ ३४॥

बृन्दावनं गोवर्धनं यमुना पुलिनानि च।
वीक्ष्यासी दुत्तमा प्रीती राम[8]माधवयोर्नृप॥ ३५॥

---

1. ते ययुस्सपुरोहिताः K,W ययुः सह परिच्छदाः 2. M नृत्यत्कुच 3. V प्रीत्या 4. M स्निग्ध 5. V तदा 6. K,W °त्सवे 7. K,W समा 8. K,W केशवयो°

**श्रीध०** **गोप्य** इति। नूत्नैः[1] कुचगतैः कुङ्कुमैः कान्तिर्यासां ताः, नूत्नेषु कुचेषु यत्कुङ्कुमं तेन कान्तिः यासामिति [2]वा॥ ३१-३३॥

**बृन्दावनमिति**। व्रजावासं गोकु[3]लवसति स्थानम्॥ ३४,३५॥

---

1. A adds नवीनैः 2. V omits वा 3. A °लस्य

**वीर०** [1]शृङ्गाणि विषाणान् आपूर्य मुखमारुतैः ध्वनयित्वा महता तूर्यघोषण सह ययुः[2] ॥ ३१॥

रूढाः आरूढाः रथाः याभिः [3]नूत्नैः कुचगतैः कुङ्कुमैः कान्तिः यासां, नूत्नेषु कुचेषु कुङ्कुमं तेन कान्तिः यासां वा, निष्काः पतकाख्याः कण्ठेषु यासां, स्निग्धकण्ठ्य इति पाठे मधुरस्वनाः प्रीताः कृष्णस्य लीलां जगुः॥ ३२॥

एकं शकटमास्थिते आरुह्य स्थिते रामकृष्णाभ्यां सह रेजतुः, ताभ्यां सहैकं शकटमास्थिते रेजतुरिति वाऽन्वयः। कथम्भूते ? तस्य कृष्णस्य कथायाः श्रवणे उत्सवः औत्सुक्यं ययो स्ते॥ ३३॥

अर्धचन्द्रवत् अर्धचन्द्रतुल्य सन्निवेशं व्रजावासं गोकुलस्थानं चक्रुः॥ ३४॥

हे नृप! वीक्ष्य सञ्चरतोः अवस्थितयो र्वेति शेषः॥ ३५॥

---

1. A,B add गोपाः गृहीतधनुष्काः 2. A,B add सह पुरोहिताः सगुरवः जग्मुरित्यर्थः। 3. K नूलाः

**विज०** नृत्यत्सु कुचेषु कुङ्कुमादिकान्तिः यासां तास्तथा। स्निग्धकण्ठच कण्ठगुणोपेताः॥ ३१,३२।

अर्धचन्द्रवत् अर्धचन्द्राकारवत्॥ ३३ - ३५॥

**एवं व्रजौकसां प्रीतिं यच्छन्तौ बालचेष्टितैः[1]।**
**कलवाक्यै[2]स्स्व कालेन वत्स पालौ बभूवतुः॥ ३६॥**

**अविदूरे व्रजभुव स्सहगोपालबालकैः[3]।**
**चारयामासतु र्वत्सा न्नानाक्रीडापरिच्छदौ॥ ३७॥**

**★क्वचि द्वादयतो वेणुं[4] क्षेपणैः क्षिपतः क्वचित्।**
**क्वचित्पदैः[5] किङ्किणीभिः क्वचित्कृत्रिमगोवृषैः॥ ३८॥**

**वृषाय माणौ नर्दन्तौ युयुधाते परस्परम्।**
**अनुकृत्य रुतैर्जन्तूंश्चेरतुः प्राकृतौ यथा॥ ३९॥**

**:- वत्सासुर घट्ट :-**

**कदाचि द्यमुनातीरे वत्सांश्चारयतोः स्वकैः।**
**वयस्यैः कृष्णबलयो र्जिघांसु र्दैत्य आगमत्॥ ४०॥**

---

1. A. °तौ 2. A.K.W °वाक्यौ स्व°; M वाक्यैश्च 3. A.B.G.V. दारकैः * Here V. edition reads four half verses as follows क्वचि द्वादयतो वेणुं क्षेपन्तो क्षेपणैः क्वचित्। (क्वचित्पदैः किङ्किणीभिः क्षिपतश्च क्वचित्पुनः) वृषायमाणौ नर्दन्तौ क्वचित्कृत्रिमगोवृषैः। गोपै रुद्धानुचरितौ युयुधाते परस्परम्। 4. M वेणून् 5. A.B.G. °त्पादैः

**श्रीध० एवमिति।** स्वकालेन [1-]वत्सपालन योग्य[-1]कालेन॥ ३६॥

कौमारलीलां निरूपयति **अविदूर** इत्यादिना॥ ३७॥

**क्वचिदिति।** क्षेपणैः बिल्वामलकादिभिः [2-]क्षिपतः दूरे चालयतः[-2]। किङ्किणी युक्तैः पादैः क्षिपतस्ताडयतः[3]॥ ३८॥

**वृषायमाणाविति।** वत्सपाला एव [4]द्विवाः। [5]कृष्णकम्बलादि पिहिताः [6]वृषाणुकारिणो नर्दन्ति[6]। तैस्सह स्वयमपि तथैव वृषायमाणौ नर्दन्तौ तदनुकारिशब्दान् कुर्वन्तौ युयुधाते इत्यर्थः॥ रुतैः शब्दैः जन्तून् हंसमयूरादीन्॥ ३९,४०॥

---

1- -1. B.J.V. तद्योम्य० 2- -2. V. omits 3. A adds वृक्षादीनिति शेषः। 4. V. वृषाः 5. A.B.J. omit कृष्ण 6- -6. A.B.J. वृषरूप मनुकुर्वन्ति

**वीर०** कलान्यव्यक्त मधुराणि वाक्यानि ययो स्तौ रामकृष्णौ बालचेष्टितैः व्रजौकसां प्रीतिमावहन्तौ स्वकालेन कौमारप्राप्ति योग्यकालेन वत्सपालौ बभूवतुः॥ ३६॥

अथ कौमारलीलां वर्णयति - **अविदूर** इत्यादिना [1]यावत्समाप्ति[1]। व्रजभुवः बृन्दावनस्थ व्रजभूमेरविदूरे समीपे नानाविधाः क्रीडापरिच्छदाः क्रीडोपकरणानि ययोस्तौ वत्सान् चारयामासतुः॥ ३७॥

तदेव प्रपञ्चयति - वादयतः क्षिपत इति च लटो द्विवचनम्। क्षेपणैः बिल्वामलकादिभिः ताडन साधनैः [2]गोपालकान् क्षिपतः ताडयतः क्वचिच्च किङ्किणीयुक्तैः पदैश्च क्षिपतः क्वचित्कृत्रिम गोवृषैः जानुभ्यां हस्ताभ्यां च भुवि [3]चरद्भिः कृष्णकम्बलादि[4] पिहिताङ्गैः वृषानुकारिभिः तथैव [5]नर्दद्भिः गोपैः सह स्वयमपि वृषायमाणौ तदनुकारिशब्दान् कुर्वाणौ मिथो युयुधाते, युद्धं कुर्वति इत्यर्थः। तथा रुतैः शब्दैः जन्तून् हंसमयूरादीन् अनुकृत्य यथाप्राकृतौ बालौ तद्वच्चेरतुः॥ ३८, ३९॥

अथ वत्सासुर वधात्मकं चेष्टितं अनुवर्णयति — **कदाचिदित्यादिना।** स्वकैः वयस्यैः सह कृष्णबलयोः वत्सान् चारयतोः सतोः तौ हन्तुमिच्छुः दैत्य आजगाम॥ ४०॥

---

1- -1. K.W. omit 2. A.B. गोपबाल० A.B. सञ्च० 4. A.B. ०दिना 5. A.B. नदद्भिः

**विज०** अविदूरे समीपे॥ (३६), ३७॥

क्षेपणैः अश्मयन्त्रैः पदैः पादैः कृत्रिम गोवृषैः मृद्दारुकृत गोवृषैः॥ ३८॥

वृषायमाणौ वृषवद्वर्धमानौ नर्दन्तौ वृषभशब्दं कुर्वन्तौ अनुकृत्य विडम्ब्य॥ ४०॥

**तं वत्सरूपिणं वीक्ष्य वत्सयूथगतं हरिः।**
**दर्शयन्बलदेवाय शनै र्मुग्ध इवाऽऽसदत्॥ ४१॥**

गृहीत्वाऽऽपरपादाभ्यां सहलाङ्गूल मच्युतः।
भ्रामयित्वा कपित्थाग्रे प्राहिणोद्गतजीवितम्॥ ४२॥

सकपित्थै र्महाकायः पात्यमानैः पपात ह।
तं वीक्ष्य विस्मिता बाला श्शशंसु स्साधु साध्विति।
देवा श्[1]चोपरि सन्तुष्टा व[2]वर्षुः पुष्पस[3]न्ततिम्॥ ४३॥

-: बकासुरवधघट्टः :-

तौ वत्स पालकौ भूत्वा सर्वलोकैकपालकौ।
सप्रातराशौ गोवत्सां श्चारयन्तौ विचेरतुः॥ ४४॥

स्वं स्वं वत्सकुलं सर्वे पा[4]लयिष्यन्त एकदा।
गत्वा जलाशयाभ्याशं पाययित्वा पपुर्जलम्॥ ४५॥

---

1. A,B,G श्च 2. A,B,G बभूवुः 3. A,B,G,M,V. वर्षिणः 4. A,B,G,M,V °य°

**श्रीध०** **तमिति।** मुग्ध इवाजानन्निव आसदत् समीपमागमत्॥ ४१॥

**गृहीत्वेति।** अपरपादाभ्यां सह लाङ्गूलं यथा भवति तथा गृहीत्वा॥ ४२, ४३॥

**ताविति।** सर्वेषां लोकानां एकौ मुख्यौ पालकौ प्रातराशः प्रातर्भोज्यं अन्नं ते[1]न सहितौ॥ ४४॥

**स्वमिति।** अभ्याशं समीपम्॥ ४५॥

---

1. A,B,J तत्स०

**वीर०** तं दैत्यं वत्सरूपधरं वत्ससमूहान्तःप्रविष्टं वीक्ष्य ज्ञात्वा बलदेवाय दर्शयन् स्वयं शनैः मुग्ध इव अनभिज्ञ इ[1]व[2] समीपे जगाम॥ ४१॥

अपरपादाभ्यां सह लाङ्गूलं पुच्छं गृहीत्वा तत एव गतं जीवितं जीवनं यस्य तं, कपित्थस्य वृक्षस्याग्रे प्राहिणोत् उदक्षिपत्॥ ४२॥

महाकायत्वेन दुर्भरत्वात् वोढुम् अशक्तैः पात्यमानैः कपित्थाग्रैः करणैस्सह तौ भुवि पातितं पतितम् अवलोक्य साधु साध्विति शशंसुः॥ ४३॥

अथ बकासुरवधात्मकं चरित्रमाह - **तावित्यादिना।** सर्वलोकैकपालकावपि वत्सपालौ भूत्वा एकदा प्रात: भोक्तव्य पर्युषितान्न सहितौ गवां वत्सान्चारयन्तौ विचेरतु:॥ ४४॥

सर्वे रामकृष्णप्रधाना: गोपाला: स्वं स्वं वत्ससमूहं पालयिष्यन्त: तावत् जलाशयस्याभ्याशं समीपं गत्वा वात्सान् जलं पाययित्वा स्वयमपि पपु: अपिबन्॥ ४५॥

---

1. A,B °वत् 2. A,B add तत्

**विज०** अपरपादाभ्यां प्राहिणोत्॥ ४१,४२॥

कपित्थै: कपित्थशाखायुक्तफलै: कृष्णोपरि॥ ४३॥

सप्रातराशौ प्रातर्भोजनसहितौ॥ ४४॥

जलाशयाऽभ्याशं जलस्थानं महासुर इत्यर्थ:। "स्थानेऽभिप्राय आशय:"(वैज.को. 7-5-17) इति॥ ४५॥

**ते तत्र ददृशु र्बाला महासत्त्व मवस्थितम्।**
**तत्रसु र्वज्र[1]निर्भिन्नं गिरे[2]: शृङ्ग मिव च्युतम्॥ ४६॥**
**स वै बको नाम महा नसुरो बक रूप धृत्[3]।**
**आगत्य स[4]हसा कृष्णं तीक्ष्ण तुण्डोऽग्रसद्बली॥ ४७॥**
**कृष्णं महा[5]बकग्रस्तं दृष्ट्वा रामादयोऽर्भका:।**
**बभूवुरिन्द्रियाणीव विना प्राणै[6]: विचेतस:॥ ४८॥**
**तं तालुमूलं प्रदहन्तमग्निव द्गोपालसूनुं पितरं जगद्गुरो:।**
**चच्छर्द सद्योऽतिरुषाऽक्षतं बक स्तुण्डेन हन्तुं पुनरभ्यपद्यत॥ ४९॥**
**तमापतन्तं स निगृह्य तुण्डयो र्दोर्भ्यां बकं कंससखं सतां ग[7]ति:।**
**पश्यत्सु बालेषु ददार लीलया मुदावहो वीरणवद्दिवौकसाम्॥ ५०॥**

---

1. K,W निर्भिन्न; M सम्भिन्न; V भिन्नस्य 2. K,W °रिशृ° 3. B,G,M °क् 4. A,M तरसा 5. M °ऽसुर 6. A,B,G,K,W °णं 7. B,G पति:

**श्रीध० कृष्णमिति।** राम आदिर्येषां ते। [1-]अतद्गुणसंविज्ञान बहुव्रीहिः। तस्मात्[-1] न तु राम [2-]इत्यर्थो बोध्यः[-2] ॥ ४६ - ४९ ॥

**तमिति।** तुण्डयोः चञ्च्वोः, वीरणवत् अग्रन्थितृण विशेषवत् ॥ ५० ॥

---

1- -1. A,B,J omit 2- -2. A,B,J omit

**वीर०** तत्राऽवस्थितं सत्त्वं जन्तुं ददृशुः तत्रसुः अभिभयुश्च। कथम्भूतम्? वज्रेण निर्भिन्नं अत एव च्युतं गिरेः शृङ्गमिव स्थितम् ॥ ४६ ॥

स वै सत्त्वः बकाख्यो महान् असुरो बकरूपधरः। सहसेति आकस्मिकविमर्श द्योतकम् अव्ययम्। तीक्ष्णतुण्डो निशित चञ्चुः बली कृष्णं अग्रसत् ॥ ४७ ॥

प्राणं विना इन्द्रियाणीव, कृष्णं विना विचेतसः अचेतनप्राया बभूवुः। रामादय इत्यतद्गुणसंविज्ञान[1]बहुव्रीहिः। न तु रामः [2]इत्यर्थः ॥ ४८ ॥

जगद्गुरोः ब्रह्मणः पितरमपि लीलया गोपाल सूनुं अग्निवत्तालुमूलं प्रदहन्तं [3]तं कृष्णं सद्य एव चच्छर्द उदगिरत्, तं अक्षतं कृष्णं तुण्डेन हन्तुं रुषा पुनरभ्यपद्यत अभिमुखं आपद्यत ॥ ४९ ॥

स कृष्णः तमापतन्तं कंससखं [4-]कंस हितकरं[-4] बकं निगृह्य हुङ्कारेण निवार्य बालेषु पश्यत्सु सत्सु दोर्भ्यां लीलया तुण्डयोः चञ्च्वोः ददार विदारितवान्। चञ्च्वोः नितरां गृहीत्वा ददारेति वा अन्वयः। [5]कथम्? वीरणवत् ग्रन्थिरहिततृणविशेषवत्। कथम्भूतः? सतां [6]भक्तानां गतिः स्वप्राप्त्युपायः दिवौकसां मुदमावहतीति तथा। [7-]तद्वधेन देवानां मुदमुत्पादयामासेत्यर्थः[-7] ॥ ५० ॥

---

1. A,B °नो 2. K,W omit इत्यर्थः। 3. A,B omit तं 4- -4. K,W omit 5. K,W omit कथम्? 6. K,W omit भक्तानां 7- -7. K,W omit

**विज०** महासत्त्वं महान् सत्त्वः पराक्रमो व्यवसायो वा यस्य स तथा तम्। "सत्त्वो स्त्री जन्तुषु क्लीबे व्यवसाये पराक्रमे। आत्मभावे पिशाचे च द्रव्ये सत्ता स्वभावयोः" (वैज०.को. 6-5-93) इति यादवः ॥ ४६ ॥

स महासत्त्वो महासुरो वै एव। "स्युरेवन्तु पुनर्वैवेत्यव धारण वाचकाः" (अम.को. 3-427) इत्यमरः ॥ ४७ ॥

विचेतसः ज्ञानहीनाः पाषाणकल्पाः ॥ ४८ ॥

जगद्गुरोः हिरण्यगर्भस्य पितरं अक्षतं पुनः अतिरुषा तुण्डद्वयेन कृष्णं हन्तुं अभ्यपद्यत॥ ४९॥

कटस्य उपादानं तृणं वीरणम्। "वीरणं श्रीतृणं विदुः" (वैज.को. 3-3-231) इति॥ ५०॥

**तदा बकारिं सुरलोक वासिन स्समाकिर न्नन्दन मल्लिकादिभिः।**
**समीडिरे चाऽऽनकशङ्खसंस्तवै स्तद्वीक्ष्य गोपालसुता विसिस्मिरे॥ ५१॥**

**मुक्तं बकाऽऽस्या दुपलभ्य बालका[1] रामादयः प्राण मिवैन्द्रियो गणः।**
**स्थानागतं[2] तं परिरभ्य निर्वृताः प्रणीय वत्सान् व्रज मेत्य तज्जगुः॥ ५२॥**

**श्रुत्वा तद्विस्मिता गोपा गोप्यश्चाऽति प्रियादृताः।**
**प्रेत्याऽऽगत मिवौत्सुक्या दैक्षन्त तृषितेक्षणाः॥ ५३॥**

**अहो बताऽस्य बालस्य बहवो मृत्यवोऽभवन्।**
**अप्यासी द्विप्रियं तेषां कृतं पूर्वं यतो भयम॥ ५४॥**

**अथाऽप्यभिभवन्त्येनं नैवैते[3] घोरदर्शनाः।**
**जिघांसयैन मासाद्य नश्यन्त्यग्नौ पतङ्ग वत्॥ ५५॥**

---

1. K,W दारकाः ; V बालकं 2. A प्रत्यागतं 3 A,B,G,M नैव ते

**श्रीध० तदेति।** समीडिरे तुष्टुवुः आनकैः पटहैः[1] शङ्खैः अन्यैश्च संस्तवैस्सह॥ ५१॥

**मुक्तमिति।** स्वस्थानमागतं प्राणमिव कृष्णं च प्रणीय एकीकृत्य॥ ५२॥

**श्रुत्वेति।** अति प्रियेण अति[2] प्रीत्या आदृताः सादराः प्रेत्याऽऽगतामिव लोकान्तरादाऽऽगतमिव तृषितानि अतृप्तानि अमृतं पिबन्तीव ईक्षणानि येषां ते॥ ५३॥

**अहो** इति। 'अहो बत' इत्यादिश्लोकत्रयस्य 'इति नन्दादयः' इत्यनेन अन्वयः। अपि एव मपि तेषामेव अनिष्ट मासीत्, यतः तैः पूर्वं अन्येषां भयं कृतम्॥ ५४॥

**अथेति।** अथ घोरदर्शनाः अपि नाभिभवन्ति न धर्षयन्ति॥ ५५॥

---

1. A,B,J omit पटहैः 2. B,J,V omit अति

**वीर०** तदा नन्दनवनजाभि:[1] मल्लिकादिभि: बकारिं कृष्णं समाकिरन्। भेरीशङ्खरवसहितै: स्तोत्रै: तुष्टुवुश्च। गोपालसुतास्तु [2]बकवधं वीक्ष्य[-2] नितरां विस्मिता बभूवु:॥ ५१॥

स्वस्थानं प्रत्यागतं प्राणमिन्द्रियाणां गण इव बकस्य मुखान्मुक्तं कृष्णं प्राप्य आलिङ्ग्य च सुखिता:, वत्सान् प्रणीय एकीकृत्य व्रजमागत्य तद्बकासुरवधात्मकं कर्म गोपेभ्यो जगदु:॥ ५२॥

तद्गोपबालगदितं[3] श्रुत्वा विस्मिता: अतिप्रियेणाऽऽदर युक्ता: आगत्य प्रेत्यागतमिव लोकान्तरादागत मिव तृषितानि अतृप्तानि अमृतं पिबन्तीव ईक्षणानि येषां तथाभूता: औत्सुक्यात् ऐक्षन्त अपश्यन्॥ ५३॥

'अहो' इत्यादि श्लोकत्रयस्य 'इति नन्दादय:' इत्युत्तरत्रान्वय:। अहो इत्याश्चर्ये। बतेति खेदे। तत्र खेद हेतुं विशदयन्ति। अस्य बालस्य मृत्युहेतवो बहवोऽभवन्, अपि तथापि तेषामेव विप्रियं दु:खमासीत्। युक्तमेवैतदित्याहु:। पूर्वं जन्मान्तरे यतो येभ्य: भयं कृतं तेभ्य एव तेषां भयमुपस्थितमित्यर्थ:[4]॥ ५४॥

एते घोरदर्शना अपि एनं बालं कृष्णं[5] नाभिभवन्ति [6]न धर्षयन्ति[-6]। किन्तु हन्तुं इच्छया एनं बालं आसाद्य स्वयमेव नश्यन्ति। यथा अग्नौ पतङ्गा: शलभा: तद्वत्॥ ५५॥

---

1. K,W omit वन 2- -2. K,W omit 3. A,B °पालग° 4 A,B, °मुत्थित° 5. K,W omit कृष्णं 6- -6. A,B omit

**विज०** विसिस्मिरे विस्मिता:॥ ५१॥

पूर्वस्थित माश्रमस्थानं प्रणीय नीत्वा तद्बकासुरहिंसन लक्षणं कृष्णचरितम्॥ ५२॥

कृष्णे अतिशयेन प्रियेण आदरेण युता: तृषितेक्षणा: अलम्बुद्धिरहित नेत्रा:॥ ५३॥

बत खेदे, यत: येभ्य: भयं तेषां विप्रियं कृतं आसीत्। अपि स्वित्॥ ५४॥

अथापि तथापि, एते एनं नाभि भवन्ति; प्रत्युत, जिघांसया हननेच्छया एन मासाद्य अग्नौ पतङ्ग इव शलभ इव नश्यन्ति॥ ५५॥

**अहो ब्रह्मविदां वाचो नाऽसत्या स्सन्ति कर्हिचित्।**
**गर्गो यदाऽऽह भगवा नन्वभावि तथैव तत्॥ ५६॥**
**इति नन्दादयो गोपा: कृष्णराम कथां[1] मुदा।**
**कुर्वन्तो रम माणाश्च नाऽविन्दन्भव वेदनाम्॥ ५७॥**

**एवं विहारैः कौमारैः कौमारं जहतु र्व्रजे।**
**[2]निलायनै स्सेतुबन्धै र्मर्कटो[3] त्प्लवनादिभिः॥५८॥**

इति श्रीमद्भागवते महापुराणे वैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीव ब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे
वत्सबककवधो नाम एकादशोऽध्यायः॥ ११ ॥

1. V कथाः 2. V नीडा° 3. V °टप्लव°

**श्रीध०** **अहो** इति। गर्गो यदाह - "तस्मान्नन्दात्मजोऽयं ते नारायण समो गुणैः" (भाग. 10-8-19) इत्यादि॥ ५६,(५७,५८)॥

★ वत्सयूथागतं हत्वा वत्सदम्भासुरं हरिः। मुनियूथ गतं चाहन्नग्रण्यं दम्भिनां बकम्॥

★ श्रीधरीयोऽयं श्लोकः।

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां एकादशोऽध्यायः॥ ११ ॥

**वीर०** अहो ब्रह्मविदां वाचः कदाचिदपि असत्या न सन्ति न भवन्ति। तथा हि भगवान् गर्गो यथाह "नारायणसमो गुणैः" (भाग. 10-8-19) इति तत्तथैव अस्माभिः अन्वभावि अन्वभूयत॥ ५६॥

भववेदनां सांसारिक क्लेशं नाविन्दन्न प्रापुः॥ ५७॥

एवंविधैः कौमारैः कौमार चेष्टितैः तान्येव कानिचित् दर्शयति। निलायनैः निलयकरणानुकारिभिः एवं उत्तरत्रापि। व्रजे कौमारं कौमारावस्थां जहतुः [1]अतिक्रान्त वन्तौ॥ ५८॥

इति श्रमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवत चन्द्रचन्द्रिकायां
व्याख्यायां एकादशोऽध्यायः॥ ११ ॥

1. A,B,W अनु

**विज०** पुरुषेण ब्रह्मज्ञानमेवापाद्यमिति भावेनाऽऽह - **अहो** इति। असत्या नाभूवन्निति कुतो ज्ञायत इति तत्राह - गर्ग इति॥ ५६॥

भववेदनां संसारदु:खम्॥ ५७॥

कौमारैः कुमारावस्थासम्बन्धिभिः विहारैः क्रीडाविशेषैः कौमारं जहौ कृष्णः। तत्राऽऽपञ्चमाब्दात् बाल्यं, आनव वर्षात् पौगण्डं, आषोऽशवर्षात् कैशोरम्। कश्चित्स्तम्भमूले निलीय तिष्ठति। अन्यस्तु अन्विष्य तं दृष्ट्वा गृह्णातीति या क्रीडा तन्निलायनम्। हस्तेन शरीरेण वा मृत्तिकया वा जलनिवारणं सेतुबन्धः, यथा मर्कटो वानरो विटपाद्विटपान्तरं उत्प्लवति, उत्पतति। तथा आकाशे उत्तुङ्ग मृत्तिकात्तं शिंशुमाराकारोपरि शिरसि पदं निधाय पतनमुत्प्लवनं, पांशुभिस्तौ मणिं निधाय तदुपरि हस्तं निदधाति एकः, एकस्त्वन्विष्य गृह्णातीति आदिशब्द गृहीतम्॥ ५८॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थ विरचितायां पदरत्नावल्यां
टीकायां दशमस्कन्धे पूर्वार्धे एकादशोऽध्यायः॥ ११॥

(विजयध्वजरीत्या द्वादशोऽध्यायः)

# द्वादशोऽध्यायः

## (विजयध्वजीये अयमध्यायो नाऽस्ति)

## अघासुरवधारम्भघट्टः

श्रीशुक उवाच

क्वचिद्वनाशाय मनो दधद्व्रजात् प्रातस्समुत्थाय वयस्यवत्सपान्।
प्रबोधयन् शृङ्गरवेण चारुणा विनिर्गतो वत्सपुरस्सरो हरिः॥१॥

तेनैव [1]साकं पृथुकास्सहस्रशः [2]स्निग्धाः सुशिग्वेत्रविषाण वेणवः।
स्वान् स्वान् सहस्रोपरिसंख्ययान्वितान् वत्सान् पुरस्कृत्य विनिर्ययुर्मुदा॥२॥

कृष्णवत्सै[3]रसंख्यातैः यूथीकृत्य [4-]स्वकान् स्वकान्[-4]।
चारयन्तोऽर्भलीलाभिः विजहुस्तत्र तत्र हि॥३॥

फलप्रवालस्तबक सुमनः [5]पिञ्छ धातुभिः।
काच गुञ्जामणिस्वर्ण भूषिता अप्यभूषयन्॥४॥

मुष्णन्तोऽन्योन्य शिक्यादीन् ज्ञातानाराच्च चिक्षिपुः।
तत्रत्यांश्च [6]ततो [7-]दूराद्धसन्तः पुनराददुः[-7]॥५॥

---

1. A सार्धं 2. V °ग्धान्न° 3. K,W °रव्येयैः 4- -4. A,B,G स्ववत्सकान्। 5. A,B °च्छ° 6. A,B,G पुनर्दू° 7- -7. A,B,G °न्तश्च पुनर्ददुः

## श्रीधरस्वामिविरचिता भावार्थदीपिका

द्वादशे तु महासर्पवपुर्धरमघासुरम्।
वत्सपालगिलं क्रुद्धो गलेऽहन्निति वर्ण्यते॥

महाबक गलक्रीडा केवलस्य न कौतुकम्।
इति वाऽघासुरमुखे स सखः प्राविशद्धरिः॥

क्वचिदिति। क्वचित्कदाचित् वनाशाय वन एव प्रथमं भोजनं कर्तुम्॥१॥

**तेनेति।** तेनैव शृङ्गरवेण, श्रीकृष्णेन वा [1]सह पृथुकाः बालाः स्निग्धाः स्नेहयुक्ताः। शिक्, शिक्यं रम्याः शिग्वेत्रादयो येषां ते, सहस्राधिक संख्यायुक्तान् वत्सान्॥२,३॥

**फलेति।** काचादिभिः पूर्वं मातृभिः भूषिता अपि पु[2-]नस्स्वयं[-2] फ[3-]लप्रवालादिभिः[-3] आत्मानमभूषयन्नित्यर्थः ॥ ४ ॥

**मुष्णन्त** इति। मुष्णन्त श्चोरयन्तः ॥ ५ ॥

---

1. V omits सह 2- -2. B,J,V omit 3- -3. B,J,V फलादिभिः

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

इतः प्र[1]भृति अध्यायत्रयं प्रक्षिप्तमिति व्यासाचार्यैः उपेक्षितम्, अथापि प्रायशो व्यवह्रियमाणत्वात् कैश्चिद्व्याख्यातत्त्वाच्च व्याख्यायते। अत्राद्येनाघासुरवधात्मकं चरित्रमनुवर्ण्यते **क्वचिदित्यादिना।** कदाचिद्भगवान् प्रातरुत्थाय स[2]वयस्कान्वत्सपान्प्रबोधयन् वन एव प्रथम भोजनाय मनः कुर्वन् वत्साः पुरस्सरा यस्मात्तथाभूतः चारुणा विषाणानां रवेण व्रजात् विनिर्जगाम ॥ १ ॥

तथा शिक् शिक्यं शोभनाः शिक्यादयो येषां ते स्निग्धः परस्परानुरागयुक्ताः पृथुका बालकास्सहस्रशः तेनैव कृष्णेनैव सह सहस्रात् उपरिसंख्यया। अन्वितान् परिच्छि[3]न्नान् स्वस्ववत्सान् पुरस्कृत्य मुदा विनिर्ययुः ॥ २ ॥

ततः स्वस्ववत्सान् संख्यातैः कृष्णस्य वत्सै स्सह संङ्घीकृत्य चारयन्तः तत्र तत्र अर्भक लीलाभिः विहृतवन्तः ॥ ३ ॥

तदेव प्रपञ्चपति - **फलेनेति** स[4]प्तभिः। पूर्वं मातृभिः काचादिभिः भूषणैः भूषिता अपि फलादिभिः आत्मानम् भूषयन्तत्र प्रवालाः पल्लवाः तेषां स्तबकैः पुष्पस्तबकैश्च युक्तैर्दामभिः मा[5]लाभिः ॥ ४ ॥

अन्योन्येषां शिक्यादीन्। आदि शब्देन वेत्रविषाण वेणूनां सङ्ग्रहः, मुष्णन्त श्चोरयन्तः ज्ञातान् शिक्यादीनाराद्दूरे चिक्षिपुः। तत्रत्यान् तान् पुन स्तत आरात् क्षिपन्तो हसन्तः[6] पुन राददुः ॥ ५ ॥

---

1. A,B,J आरभ्य 2. A,B,समानव° 3. A,B,W ° च्छ° 4. K,W omit सप्तभिः। 5. K,W omits मालाभिः 6. A,B add सन्तः

**त्रयोऽध्यायाः (12,13,14) विजयध्वजव्याख्यात ग्रन्थे न सन्ति। अतो नाऽस्ति व्याख्यानम्।**

**यदि दूरं गतः कृष्णो व[1]नशोभेक्षणाय तम्।**
**अहम्पूर्वमहम्पूर्वमिति संस्पृश्य रेमिरे ॥ ६ ॥**

**केचिद्वेणून् [2] नादयन्तो ध्मान्तः शृङ्गाणि केचन।**
**केचिद्भृङ्गैः प्रगायन्तः कूजन्तः कोकिलैः परे॥ ७॥**

**विच्छायाभिः प्रधावन्तो गच्छन्त स्साधुहंसकैः।**
**बकैरुपविशन्तो[3]ऽन्ये नृत्यन्तश्च कलापिभिः॥ ८॥**

**विकर्षन्तः कीशबालानारोहन्तश्च तैर्द्रुमान्।**
**विकुर्वन्तश्च तैस्साकं[4] प्लवन्तश्च[5] पलाशिषु॥ ९॥**

**साकं भेकै र्विलङ्घन्तः [6-] सरित्तोय परिप्लुताः[-6]।**
**[7] विहसन्तः प्रतिच्छायाः शपन्तश्च प्रतिस्वनान्॥ १०॥**

---

1. V वनोद्देशेक्षणाय 2. A,B,G वा° 3. A,B,G° न्तश्च 4. G °र्धं 5. K,W वल्गन्तश्च 6- -6. A,B,G सरित्प्रस्रवसम्प्लुताः 7. V हसन्तश्च

**श्रीध० यदीति।** यदि दूरं गतः कृष्णो भवति तर्हि॥ ६॥

**केचिदिति।** ध्मान्तः [1-] मुखवायुं शृङ्गेषु उत्सृजन्तः गायन्तः[-1] वादयन्तः भृङ्गैस्सह॥ ७॥

**विच्छायाभिरिति।** विच्छायाभिः [2-] पक्षिणां छा[-2]याभिः, कलापिभिः मयूरैश्च॥ ८॥

**विकर्षन्त इति।** कीशबालान् वृक्षशाखासु लम्बमानानि वानरलाङ्गूलानि [3] विकर्षन्तः लाङ्गूलानि[4] अमुञ्चन्तः तैस्सह द्रुमानारोहन्तः, विकुर्वन्तः दन्त दर्शन भ्रूविजृम्भादिभिः तैस्सह विकारान् कुर्वन्तः, पलाशिषु वृक्षेषु प्लवन्तः शाखायाः शाखान्तरमुद्गच्छन्तः॥ ९॥

**साकमिति।** प्रतिच्छायाः प्रतिबिम्बानि [5] हसन्तः॥ १०॥

---

1- -1. A,B,J omit 2- -2. A,B,J पक्षिच्छा° 3. A,B,J आ 4. A,B,J °लं 5.A,B,J omit हसन्तः

**वीर०** वनशोभा दर्शनार्थं यर्हि कृष्णो दूरं गतो भवति। [1] तं कृष्णमहमेव पूर्वं स्पृशामीत्येवं वदन्तस्तं संस्पृश्य रेमिरे॥ ६॥

[2] शृङ्गाणि ध्मान्तः मुखवायुभिः पूरयन्तः शृङ्गैस्सह प्रगायन्तः कोकिलैस्सह कूजन्तः॥ ७॥

विच्छायाभिस्सह [3-] पक्षिच्छायाभिः सह[-3] प्रधावन्तः कलापिभिः बर्हिभि स्सह नृत्यन्तः[4] ॥ ८॥

कीशवालान् वृक्षशाखास्वधोलम्बमानानि वानराणां लाङ्गूलानि आकर्षन्तः तैः वानरैस्सह पुनः द्रुमान् आरोहद्भिः आरोहन्तः तैः वानरैस्साकं दन्तवदन भ्रूविजृम्भादिभिः विकारान् कुर्वन्तः, पलाशिषु वृक्षेषु वल्गन्तः प्लवन्तः शाखायाः शाखान्तरं गच्छन्त इति यावत्॥ ९॥

भेकैः मण्डूकैः सह विलङ्घन्तः लङ्घमानाः सरितो यमुनायाः तोयेन परिप्लुता आर्दास्सन्तः अन्योन्यप्रतिबिम्बानि हसन्तः प्रतिस्वनान् शपन्तः दूषयन्तश्च॥ १०॥

1. A,B add तदा 2. A,B add केचित् 3- -3. A,B omit 4. A,B add साधु यथा तथा (हंसैः) गच्छन्तः।

**इत्थं सतां ब्रह्मसुखानुभूत्या दास्यं गतानां परदैवतेन।**
**मायाश्रितानां नरदा[1]रकेण सार्धं[2] विजह्रुः कृतपुण्यपुञ्जाः॥ ११॥**

**यत्पादपांसुर्बहुजन्म कृ[3]च्छ्र धौतात्मभिर्योगिभिरप्यल[4]भ्यः।**
**स एव यद्दृग्विषये[5] स्वयं स्थितः किं वर्ण्यते दिष्टमहो[6] व्रजौकसाम्॥ १२।**

**अथाघनामाऽभ्यपतन्महासुरः तेषां सुखक्रीडन वीक्षणाक्षमः।**
**नित्यं यदन्तो[7] निजजीवितेप्सुभिः पीतामृतैरप्यमरैः प्रतीक्ष्यते॥ १३॥**

**दृष्ट्वाऽर्भकान् कृष्णमुखानघासुरः कंसानुशिष्टस्स बकी बकानुजः।**
**अयन्तु [8-]सोदर्य विनाश[-8] कृत्तयोः द्वयोर्ममै[9]नं सबलं हनिष्ये॥ १४॥**

**एते यदा मत्सुहृद[10]स्तिलापः कृतास्तदा नष्टसमा व्रजौकसः।**
**प्राणे गते वर्ष्मसु का नु चिन्ता प्रजासवः प्राणभृतो हि लोके[11]॥ १५॥**

1. A बालकेन 2. A,B,G °कं 3. A,B,G कृच्छ्रतो धृता° V कृच्छ्र धृ° 4. B °गम्यः 5. A,B,G °यः 6. A,B,G °तो 7. A,B °न्तर्निज 8- -8. A,B,G मे सोदरनाश 9. A रथैनं 10. A,B,G दोस्तिलापः 11. A,B,G ये ते

**श्रीध०** तानति विस्मि[1]तः श्लोकद्वयेनाभिनन्दति - **इत्थमिति।** सतां विदुषां ब्रह्म च तत्सुखं च, अनुभूतिश्च तथा स्वप्रकाश परमसुखेनेत्यर्थः। भक्तानां परदैवतेन आत्मप्रदेन नाथेन मायाश्रितानान्तु नरदारकतया प्रतीयमानेन सह विजह्रुः। कृतानां पुण्यानां पुञ्जाः राशयो येषां ते, ब्रह्मविदां तदनुभव एव भक्ताना मतिगौरवेणैव भजनं, एते तु तेन सह सख्येन विजह्रुः अहो भाग्यमिति भावः॥ ११॥

**यदिति।** बहुजन्मभिः कृच्छ्रेण धृत आत्मा मनो यै स्तैरपि॥ १२॥

**अथेति।** सुख क्रीडनवीक्षणे अक्षमा ईर्ष्या यस्य सः। कथम्भूतः? [2]यस्य [3]अन्तः अन्तरं छिद्रं पीतामृतैरपि ततो मृत्युभीतैः अमरैः प्रतीक्ष्यते। कथं मरिष्यति? कदा चेति? यद्वा, कथम्भूतं सुखं क्रीडनम्? यत् अन्तर्हृदये अमरैः प्रतीक्ष्यते विचिन्त्यते पीतामृतैरपि [4]पुनः निजजीवितेप्सुभिः। अयम्भावः - न अमृतपानमात्रेण जीवनं सफलं भवति किन्तु भगवल्लीलानुस्मरणेनेति तदेव नित्यमन्तश्चिन्त्यन्त इति॥ १३॥

**दृष्ट्वेति।** कृष्ण मुखान् अर्भकान् दृष्ट्वा, स इति व्यवस्य निश्चित्य। आजगरं वपुर्धृत्वा। तेषां ग्रसनाशया पथि व्यशेत इति तृतीयेनान्वयः। कंसेनानुशिष्टः प्रहितः बकी पूतना, [5-]बकः बकासुरः[-5] तयोरनुजः। कथं व्यवस्य [6]इत्यत्राह - अयन्त्वित्यादि सार्धेन। मम तयोर्द्वयोः सोदरयोः स्थाने एनं कृष्णं सबलं [7-]बलरामसहितं यद्वा सबलं[-7] ससैन्यं वत्सतत्पालक सहितं [8]हनिष्यामि। [9-]सकुलमिति पाठे सान्वयं सगृहमिति वा[-9]॥ १४॥

ननु तथापि व्रजस्थास्त्ववशिष्येरन्। नेत्याह - **एते** इति। तिलापःकृताः तिलोदकताया कल्पिताः वर्ष्मसु देहेषु प्रजा एव असवो येषां ते तथा॥ १५॥

---

1. A स्मयेन 2. V omits यस्य 3. A,B omits अन्तः 4. V omits पुनः 5- -5. A,B,J omit 6. A,B,J तदाह 7- -7. A,B,J omit 8. V हनिष्ये इत्यर्थः। 9- -9 A,B,J omit.

**वीर०** तद्विहार मभिनन्दन् आह - **इत्थमिति** द्वयेन। ब्रह्मानन्दानुभवेन तद्दास्यं गतानां ब्रह्मानन्दानुभवसम्भूतप्रीतिकारितदास्यं गतानामित्यर्थः। सतां साधूनां परदैवतेनापि मायाश्रितानां प्रकृतिबद्धानां मनुजबालभूतेन कृष्णेन सह इत्थं विजह्रुः विहृतवन्तः। तत्र हेतुं वदन् गोपान्विशिनष्टि। कृताः पुण्यानां पुञ्जा राशयो यैस्तथा भूताः [1-]पूर्वजन्मनीति शेषः[-1]॥ ११॥

कृतपुण्यपुञ्जत्वमेव प्रपञ्चयन् विस्मयते **यत्पादेति।** बहुषु जन्मसु कृच्छ्रं कायशोषणात्मकं येषां धौतः विशुद्ध आत्मा मनो येषां तै र्योगिभिरपि यस्य पाद [2]पांसुरलभ्य स्सएव भगवान् स्वयमेव येषां व्रजौकसां दृग्विषये स्थितः दृग्विषयतां प्राप्तः तेषां दिष्टं अदृष्टं किं कियदिति वर्ण्यते। अहो आश्चर्य मेतत्॥ १२॥

इत्थं विहरत्सु अघाख्यो [3]महासुरः तेषां सुखेन यत्क्रीडनं तस्य वीक्षणे न विद्यते क्षमा यस्य तथा भूतः अभ्यपतत् अभिमुख माजगाम। तदेव प्रपञ्चयन् अघासुरस्य देवानामपि [4]मृत्युभयशङ्कावहत्वं अभिसन्धि विशेषं च आह - नित्यमिति सार्धद्वयेन। पीतममृतं यैः तैः मरणभयरहितैः अपीति भावः। अमरैः निजजीवितेच्छुभिः मृत्युभयरहितान् अप्यस्मान् हन्तुं समर्थं अघासुरं हत्वा अस्मज्जीवितं कदा सुप्रतिष्ठितं कुर्यादित्येवं स्वजीवितमिच्छद्भिः नित्यं यदन्तः यस्य अघासुरस्य अन्तो नाशः कदा वा स्यादिति प्रतीक्ष्यते॥ १३॥

स बकीबकयो रनुजः अघासुरः कंसेनानुशिष्टः आदिष्टः, कृष्णो मुखं प्रदानं येषां तानर्भकान् दृष्ट्वा इति व्यवस्य निश्चित्याजगरं बृहद्वपुः धृत्वा तेषां ग्रसनाय पथि व्यशेत इति तृतीयेनान्वयः। कथं व्यवस्येत्यत आह - अयन्त्विति सार्धेन। द्वयोस्तयो रामकृष्णयोर्मध्ये अयं कृष्णस्तु मम [5-]सोदरयोः पूतना बकयोः नाशं[-5] कृतवानिति तथा अत एवं बलरामेण सहितं हनिष्यामि। बलशब्दोऽत्रेतरगोपबालानां अप्युपलक्षणार्थः एते इत्युत्तरानुगुण्यात्॥ १४॥

यदैते कृष्णादयः मत्सुहृदो[6] मत्सोदरस्य[7] तिलापः कृताः तिलोदकवत् तृप्ति हेतुत्वेन एतेषां हननमेव मत्सुहृदस्तिलाप[8] इति भावः। तदा सर्वे व्रजौकसो नष्टप्रायाः। तथाहि - प्राणे गते निर्गते सति वर्ष्मसु शरीरेषु का वा अनुचिन्ता। न हि प्राणे गते शरीरं क्षणमवस्थातुं[9] शक्नोति किन्तु नश्यत्येव। प्राणभृतः प्रजाः पुत्रा एवासवः प्राणाः येषां तथा भूता हि; प्राणस्थानीयेषु पुत्रेषु मया हतेषु व्रजौकसस्सर्वे स्वयमेव नङ्क्ष्यतीति तदर्थं न मया यत्नः कार्य इति भावः॥ १५॥

---

1- -1. K, W omit 2. A,B °रप्यल° 3. A, B महानसुरः 4. A,B omit भय 5- -5. K,W सोदर्यस्य बकासुरस्य विनाशं 6. A,B °दोः 7. A,B °रयोः 8. A,B °दोस्ति° 9. A,B मपि

**इति व्यवस्याऽजगरं बृहद्वपुः स योजनायाममहाद्रिपीवरम्।**
**कृत्वाऽद्भुतं[1] व्यात्तगुहाननं[2] तदा पथि व्यशेत ग्रसनाशया खलः॥ १६॥**

**धराधरोष्ठो जलदोत्तरोष्ठो दर्याननान्तो गिरिशृङ्गदंष्ट्रः।**
**ध्वान्तान्तरास्यो वितताध्वजिह्वः परुषानिलाश्वासदवेक्षणोष्णः॥ १७॥**

**दृष्ट्वा तं तादृशं सर्वे मत्वा बृन्दावनश्रियम्।**
**व्यात्ताजगरतुण्डेन व्युत्प्रेक्षन्ते[3] स्म लीलया॥ १८॥**

**अहो [4-]विचित्रं मित्राणि[-4] सत्त्वकूटं पुरःस्थितम्।**
**अस्मत्सङ्ग्रसनव्यात्तव्यालतुण्डायते न वा॥ १९॥**

**सत्यमर्ककरारक्त मुत्तराहनुमद्घनम्।**
**अधरा हनुवद्रोध स्तत्प्रतिच्छाययाऽरुणम्॥ २०॥**

---

1. A,B, G धृत्वा, V. भित्त्वा 2. K, W °म 3. A,B,G,V ह्यु° 4- -4. A,B,G,V मित्राणि गदत

**श्रीध० इतीति।** सयोजनायामं योजन प्रमाणेन दैर्घ्येण देहेन युक्तं च तत् महाद्रिवत् पीवरं च। व्यात्तं प्रसारितं गुहातुल्य माननं यस्मिन् तत्॥ १६॥

अद्भुतमिति यदुक्तं तद्दर्शयितुं विशिनष्टि - **धरेति।** धरायामधरोष्ठो यस्य सः [2-]जलदेषु अधरोष्ठो यस्य सः[-2] दर्याविव आननस्यान्तौ सृक्विणी[3] यस्य सः, गिरेः शृङ्गाणीव दंष्ट्रा यस्य सः, ध्वान्तवदन्तरास्यं यस्य सः, वितता अध्ववत्

जिह्वा यस्य सः, परुषानिलवत् [4-] झञ्झामारुतवत् [-4] श्वासो यस्य सः। [5-] अत्र वर्णाधिक्यमार्षम् [-5] । दववदीक्षणयोः उष्णः, तावद्दृष्टिरित्यर्थः। परुषानिलश्वासश्वासौ दवेक्षणोष्णश्च तथा॥ १७॥

दृष्ट्वेति। वस्तुतः [6-] अजगरतुण्डमेव व्यात्तं [-6] दृष्ट्वा बृन्दावनस्य श्रीः सम्पदे[7]वेति भ्रान्त्या मत्त्वा विपरीतं व्यात्ताऽऽजगरतुण्[8]डसादृश्येन उत्प्रेक्षितवन्तः॥ १८॥

उत्प्रेक्षामेव प्रश्नोत्तराभ्यां च आहुः - **अहो** इति। सत्त्वकूटं सत्वाभास मिदं[9] न वा तत्रापि अस्मत्संग्रसनाय व्यात्तं यद्वद्व्यालतुण्डं तद्वत् आचरति वा[10] न वा॥ १९॥

निश्चितं तथैवेत्याह[11] - **सत्य** मिति। अर्ककैरारक्तं घनं उत्तरोष्ठवत् पश्यत। तस्य घनस्य प्रतिच्छायया अरुणं रोधः स्थलं अधरोष्ठवत् पश्यतेति सर्वत्र अन्वेति॥ २०॥

---

1. A,B, J omit देहेन 2- -2. V omits 3. A °क्कि° 4- -4. A,B,J omit 5- -5. A,B,J omit 6- -6. A,B,J अजगरमेव व्यात्ततुण्डं 7. A °देवैषेति; B,J देषेति 8. A °रास्यसा° 9. B,J add वा 10. A omits वा 11. A,B,J °हुः

**वीर०** इतीत्थं निश्चित्य स दुरात्मा अघासुरो रामकृष्णादीन् ग्रसितुं इच्छया आजगरं वपुः धृत्वा पथि व्यशेत शयितवान्। वपुः कथम्भूतम्? बृह द्विपुलं, तदेवाह योजन प्रमाणेन दैर्घ्येण युक्तं च, तन्महाद्रिवत् स्थूलं च, व्यात्तं प्रसारितं गुहातुल्यं आननं यस्मिन्॥ १६॥

अद्भुतत्वमेव दर्शयितुं असुरं विशिनष्टि - धरायां अधरोष्ठो यस्य जलदेषु उत्तरोष्ठो यस्य, दर्यौ गिरिकन्दराविव आननस्यान्तौ सृक्[1]णी यस्य, गिरेः शृङ्गाणीव दंष्ट्रा यस्य, ध्वान्तोऽन्धकारः [2]अस्मिन्नस्तीति ध्वान्तवत्, तदन्तरास्यं यस्य, दीर्घीभूतमहाध्ववत् जिह्वा यस्य, परुषानिलवत् श्वासो यस्य सः, दावाग्नि रिवेक्षणयोः उष्णः दाहकदृष्टिः इत्यर्थः।[3] [4-] विशेषणोभयपद कर्मधारयः [-4] ॥ १७॥

वस्तुतोऽजगरमेव व्यात्त तुण्डं बृन्दावनस्य श्रीः सम्पदेषेति भ्रान्त्या मत्वा विपरीतं व्यात्ताऽजगर तुण्डसादृश्येन उत्प्रेक्षितवन्तः॥ १८॥

तेषा मुत्प्रेक्षा मेव प्रश्नोत्तराभ्यां आह - **अहो** इति [5]पञ्चभिः। अहो मित्राणि सुहृदः पुरस्थितमिदं वस्तु सत्त्वकूटं सत्त्ववत् [6]अवभासमानं[7] तत्राप्यस्मान् सङ्ग्रसितुं व्यात्तव्यालतुण्डवदाचरति न वा॥ १९॥

एव मुक्त्वा केचित् तथैव इत्याहुः - **सत्यमिति** । अर्ककैः आरक्तं घनं मेघ[8]मुत्तरोष्ठवत् पश्यत । तस्य घनस्य प्रतिच्छायया अरुणं रोधः कुलं अधरोष्ठवत् । पश्यतेति सर्वत्रान्वेति ॥ २० ॥

---

1. A,B सृक्किणी 2. A,B य° 3. A,B add परुषानिलश्वास शब्दोत्तरस्य सो रुत्वे 'हसि' च इति यत्वे तस्य - "लोपः शाकल्यस्य" इति लोपः 4- -4. A,B दवेक्षणोष्णपदे कर्मधारयो वा ॥ १७ ॥ 5. K.W omits पञ्चभिः 6. A,B omit अव 7. A,B add न वा ? 8. A,B, W °मन्त°

प्रतिस्पर्धेते सृक्[1]भ्यां सव्या[2]सव्ये नगोदरे[3]।
तुङ्गशृङ्गालयो[4]ह्येतास्तद्दंष्ट्राभिश्च पश्यत॥ २१॥

आस्तृताऽऽयाममार्गोऽयं रसनां प्रति गर्जति।
एषामन्तर्गत[5]ध्वान्तं एतदप्यन्तराननम्॥ २२॥

दावोष्णखरवातोऽयं श्वासवद्भाति पश्यत।
तद्दग्ध सत्त्व दुर्गन्धो[6]ऽप्यन्तरामिषगन्धवत्॥ २३॥

[7-]विशन्तु सर्वे ग्रसिता किमस्मा नयं तथा चेद्बकवद्विनङ्क्ष्यति।
क्षणादनेनेति बकार्युशन्मुखं वीक्ष्योद्धसन्तः करताडनैर्ययुः॥ २४॥

इत्थं मिथो तथ्यमतज्ञ भाषितं श्रुत्वा विचिन्त्येत्यमृषामृषा[8]यते।
रक्षो विदित्वाऽखिल लोकहृतत्स्थितः स्वानां नि[9]रोद्धुं भगवान् मनो दधे॥ २५॥

---

1. A, G °क्कि°; B,V °क्वि° 2. K,W °व्यौ 3. K,W °रौ 4. A,B,G °योऽप्ये° 5. A,G °तं 6. V ह्य° 7- -7 A,B,G अस्मान् किमत्र ग्रसिता निविष्टा; V. अस्मान् निविष्टान् ग्रसिता किमेता 8. K,W °यितम्। 9. A,V निषेद्धुं

**श्रीध० प्रतिस्पर्धेते** इति। सृक्विभ्यां ओष्ठप्रान्ताभ्यां प्रतिस्पर्धेते [2]तुल्यतया वर्तेते। नगोदरे गिरिदर्यौ [3]एताः शृङ्गालय[-3]ः तस्य दंष्ट्राभिः स्पर्धमानाः॥ २१॥

**आस्तृतेति।** आस्तृताऽऽयाममार्गः विस्तृतो दैर्घ्यवान्मार्गः। प्रतिगर्जति प्रतिस्पर्धते एषां शृङ्गाणां अन्तर्गतं मध्यगतं ध्वान्तं [4-]अन्धकारं[-4] एतत् अन्तराननं आननस्य मध्यं प्रतिगर्जति ॥ २२॥

**दावेति।** [5]दावेन उष्णः खरो वातोऽयं तेन [6]वनाग्निना दग्धानां सत्वानां यो दुर्गन्धः स एव [7]सर्पान्तर्गतामिष गन्धवत् भाति॥ २३॥

**अस्मादिति।** एवं [8]सत्यमेव अजगरं अन्यथोत्प्रेक्ष्य निर्भयाः ययुः। किं ग्रसिता ग्रसिष्यति? अनेन श्रीकृष्णेन हन्त्रा बकारेः उशत् कमनीयं मुखम्॥ २४॥

**इत्थमिति।** अमृषा वस्तुतः सर्पवपुरसुर एषः मृषायते। स्वानां सर्पसादृश्य गोचरत्वेन प्रतीयत इति [9]विचिन्त्य तान्निरोद्धुं वारयितुं यावन्मनो दधे तावत्प्रविष्टा इत्युत्तरेणान्वयः॥ २५॥

1. A,J °क्रि° 2. A तत्तुल्य 3- -3. V omits 4- -4. B,J,V omit 5. V दाववत् 6. A दावेनाग्निना; B,J दावाग्निना 7. V सर्पस्यान्त° 8. A सत्यमपि; B,J सन्तमेव 9. A,B,J omit विचिन्त्य 10. V °षे°

**वीर०** सव्यापसव्य नगयोः वामदक्षिणगिर्योः, उदरे दर्यौ सृक्वभ्यां[1] ओष्ठप्रान्ताभ्यां प्रतिस्पर्धेते तुल्यतया वर्तेते। सव्यापसव्यगिर्यो स्तुङ्गशृङ्गाणां[2] आलयः पङ्क्तयः तस्य दंष्ट्राभिः स्पर्धन्त इति वचनविपरिणामेनान्वयः॥ २१॥

आस्तृतो विस्तृतश्चासो आयाममार्गः दैर्घ्यवान् मार्गः स तस्य रसनां जिह्वां प्रति गर्जति प्रति स्पर्धति। एषां शृङ्गाणां अन्तर्गत मेव[3] ध्वान्तमपि अन्तराननमास्यमध्यं प्रतिगर्जति॥ २२॥

दावाग्निनोष्णः खरः कठिनश्च वातः श्वासवत् भाति। तेन दावाग्निना दग्धानां सत्वानां जन्तूनां दुर्गन्धः सत्वान्तर्गतामिष गन्धवत् भाति॥ २३॥

एवं सत्यमेव अजगरं अन्यथोत्प्रेक्ष्य[4] निर्भया ययुः इत्याह[5] **विशान्त्विति।** सर्वे वत्सा वत्सपाश्च अत्र विशन्तु अस्मान्ग्रसिता किं? ग्रसिष्यति किम्? तथा चेत् ग्रसिष्यति। बकवत् बकासुरवदयमप्यनेन श्रीकृष्णेन क्षणाद्विनङ्क्ष्यति नाशं गमिष्यति। इति[6] इत्थं बकारेः ऊशत्कमनीयं मुखम् अलोक्योच्चैः[7] हसन्तः करताडनैः[8] उपलक्षिता ययुः। करताडनानि कुर्वन्तो ययुः इत्यर्थः॥ २४॥

मिथोऽन्योन्यं अतज्ज्ञानां यथार्थाजगरमजानतां भाषितमतथ्यं असत्यं श्रुत्वा भगवान् मृषाऽपि सत्यमप्येतैः मृषायितम् अयथार्थीकृतं इत्येवं विचिन्त्य अखिल भूतहृत्स्थितः हेतुगर्भमिदं, तत्त्वात् रक्षो विदित्वा राक्षस इति ज्ञात्वा[1] स्वानां स्वान् वत्सान् वत्सपांश्च निरोद्धुं निवारयितुं यावन्मनो दधे चकार॥ २५॥

1. A,B सृक्कि° 2. A,B °स्तु शृ° 3. K °मेतत् 4. A,B सत्त्वमेवोत्प्रेक्ष्य 5. A,B add मुनिः 6. K,W omit इति 7. A,B 8. W °तालैः

**तावत्प्रविष्टास्त्वसुरान्तरोदरं[1] परं न जीर्णा[2]श्शिशवस्सवत्सकाः[3]।**
**प्रतीक्षमाणेन बकारि वेशनं हतस्वकान्तस्मरणेन रक्षसा॥ २६॥**
**तान् वीक्ष्यकृष्णस्सकलाभयप्रदो[4] ह्यनन्य नाथान् स्वकरादपच्युतान्[5]।**
**दीनांश्च मृत्योर्जठराग्नि घासान् घृणार्दितो दिष्टकृतेन विस्मितः॥ २७॥**

कृत्यं विमत्रास्य खलस्य जीवनं नो[6] वा[7] अमीषां च सतां विनाशम्[8]।
द्वयं कथं स्यादिति संविचिन्त्य तज्ज्ञात्वाऽविशत्तुण्डमशेष दृग्घरिः॥ २८॥

तदा घनच्छदा देवा भयाद्धाहेति चुक्रुशुः।
जहृषुर्ये च कंसाद्याः कौणपास्त्वघबान्धवाः॥ २९॥

तच्छ्रुत्वा भगवान् कृष्णस्त्वव्ययस्सार्भवत्सकम्।
चूर्णी चिकीर्षोरा[10]त्मानं तरसा ववृधे गले॥ ३०॥

1. A,B,G °रोदरान्तरं 2. B,G,V गी° 3. A,B,G °त्साः; K,W °त्सपाः। 4. V °दस्त्वनन्य 5. A,B,G °व 6. A जीवितं 7. V नो 8. A,B,G हिंसनम्; V नाशम् 9. V °नः 10. V °रेवादौ

**श्रीध० तावदिति।** तावत्[1] प्रविष्टा एव परं[2] केवलं न तु तेन गीर्णाः गिलिताः। जीर्णा इति पाठेऽपि स एवार्थः। कथम्भूतेन ? हतयोः स्वकयोः[3] अन्तं स्मरति अनुध्यायतीति[4] तथा तेन अत एव बकारेः श्रीकृष्णस्य प्रवेशं प्रतीक्षमाणेन॥ २६॥

**तानिति।** स्वकरादपच्युतान्[5] बिनिस्रुतान् विस्मितस्सन्॥ २७॥

**कृत्यमिति।** कृत्यं किमत्रेत्यादि विचिन्त्य तत्रोपायं ज्ञात्वा स्वयमप्यविशदित्यन्वयः। कथं विचिन्त्य अस्य जीवनं अमीषां च विहिंसनमिति द्वयं, वै निश्चितम्। कथं न स्यादिति॥ २८॥

**तदेति।** घनच्छदाः मेघान्तरिताः कौणपाः कुणपाशिनो राक्षसाः कोणपो निर्ऋतिस्तदीया इति वा॥ २९॥

**तदिति।** सा[6-]र्भवत्सकमात्मानं[-6] चूर्णीकर्तुमिच्छोस्तस्य गले आदावेव तरसा ववृधे अवर्धत॥ ३०॥

1. V omits तावत् 2. A,B,J omit परं 3. V omits स्वकयोः 4. V omits अनुध्यायति 5. A,B,J °व 6- -6. A,B,J omit.

**वीर०** तावत्ततः पूर्वमेव शिशवो वत्सपा वत्सैः सहिताः असुरस्यान्तरोदरं उदरमध्यं प्रविष्टाः केवलं प्रविष्टा एव नतु रक्षासा जीर्णाः[1] जीर्णतां प्रापिताः, तत्र हेतुं वदन् रक्षो विशिनष्टि - हतः स्वस्य कान्तः सुहृद्भ्राता तस्य स्मरणेन हेतुना बकारेः कृष्णस्य वेशनं प्रवेशनं[2] प्रतीक्षमाणेन॥ २६॥

सर्वेषामभयप्रदो भगवान् [3-]श्रीकृष्णः तान्[-3] प्रविष्टान् अवलोक्य विस्मितः करुणयार्दितो व्यामश्चास्य खलस्य विनाशन ममीषां सतां साधूनां जीवनं च इत्येतत् द्वयं युगपत्कथं स्यात् अत्रोभय निमित्ते कृत्यं किमिति विचिन्त्य अशेषधृक् हेतु गर्भमिदम् तत्वात् तत् कृत्यं ज्ञात्वा, हरिः आश्रितार्तिहरः स्वयमप्यस्य तुण्ड मविशत् इत्यन्वयः। कथम्भूतांस्तान्, न विद्यते स्वव्यतिरिक्तो नाथो[4] येषां स्वकलात् स्वभुजाश्रयात् भ्रष्टान् दिष्टबलेन प्रारब्ध बलेन हेतुना, मृत्योः जठराग्नेः घासस्थानीयान्॥ २७, २८॥

तदा मेघच्छन्ना देवा भयात् हा हेति चुक्रुशुः। अघासुरस्य बान्धवाः कंसाद्याः[5] कौणपाः [6-]कुणपाशिनो[-6] राक्षसास्तु हृष्टवन्तः॥ २९॥

तद्देवानां हाहेत्याक्रोशनं श्रुत्वा भगवान् कृष्णः स्वयमव्ययोऽक्षत एव सन् आत्मानं चूर्णीकर्तुं इच्छोरसुरस्य गले तरसा आशु ववृधे एधां बभूव॥ ३०॥

---

1. A,K,W omit जीर्णाः 2. A,B, °शं 3- -3. K,W omit 4. A,B, add रक्षिता 5. A,B °सादयः 6- -6 A,B कुणपं शरीरं तदशिनो

ततोऽतिकायस्य निरुद्धमार्गिणो ह्युद्गीर्णदृष्टिर्भ्रमतस्त्वितस्ततः।
पूर्णोऽन्तरङ्गे पवनो निरुद्धो मूर्धन्विनिर्भिद्य[1] विनिर्गतो बहिः॥ ३१॥
तेनैव सर्वेषु बहिर्गतेषु[2] प्राणेषु वत्सान्[3] सुहृदः परेतान्।
दृष्ट्वा स्वयोत्थाप्य तदन्वितः पुनः वक्त्रान्मुकुन्दो[4] भगवान् विनिर्ययौ॥ ३२॥
पीनाहिभोगोत्थितमद्भुतं महज्ज्योतिः स्वधाम्नोज्वलयद्दिशो[5] दश।
प्रतीक्ष्य खेऽवस्थितमीशनिर्गमं विवेश तस्मिन् मिषतां दिवौकसाम्॥ ३३॥
ततोऽतिहृष्टाः स्वकृतोऽकृतार्हणं पुष्पैः सुरा अप्सरसश्च नर्तनैः।
गीतैःसुगावाद्यधराश्च वाद्यकैः स्तवैश्च विप्रा जयनिस्स्वनैर्गणाः॥ ३४॥
तदद्भुतस्तोत्रसुवाद्यगीतिका[6]जयाद्य[7]नेकोत्सवमङ्गलस्वनान्।
श्रुत्वा स्वधाम्नोन्त्यज आगतोऽचिरात् दृष्ट्वा महीशस्य जगाम विस्मयम्॥ ३५॥

---

1. A,B,G निष्पाद्य 2. K,W विनिर्ग° 3. V सर्वान् 4. V कृच्छ्रा° 5. B,G,K °म्ना ज्व° 6. A गीतक 7. A,B,G °दिनै°

**श्रीध० तत** इति। निरुद्धो मुखादीनां मार्गभूतः कण्ठो यस्य [1] तस्य। य[2-]द्वा, निरुद्धौ मार्गौ प्राणोच्छ्वास रन्ध्रे अस्य स्त इति वा[-2]। उद्गीर्णदृष्टेः बहि र्निर्गतलोचनस्य। अन्तरङ्गे देहमध्ये। पूर्णः परिभृतः मूर्धन् मूर्धनि। ङि[3-]लोप आर्षः[-3]। ब्रह्मरन्ध्रं विनिर्भिद्य बहिः विनिर्गत इति॥ ३१॥

**तेनेति।** प्रणेषु इन्द्रियेषु स्वया अमृतवर्षिण्या दृष्टैचव॥ ३२॥

**पीनेति।** अहिदे[4]होत्थितं शुद्ध सत्त्वमयं ज्योतिर्निर्गतं[5] खेऽवस्थितं तस्मिन्ने[6]व ईशे विवेश॥ ३३॥

**तत** इति। स्वकृतः स्वकार्य कृतः श्रीकृष्णस्यार्हणं अकृत पूजामकुर्वन्। सुष्टु गायन्तीति सुगाः गन्ध र्वादयः॥ ३४॥

किञ्च **तदिति।** तेषां यानि अद्भुत स्तोत्रादीनि [7] नैकोत्सवाः अ[8-]नेकोत्सवाः[-8] ये मङ्गलनाः तान् स्वधाम्नः अन्ति समीपे श्रुत्वा अजो ब्रह्मा अ[9]चिरादागतः ई[10]शस्य श्रीकृष्णस्य म[11]हि महिमानं दृष्ट्वा विस्मयं प्रापेति॥ ३५॥

---

1. A,B,J add अस्ति 2- -2. A,B,J omit 3- -3. A,B,J omit 4. B,J दहे स्थितं 5. A,B,J °त्य 6. A,B,J omit एव 7. A,B,J add तेषां 8- -8. A,B,J omit 9. V आदरा° 10. V ईश्वरस्य 11. V omits महि.

**वीर०** ततः तस्या[1]घासुरस्यान्तरङ्गे देहाभ्यन्तरे पूरितो निरुद्धः पवनो प्रा[2]णवायुः अत एव पूर्णोऽत एव मू[3]र्धनि ब्रह्मरन्ध्रं भित्वा बहिः निर्गतः। कथम्भूतस्य विपुल कायस्य निरुद्धौ मार्गौ नासारन्ध्रावस्य स्त इति तंथाभूतस्य, अत एव उ[4]द्गीर्णे उद्गते दृष्टी लोचने यस्य इतस्ततो भ्रमतश्च॥ ३१॥

तेन बहिर्गतेन पवनेन सहैव सर्वेषु प्राणेषु बहिर्गतेषु सत्सु परेतान् परलोक गत प्रायान् वत्सान् सुहृदो वत्सपांश्च स्वया अमृत वर्षिण्या दृष्टचा उत्थाप्य तैः अन्वितो भगवान् मुकुन्दः तस्य वक्त्रात् पुनः नि[5]र्ययौ॥ ३२॥

ततोऽसुरो मुक्तः कृष्णमेव विवेशेत्याह - **पीनेति।** पीनात् स[6]र्पदेहात् उत्थितमद्भुतं महत् धर्मभूत ज्ञानेन बृहत्, ज्योतिः स्वयं प्रकाशं, जीवस्वरूपं स्वधाम्ना दशदिशो ज्वल[7]यत्, तावत्, खेऽन्तरिक्षे अवस्थितं सत् ईशस्य कृष्णस्य भगवतो निर्गमम् प्रतीक्ष्य, तदा आश्चर्यम्? देवानां पश्यतां सतां ततः तस्मिन् निर्गते कृष्णे प्रविवेश॥ ३३॥

ततोऽतीव हृष्टाः देवाः स्वकृतः स्वकार्य कर्तुः कृष्णस्यार्हणं [8] पुष्पैः अकृता अकुर्वन्। व्यत्ययेन एक वचनम्। सुष्टु गायन्तीति सुगाः गन्धर्वादयः गीतैः पूजयमासुः विप्रास्तु स्तवैः स्तोत्रैः, गणाः भृत्यगणाः जयशब्दैः किञ्च अजो ब्रह्मा स्वधाम्नः स्वस्थानस्यान्ति समीपे तेषां गन्धर्वादीनां अद्भुतानि स्तोत्राणि सुवाद्यानि वाद्यादीन् गीतिका गीतानि च, जयशब्दा आदिर्येषां तान् अनेकान् उत्सवान् मङ्गलाशासनध्वनींश्च श्रुत्वा अचिरादागतः ईशस्य कृष्णस्य मही महिमानं दृष्ट्वा विस्मयं जगाम॥ ३४, ३५॥

1. K,W °स्यासु° 2. K,W omit प्राणवायुः 3. K,W omit मूर्धनि 4. A,B omit उद्गीर्णे 5. A,B विनिर्गतोऽभूत्॥ ३२॥ 6. K,W सर्व 7. A,B °यित्वा 8. A,B add पूजां

श्रीशुक उवाच

राजन् आजगरं चर्म शुष्कं बृन्दावनेऽद्भुतम्।
व्रजौकसां बहुतिथं बभूवाऽऽक्रीडगह्वरम्॥ ३६॥
नैतद्विचित्रं मनुजार्भमायिनः पराऽवराणां[1] परमस्यवेधसः।
अघोऽपियत्स्पर्शन[2] धूतपातकः[3] प्राणाऽऽत्मसाम्यं त्वसतां सुदुर्लभम्॥ ३७॥
सकृद्यदङ्ग प्रतिमान्तराहिता[4] मनोमयी[5] भागवती ददौ गतिम्।
स एव नित्यात्म सुखानु भूत्यभिव्युदस्तमा[6]यः[7-] परमोऽङ्ग[-7]! किं पुनः॥ ३८॥
एतत्कौमारजं[8] कर्म हरे रात्माऽहि मोक्षणम्।
मृत्योः पौगण्डके बाला दृष्ट्वोचु र्विस्मिता व्रजे △ ॥ ३९॥

1. V °प° 2. V त° 3. B,G धौ° 4. V °तां 5. V °यीं 6. K,W मूतिर्व्यु° 7- -7. B,G मायोऽन्तर्गतोहि 8. V °कं △ आनेनश्लोकेन K.W प्रकाशयोः द्वादशोऽध्यायः समापितः। तदनन्तराः पञ्चश्लोकाः K.W प्रकाशयोः त्रयोदशाध्यायारम्भे स्वीकृताः परन्तु एते पञ्च श्लोकाः A.B.G.J.V प्रकाशेषु द्वादशाध्याये ४०,४१,४२,४३,४४ श्लोकत्वेन स्वीकृताः

**श्रीध० राजन्निति।** बहुतिथं बहुकालं आक्रीडगह्वरं आक्रीडार्थं[1] महाबिलम्॥ ३६॥

**नेति।** नैतद्विचित्रम्। किं तदित्यपेक्षायामाह - अघोपीति। आत्मसाम्यं स्वसमानरूपताम्॥ ३७॥

**सकृदिति।** यस्याङ्गः मूर्तिः तस्य प्रतिमा प्रतिकृतिः तत्रापि केवलं मनोमयी। सापि बलादन्तरहिता सती भागवतीं गतिं ददौ प्रह्लादादिभ्यः स एव साक्षात् स्वयं अन्तर्गतः। किं पुनः? नित्या चासावात्मसुखानुभूतिश्च तया। अभितः व्युदस्ता माया येन सः॥ ३८॥

अन्यच्चातिविचित्रं[2] वृत्तमित्याह - **एतदिति।** "कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि। कैशोर मापञ्चदशा द्यौवनन्तु ततः परम्॥" हरेः कौमारजं पञ्चमाब्दकृतं कर्म तथैव दृष्ट्वा पौगण्डके षष्टेऽब्दे बाला अद्यैव तद्वृत्तमित्यूचुः। किं तत्कर्म? मृत्योस्सकाशादात्मना महेश्च मोक्षणम्। आत्मनां प्रसिद्धान्मृत्योः, अहे स्तु संसारलक्षणात्। अघासुरस्य ज्योतिषः श्रीकृष्णे प्रवेशमपि तदा दृष्टं कथितवन्त इत्यर्थः॥ ३९॥

1. V °र्थ 2. A,B,J omit वि

**वीर०** हे राजन्! आजगरं चर्म शुष्कं सत् बहुकालं बृन्दावने स्थितानां व्रजौकसां क्रीडास्थानं बभूव, क्रीडार्थं महाबिलं आसीत् इत्यर्थः॥ ३६॥

अन्यद[1]तिचित्रं वृत्तमित्याह **नैतदिति।** एतदेव न चित्रं अपि तु परे देव ऋष्यादयः अपरे अपकृष्टा येषां ब्रह्मा[2]दीनां तेषामपि परमस्य वेधसः सर्वस्रष्टु रपि लीलया कपटमनुज, बालकस्य स्पर्शन मात्रेण विधूतं पातकं यस्य तथाभूतः अघासुरोपि असतां दुष्प्रापं आत्मसाम्यं भगवत्साम्यं प्राप लेभे इति यत् तदेव अतिचित्रमित्यर्थः॥ ३७॥

एतदेव किं पुनर्न्ययेन द्रढयति **सकृदिति।** यस्य भगवतोङ्गप्रतिमा अङ्गप्रतिकृति अर्चामूर्तिः मनोमयी मनः प्रचुरा, तत्प्राचुर्यं च अत्र तन्निधापित भगवच्छक्तिकत्वं, अन्तराहिताध्यानेन अन्तर्हृदये निधापिता सती भागवतीं गतिं मुक्तिं ददौ। अङ्ग! हे राजन्! नित्यनिरतिशयानन्दज्ञानरुपः प्राकृतगुणरहितो निस्समाभ्यधिकः स एव भगवान् साक्षादन्तराहितो भागवतीं गतिं मुक्तिं ददतीति किं पुनः वक्तव्यमित्यर्थः॥ ३८॥

अन्यदपि[3] चित्रं वृत्तमित्याह **एतदिति।** "कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि। कैशोर मापञ्चदशा द्यौवनन्तु ततः परम्" तदभिज्ञ वचनात्। हरेः एतत् कौमारजं पञ्चमाब्दकृतं कर्म, तदैव दृष्ट्वा बालकाः[4] पौगण्डके षष्ठेब्दे व्रजे ऊचुः। अद्यै[5]वैतद्वृत्तमित्यूचुः इत्यर्थः। अयमहो भगवन्महिमातिशयः यदन्यकालिकर्मणः तादात्विकत्वानुसन्धानं गोपानामिति भावः॥ ३९॥

1. A.B ° दप्यति 2. A,B °ह्मरुद्रा° 3. A.B. add अति 4. A.B. बालाः 5.A.B. °व°

**श्रीसूत उवाच**

**★ इत्थं [1-]द्विजा यादव[-1] देवदत्त श्रुत्वा स्वभर्तु[2]श्चरितं विचित्रम्।**
**पप्रच्छ भूयोऽपि तदेव पुण्यं वैयासकिं यन्निगृहीत चेताः॥ ४०॥**

**[3]राजोवाच**

**ब्रह्मन् कालान्तरकृतं तत्कालीनं कथं भवेत्।**
**यत्कौमारे हरिकृतं [4]जगुः पौगण्डकेऽर्भकाः॥ ४१॥**

**तद्ब्रूहि मे महायोगिन् परं कौतूहलं गुरो।**
**नूनमेतद्धरेरेव माया भवति नान्यथा॥ ४२॥**

**वयं धन्यतमा लोके गुरोऽपि क्षत्रबन्धवः।**
**यत्पिबामो मुहुस्त्वत्तः पुण्यं कृष्णकथामृतम्॥ ४३॥**

**श्रीसूत उवाच**

**इत्थं स्व[5]पृष्टस्स तु बादरायणिः संस्मारितानन्त हृताखिलेन्द्रियः।**
**कृच्छ्रात्पुनर्लब्धबहिर्दृशिश्शनैः प्रत्याह तं भागवतोत्तमोत्तम[6]म्॥ ४४॥**

इति श्रीमद्भागवते महापुराणे वैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे
वत्सबककवधोनाम द्वादशोऽध्यायः॥ १२॥

---

★ इत आरभ्य पञ्चश्लोकाः श्रीवीरराघवाचार्येण। (K.W Editions) त्रयोदशाध्यायारम्भे संयोजिताः। 1- -1. V. द्विजाग्र्यादथ 2. A,B,G रातु° 3. V विष्णुरात उवाच 4. B जगुः 5. A,B,G,V स्म 6. A,B,G °म!

**श्रीध० इत्थमिति।** [1-]देवदत्त परीक्षित् द्रौण्यस्त्रेण दग्धोऽपि भगवता श्रीकृष्णेन दत्तवत्वात्[-1]। येन श्रवणेन [2-]नितरां गृहीतं[-2] वशीकृतं चेतो यस्य सः। [3-]यद्वा, भगवति निगृहीतं नियमितं चेतो यस्येति वा[-3]॥ ४०॥

**ब्रह्मन्निति।** कालान्तरे कौमारे कृतं पौगण्डके कथम्! ज्ञात्वा ऊचुरित्यर्थः॥ ४१,४२॥

★ **वयमिति।** हे गुरो! क्षत्रबन्धवोऽपि पापिष्ठा अपीत्यर्थः॥ ४३॥

**इत्थमिति।** तेन यः स्मारितोऽनन्तः तेन हृतान्यखिलेन्द्रियाणि यस्य सः तथा भूतोऽपि कथंचिल्लब्धबहिर्दृष्टिः। हे भागवतोत्तमोत्तम! शौनक!॥ ४४॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामि विरचितायां भावार्थदीपिकायां
व्याख्यायां द्वादशोऽध्यायः॥ १२॥

1- -1. A,B,J omit 2- -2. A,B,J निगृहीतं 3- -3. A,B,J omit * The commentary on 43rd verse is not found in A,B,J Edns.

**वीर०** कैमारजं[1] कर्म पौगण्डके प्रोचुरित्युक्तं, तत्र कारण बुभुत्सयाऽपृच्छत् राजेत्याह सूतः **इत्थमिति।** हे द्विजाः! यादवदेवः श्रीकृष्णः तेन दत्तः परीक्षिदित्थं विचित्रं स्वभर्तुः चरित्रं श्रुत्वा, पुनः पुण्यावहं तदेव पौगण्डके कौमारजं प्रोचुरित्येत देव, वैयासकिं शुकं[2] पप्रच्छ! प्रश्नहेतुं[3] वदन् राजानं विशिनष्टि। येन भगवता नितरां गृहीतं चेतो यस्य तथाभूतः॥ ४०॥

प्रश्न प्रकारमेवाह - **ब्रह्मन्निति।** हे ब्रह्मन्! कालान्तरे कौमारकाले कृतं कर्म, तत्कालीनं पौगण्डकालीनं[4], कथं भवेत्, पौगण्डके कथं ज्ञात्वा ऊचुरित्यर्थः। तदाह यदिति। यद्वा तत्कालीनं पौगण्डककाले[5] वाच्यं कथं भवेत् यत्कालावच्छेदेन कृतं तत्तत्काले विस्मृतं सत् कालान्तरे च स्मृतं सत् वाच्यं स्यात् एवेत्यत्राह यदिति। यत् यस्मात् कारणात् कौमारे[6] कृतं, पौगण्डके विदुः सन्निकृष्ट काले स्मरणाभावः। कालान्तरे स्मरणं च न विना कारणेन भवति इति तत्कारणं वदेति **प्रश्नार्थः**॥ ४१॥

तदेतत्कारणं ब्रूहि हे महायोगिन्! मे ममैतत्कारणं श्रोतुं परमधिकं कौतूहलं वर्तते। ममत्वेवं प्रतिभातीत्यभिप्रायेणाह एतत्कारणं, हरेः माया आश्चर्य शक्ति रेव। नूनं ध्रुवम्। अन्यथा तु एवं न घटते॥ ४२॥

आत्मनः कृतार्थतामाविष्कुर्वन् भगवत्कथां स्तौति - **वयमिति।** हे गुरो! क्षत्र बन्धवोऽपि वयं लोके धन्यतमाः कृतार्था एव। कुतः? यतः कृष्णस्य कथामृतं मुहुर्मुहुः त्वत्तः पिबामः अन्यानां नैवं घटेतेति भावः॥ ४३॥

इत्थमापृष्टो भगवान् बादरायणिः तदाऽऽहेत्याह सूतः - **इत्थमिति।** स तु बादरायणिः इत्थं पृष्टः, अत एव तावत् संस्मारितेन, अपरिच्छिन्न वैभवेन भगवता हृतानि अखिलानि इन्द्रियाणि यस्य तथा भूतोऽपि पुनः शनैः कृच्छ्रात्कथञ्चित् लब्धा बहिः दृशिः येन। तथा भूतः तं भागवतोत्तमोत्तमं राजानं प्रत्याह। भागवतोत्तमोत्तमेति पाठे हे शौनक!॥ ४४॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघव विदुषालिखितायां भागवतचन्द्र चन्द्रिकायां
व्याख्यायां द्वादशोऽध्यायः॥ १२॥

1. A.B.W °कं 2. K.W. omit शुकं 3. A.B श्ने° 4. K. °ण्डकका° 5. A.B. omit °क° 6. A.B ° रकृ°

# ॥ त्रयोदशोऽध्यायः ॥

## (विजयध्वजीये अयमध्यायो नाऽस्ति)

श्रीशुक उवाच

साधु पृष्टं महाभाग! त्वया भागवतोत्तम!
यन्नूतनयसीशस्य शृण्वन्नपि कथां मुहुः ॥ १ ॥

सतामयं सारभृतां[1] निसर्गो यदर्थवाणीश्रुतिचेतसामपि ।
प्रतिक्षणं नव्यव दच्युतस्य यत्स्त्रिया विटाना मिव साधु वार्ता ॥ २ ॥

शृणुष्वावहितो राजन्नपि गुह्यं वदामि ते ।
ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युत ॥ ३ ॥

[2]अथाऽघवदनान्मृत्यो रक्षित्वा [3-]वत्सपालकान्[-3] ।
[4]सरःपुलिन मानीय भगवा निद मब्रवीत् ॥ ४ ॥

अहोऽतिरम्यं पुलिनं वयस्याः स्वकेलिसम्पन्मृदुलाच्छवालुकम् ।
स्फुटत्सरोगन्ध हृतालिपत्रिक ध्वनि प्रतिध्वानलसद्रुमाकुलम् ॥ ५ ॥

अत्र भोक्तव्य मस्माभि र्दिवारूढं क्षुधर्दिताः ।
वत्साः समीपेऽपः पीत्वा चरन्तु शनकैस्तृणम् ॥ ६ ॥

तथेति पाययित्वाऽ[5]र्भाः वत्सा नारुध्य शाद्वले ।
मुक्त्वा शिक्यानि बुभुजुः समं भगवता मुदा[6] ॥ ७ ॥

---

1. K, W. दृशां 2. A,B,G,J तथा°; V. तदा° 3- -3. V स्वार्भवत्सकान् 4. A,B,G,J सरित्पु° 5. B. 'ऽम्भो 6. V तदा

## श्रीधरस्वामिविरचिता भावार्थदीपिका

त्रयोदशेऽहरद्ब्रह्मा वत्सान् पालांश्च मायया ।
तदा तत्सर्वरूपोऽब्दं कृष्णः पूर्ववदाचरत् ॥

**साध्विति।** नूतनयसि नवी[1] करोषि॥ १॥

**सतामिति।** तथाहि - सारभृतां सारग्राहिणां अयं निसर्गः स्वभावः कोऽसौ? अच्युतस्य वार्ता [2-]श्रुता सती[-2] प्रतिक्षणं साधु नव्यवद्भवतीति सः विटानां स्त्रैणानां स्त्रियाः कामिन्याः वार्तेव। यत् कथम्भूतानामपि सताम्? या अच्युत वार्तैव अर्थो येषां तानि वाणीश्रुतिचेतांसि येषां तथाभूतानामपि॥ २,३,४॥

भोजन विधानाय पुलिनं स्तौति - **अहो** इति। स्वीयानां केलीनां सम्पदो विद्यन्ते यस्मिं स्तत्। मृदुला अच्छा वालुका यस्मिंस्तत् किञ्च, स्फुटद्विकसत् सरः, सरोजबाहुल्येनोपचारतः सर एव विकरा दित्युक्तम्। तस्य गन्ध स्तेन हृता आकृष्टा अलयः पत्रिणश्च ये तेषां के उदके ध्वनय स्तेषां प्रतिध्वानाः तैर्लसन्तो द्रुमा स्तै राकुलं व्याप्तम्॥ ५॥

**अत्रेति।** [3-]दिवा दिनमारूढं प्रवृद्धम्। भोजन[-3] वेलाऽतीतेत्यर्थः॥ ६॥

**तथेति।** आरुध्य संरुध्य। शाद्वले हरिततृणे[4] देशे॥ ७॥

---

1. A,B,J नव्यवत् 2- -2. B,J,V omit 3- -3. A,B,J दिवारूढं 4. V °ण°

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

पश्नस्योत्तरं विवक्षुः तावत्प्रश्न मभिनन्दति **साध्विति।** त्वया[1] साधु यथा तथा पृष्टं कुतः ? यत् यस्मात् कथामृतं शृण्वन्नपि नूतनयसि नूतनं[2] करोषि॥ १॥

युक्तमेवैतदित्याह - **सतामिति।** सारग्राहिणां साधूना मयं निसर्गः स्वभाव एव। कौऽसौ? अच्युतस्य वार्ता प्रतिक्षणं साधु नव्यवद्भवतीति यदेषः। कथम्? स्त्रैणानां स्त्रियाः कामिन्याः वार्तेव, कथम्भूताना मपि सताम्? यः अच्युत एवाऽर्थो विषयो येषां तानि वाणीश्रुतिचेतांसि येषां तथाभूतानामपि॥ २॥

शृणुष्वेत्यभिमुखीकरणम्। अवहित इति श्रवणोपयुक्तचित्तसमाधानम्। गुह्यं गोप्य मपि[3] ॥ ३॥

विवक्षितंकृत्तेन सङ्गमयति - **अथेति।** मृत्युतुल्या दघासुरस्य मुखा द्वत्सान् तत्पालकांश्च रक्षित्वा इदं वक्ष्यमाण मुवाच॥ ४॥

पुलिन एव आशिशिषा मुत्पादयितुं तत् स्तौति - **अहो** इति। हे वयस्याः स्वीयानां केलीनां सम्पदो यस्मिन्, मुदुला अच्छा वालुका यस्मिन्, स्वकेलिसमृद्ध्यर्थं मृदुला वालुका यास्मि न्निति वा। स्फुटत् विकसत् सरः, सरोरुहबाहुल्यात् उपचारात् सर एव विकस दित्युक्तम्। तस्य गन्धेन हृत आकृष्टा अलयः पत्रिणश्च तेषाम्। के उदके ध्वनयः तेषां प्रतिध्वानाः तैः लसन्तो द्रुमाः तै राकुलं व्याप्तम्॥ ५॥

अत्र अत्रैव दिवा दिनं रुढं प्रवृद्धम्। भोजन वेला अतीतेत्यर्थः। क्षुधाऽर्दिता वत्साः अपः पीत्वा अत्र समीप एव शनकैः तृणं चरन्तु अदन्तु॥ ६॥

तथैवाऽस्त्वित्युक्त्वा अर्भा बालाः वत्सा नपः पाययित्वा शाद्वले तृणहीरतदेशे वत्सान् आरुध्य भगवता सह शिक्यानि पर्युषितान्नग्रन्थीन् मुक्त्वा बुभुजुः॥ ७॥

---

1. K,W omits त्वया 2. A,B, नवीनं 3. A,B add इति 4. A,B सं°

**कृष्णस्य विष्वक्पुरुराजिमण्डलै रभ्याननाः फुल्लदृशो व्रजार्भकाः।**
**सहोपविष्टा विपिने[1] विरेजु श्छदा[2] इवाम्भोरुहकर्णिकायाः॥ ८॥**

**केचि त्पुष्पै र्दलैः केचि त्पल्लवै रङ्कुरैः फलैः।**
**शिग्भिस्त्वग्भि र्दृषद्भिश्च बुभुजुः कृतभाजनाः॥ ९॥**

**सर्वे मिथो दर्शयन्तः स्वस्वभोज्यरुचिं[3] पृथक्।**
**हसन्तो हासयन्तश्चाऽभ्यवजह्रुस्सहेश्वराः॥ १०॥**

**बिभ्रद्वेणुं जठरपटयोः शृङ्गवेत्रे च कक्षे वामे पाणौ मसृणकबलं तत्फलान्यङ्गुलीषु।**
**तिष्ठन्मध्ये स्वपरिसुहृदो हासयन्नर्मभिस्स्वै स्स्वर्गे लोके मिषति बुभुजे यज्ञभुग्बालकेलिः॥ ११।**

**भारतैवं वत्सपेषु भुञ्जानेष्वच्युतात्मसु।**
**वत्सा स्त्वन्तर्वणे[4][5] दूरं विविशु स्तृणलोभिताः॥ १२॥**

**तान्[6]दृष्ट्वा भयत्रस्[7]तानूचे कृष्णोऽस्य भीभयम्।**
**मित्राण्याशान्मा विरमत[8] ह्यानेष्ये वत्सकानहम्॥ १३॥**

---

1. V पुलिने 2. A,B,G,J,V यथा° 3. V स्वां स्वां 4. V °श्चा° 5. A,B °ने 6. A,B,G,J तान्दृ° 7. A,B,G,J °सन्त्र° 8. A,B,G,J °तेहा°

**श्रीध० कृष्णस्येति।** तदा ते विरेजुः कृष्णस्य विष्वक् परितः पुरु राजिमण्डलैः बहुभिः पङ्क्तिमण्डलै स्सह नैरन्तर्येणोपविष्टाः। श्रीकृष्णाभिमुखानि आननानि येषां ते। फुल्लदृशो विकसितनयनाः। कमलकर्णिकायाः परितः पत्राणि यथेति[1]॥ ८॥

**केचिदिति।** पुष्पै स्तद्दलैः अन्यैश्च पत्रैः कृतानि भाजनानि यैस्ते॥ ९॥

**सर्व** इति। रुचिं स्वाद[2]विशेषम्। अभ्यवजह्रु र्बुभुजिरे। सहेश्वराः श्रीकृष्णसहितः॥ १०॥

**बिभ्रदिति।** यज्ञभुगपि तेषु बुभुजे बालाना मिव केलिर्यस्य सः। तदाह - उदरवस्त्रयो र्मध्ये वेणुं बिभ्रत्[3] दध दिति [4-]सर्वत्र सम्बध्यते[-4]। वाम इति [5-]काकाक्षिन्यायात्[-5] कक्षपाण्यो र्विशेषणम्। मसृणं स्निग्धम् दध्योदन कबलम्। तदुचितानि बिल्व[6]मलकादिफलानि [7]अङ्गुलीषु अङ्गुलिसन्धिषु। कर्णिकेव सर्वाभिमुखो मध्ये तिष्ठन् [8]स्वपरि स्वस्य परित उपविष्टान् [9]इत्यर्थः सुहृदः स्वैर्नर्मभिः परिहासवाक्यैः स्वर्गे स्वर्गनिवासि[10]नि जने मिषति आश्चर्येण पश्यति सति लोके [11-]इह वत्सप[-11] जनानां मध्ये बुभुजे॥ ११,१२॥

**तानिति।** भीभयं भयहेतुभ्यो भयं अस्यापास्य [12-]निरस्येत्यर्थः[-12] यद्वा अस्य विश्वस्य भियोऽपिभयं, यः श्रीकृष्णः आशात् भोजनात्। [13-]अस्मिन्पादे[-13] अक्षराधिक्य मार्षम्॥ १३॥

---

1. A यथा तथेति 2. B °दु° 3. V दधानः 4- -4. V त्राऽन्वयः 5- -5. A,B,J omit 6. A,J °ल्वादि° 7. A,B,J omit अङ्गुलीषु 8. A,B,J omit स्वपरि 9. A,B,J omit इत्यर्थः 10. B,J omit °नि° 11- -11. A,B,J omit 12- -12. A,B,J omit 13- -13. V अत्र

**वीर०** तदा ते रेजुः कथम्भूताः कृष्णस्य विष्वक् परितः बहुभिः पङ्क्तिमण्डलै स्सह नैरन्तर्येणोपविष्टाः कृष्णाभि मुखान्याननि येषां ते, फुल्लदृशो विकसितनयनाः यथा कमलकर्णिकायाः परितः स्थितानि दलानि तद्वत्॥ ८॥

पुष्पैः दलैः [1-]पुष्पदलैः[-1] पुष्पदलादिभिः कृतानि भाजनानि पात्राणि यै स्तथाभूताः बुभुजुः यद्वा पुष्पैः सङ्कटि-तपुष्पदलैः [2]दलैः पद्मिनीदलै रन्यैर्वा पत्रैः पल्लवैः प्रवृद्धारुणकोमलपत्रैः अङ्कुरैस्ततोऽपि पूर्वावस्थाविशिष्टैः उभयत्राऽपि भूमौ नीरन्ध्र मास्तीर्णैः फलै रपि तथाभूतैः त्वग्भिः भूर्जादित्वग्भिः॥ ९॥

[3-]सर्व इति[-3]॥ सहेश्वराः श्रीकृष्णसहिताः अभ्यवजह्रुः बुभुजुः॥ १०॥

यज्ञभुगपि भगवान् लीलया बालस्येव केलि र्यस्य सः, स्वर्गे स्वर्गस्थे लोके देवजने मिषति पश्यति सति बुभुजे। कथम्भूतः उदरवस्त्रयो र्मध्ये वेणुं बिभ्राणः। इद मुत्तरत्राप्यन्वेति। वाम इति [4-]काकक्षिन्यायात्[-4] कक्षपाण्यो र्विशेषणम् वामे कक्षे शृङ्गवेत्रे बिभ्रत्, पाणौ मसृणकबलं स्निग्धदध्यन्नकबलं, तदुचितानि बिल्वाम्रादि फलानि अङ्गुलिसन्धिषु [5]बिभ्रत् बालानां मध्ये तिष्ठन् स्वस्य परितः उपविष्टान् सुहृदो मित्राणि नर्मभिः परिहासवाक्यैः हासयन्॥ ११॥

हे भारत! अच्युते श्रीकृष्ण एव आत्मा चित्तं येषां तेषु भुञ्जानेषु सत्सु वत्साः तृणलोभिताः दूरमन्तर्वणे वनमध्ये विविशुः॥ १२॥

तान् वत्सान् अदृष्ट्वा अतएव भयत्रस्तानि मित्राणि सखीन् [6-]हे मित्राणीति सम्बोधनं वा[-6] भीभयं भयहेतुभ्यो भयं अस्य निरस्य ऊचे, तदेवाऽऽह आशात् भोजनात् मा विरमत विरामं [7]मा कुरुत, हि यस्मात् अहं वत्सानानेष्ये॥ १३॥

1- -1. A,B omit 2. A,B पत्रैः 3- -3. K,W मिथ इति। 4- -4. K,W वत् 5. K,W omits बिभ्रत् 6- -6. K,W omits 7. A,B न

-: वत्सापहारप्रसङ्गः :-

इत्युक्त्वाऽद्रिदरीकुञ्जगह्वरे ष्वात्मवत्सकान्।
विचिन्वन्भगवान्कृष्णः सपाणिकबलो ययौ॥ १४॥

अम्भोजन्मजनि स्तदन्तरगतो मायार्भकस्येशितु
र्द्रष्टुं मञ्जु महित्व[1] मन्यदपि तद्वत्सानितो वत्सपान्।
नीत्वाऽन्यत्र कुरूद्वहान्तरदधात्खेऽवस्थितो यः पुरा
दृष्ट्वाघासुरमोक्षणं प्रभवतः[2] प्राप्तः परं विस्मयम्॥ १५॥

ततो वत्सा नदृष्ट्वैत्य पुलिनेऽपि[3] च वत्सपान्।
उभावपि वने कृष्णो विचिकाय समन्ततः॥ १६॥

क्वाप्यदृष्ट्वाऽन्तर्विपिने वत्सान् पालांश्च विश्ववित्[4]।
सर्वं विधिकृतं[5] कृष्णःसहसाऽवजगाम[6] ह॥ १७॥

ततः कृष्णो मुदं कर्तुं तन्मातॄणाञ्च कस्य च।
उभयायित मात्मानं चक्रे विश्वकृदीश्वरः[7]॥ १८॥

यावद्वत्सपवत्सकाल्पकवपु र्यावत्कराङ्घ्र्यादिकं
यावद्यष्टिविषाण वेणुदल शिग्यावद्विभूषाम्बरम्।
याव च्छीलगुणाभिधाकृतिवयो यावद्विहारादिकं
सर्वं विष्णुमयं गिरोऽङ्गवदजः सर्वस्वरूपो बभौ॥ १९॥

स्वय मात्मात्मगोवत्सान् प्रतिवार्यात्मवत्सपैः[8]।
क्रीडन्नात्मविहारैश्च सर्वात्मा प्राविश द्व्रजम्॥ २०॥

1. V महत्त्व 2. V भग° 3. V ऽथ च 4. A,B,G,J °वित् 5. V ज्ञात्वा 6. V °ऽभि° 7. A,B,G,J °कृदी° 8. A परिवार्या° K,W परिपाल्या°

श्रीध० इतीति। अद्रिषु तद्दरीषु[1] कुञ्जेषु लतादिपिहितोदरविवरेषु, गह्वरेषु सङ्कटस्थानेषु[2-2] च॥ १४॥

**अम्भोजन्मेति।** अम्भोजन्मनः पद्मात् जनिः [3]उत्पत्ति र्यस्य स ब्रह्मा तदन्तरे [4]तस्मिन्नवसरे गत आगत स्तच्छिद्रं प्राप्तो वा [5-]मञ्जु मनोहरम्[-4] अन्यदपि [6]महित्वं महिमानं द्रष्टुं तस्य वत्सा नितःस्थानात् [7] वत्सपांश्च अन्यत्र नीत्वा स्वयं तिरो बभूव [8]भगवतः श्रीकृष्णस्य॥ १५॥

**तत** इति। उभावपि वत्सा न्वत्सपांश्च। विचिकाय [9]अन्वेषितवान्॥ १६॥

**क्वेति।** विधिकृतम् ब्रह्मणा कृतम्॥ १७॥

**तत** इति। उभयायितम् वत्स तत्पालरूपेण [10]उभयथा वर्तमान मित्यर्थः। अयंभावः - यदि तूष्णीमासे तर्हि तन्मातॄणां विषादः स्यात्, यदि च तानेवानयिष्यामि तर्हि ब्रह्मणो मोदो[11] न स्यादिति तदुभयप्रीतये तथा चक्रे इति॥ १८॥

तदेव दर्शयति **याव दिति।** वत्सपानां वत्सकानाञ्च अल्पकं[12] वपुःप्रमाण मनतिक्रम्य एव मुपर्यपि योज्यम्। यद्वा यावद्वत्सपादिवपुः तावत्सर्वस्वरुपोऽजः कृष्णो बभा [13-]वि त्युत्तरत्रान्वयः[-13] [14] "सर्वं विष्णुमयं जगत्" इति प्रसिद्धा या गीः तस्या अङ्गवत्[15] सा गीरिव अर्थस्वरूपेण प्रत्यक्षा यथा तथा बभूवेत्यर्थः॥ १९॥

**स्वयमिति।** एवं सर्वात्मा सन् व्रजं प्राविशत्। कथम्? स्वय मात्मैव प्रयोजकः, आत्मरूपान् गोवत्सा निति कर्मापि स्वयमेवेत्युक्तम्। आत्मरूपैः वत्सपैः प्रतिवार्य। प्रयोज्यकर्ताऽपि स्वयमेव। आत्मविहारैः क्रीडन्निति क्रियाऽ[16]पि कारकाण्यपि स्वय मेवेत्यर्थः॥ २०॥

---

1. A तेषां द° 2- -2. A omits 3. A,B,J omit उत्पत्तिः 4. V अ° 5- -5 V omits 6. V महत्त्वं 7. A adds पुलिनात् 8. A,B,J प्रभव° 9. A,B,J अन्वीक्षि° 10. A,B,J omit उभयथा 11. A,B,J °हो° 12. V °क° 13- -13. A,B,J °वित्यर्थः। उत्तरत्राप्येवम्। 14. A adds कथम्? 15. V adds मूर्तिवत् 16. V omits अपि

**वीर०** [1]इत्युक्त्वा पाणौ कबलेन [2]सहितः अद्रिषु तद्दरीकुञ्जेषु च गह्वरेषु सङ्कटस्थानेषु च वत्सान् विचिन्वन् ययौ॥ १४॥

ततः अम्भोजन्मनः पद्माज्जनिः जननं यस्य स चतुर्मुखः तस्मिन्नन्तरे अवसरे आगतः तदेव छिद्रं प्राप्तो वा यो ब्रह्मा पुरा भगवतः [4]अघासुरमोक्षणरूपं कर्म खेऽवास्थितो दृष्ट्वा विस्मयं प्राप्तः सोऽस्येशितुः अन्यदपि रमणीयं महित्वं [5]महिमानं द्रष्टुं तद्वत्सान् वत्सपांश्च इतोऽन्यत्र नीत्वा अन्तरदधात्तिरोहितो बभूव॥ १५॥

ततो वत्सा नदृष्ट्वा आगतः पुलिने वत्सपांश्चाऽदृष्ट्वा पुन रुभावपि वत्सवत्सपसमुदायौ विचिकाय अन्वेषितवान्॥ १६॥

अन्तर्विपिने वनमध्ये क्वाप्यदृष्ट्वा, विश्वदृक्, हेतुगर्भ मिदम् तत्वात् सर्वं वत्सवत्सपापहरणरूपं कर्म चतुर्मुखकृतं आशु अवगतवान्॥ १७॥

तेषां वत्सानां वत्सपानाञ्च मातॄणां कस्य च ब्रह्मणश्च प्रीतिं कर्तुं विश्वदृगीश्वरश्चेति हेतुगर्भम्। विश्वदृक्त्वात् यथेष्टपरिणामोपयुक्तसार्वज्ञ्यादि गुणयुक्तत्वात् ईश्वरत्वात् प्रभुत्वात् सर्वशक्तित्वाच्च आत्मान मेव उभयायितं वत्सवत्सपायितं तदुभयवदाचरन्तं चक्रे॥ १८॥

तदेव प्रपञ्चयति **यावदिति।** यावच्छब्दः साकल्यार्थः अजः श्रीकृष्णः यावद्वत्सानां वत्सपानाञ्च अल्पवपुरादिकं तावत्स्वरुपो बभौ। कथम्? 'सर्वं विष्णुमयं जगत्' इति या प्रसिद्धा वाणी तस्या अङ्गवत् तदर्थमूर्तिवत् सा गीरेवाऽर्थस्वरूपेण प्रत्यक्षा यथा भवति तथा बभा वित्यर्थः। दलानि भूषार्थं शिरस्सु निहितानि किसलयदलानि शिक् शिक्यानि शीलानि स्वभावाः अभिधा नामानि आकृति रवयवसंस्थानम्। 'गिरोरर्थव' दितिपाठे प्रत्यक्ष स्तदर्थ इवेत्यर्थः॥ १९॥

एवं स्वय मेव सर्वात्मा सन् आत्माभिन्नैर्वत्सपैः आत्माभिन्नान् गवां वत्सान् स्वय मात्मैव प्रयोजकः परिल्यात्म-विहारैः क्रीडन् व्रजं प्राविशत्॥ २०॥

---

1. A, B इत्थमुक्त्वा 2. A,B युक्तः 3. A,B °रीषु 4. A,B °रस्य 5. A,B महत्त्वं

**तत्तद्वत्सा न्पृथक्[1]नीत्वा तत्तद्गोष्ठे [2]निवेश्य सः।**
**तत्तदात्माऽभवद्राजन् तत्त त्सद्म प्रविष्टवान्॥ २१॥**

**तन्मातरो वेणुरवत्वरोत्थिताः उत्थाप्य दोर्भिः परिरभ्य [3]निर्भरम्।**
**स्नेह[4]स्नुतस्तन्यपयः सुधासवं मत्वा [5]परं ब्रह्म सुतानपाययन्॥ २२॥**

**ततो नृपोन्मर्दन [6]मज्जलेपनाऽलङ्काररक्षातिलका[7]ञ्जनादिभिः।**
**[8]संलालितः स्वाचरितैः प्रहर्षयन्सायङ्गतो याम यमेन माधवः॥ २३॥**

**गाव स्ततो गोष्ठ मुपेत्य सत्वरं हुङ्कारघोषैः परिहूतसङ्गतान्।**
**स्वकान् स्वकान् वत्सतरानपायय न्मुहुर्लिहन्त्यः स्रवदौधसं पयः॥ २४॥**

**गोगोपीनां मातृताऽस्मिन्सर्वा स्नेहर्धिकां विना।**
**[9]पुरावदास्वपि हरे स्तोकता मायया विना॥ २५॥**

**व्रजौकसां स्वतोकेषु स्नेहवल्ल्याऽऽब्दमन्वहम्।**
**शनै र्निस्सीम ववृधे यथा कृष्णे [10]तु पूर्ववत्॥ २६॥**

---

1. V ज्ञात्वा 2. V प्र 3. A निर्वृताः 4. A स्रुत 5. K,W सुतं 6. V गन्ध° 7. A,B,G,J,V °श° 8. V सु° 9. A,B,G,J,V. °रो° 10. A,B,G,J त्वपू°

**श्रीध० तत्तदिति**। तत्तदात्मा तत्तद्गोपबालरूपोऽभवत्। तत स्तत्त त्सद्म प्रविष्टः॥ २१॥

गोपिकामोह माह - **तन्मातर** इति। तन्मातरो वेणुरवेण त्वरयोत्थिता स्सत्यः सुतान्मत्वा परं ब्रह्मैव दोर्भिः उत्थप्य [1]उपगूह्य पयस्सुधासवं पय एव सुधाव त्स्वादु आसवव न्मादकं पाययामासु रित्यर्थः॥ २२॥

**तत** इति। एवं यामयमेन तत्तत्कालक्रीडानियमेन सायं गतः प्राप्तः स्वाचरितैः स्वस्याऽऽचरितैः शोभनै राचरितै र्वा मातॄः प्रहर्षयन् तत स्ताभि रुन्मर्दनादिभि रुपलालित इति॥ २३॥

गवां मोहन माह **गाव** इति। परिहूता आहूताश्च ते सङ्गताश्च तान्॥ २४॥

एतावत्तु, वैषम्यं कृष्णस्याऽपि दुर्निवार मासीदित्याह - **गोगोपीना** मिति। गवां गोपीनां चाऽस्मिन्कृष्णे मातृता पलालनादिरूपा पुरोवदेवाऽऽसीत्, किन्तु स्नेहर्धिकां विना, स्नेहाधिक्यन्त्विदानीं विशेष इत्यर्थः। आसु गोगोपीषु हरे स्तोकता च बालभावनादिपूर्ववदेवाऽऽसीत्, किन्तु मायया विना। ममेयं माता, अह मस्याः पुत्रः इति मोहं विनेत्यर्थः॥ २५॥

स्नेहर्धि मेव दर्शयति - **व्रजौकसा** मिति। यथा कृष्णे यशोदानन्दने स्वपुत्रेभ्योऽपि स्नेहाधिक्यं पूर्वमासीत् इदानीं स्वतोकेष्वपि तथैवावर्धतेत्यर्थः। आशब्दं याव त्संवत्सरम्। निस्सीम यथा [2]भवति [3-]त था स्नेहवल्ली ववृधे[-3] ॥ २६॥

---

1. A,J उदुह्य; B उदूह्य 2. V omits भवति 3- -3. A,B,J omit

**वीर०** पृथङ्नीत्वा पृथक्कृत्य तत्तद्गोष्ठे प्रवेश्य तत्तदात्मा तत्तद्बालकप्रतिरूपो भूत्वा तत्तद्बालगृहं प्रविष्टवान्॥ २१॥

अथ गोपिका मोहन प्रकारमाह **तन्मातर** इति। वेणुरवेण लिङ्गेन त्वरयोत्थिताः तद्वत्सपमातरः सुतान् मत्वा परं ब्रह्मैव [1]दोर्भ्यां निर्भरं पूर्णानन्दं यथा तथा उत्थाप्य उपगूह्य स्नेहस्नुतः स्नेहेन स्नुतपयोधरा स्सत्यः। यद्वा स्नेहेन स्नुतं स्तन्यपय एव सुधावत्स्वादु आसववन्मादकं पाययामासुः॥ २२॥

एवं माधवः यामयमेन [2]तत्तत्कालनियमेन सायं गतः प्राप्तः तत श्शोभनैराचरितैः चेष्टितैः प्रहर्षयन् हे नृप! उन्मर्दनादिभि संस्कारितो बभूव॥ २३॥

अथ गवां मोहन प्रकार माह - **गाव** इति। हुङ्कारघोषैः परिहूतांश्च सङ्गताश्च तान् वत्सान् [3]मुहुर्मुहु र्विलिहन्त्यः स्रवत् औधसं आपीनोद्भवं पयः क्षीरम् अपाययन्॥ २४॥

एतावत्तु **वैषम्यं** कृष्णस्याऽपि दुर्निवार मासी दित्याह - **गोगोपीनामिति**। गवां गोपीनाञ्च तस्मिन् वत्स-वत्सपात्मकता मापन्ने कृष्णे स्नेहर्धिकां स्नेहसमृद्धिं [4]विना स्नेहाधिक्यं विनेति यावत्। मातृता उपलालनादिरूपा सर्वा [5]पूर्ववदेवाऽऽसीत् तथा आसु गोपीषु हरेस्तोकता बालभावः पूर्ववदेवाऽऽसीत् किन्तु मायया विना, ममेयं माता, अहमस्याः पुत्र इति मोहं विनेत्यर्थः॥ २५॥

**स्नेहर्धिकामेव दर्शयति - व्रजौकसा** मिति। व्रजौकसां कृष्णे यशोदा नन्दने स्वपुत्रेभ्योऽपि स्नेहवल्ली स्नेहसन्ततिः [6]पूर्व मेव ववृधे। इदानीं स्वतोकेषु स्वापत्येष्वपि आब्दं संवत्सरपर्यन्त मन्वहं निस्सीम निरवधिकं यथा तथा तदैवाऽवर्धतेत्यर्थः॥ २६॥

---

1. A,B °न्यं° 2. K,W omit तत् 3. A,B omit मुहुः 4. A,B, omit विना 5. K,W °दासीत् 6. A,B °वदेव

इत्थ मात्माऽऽत्मनाऽऽत्मानं वत्सपाल[1] मिषेण सः।
पालयन्[2]वत्सपो वर्षं[3] चिक्रीडे वनगोष्ठयोः॥ २७॥

एकदा चारय न्वत्सान् सरामो वन माविशत्।
पञ्चषट्[4]सु त्रियामासु हायनापूरणी ष्वजः॥ २८॥

ततो वि[5]दूराच्चरतो गावो वत्सा नुपव्रजम्।
गोवर्धनाद्रिशि[6]रसि चरन्त्यो ददृशु स्तृणम्॥ २९॥

दृष्ट्वा[7]ऽथ तत्स्नेहवशोऽस्मृतात्मा स गोव्रजोऽत्यात्मपदुर्गमार्गः।
द्विपा त्ककुद्ग्रीव उदास्य पुच्छोऽगाद्धुङ्कृतै रास्नुपया जवेन॥ ३०॥

समेत्य गावो[8] गोवत्सान् वत्सवत्योऽप्यपाययन्।
गिलन्त्य इव चाऽङ्गानि लिहन्त्यः स्वौधसं पयः॥ ३१॥

गोपा स्तद्रोधनायास मौघ्यलज्जोरुमन्युना।
दुर्गाध्वकृच्छ्रतो[10]ऽभ्येत्य गोवत्सै र्ददृशुस्सुतान्॥ ३२॥

[11]त द्वीक्षणोत्प्रेमरसाप्लुताशया जातानुरागा गतमन्यवोऽर्भकान्।
उदुह्य दोर्भिः परिरभ्य मू[12]र्ध्नि घ्राणै रवापुः परमां मुदं ते॥ ३३॥

---

1. V वा° 2. V. भगवान् 3. B वर्षे 4. A,B,G,J °षासु 5. V °ऽति 6. V शिखरे 7. K,W च 8. A,B,G,J. °वोऽधो 9. A मौढ्य 10 K,W °ऽन्वेत्य 11. B,G,J,V तदी° 12. B,G,J मूर्धनि

**श्रीध० इत्थमिति।** एव मात्मा श्रीकृष्णो वत्सपोभूत्वा तत्राऽपि ता[1]वद्वत्सानां पालानाञ्च मिषेण आ[2]त्मानमात्मना पालयन् क्रीडितवानित्यर्थः॥ २७॥

एतावत्पर्यन्तं रामस्याऽपि मोह एवाऽऽसीत् संवत्सरान्तेतु कथञ्चि ज्ज्ञातवा निति दर्शयन्नाह **एकदेति।** [3]पञ्चसु वा षट्सु वा रात्रिषु हायनस्याऽऽपूरणीषु पूरकतयाऽवशिष्टासु इत्यर्थः॥ २८॥

**तत** इति। ततो दूरत एव गोवर्धनशिखरे चरन्त्यो गावो व्रजसमीपे चरतो वत्सान् ददृशुः॥ २९॥

**दृष्ट्वेति।** तदैव स गोव्रजो गवां कलापः तत्स्नेहवश स्तेषां वत्सानां स्नेहनाऽऽकृष्टोऽतएव न स्मृत आत्मा दे[4]हो येन सः, जवेनोपव्रज मगात्। कथम्भूतः? अत्यात्मपदुर्गमार्गः, अतिक्रान्त आत्मपान् गोपालान् यः सोऽत्यात्मपः। तथा दु[5]र्गो दुर्गमो मार्गो यस्य सः स च स[6] च तथा प[7]रस्पर युक्ताभ्यां पद्भ्यां धावन् द्विपादिव प्रतीयमानः ककुद्याकुञ्चिता ग्रीवा यस्य

सः। उदास्य पुच्छः उन्नमिता न्यास्यानि पुच्छानि च येन सः। आ[8] स्रुपयाः सर्वतः स्रवन्ति पयांसि यस्य सः। [9-]आ स्नुपयाः इत्यपि पाठे स एवाऽर्थः[-9]। गोव्रज इत्यनेन वृषभादयोऽप्यगु रित्युक्तम्॥ ३० ॥

तत्र विशेषतो धेनूनां चेष्टितमाह - **समेत्येति**। गोवर्धनस्याधः वत्सवत्यः पुनः प्रसूता अपि॥ ३१ ॥

रामेण दृष्टं वत्सेषु गवां स्नेहातिशय मुक्त्वा गोपानामपि दर्शयितु माह - **गोपा** इति तासां गवां रोधने य आयास स्तस्य मौघ्येन मोघत्वेन लज्जया सहोरुमन्युना दुर्गमार्गजनितक्लेशेन चाभ्येत्य गोवत्सैस्सह सुतान् ददृशुः ॥ ३२ ॥

ततश्च तेषा मीक्षणेन उद्गतो यः प्रेमरसः तस्मिन् आप्लुता निमग्ना आशया येषान्ते लज्जामन्युकृच्छ्र स्तानपि ताडयितु मागता स्सन्तोऽपि गतमन्यवः प्रत्युत जातोऽनुरागो येषान्ते, मूर्धनि घ्राणै रवघ्राणैः परमां मुदमवापुः॥ ३३ ॥

---

1. A,B,J omit तावत् 2. B omits आत्मानम् 3. A,B,J add पञ्चषासु 4. B,J,V omit देहो 5. V omits दुर्गः 6. V omits स च 7. B,J,V omit परस्पर ★ अतः 'आस्रुपया' इति श्रीधरादृतः पाठः भवेदिति भाति। 8. V स्नु 9- -9. V omits

**वीर०** इत्थं वत्सतत्पालनव्याजेन आत्मनैवाऽऽत्मानं पालयन् वनगोष्ठयो र्वर्षं संवत्सरं चिक्रीडे विहृतवान्॥ २७ ॥

तावत्पर्यन्तं रामस्याऽपि मोह एवाऽऽसीत् संवत्सरान्ते तु कथञ्चिज्ज्ञातवानिति दर्शयन्नाऽऽह - **एकदेति**। पञ्चसु षट्सु वा त्रियामासु रात्रिषु हायनापूरणीषु संवत्सरपूरकतयाऽवशिष्टा स्वित्यर्थः वत्सांश्चारयन् स रामो वनम् [1]आविवेश॥ २८ ॥

तदा गोवर्धनाद्रे श्शिखरे विदूर मेव तृणं चरन्त्यो गावोऽनुव्रजं व्रजस्योपान्ते चरतो वत्सान् ददृशुः॥२९॥

स दृष्टवान् गवां व्रजः सङ्घः तेषां वत्सानां स्नेहेनाऽऽकृष्टः अत एव विस्मृत आत्मा येन सः व्रजसमीप मगात्। कथम्भूतः? अतिक्रान्ता आत्मपा गोपा येन तथा दुर्गो मार्गो यस्य सः स च तथा द्विपात् अत्यन्त धावनेन पाश्चात्यपादयोः पूर्व पादाभ्यां सङ्घट्टनात्तथा प्रतीयमान इत्यर्थः। ककुदि ग्रीवा यस्य सः, [2]तावदुदञ्चितग्रीव इत्यर्थः। उन्नमितान्यास्यानि पुच्छानि च येन सः। आस्नु सर्वतः स्रवत् पयो यस्य सः हुङ्कृतैः उपलक्षितः गोव्रजइत्यनेन वृषभादयोप्यगुरिति सूचितम्॥ ३० ॥

तत्र विशेषतो धेनूनां चोष्टितमाह - **समेत्येति**। वत्सवत्योऽपि पुनः प्रसूता अपि गावः पूर्ववत्सान् स्वौधसं स्वापीनोद्भवं पयः अपाययन्। कथम्भूताः? वत्साना मङ्गानि गलिन्त्य इव लिहन्त्यः॥ ३१ ॥

एवं रामेण दृष्टं वत्सेषु गवां स्नेहातिशय मुक्त्वा अथ गोपाना मपि दर्शयितु माह - **गोपा** इति। तासां गवां रोधनेन यश्चाऽऽयास स्तस्य मौघ्येन वैयर्थ्येन या लज्जा तत्सहितेनोरुणा मन्युना दुर्गमार्गजनित क्लेशेन च [3]अन्वेत्य आगत्य गोवत्सैस्सहितान् सुतान् ददृशुः॥ ३२ ॥

ततश्च तेषा मीक्षणेन उद्गतो यः प्रेमरसः तस्मिन्नाप्लुतः निमग्न [4]आशयो येषां [5]ते लज्जामन्युकृच्छ्रै स्तानपि ताडयितुमागता स्सन्त स्ततो गतमन्यवः, प्रत्युत जातोऽनुरागो येषां ते, गोपाः दोर्भि रुदुह्य परिरभ्य च मूर्ध्न्यवघ्राणैः परमा मदृष्ट पूर्वां मुदं प्रापुः॥ ३३ ॥

1. A,B आविशत् 2. A,B omit तावत् 3. A,B अभ्येत्य 4. K, W omits गोपाः 5. A,B, W °दू°

ततः स[1] पशवो[2-] गोपा[-2] स्तोकाश्लेषसुनिर्वृताः।
कृच्छ्राच्छनै रपगताः तदनुस्मृत्युदश्रवः॥ ३४॥

व्रजस्य रामः प्रेमर्धि[3] वीक्ष्यौत्कण्ठय मनुक्षणम्।
मुक्तस्तने[4] ष्वपत्येष्व[5] प्यहेतुवि दचिन्तयत्॥ ३५॥

किमेत दद्भुत मिव वासुदेवेऽखिलात्मनि।
व्रजस्य सात्मन स्तोके ष्वपूर्वं प्रेम वर्धते॥ ३६॥

केयं वा कुत[6] आयाता दैवी वा नार्युताऽऽसुरी।
प्रायो मायाऽस्तु मे भर्तुर्नान्या मे[7]ऽपि विमोहिनी॥ ३७॥

इति सञ्चिन्त्य दाशार्हो वत्सान्सवयसानपि।
सर्वा[8]नचष्ट वैकुण्टं चक्षुषा वयुनेन सः॥ ३८॥

नैते सु[9]रेशा ऋषयो न[10] चैते त्वमेव भासीश भिदाश्रयो[11]ऽपि।
सर्वं पृथक्त्वं निगमात्कथंवदेत्युक्तेन वृत्तं प्रभुणा बलोऽवैत्॥ ३९॥

★ ब्रह्मापि स्वासनस्थेन चतुरास्येन शौरिणा।
मोहितैस्स्व पुरद्वा[12-]स्स्थै[-12]ः परिभूतो न्यवर्तत॥ ४०॥

तावदे[13]त्या त्मभूरात्ममानेन त्रुटयनेहसा।
पु[14]रावदाब्दं क्रीडन्तं ददृशे सक[15]लं हरिम्॥ ४१॥

1. V एवं 2- -2. A, B,G,J प्रवयसो 3. A,B,G,J,V °र्धेः 4. K,W °न्ये° 5. V °षु ह्य° 6. K,W तु 7. K,W मम 8. B,G,K,V °ना° 9. V मदंशा 10. A नवै° 11. V °ऽस्मिन् ★ A,G,J,V omit this verse. The same is commented upon by Vira Raghava 12- -12. B,K द्वारपालैश्च 13. V °वा° 14. A,B,G,J पुरोवदब्दं; V. पुरोवदाब्दं 15. A,B,G,J,V °क°

**श्रीध०** **तत[1]** इति। कृच्छ्रा ततोऽपगता निवृत्ताः तेषां सुताना मनुस्मृत्योद्गच्छन्त्यश्रूणि येषां ते॥ ३४॥

**व्रजस्येति** । प्रेमर्धे रौत्कण्ठय मतिशयं मुक्त स्तने ष्वपत्येषु वीक्ष्य अ[2-]हेतुवित[-2] हेतुमजानन्नचिन्तयत्॥ ३५॥

चिन्ता मेवाऽऽ[4]ह **किमेतदिति** द्वाभ्याम्। वासुदेवे यथा पुरा प्रे[3]म तथा स्वतोकेष्वपि व्रजस्य प्रेम वर्धते, किमेतदद्भुत मिति। किञ्च सात्मनो आत्मसहितस्य व्रजस्य। मम तेषु प्रेमकारणं किमिति भावः॥ ३६॥

**केति।** केयं माया देवानां वा नराणां वा असुराणां वा कुतो वा कस्मात् प्रयुक्ता तत्रान्यमाया न सम्भवति, यतो ममापि मोहो वर्तते। अतः प्रायशो मत्स्वामिनः श्रीकृष्णस्यैव मायेय मस्त्विति सम्भावयति॥ ३७॥

**इतीति।** सवयसान् सखीनपि वयुनेन ज्ञानमयेन चक्षुषा वैकुण्ठं श्रीकृष्ण मेवाऽपश्यत्॥ ३८॥

एवं कृष्णरूपान्सामान्यतो ज्ञात्वा[5] कृष्णं पृष्ट्वा कृष्णोपदेशेन विशेषतो ज्ञातवा नित्याह - **नैत** इति अयमर्थः पाल्यमाना स्ताव द्वत्सा ऋषीणा मंशाः, पालकाश्च देवाना मंशा इति ताव दहं वेद्मि, इदानीन्तु न तथा। किन्त्वस्मिन् भिदाश्रयेऽपि त्वमेव भासि अतस्त्वं सर्वं पृथक् विविच्य कथं वृत्तमिति वदे त्युक्तेन प्रभुणा वक्त्रा निगमात्संक्षेपत एवोक्तं वृत्तं बलोऽवैत् विदितवा नित्यर्थः॥ ३९, ४०॥

ततः किं वृत्तमित्यपेक्षाया माह - **ताव दिति।** वर्षे जाते[6] आत्मनो मानेन त्रुटयनेहसा त्रुटिमात्रेण कालेन सकलं[7] सानुचरं हरि ददर्श॥ ४१॥

---

1. V एवमिति। 2- -2. A,B,J omit 3. V omits प्रेम 4. A,B,J मत्स° 5. A,B,J पालाश्च 6. A adds अपि 7. A adds कालाभिः सहितं

**वीर०** एवं पशुभि र्गोभि स्सहिताः गोपाः तोकाना मपत्याना मालिङ्गनेन सुखिता स्तेषां तोकाना मनुस्मृत्या उद्गच्छन्ति येषां तथाभूता स्सन्तः कृच्छ्रात्कथञ्चित् शनैः ततो ततोऽपगता विश्लिष्य वनंप्रति गता इत्यर्थः॥ ३४॥

रा[1-]मः व्रजस्य गोपसमूहस्य प्रेमर्धेः[-1] प्रेमाधिक्यस्य[2] औत्कण्ठ्य मतिशयं मुक्त स्तन्यं यै स्ते ष्वपत्येषु अनुक्षणं दृष्ट्वा तथाविधस्यादृष्टपूर्वस्य स्नेहस्य कारणं चिन्तितवान्॥ ३५॥

चिन्तामेवाऽऽह - द्वाभ्यां **किमेत दिति।** वासुदेवे यथा पुरा प्रेम तथा व्रजस्य स्वतोकेष्वप्यपूर्वं प्रेम वर्धत इत्येत दद्भुतम्। इव शब्दोऽनतिरिक्तार्थकः। किं किमत्र कारण मित्यर्थः। किञ्च सात्मनः आत्मसहितस्य व्रजस्य मम तेषु प्रेमकारणं किमिति भावः। वासुदेवे तु युक्तमेवेत्यभिप्रायेण विशिनष्टि। अखिलात्मनि आत्मा हि निरतिशयप्रीतिविषयः, तत्त्वा त्तद्युक्त मिति भावः॥ ३६॥

केयं माया। दैवी देवप्रयुक्ता? अथवा नर प्रयुक्ता? यद्वा आसुरी?[3] मम त्वेवं भातीत्याह। प्रायशो मद्भर्तुः कृष्णस्यैव तु माया अन्या तु सकलजन विमोहिनी न स्यादिति मायाशब्दोऽत्र आश्चर्यशक्तिपरः॥ ३७॥

एवं सञ्चिन्त्य दाशार्हो रामः वयुनेन दिव्यज्ञानमयेन चक्षुषा सर्वान्वित्सान्वत्सपांश्च वैकुण्ठं ददर्श कृष्णमेवाऽपश्य दित्यर्थः॥ ३८॥

एवं कृष्णरूपेण सामान्यतो ज्ञात्वा कृष्णं दृष्ट्वा तदुपदेशेन विशेषतो ज्ञातवा नित्याह - **नैत** इति वदेत्यन्तं रामस्य प्रश्न प्रकारपरम्। **अयमर्थः** - पाल्यमाना वत्सा ऋषीणा मंशाः वत्सपाश्च देवाना मंशा इति तावदहं वेद्मि। इदानीन्तु न तथा। किन्त्वस्मिन् भिदाश्रये वत्सवत्सपादिभेदविषयके ज्ञानेऽपि त्वमेव विषयतयाऽवभासि। अतस्त्वं सर्वं पृथ ग्विविच्य कथं वृत्त मिति वदेत्युक्तेन प्रभुणा कृष्णेन वक्त्रा निगमा त्संक्षेपत एवोक्तं बलो रामोऽवैत् विदितवान्॥ ३९॥

ततः किं वृत्त मित्यपेक्षाया माह **ब्रह्मापीति।** वत्सान्वत्सपांश्च तिरोधा[4]प्य ब्रह्माऽपि स्वस्थानङ्गतः। तत्र स्वस्याऽऽसने स्थितेन चतुर्मुखरूपेण शौरिणा मोहितैर्द्वारपालैः परिभूतः, "परमेष्ठी स्वासन मधितिष्ठत्येव। कस्त्व मागतोऽसि" इत्येवं परिभवं प्रापित स्ततो न्यवर्तत॥ ४०॥

तावत् वर्षे जाते सतीत्यर्थः । आत्मभूः ब्रह्मा स्वमानेन त्रुट्यनेहसा त्रुटिकालेनाऽऽगत्य पूर्ववदब्दपर्यन्तं क्रीडन्तं सरामं कृष्णं ददर्श॥ ४१ ॥

---

1- -1. K,W omit 2. K,W °क्यम् 3. K,W omit अत्र 4. A,B, W धापयित्वा

[1-]ब्रह्मोवाच[-1]

यावन्तो गोकुले बाला स्सवत्सा स्सर्व एव हि।
मायाशये[2] शयाना मे नाऽद्याऽपि पुन रुत्थिताः॥ ४२॥

इत एतेऽत्र कुत्रत्या मन्मायामोहितेतरे।
[3-]तावन्तो यावदद्याब्द[-3] क्रीडन्तो विष्णुना समम्[4]॥ ४३॥

एव मेतेषु[5] भेदेषु [6-]चिरं ध्यात्वा[-6] स आत्मभूः।
[7-]सदाश्रया एत इति ज्ञातुं नेशे[-7] कथञ्चन॥ ४४॥

एवं वि[8] मोहयन्विष्णुं विमोहं विश्वमोहनम्।
स्वयैव माययाऽजोऽपि स्वयमेव विमोहितः॥ ४५॥

तम्यां तमोवन्नैहारं खद्योतार्चि रिवाऽहनि।
महतीतरमायैश्यं निहन्त्यात्मनि युञ्जतः॥ ४६॥

---

1- -1. A,B,J, omit 2 A °मये 3- -3. A,B,G,J तावन्त एव तत्राब्दं 4. V सह 5. A सुचिरं 6- -6. A ध्यात्वा सर्वात्मानाऽ° V चिरं ध्यात्वा सदाऽ° 7- -7. A,B,G,J सत्याः के कतरे नेति ज्ञातुं नेष्टे 8. A,B,G,J सम्मो; K,W स मो°

**श्रीध०** दृष्ट्वा च व्यतर्कय दित्याह - **यावन्त** इति द्वाभ्याम्। मे मायाशये मन्मायातल्पे[1]॥ ४२॥

**इत** इति। मन्मायामोहितेभ्य इतरे कुत्रत्याः ?॥ ४३॥

इति वितर्कयन्नमुह्यदित्याह - **एव** मिति द्वाभ्याम्। [3-]एव मेतेषु भेदेषु चिरंध्यात्वा स आत्मभूः इतिपाठः[-3]॥ ४४, ४५॥

ननु मायाश्रयस्य तस्य कुतो मोह इत्यत आह - **तम्यामिति।** महामायाविनि भवत्यन्यमायाया[4] आवरणविक्षेपकत्वाभावे दृष्टान्त[5] द्वयमाह तम्यां तमिस्रायां रात्र्यां नैहारं हिमकणप्रभवं तम इव। तद्धितार्थोपसर्जनस्याऽपि तमसो नैहारमिति विशेषणं छान्दसम्। तत्तमो यथा पृथगावरणं न करोति, किन्तु तत्रैव लीयते। यथा च खद्योतार्चि रहनि पृथक् प्रकाशं न

करोति। एवं महति पुरुषे युञ्जतः पुंस इतरा नीचा[6] माया तत्र न किञ्चित्करोति किं न्त्वात्मनि स्वस्मिन्नेव। ऐश्यं सामर्थ्यं निहन्तीति॥ ४६॥

---

1. B,J omit मत् 2. V °मित्यादि 3- -3. V omits 4. A,B,J भगव° 5. A °मितम् B,J omit आह 6. V °च°

**वीर०** दृष्ट्वा च व्यतर्कय दित्याह द्वाभ्यां **यावन्त** इति। गोकुले यावन्तो वत्सा वत्सपाश्च ते[1] सर्वे मम मायाशये मायातल्पे शयाना स्सन्तोऽद्याऽपि नोत्थिता एव॥ ४२॥

एते तु मन्मायामोहितेभ्य इतरे अत्रदृश्यमानाः कुत्रत्याः, तावन्तो मयाऽपहृताः यावन्त स्तावन्त[2] ः एव यावदद्याब्दम् अतीताब्दादारभ्य अद्य प्रविष्टाब्दपर्यन्तं कृष्णेन समं सह क्रीडन्तो दृश्यन्ते॥ ४३॥

इत्येवं वितर्कयन् मुमोहेत्याह द्वाभ्यम् **एव** मिति। एव मेतेषु वत्सवत्सपादिरूपभेदेषूभयेषु चिरं ध्यात्वा किं त एवैते उत भिन्नाः। तथा चे त्कुत्रत्याः? कुत स्समागताः? इत्येवं ध्यात्वाऽप्यात्मभूः ब्रह्मा, सदाश्रयाः सच्छब्दवाच्य परब्रह्मभूतकृष्णात्मका इति ज्ञातुं कथञ्चन नेशे न प्रबभूव। 'मायाश्रया एत' इति पाठे भगवत आश्चर्यशक्त्याऽऽविर्भाविता इति ज्ञातुं न प्रबभूवेत्यर्थः॥ ४४॥

किन्त्वेवं विष्णुं विमोहयन् विमोहयितु मुद्युक्तश्चतुर्मुखः स्वमायया स्वयमेव विमोहितः नतु कृष्णः। तत्र हेतुं वदन् तं विशिनष्टि विमोहं विगतमोहं विश्वं मोहयतीति तथा तम्। स्वयैव माययेत्यनेन स्वशरीरकपरमात्ममाययेति विवक्षितम्॥ ४५॥

विश्वमोहने भगवति मायान्तरस्याकिञ्चि त्करत्वे दृष्टान्तद्वयमाह **तम्या** मिति। तम्यां तमिस्रायां रात्रौ नैहारं नीहारकण प्रभवं तम इव तद्यथा न पृथगाकारकं किन्तु तत्रैवलीयते, यथा च खद्योतार्चि रहनि न पृथक्प्रकाशं करोति। एवं महति पुरुषे युञ्जत: मायां कर्तुम् उद्युञ्जानस्य[3] पुंस: इतरा नीचा माया तत्र न किञ्चि त्करोति, किन्त्वात्मनि स्वस्मिन्नेव ऐश्य मैश्वर्यं सामर्थ्यं निहन्ति॥ ४६॥

---

1. K,W omit ते 2. A,B, add तदा 3. A,B, उपयुञ्जा°

**तावत्सर्वे वत्सपालाः पश्यतोऽजस्य तत्क्षणात्।**
**व्यदृश्यन्त घनश्यामाः पीतकौशेयवाससः॥ ४७॥**

**चतुर्भुजा श्शङ्खचक्रगदाराजीवपाणयः।**
**किरीटिनः कुण्डलिनो हारिणो वनमालिनः॥ ४८॥**

श्रीवत्साङ्गदवोरत्नकम्बुकङ्कणपाणयः।
★श्री वत्साङ्कित वक्षःस्का: कौस्तुभाऽमुक्तकन्धराः।
नूपुरैः कटकै भा[1]ता: कटिसूत्राङ्गुलीयकैः॥ ४९॥

आ[2]ङ्घ्रिमस्तक मापूर्णा[3] तुलसीनवदामभिः।
कोमलै स्सर्वगात्रेषु भूरिपुण्यव दर्पितैः॥ ५०॥

चन्द्रिकाविशदस्मेरैः सारुणापाङ्गवीक्षितैः।
स्वकार्थनामिव रजस्सत्त्वाभ्यां स्रष्टृपालका:॥ ५१॥

आत्मादिस्तम्बपर्यन्तै र्मूर्तिमद्भिश्चराचरैः।
नृ[4]त्तगीताद्यने[5]कार्हैः पृथक्पृथगुपासिता:॥ ५२॥

अणिमाद्यै र्महिमभि रजाद्याभि र्विभूतिभि:।
चतुर्विंशतिभि स्तत्त्वैः परीता महदादिभि:॥ ५३॥

कालस्वभावसंस्कारकामकर्मगुणा[6]दिभि:।
स्वमहिध्वस्तमहिभि र्मूर्तिमद्भि रुपासिता:॥ ५४॥

सत्यज्ञानानन्तानन्दमात्रैक रसमूर्तय:।
अस्पृष्ट भूरिमाहात्म्या अपि ह्युपनिषद्दृशाम्॥ ५५॥

---

★ This extra half verse is found in B,K,&W edns. and the same is commented upon by Veera Raghava. 1. V भ्राजत् 2. V अ° 3. V °र्णतु° 4. A,B,G,J नृत्य° 5. V °दिनै° 6. V °णैरपि

**श्रीध०** अन्यदप्याश्चर्य माह **तावदिति**। वत्सपाला: वत्सा: पाला: बा[1]लाश्च सर्वे यष्टि विषाणादयश्च॥ ४७, ४८॥

श्रीवत्सप्र[2]भया युक्ता न्यङ्ग[3]दानि दोष्षु येषां ते, रत्नमयानि कम्बुवत्त्रि[4]रेखाधराणि कङ्कणानि पा[5]णिषु येषां ते च ते च त[6]था॥ ४९॥

आ[7]ङ्घ्रिति। त[8]था भूरि बहुजन्मार्जितं पुण्यं तद्युक्तैर्जनै रर्पितैः॥ ५०॥

चन्द्रिकेति। चन्द्रि[9]कावत् विशदस्मितयुक्तैः सहारुणगुणेन च वर्तमाना येऽपाङ्गा स्तै र्वीक्षितैः। स्वकार्थनां[10] स्वभक्तमनोरथानां रजस्सत्त्वाभ्यां स्रष्टृणालका इव व्यदृश्यन्त। सत्त्ववद्विशदस्मितेन पालका इव, रजोव दरुणगुणेन च स्रष्टार इव तादृक्कटाक्षैर्द्योतमाना इत्यर्थ:॥ ५१॥

**आत्मेति।** आत्मा ब्रह्मा, तदादिस्तम्बपर्यन्तैः अ[11]नेकार्हैः अनेकार्हणैः ॥ ५२ ॥

**अणिमाद्यैरिति।** अजाद्याभिः अ[12-]जा माया तत्प्रभृतिभिः[-12] विभूतिभिः शक्तिभिः महदादिभिरिति महत्त[13]त्त्वयोः पृथक्त्व विवक्षया चतुर्विंशति तत्त्वै र्जगत्कारणैः ॥ ५३ ॥

**कालेति।** कालादिभिश्च तत्सहकारिभिश्च। तत्र का[14-]लः क्षोभकः[-14] स्वभावः परिणामहेतुः। संस्कारो [15-]वा सनाया[-15] उद्बोधकः। स्वमहिध्वस्तमहिभिः भगवन्महिम्ना तिरस्कृतस्वातन्त्र्यै रुक्तै स्सर्वैरणिमाद्यैः ॥ ५४ ॥

सर्वेषां मूर्तिमत्त्वेऽपि विशेषमाह **सत्येति।** सत्याश्च ज्ञान रूपाश्च अनन्ताश्च आनन्दरूपाश्च, तत्राऽपि तदेकमात्राः विजातीयस[16-]जातीयभेद[-16] रहिताः, तत्राऽपि चैकरसाः सदैकरूपा मूर्तयो येषां ते। यद्वा, सत्यज्ञानादिमात्रैकरसं यद्ब्रह्म तदेव मूर्तिर्येषा मिति। अत एवोपनिषत् आत्मज्ञानं सैव दृक् चक्षुर्येषां तेषामपि हि निश्चितम् अस्पृष्टभूरिमाहात्म्या न स्पृष्टं स्पर्शयोग्यं भूरि माहात्म्यं येषान्ते तथाभूता स्सन्तः स[17]र्वे व्यदृश्यन्तेति ॥ ५५ ॥

---

1. A,B,J omit बालाः 2. A,B,J प्रभा 3. A °दादीनि 4. A,B,J त्रिधाराणि 5. V पाणौ तु 6. A,B,J omit तथा 7. V अ° 8. V omits तथा 9. A,B,J °कावि° 10. V adds स्वकार्थानां 11. V नैका° 12- -12. A,B,J मायाविद्यादिभिः 13. A,B,J °त्सूत्रयोः 14- -14. V omits 15- -15. V omits 16- -16. A,B,J सम्भेद 17. A,B,J omit सर्वे

**वीर०** अन्यदत्याश्चर्यमाह - **तावदिति।** अजस्य ब्रह्मणः पश्यत स्सतः ताव त्सर्वे वत्साः वत्सपाश्च तत्क्षण एव व्यदृश्यन्त कथम्भूताः? नी[1-]लाम्बुद[-1] इव श्यामाः ॥ ४७ ॥

चत्वारो भुजा येषां शङ्खादयः पाणिषु येषां, राजीवं क[2]मलं किरीटानि येषां सन्तीति तथा। श्रीवत्सप्रभायुक्ता न्यङ्गदानि दोष्षु भुजेषु येषां, रत्नमयानि कम्बुवच्छङ्खवत् वर्तुलानि कङ्कणानि पाणिषु येषां ते च ते, तथोक्ताश्च श्रीवत्सै रङ्कितानि वक्षांसि येषां, कौस्तुभै रामुक्तास्संयुक्ताः कन्धरा ग्रीवा येषां ते, बहुजन्मार्जितपुण्य [3-]वद्भिरर्पितैः[-3] नूपुरादिभिः आपाद मस्तकं सर्वगात्रेषु आपूर्णाः चन्द्रिकाव द्विशदस्मितयुक्तै रारुण्य सहितापाङ्गवीक्षितैः स्वकार्थानां स्वभक्तमनोरथानां स्रष्टारः पालकाश्चेति [4]तथा रजस्सत्त्वाभ्यां स्रष्टपालकाः सत्त्ववद्विशदस्मितेन पालका इव, रजोवदरुणगुणेन स्रष्टार इव तादृक्कटाक्षैः द्योतमाना इत्यर्थः ॥ ४८ - ५१ ॥

आत्मा चतुर्मुखः तत्प्रभृतिभिः स्तम्बपर्यन्तैः मूर्तिमद्भिश्चराचरैः कर्तृभिः नृत्ता[5]द्यनेकार्हणैः साधनै रुपासिताः अत्राचराणामपि तदुपासनोचितमूर्तिमत्त्वं तत्तदभिमानिदेवताद्वारेणेति बोध्यम् ॥ ५२ ॥

अजाद्या[6]भि र्विभूतिभिः कार्योपयोगिनीभिः शक्तिभिः महदादिभिश्चतुर्विंशतिभि स्तत्त्वैः। अजाद्याभिरिति प्रकृतेः पृथगुक्तेः तत्त्वानां जीवात्मना सह चतुर्विं शतित्वम् ॥ ५३ ॥

कालो निमेषादि[7]र्वत्सरान्तः गुणक्षोभहेतुः, स्वभावः परिणामहेतुः, संस्कार श्चोद्बोधहेतुः, कामः कर्महेतुः, कर्म च तत्तद्देहोपलब्धिहेतुः, गुणास्सत्त्वादयो ज्ञानविक्षेप मोहहेतवः तै[8]रुपासिताः, कथम्भूतैः? तस्य भगवतो महिम्ना ध्वस्तमहिभः तिरस्कृतस्वातन्त्र्यै मूर्तिमद्भिश्च॥ ५४॥

**सत्येति।** नित्यनिर्विकारज्ञानानन्दापरिच्छिन्नमात्रस्य परब्रह्मण एकमूर्तयः असाधारणमूर्तयः। मात्रशब्देन विकार जाड्य-दुःख परिच्छेदानां व्यावृत्तिः उपनिषदां दृशां मनोवृत्तीनामपि अस्पृष्ट मविषयभूत मियत्तया परिच्छेत्तु मशक्यं अनवधिकमाहात्म्यं येषाम्॥ ५५॥

---

1- -1. A,B नीलघनः 2. A,B omit कमलं 3- -3. K,W °वदर्पितैः तुलसीनव दामभिः 4. A,B omit तथा 5. A,B °त्या° 6. K,W °दि° 7. A,B °दिव° 8. A,B एतै°

**एवं सकृद्ददर्शाजः परब्रह्मात्मनोऽखिलान्।**
**यस्य भासा सर्वमिदं विभाति सचराचरम्॥ ५६॥**
**ततोऽतिकौ[1]तुकोद्वृत्य स्तिमितैकादशेन्द्रियः।**
**तद्धाम्नाऽभूदजस्तूष्णीं पूर्देव्यन्तीव पुत्रिका॥ ५७॥**
**इतीरेशेऽतर्क्ये निजमहिमनि स्वप्रमितिके परत्राजातोऽतन्निरसनमुखब्रह्मकमितौ।**
**अनीशेऽपि द्रष्टुं किमिद मिति वा मुह्यति सति चच्छादाजो ज्ञात्वा सपदि परमोऽजा[2]यवनिकाम्॥ ५८॥**
**ततोऽर्वाक् प्रतिलब्धाक्षः कः परेतव दुत्थितः।**
**कृच्छ्रा[3-]च्छनैः मील्य दृष्टी[-3] [4]स्चष्टेदं सहात्मना॥ ५९॥**

---

1. A,B,G,J,V कु° 2. A,B,G,J ज° 3. A,B,G,J °दुन्मील्य वै दृष्टी 4. A,B,G,J,V श°

**श्रीध० एवमिति।** एवं सकृदेकदैव ददर्श। परब्रह्मणो विशेषणं यस्येति॥ ५६॥

**तत** इति। अतिकुतुकेन [1]अत्याश्चर्येण उद्वृत्य [2]दृष्टीःपरावृत्य हंसपृष्ठे [3-]निपत्येति[-3] वा। कुतुकशब्दे तृतीयाया श्छान्दसो लुक्। [4-]यद्वा उद्वृत्यः इति छेदः। अतिकुतुकेन उद्वृत्यो विलोड्यो विपर्यस्तः स्वस्मिन्निति यावत्[-4]। पाठान्तरे तु अतिकुतुकेनोद्वृत्तः क्षुभित स्तेषां धाम्ना तेजसा [5]स्तब्धो सर्वेन्द्रियो ब्रह्मा तूष्णीं निश्चलोऽभूत्। अत्र दृष्टान्तः पूर्देवी व्रजाधिष्ठात्री काचिद्देवता, तस्या अन्ति समीपे पुत्रिका चतुर्मुखी [6]कनक प्रतिमेव॥ ५७॥

एवं मोहन्[7]निमग्नमजमुज्जहारेत्याह - **इतीति।** [8]इरेशे इरा सरस्वती तस्या ईशे ब्रह्मणि किमिदमिति मुह्यति सति पश्चात्तद्द्रष्टुमप्यनीशे सति परमोऽजः श्रीकृष्णः सपद्यजायवनिकां मायारुपां तिरस्करिणीं ययाऽद्भुतं दर्शितं तां चच्छाद तिरोऽधत्त अपसारितवानित्यर्थः। अयं लोकाभिमानी ममैश्वर्यं द्रष्टु मयोग्य इति तस्योपरि मायां प्रसारितवानि[9]ति। क मुह्यति सति। अतर्क्ये तर्कागोचरे। निजोऽसाधारणो महिमा यस्य तस्मिन्निति मो[10]हे हेतुरु[11]क्तः। दर्शनायोग्यत्वाय त्रीणि विशेषणानि [12-]स्व प्रमितिके[-12] स्वप्रमितिः स्वप्रकाशश्च तत्कं सुखञ्च यस्मिन्। अत एवाऽजातः प्रकृतेः परत्र परस्मिन् अ[13]तएव अतन्निरसनमुखेन ब्रह्मकैः श्रुति शिरोभिः मिति र्ज्ञानं यस्मिंस्तस्मिन्स्वरूपे॥ ५८॥

**तत** इति। अर्वाक् बहिः प्रतिलब्धान्यक्षीणि येन सः। परेतवत् मृतो यथा कथञ्चित्पुनरुत्तिष्ठति तथा। दृष्टी र्नेत्राणि॥ ५९॥

---

1. A,B,J आश्चर्येण 2. V दृष्टिं 3- -3. V परावृत्येति 4- -4. V omits 5. V स्तिमित 6. A,B,J कृतक 7. A,B,J omit नि 8. V omits इरेशे 9. V °त्यर्थः। 10. V °ह° 11. A द्वयमुक्तम् 12- -12. V omits 13. B,J omit अतएव

**वीर०** अखिलान् वत्सान् वत्सपांश्च परब्रह्माऽभिन्नान् एव मजश्चतुर्मुख स्सकृद्ददर्श। ब्रह्म विशिनष्टि। सचराचर मिदं जगत् यस्य भासा भाति तत्परब्रह्मात्मन इत्यन्वयः तद्धाम्ना तूष्णी मभूदित्युत्तरेण वा॥ ५६॥

अतिकौतुकेनात्याश्चर्ये[1]ण उद्धृत्य दृष्टिं परावृत्य हंसपृष्ठे निपात्य। कौतुकशब्दोत्तरतृतीयाया श्छान्दसोलुक्। अतिकौतुकोद्रिक्त स्तिमितेति [2-]पाठान्तरम्। तदा[-2] अतिकौतुकेन उद्रिक्तान्युत्कटानि अतएव स्तिमितानि दीनप्रायाणि, पारवश्यं प्राप्तानीति यावत्। तान्येकादशेन्द्रियाणि यस्य स, इत्यर्थः। तेषां धाम्ना अभिभूत इति शेषः। अजो ब्रह्मा तूष्णीं बभूव निश्चलोऽभवत्। यथा पूर्देवी व्रजाधिष्ठात्री काचि द्देवता तस्या अन्ति समीपे पुत्रिका चतुर्मुखी कनकप्रतिमा, तद्वत्[3] ॥ ५७॥

एवं मुह्यते चतुर्मुखाय पूर्ववत् आत्मवत्सावत्सपादीन् दर्शयितु मसाधारणस्वमूर्तिदर्शनाच्छादिकां माया माच्छादितवान् इत्याह - **इतीति।** परो मा यस्मात्सः परमः सर्वाभ्यधिकः।[4] अजः कर्मायत्तोत्पत्तिरहितः श्रीकृष्ण स्सपदि ज्ञात्वा चतुर्मुखस्यावस्थां ज्ञात्वा अजायवनिका मजारूपां यवनिकां तिरस्क[5]रणीं चच्छाद आवृतवान्। कस्मिन् सति स्वासाधरणो महिमा यस्मिं स्तस्मिन् स्वरूपे विषयभूते। इत्थ मिराया स्सरस्वत्या ईशे ब्रह्मणि द्रष्टुमप्यनीशे असमर्थे प्रत्युत इदं किमिति मुह्यति सति। निजमहिम्नो दर्शनाशक्यत्वं दर्शयितुं विशिनष्टि। अतर्क्ये इद मित्थन्तया केवलतर्कागोचरे। तत्र हेतु रजातः परत्र। अजातः अजायाः प्रकृतेः परत्र विलक्षणे। प्राकृत मेव कथञ्चित्तर्कगोचर मिति भावः। स्वप्रमिति स्वयंप्रकाशं ज्ञानं कं सुखं सुखात्मकं यस्मिन्। कशब्देनाऽत्र सङ्कोचकाभावात् अपरिच्छिन्नसुखवाचिना परिमितसुखस्वरुपजीवव्यावृत्तिः। इतोऽप्यतर्क्यत्व मवगन्तव्यम्। अतर्क्य इत्यनेन तन्मूल प्रत्यक्षागोचरत्व मपि विवक्षितम्। प्रत्यक्षानुमानाभ्यां प्रमाणाभ्या मनवग[6]न्तव्य इति फलितोऽर्थः। तर्हि किं शशविषाणव तुच्छम् ? नेत्याह, अतन्निरसनमुखब्रह्मकमितौ, अतत् अपरमात्मवस्तु प्रकृतिपुरुषादिकम्। तस्य निरसनमुखेन परमात्मस्वरुपत्वनिरसनद्वारा ब्रह्मणो वेदस्य केन मूर्ध्ना उपनिषद्भगेनेति यावत्। मितिः

अवगति र्यस्य तस्मिन् प्रत्यक्षादिमानान्तरानवरूपस्वभावस्य परमात्मन: केवल वेदान्तवेद्यस्य प्राकृत चक्षुषा द्रष्टु मयोग्यत्वात् तद्दर्शनाशक्ते सति ब्रह्मणि तज्ज्ञात्वा यथावस्थित वत्सवत्सपादि दर्शनार्थं प्रदर्शितस्वासाधारणरूपाच्छादनार्थं चाऽजां चच्छादेत्यर्थ: ॥ ५८ ॥

तत: [7]मायायवनिकाच्छादनानन्तरं अर्वाग्बहि: प्रतिलब्धान्यक्षाणीन्द्रियाणि येन स:, क: [8]ब्रह्मा परेतव [9]दुत्थित: मृतो यथा पुन: कथञ्चि दुत्तिष्ठति तद्वदुत्थित: संज्ञां प्राप्त: [10]शनै: कृच्छ्रा त्कथञ्चित् दृष्टी: नेत्राणि [11-]मील्य उन्मिषिते[-11] (तानि) कृत्वा। दृष्टिरिति पाठे मील्ये उन्मिषिते दृष्टी यस्य स:, आत्मना [12] सहेदं जगदपश्यत्। पूर्वं भगवद्रूपेभ्योऽन्य दपश्यन् इदनीं जगज्जगदेवाऽत्मान मात्मान मेवाऽचष्टेत्यर्थ: ॥ ५९ ॥

---

1. A,B °प° 2- -2. A,B पाठे 3. A,B add इत्यर्थ: 4. A,B add य: 5. A,B °स्कारिर्णी 6. A,B गम्य 7. A,B,K अजा 8. A,B omit ब्रह्मा 9. A,B omit उत्थित: 10. A,B omit शनै: 11. A,B उन्मील्य अनिमीलितानि 12. A,B add चतुर्मुखेण

सपद्येवाऽभित: पश्यन् दिशोऽपश्यत्पुर: स्थितम्।
बृन्दावनं जनाजीव्य द्रुमाकीर्णं समाप्रियम् ॥ ६० ॥

यत्र नैसर्गदुर्वैरा: सहासन्नृमृगादय:।
मित्राणीवाजितावास[1]द्रुतरु[2]ट्तर्षादिके ॥ ६१ ॥

तत्रोद्वहत्पशुपवंशशिशुत्वनाट्यं ब्रह्माऽद्वयं परमनन्त मगाधबोधम्।
वत्सान्सखीनिव पुरा परितो विचिन्वदेकं सपाणिकवलं परमेष्ठ्यचष्ट ॥ ६२ ॥

दृष्ट्वा त्वरेण निजधोरणतोऽवतीर्य पृथ्व्यां वपु: कनकदण्ड मिवा[3]भिपात्य।
स्पृष्ट्वा चतु[4]र्मकुटकोटिभि रङ्घ्रियुग्मं नत्वा मुदश्रु[5]सुजलैरकृताऽभिषेकम् ॥ ६३ ॥

उत्थायोत्थाय कृष्णस्य चिरस्य [6]पदयो: पतन्।
आस्ते [7]महित्वं प्राग्दृष्टं स्मृत्वा स्मृत्वा पुन: पुन: ॥ ६४ ॥

शनैरथोत्थाय विमृज्य लोचने मुकुन्द मुद्वीक्ष्य विनम्रकन्धर:।
कृताञ्जलि: प्रश्रयवान् समाहित: सवेपथु गद्गदयैडते[8]रया ॥ ६५ ॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे पूर्वार्धे त्रयोदशोऽध्याय: ॥ १३ ॥

---

1. V० सात् 2. A,B,G,J तर्षकादिकम्; V तरुषादिकम् 3. W °ति° 4. A,B,G,J °र्मु° 5. V सलिलैः 6. A,B,G,J पा° 7. V महत्त्वं 8. A,B,G,J °ल

**श्रीध०** **सपदीति।** जनाना माजीव्यैः [1-] उपजीव्यैः [-1] द्रुमै राकीर्णम्। समाप्रियं सम्यक् आ समन्तात् प्रियाणि यस्मिंस्तत्॥ ६०॥

तदाऽऽह **यत्रेति।** नैसर्ग[2]दुर्वैराः स्वाभाविकाप्रतिकार्य वैरवन्तोऽपि नराः सिंहादयश्च मित्राणीव यत्र सहैवाऽऽसन्। अजितस्य [3]श्रीकृष्णस्य आवासेन द्रुताः पलायिताः रुट्तर्षादयः क्रोधलोभादयो यस्मात्तथाभूतं [4] बृन्दावन मपश्य दिति॥ ६१॥

**तत्रेति।** तत्र च परमेष्ठी ब्रह्मा इव पुरा पूर्ववदेव ब्रह्म अचष्ट अपश्यत्। कथम्भूतम् ? पशुपवंश शिशुत्वं नाट्य मुद्वहत्। नाट्यमित्यत्रहेतुः - अद्वय मित्यादि। अद्वयञ्च वत्सान्विचिन्वत्, एकञ्च सखीन् अगाधबोधञ्च विचिन्वत्, अनन्तञ्च परितो विचिन्वत्, परञ्च शिशुत्व मुद्वहत्, ब्रह्म च सपाणिकबल मिति नाट्य मेवोद्वह दित्यर्थः ॥ ६२॥

**दृष्ट्वेति।** निजधोरणतः स्ववाहनात् त्वरेण वेगेनावतीर्य दण्डव न्नत्वा चतुर्णां मुकुटाना मग्रै रङ्घ्रियुग्मं स्पृष्ट्वा मुदश्रु[5]सलिलैः आनन्दाश्रुरूपैः सुजलै रभिषेक मकरोदिति॥ ६३॥

**उत्थायेति।** चिरस्य चिरं पादयोः पतन्नाऽऽस्ते॥ ६४॥

**शनैरिति।** सवेपथुः सकम्पः। अतएव गद्गदया अनुकरण मेतत् [6]इरया वाचा ऐडत अस्तौत् ॥ ६५॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां त्रयोदशोऽध्यायः॥ १३॥

---

1- -1. A,B,J omit 2 V °र्गिक 3. A,B,J omit श्रीकृष्णस्य 4. V adds अत्र तरुषेति वर्णविश्लेषः छन्दोऽनुरोधेन। 5. A,B,J, सुजलैः 6. A,B,J °ल°

**वीर०** ततः पूर्वस्थितं बृन्दावनञ्चाऽपश्यत्। कथम्भूतम्? जनाना माजीव्यै रुपजीव्यैः द्रुमैः आकुलं व्याप्तं समाप्रियं सम्यञ्चि आ समन्तात् प्रियाणि यस्मिं स्तत्॥ ६०॥

[1]तदाह - **यत्रेति।** यत्र वने नैसर्गदुर्वैराः नैसर्गिकं [2-]स्वाभाविकं[-2] दुर्वैरम् [3]अप्रतिकार्यं वैरं येषां ते नराः [4-]गोपादयः[-4] मृगा स्सिंहादयश्च मित्राणि [5-]सुहृद स्सन्तः[-5] सहैवाऽऽसन्। तत्र [6-]हेतुं वदन् वनं विशिनष्टि[-6] अजितस्य भगवत आवासेन द्रुताः पलायिताः रुट्तर्षादयः क्रोधलोभादयो यस्मात्तस्मिन् ॥ ६१॥

तत्र परमेष्ठी ब्रह्मा पुरेव पूर्वव त्तथैव अपश्यत्। कथम्भूतम् ? गोपालशिशुत्वनटन[7]मुद्वहत् श्रीकृष्णात्मकं परं ब्रह्म अद्वयं स्वतुल्यवस्त्वन्तररहितं स्वतुल्यगोपबालान्तररहितं वा अपरिच्छिन्नज्ञानस्वरूप मनन्तं त्रिविधपरिच्छेदरहितम् एक मसहायं पाणौ कबलेन सहितं सखीन् वत्सांश्च विचिन्वत् एवम्भूतं कृष्णात्मकं ब्रह्माऽचष्टेत्यर्थः॥ ६२॥

इत्थं दृष्ट्वा त्वरया निजधोरणात् स्ववाहनादवतीर्य [8]पृथ्व्यां कनकदण्डमिव स्वशरीरं पातयित्वा चतुर्णां [9]मकुटानां किरीटानां कोटिभिः अग्रैरङ्घ्रियुग्मं स्पृष्ट्वा आनन्दाश्रुरूपैस्सलिलैरभिषेकम् अकृत अकरोत्॥ ६३॥

चिरस्य चिरं पदयोः पतन् [10-]उत्थायोत्थाय इत्यनेन पुनः पुनः पतन् इति सूचितम्[-10]। प्राग्दृष्टं [11] [12]माहात्म्यं पुनः पुनः स्मृत्वा [13]आस्ते आस्त [14]॥ ६४॥

अथ शनैरुत्थाय नेत्रे विमृज्य मुकुन्दमुद्वीक्ष्य, विनम्रा कन्धरा ग्रीवा यस्य सः, [15-]अत एव बद्धाञ्जलिः[-15] [16-]विनययुक्तः[-16] [17-]एकाग्रचित्तः[-17] सवेपथुः सकम्पः अत एव गद्गदया [18]वाचा ऐडत तुष्टाव॥ ६५॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां त्रयोदशोऽध्यायः॥ १३॥

---

1. A,B तदेवाह 2- -2. K,W omit 3. A,B अनिवार्यं 4- -4. W omits 5- -5. A,B,K सुहृद इव वसन्तः 6- -6. W हेतुः 7. W °ना° 8. A,B पृथिव्यां 9. A,B मु° 10- -10. K, W omits 11. A,B add श्रीकृष्णस्य 12. K,W महित्वं 13. A,B omit आस्ते 14. A,B add इत्यर्थः 15- -15. K,W omit 16- -16. A,B विनयवान् 17- -17. K, W omit 18. A,B वाण्या

# चतुर्दशोऽध्यायः

(विजयध्वजीये अयमध्यायो नाऽस्ति)

## ब्रह्मकृत स्तुतिः

**ब्रह्मोवाच**

नौमीड्य! तेऽभ्रवपुषे तडि[1]दम्बराय गुञ्जावतंस परिपि[2]ञ्छलसन्मुखाय।
वन्यस्रजे कबलवेत्रविषाणवेणु लक्ष्मश्रिये मृदुपदे पशुपाङ्गजाय॥ १॥

अस्यापि देव वपुषो मदनुग्रहस्य स्वेच्छामयस्य न तु भूतमयस्य कोऽपि।
नेशे महि त्ववसितुं मनसाऽऽन्तरेण साक्षात्तवैव किमुतात्मसुखानुभूतेः॥ २॥

ज्ञाने प्रयासमुदपास्य नमन्त एव जीवन्ति सन्मुखरितां भवदीयवार्ताम्।
स्थाने स्थिताः श्रुतिगतां तनुवाङ्मनोभिः ये प्रायशोऽजित जितोऽप्यसि तैस्त्रिलोक्याम्॥ ३॥

श्रेयस्स्रु[3]तिं भक्तिमुदस्य ते विभो क्लि[4]श्यन्ति ये केवल बोधलब्धये।
तेषामसौ क्लेशल[5] एव शिष्यते नान्यद्यथा स्थूलतुषावघातिनाम्॥ ४॥

पुरेह भूमन्बहवोऽपि योगिनः त्वदर्पितेहा निजकर्मलब्धया।
विबुध्य भक्त्यैव कथोपनीतया प्रपेदिरेऽञ्जो[6]ऽच्युत! ते गतिं पराम्॥ ५॥

---

1. A,B,G,J °ङि° 2. A,B,G,J °च्छ° 3. B,V °सृति° 4. A यतन्ति 5. K,W लवोऽव 6. V भोऽच्युत!

## श्रीधरस्वामिविरचिता भावार्थदीपिका

चतुर्दशेऽद्भुतं दृष्ट्वा पूर्वागन्तुकनिश्चयम्।
अनीशः कर्तुमस्तौषीत्कृष्णं ब्रह्मा[1] विमोहितः॥

स्वकृतापराधेन भिया सकम्पया भगवन्महिमानमनवगाहमानः यथादृष्ट स्वरूपमेव कीर्तयन्नाह - **नौमीति**। हे ईड्य! स्तुत्य! ते तुभ्यं नौमि[3] स्तौमि[4]। द्वितीयार्थे चतुर्थी, अथवा नौमीत्युक्त्वा प्रस्तुतस्य भगवतः कर्मत्वे ज्ञाते प्रयोजनापेक्षायाम् एवम्भूतो भगवानेव प्रयोजनमिति तादर्थ्ये चतुर्थी। यद्वा, तुभ्यं त्वामेव प्रसादयितुं त्वामेव स्तौमीत्यर्थः[5]। अभ्रवद्वपुर्यस्य तस्मै। तडिद्वदम्ब[6]रं यस्य तस्मै। गुञ्जाभिरवतंसौ कर्णभूषणे प[7]रि प[8]रितः पि[9]ञ्छं बर्हापीडं च तै र्लसत्

मुखं यस्य तस्मै। वन्याः स्रजो यस्य तस्मै। कवलादिभिः लक्ष्मभिः श्री शोभा यस्य तस्मै। [10-]मृदू पादौ यस्य तस्मै[-10], पशुपस्याङ्गजाय यद्वा, पशूनिन्द्रियाणि [11-]य पान्ति रक्षन्तीति पशुपाः देवाः त एवाङ्गजाः यस्य तस्मै[-11] ॥ १ ॥

ननु नौमीति प्रतिज्ञाय, किं स्वरूपानुवादमात्रं क्रियते, अत आह - **अस्यापीति।** [12]हे देव! अस्यापि सुलभत्वेन प्रकाशितस्यापि तव वपुषः अवतारस्य महि महिमानम् अवसितुं ज्ञातुं कोऽपि को ब्रह्मा [13]अहमपि नेशे न शक्नोमि। यद्वा, कश्चिदपि नेशे न समर्थ आसीत् सुलभत्वाय विशेषणद्वयम्। मदनुग्रहस्य ममानुग्रहो यस्मात् तन्मदनुग्रहं तस्य, किञ्च स्वेच्छामयस्य, [14]स्वेषां स्वीयानां [15]भक्तानां यथा यथा इच्छा तथा तथा भवतः तर्हि किमिति ज्ञातुं न शक्यते अत आह - न तु भूतमयस्य अचिन्त्यशुद्धसत्त्वात्मकस्य [16]यथास्याप्येवं [17]तथा, [18] कथं पुनः साक्षात्तव केवलस्य आत्मसुखानुभूतेः[19], तावक स्वसुखानुभवमात्रस्या[20]नवतारिणो गुणातीतस्य महिमानम् अन्तरेण, विरुद्धेनापि मनसा को वा ज्ञातुं समर्थो भवेत्। अथवा [21]न तु भूतमयस्य, अपि तु विराड्रूपस्य तव त्वन्नि[22]यम्यस्यापि वपुषः [23]महि [24]महिमानं अवसितुं कोऽपि नेशे। तदा साक्षात्तवैवासाधारणस्य नि[25]यम्य नियन्तृभेदरहितस्य उक्तलक्षणस्य अस्य [26]महि महिमानम् अवसितुं कोऽपि नेश इति किं [27]वक्तव्यमित्यर्थः॥ २ ॥

तर्हि अज्ञाः कथं संसारं तरेयुरत आह - **ज्ञान** इति। उदपास्य ईषदप्यकृत्वा सद्भिर्मुखरितां स्वत एव नित्यं प्रकटितां भवदीयां[28] वार्तां स्वस्वस्थान एव स्थितास्स[29]न्तः सन्निधिमात्रेण स्वत एव श्रुतिं[30] तां श्रवणं प्राप्तां, तनुवाङ्मनोभिः नमन्तः सत्कुर्वन्तः ये जीवन्ति केवलं यद्यपि नान्यत् कुर्वन्ति तैः प्रायशः त्रिलोक्यामन्यैरजितोऽपि [31]हे अजित[-31] त्वं जितः प्राप्तोऽसीति। किं ज्ञानश्रमेणेत्यर्थः॥ ३ ॥

भक्तिं विना ज्ञानं तु नैव सिध्येदित्याह - **श्रेय** इति। श्रेयसामभ्युदयापवर्गलक्षणानां [32-]स्रुतिः स्रवणं[-32] यस्याः सरस इव निर्झराणां ते तव भक्तिम् उदस्य त्यक्त्वा श्रेयसां मार्गभूतामिति वा। तेषां क्लेशलः क्लेश-एव [33]शिष्यते [34]नान्यत्। अयम्भावः यथा अल्पं प्रमाणं धान्यं परित्यज्य अन्तः कणवि[35]हीनान् स्थूला[36]न् धान्याभासान् तुषानेवावघ्नन्ति तेषां न किञ्चित् फलम्। एवं भक्तिं तुच्छीकृत्य ये केवलबोधाय क्लि[37]श्यन्ति प्रयतन्ते तेषामपीति॥ ४ ॥

भक्त्यै ज्ञानं नान्यथेत्यत्र सदाचारं प्रमाणयति - **पुरेति।** हे भूमन्! [38-]अपरिच्छिन्न[-38] इह लोके पूर्वं योगिनोऽपि सन्तः योगैर्ज्ञानमप्राप्य[39] पश्चात् त्वदर्पितेहाः त्वय्यर्पिता लौकिक्यपि ईहा चेष्टा यैस्ते निजकर्मलब्धया त्वदर्पितैः निजैः कर्मभिः लब्धया। यद्वा त्वय्यर्पिता ईहा च निजानि कर्माणि च तैर्लब्धयेत्येकं पदम्। कथोपनीतया कथमा त्वत्समीपं प्रापितया भक्त्यैव विबुध्य[40] आत्मानं ज्ञात्वा अज्ञः सुखेनैव ते परां गतिं प्राप्ताः एवं तावत् सगुणनिर्गुणयो[41]रुभयोरपि ज्ञानं दुर्घटम[42]पि तत्कथाश्रवणादिनैव त्वत्प्राप्तिः, नान्यथेत्युक्तं [43]भवति॥ ५ ॥

---

1. V °ह्याऽति° 2. A adds तावत् 3. B,J,V omit स्तौमि 4. V adds नम इत्यर्थः। यद्वा 5. V नौ° 6. A,B,J °रं 7. V omits परि 8. B,J omit परितः 9. A,B,J पिच्छं 10- -10. V omits 11- -11. A,B,J omit 12 A,B,J भो 13.

V omits अहं 14. B,J,V omit स्वेषां 15. V omits भक्तानां 16. A,B,J यदा 17. A,B,J तदा 18. A adds किमुत 19. A,B,J °तैरेव स्व° 20. A,B,J °स्याव° 21. A,B,J omit न तु 22. V °या° 23. A,B,J omit महि 24. V omits महिमा 25. V °या° 26. A,B,J omit महि 27. A,B,J किमु 28. A,B,J °यवा 29. A,B,J °स्तत्स° 30. A,B,J °तिग° 31- -31. A,B,J omit 32- -32. B,V सृतिः सरणं 33. A,B,J add अवं 34. A,B,J omit नान्यत् 35. A,B,J omit वि 36. A,B,J °लधा° 37. B,J,V omit क्लिश्यन्ति 38- -38. V omits 39. A adds अपि 40. A adds विश्वव्यापकं 41. V °योरपि 42. A,B,J °मिति 43. A,B,J omit भवति

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

वात्सल्यसौशील्या[1]दिगुणाविष्कारपूर्वकं स्वापराधं क्षमापयितुकामस्तावत् त्वन्मायातितरणे त्वत्प्रपत्तिरेवोपायो नान्योऽस्तीत्यभिप्रायेण प्रस्तुतरूपयुक्तं भगवन्तं शरणं व्रजति **नौमीति।** हे ईड्य! ते तुभ्यं केवलं नौमि "णु स्तुतौ" स्तुतिरत्र अपराधसहनमायातरणतदर्थशरण्यत्वाद्युपयुक्तवात्सल्यक्षमादि गुणाविष्कारपूर्वकोपायत्वाध्यवसायरूपा विवक्षिता। स्तुतेः गुणिनिष्ठगुणाभिधानरूपत्वात् तस्याश्चोपायत्वाध्यवसायार्थत्वात् धातोर्लक्षणया तत्र वृत्तिसम्भवात् ते इति कर्मण एव सम्प्रदानत्वविवक्षया चतुर्थी। तदतिरेकेण पृथक्स्तुतेस्साधनत्वनिरासाय तथा विवक्षा कृता, उपायत्वाध्यवसायात्मकप्रपदनेऽपि तस्यैव प्रयोजककर्तृत्वेन तस्या अपि तदधीनत्वेन तस्याः स्वतः साधनत्वाभावदिति भावः। तावत्सौशील्याद्यनन्तकल्याणगुणनिलयस्य भगवतः कृष्णस्य सौशील्यमाविष्कुर्वन् विशिनष्टि। पशुपाङ्गजाय नन्दसुताय, निस्सीममहिम्नः सौशील्यमन्तरेण पशुपाङ्गजत्वासम्भवेन सौशील्यमाविष्कृतम्, तच्च महतः [2]मन्दैस्सह संश्लेषस्वभावत्वम्। मृदू पादौ यस्य कबलादिभिः लक्ष्मभिश्चिह्नैः शोभा यस्य, वनजानां पुष्पाणां स्रक् यस्य, गुञ्जाभिरवतंसौ कर्णभूषणे परितः [3]पिञ्छबर्हापीडं तैर्लसत मुखं यस्य, त[4]टिदिव अम्बरं यस्य, अभ्रवद्वपुर्यस्य तस्मै ते नौमीत्यन्वयः॥ १॥

निस्सीममहिमत्वमेव कैमुत्यन्यायेन दर्शयन् स्तौति **अस्यापीति।** अस्य मह्यं प्रदर्शितस्य पशुपाङ्गजरूपस्यापि वपुषो महि महिमानम् अन्तरेण मनसा अन्तरिन्द्रियेण [5]मनसाऽप्यवसितुम् अध्यवसितुं कोऽपि ब्रह्माऽपि सन् अहमपि नेशे न प्रभवामि, किं पुनरात्मनः परमात्मनस्सुखानुभूतेः अनुकूलज्ञानस्वरूपस्य तव महिमानमवसितुं नेशे इत्यन्वयः। किं तद्वपुषो महित्वं यदवसितुं न प्रभवतीत्यपेक्षायां तद्वाचामगोचरमित्यभिप्रायेण अस्मदादिवपुषो वैलक्षण्यमात्रं वेद्मीति तद्वपुर्विशिनाष्टि। मदनुग्रहस्य मय्यनुग्रहो यस्य मत्प्रार्थनां सफलीकर्तुमुपात्तस्येत्यर्थः। स्वेच्छामयस्य स्वेच्छातः आगतः स्वेच्छामयः "तत आगत" (अष्टा. 4-3-74) इत्यधिकारे "मयट् च" (अष्टा. 4-3-82) इति मयट्, स्वेच्छामात्रपरिगृहीतस्य न त्वस्मदादिजीववपुर्वत् कर्मायत्तस्येत्यर्थः। किञ्च न तु भूतमयस्य अभूतसङ्घसंस्थानरूपस्य "न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः" (भार.शान्ति 206-60) इति वचनार्थोऽत्रानुसन्धेयः, शुद्धसत्वमयस्येति भावः॥ २ ॥

ननु मां मोहयितुं प्रवृत्तः पराजितश्च त्वं मच्छरणागतिमात्रेण कथं मामजितं जेतुमुद्युङ्क्षे। किञ्च जीवस्वरूपमपि सुखानुभूतिरूपमेव, अतः प्रकृतिवियुक्ततत्स्वरूपावस्थितिरूपकैवल्याय तदुपासनमेव कुरु। किं मच्छरणवरणेनेत्यत आह **ज्ञान** इति। ज्ञाने ज्ञानयोगे प्रकृतिविविक्तप्रत्यगात्मोपासनयोगे प्रयासं त्यक्त्वा नमन्त एव शरणागता एव त्वामेव त्वन्मायातरणसाधनत्वेन अध्यवस्यन्तीति यावत्, उपायवाचिशरणादिपदस्थाने नमश्शब्दप्रयोगो दृष्टचरः "द्रौपद्या सहितास्सर्वे

नमश्चक्रुर्जनार्दनम्'' इति। स्थाने स्वस्ववर्णाश्रमानुरूप धर्मानुष्ठानरूपे त्वदाज्ञारूपत्वेन प्रपन्नैरपि अनतिलङ्घ्ये स्थाने स्थिताः तन्वादिकरणत्रयेण सद्भिः प्रकटितां भवदीयवार्तां त्वत्कथां श्रुतिगतां श्रवणपथं प्राप्तां ये जीवन्ति उपजीवन्ति भवदीयवार्तामिव धारकीकुर्वन्तीत्यर्थः, हे अजित! कैरप्यजितोऽपि त्वमिति सम्बोधनाभिप्रायः तैः उक्तविधैः [6]त्रिलोक्यां त्रिलोक्यन्त[6]र्भूतैहिकामुष्मिक विषयेषु असितैः ''षिञ् बन्धने'' अनासक्तैः प्रायशः त्वं जित एव त्वच्छरणागतिरेव त्वद्वशीकारोपाय इति भावः। ज्ञाने प्रयासमुदपास्येत्यनेन ज्ञानयोगः केवल[7]प्रयासमात्रफलो न तु पुरुषार्थपर्यवसायीति सूचितम्। ''सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभाक्'' (भार 12-328-31) इति केवलिनोऽपि च्यवनधर्मत्वाभिधानादिति भावः॥ ३॥

ननु तर्हि ज्ञानयोगः शास्त्रैः कर्तव्यतया किमर्थमुच्यते इत्यपेक्षायां कैवल्यार्थज्ञानयोगस्य पुरुषार्थापर्यवसायित्वेऽपि भक्तियोगानुग्राहकतयाऽनुष्ठितस्य तत्पर्यवसायित्वमस्त्येवेति सूचयन् प्रपत्तियोगवद्भक्तियोगस्यापि त्वद्वशीकरणोपायत्वमस्तीत्याह - श्रेयस्स्रुतिमिति। हे विभो! श्रेयस्स्रुतिं श्रेयसः स्रुतिः स्रवो यस्यास्तां त्वन्मायातरणद्वारा निरतिशयापरिच्छिन्नानन्दरूप त्वत्प्राप्तिरूपश्रेयसो दोग्ध्रीं ते तव भक्तिमुदस्य त्यक्त्वा केवलप्रत्यगात्मानुभूतिलब्धये कैवल्याय ये क्लिश्यन्ति साक्षान्मुक्तिसाधनभूतां त्वद्भक्तिं तदनुग्राहकं ज्ञानयोगं च विहाय केवलकैवल्यार्थतया ज्ञाने क्लिश्यन्तीत्यर्थः। तेषामसौ क्लेशलवोऽवशिष्यते, न त्वन्यत्फलम्। क्लेशल एवेति पाठे क्लेशं लाति आदत्त. इति क्लेशलः क्लेशावहो व्यापार इत्यर्थः। अन्तस्सारभूततण्डुलकणरहितान् स्थूलधान्याभासान् तुषान् अवघ्नन्तीति तथा तेषां यथा [8]नान्यत्, तद्वदित्यर्थः॥ ४॥

ननु भक्त्या मुक्तः कश्चित् किं दृष्टचर इत्यपेक्षायां न केवलं कश्चिदेव, अपि तु बहव इत्याह - **पुरेति**। हे भूमन्! विपुलानन्दरूप! इह लोके बहवः पुरुषाः योगिनः भक्तियोगानु ग्राहकात्मयाथात्म्ययोगयुक्ताः त्वय्यर्पिता ईहा चेष्टा वर्णाश्रमानुगुण धर्मानुष्ठानरूपा चेष्टा यैस्तथाभूताः निजकर्मभिः वर्णाश्रमानुगुणैः सत्कर्मभिर्लब्धया निष्पन्नया यद्वा त्वदर्पितेहाः ईहा फललिप्सा फलाभिसन्धिरहिता इत्यर्थः। निजकर्मभिर्लब्धया, अनेन फलाभिसन्धिरहितवर्णाश्रम[9]धर्मानुगृहीतत्वमुक्तम्, कथोपनीतया नित्यं त्वत्कथाश्रवणादिभिः प्रत्यक्षरूपतां प्रापितया भक्त्यैव विबुध्य यथावस्थितस्वरूपस्वभावं त्वां ज्ञात्वा दृष्ट्वेति यावत् ''भक्त्या त्वनन्यया शक्यः अहमेवंविधोऽर्जुन! ज्ञातुं द्रष्टुं च'' (भ.गी. 11-54) इति भगवदुक्तेः। हे अच्युत! भक्तान्न च्यावयतीति अच्युतेति सम्बोधनाभिप्रायः। पराङ्गतिं मुक्तिं प्रपेदिरे॥ ५॥

---

1. A,B omit आदि 2. W अपकृष्टैस्सह 3. A,B पिच्छं 4. A,B °ङि° 5. A,B omit अपि 6- -6. B omits 7. A,B °लं 8. W omits नान्यत् 9. A,B omit धर्म

**[1]तथाऽपि भूमन्महिमाऽगुणस्य ते विबोद्धुमर्हत्यमलान्तरात्मभिः।**
**अविक्रियात्स्वानुभवादरूपतो ह्यनन्यबोध्यात्मतया न चान्यथा॥ ६॥**

**गुणात्मनस्तेऽपि गुणान्विमातुं हितावतीर्णस्य क ईशिरेऽस्य।**
**कालेन यैर्वा विमितासुकल्पैः[2] भूपांसवः खे मिहिका द्युभासः॥ ७॥**

तत्तेऽनुकम्पां [3]सुसमीक्षमाणो भुञ्जान एवाऽऽत्मकृतं विपाकम्।
हृद्वाग्वपुर्भिर्विदधन्नमस्ते जीवेत यो मुक्तिपदे स दायभाक्॥८॥

पश्येश! मेऽनार्यमनन्त आद्ये परात्मनि त्वय्यपि मायिमायिनि।
मायां वितत्येक्षितुमात्मवैभवं ह्यहं कियानैच्छमिवार्चिरग्नौ॥९॥

[4]अतः क्षमस्वाच्युत! मे रजोभुवो ह्यजानतस्त्वत्पृथगीशमानिनः।
अजावलेपान्धतमोऽन्धचक्षुषो ह्येषोऽनुकम्प्यो मयि नाथवानिति॥१०॥

---

1. A अ° 2. A,B,G,J °त्यैः 3. A प्र 4. K °दः

**श्रीध०** [1]यद्यप्युभयोरविशेषेण दुर्ज्ञेयत्वमुक्तम्। तथाऽपि गुणातीतस्य ज्ञानं कथञ्चिद्भवेत्, न तु सगुणस्य तव अचिन्त्यानन्तगुणत्वादिति स्तौति - **तथाऽपीति** श्लोकद्वयेन। हे भूमन्! अपरिच्छिन्न! अगुणस्य ते महिमा अमलैरन्तरात्मभिः प्रत्याहृतेन्द्रियैः विबोद्धुं [2]बोधगोचरीभवितुम् अर्हति योग्यो भवति। अथवा विबोद्धुं ज्ञातु मर्हति [3]शक्यत इत्यर्थः। यद्वा महिमेति महिमानं कश्चिद्बोद्धुमर्हतीत्यर्थः। कथं स्वानुभावात् आत्माकारान्तःकरण[4]वृत्तिसाक्षात्कारात्। ननु अन्तःकरणमपि सविकारमेव विषयीकरो[5]तीति कथमात्माकारता तस्येत्यत आह — अविक्रियादिति। विक्रिया विशेषाकारः तद्रहितात्। विशेषपरित्याग एव आत्माकारतेत्यर्थः। ननु अन्तःकरणसाक्षात्कारविषयत्वेनानात्मत्वप्रसङ्गस्स्यादत आह - अरूपत इति। रूपं विषयः अविषयात् वृत्तिविषयत्वमेव आत्मनः न फलविषयत्वम्। अतो नायं दोष इति भावः। कथं तर्हि स्फूर्तिः अनन्यबोध्यात्मतया स्वप्रकाशत्वेनैव न त्वन्यथा। इदं तदिति विषयत्वेनेत्यर्थः। अथवा मा सर्वतोऽन्तरङ्गा लक्ष्मीरपि [6-]अगुणस्य ते महि महिमानममलैः अन्तर्वृत्तिभिरिन्द्रियैरपि[-6] [7]तथा [8]यादृग्वस्तुतः तेन रूपेण विबोद्धुं किमर्हति नार्हत्येवेत्यर्थः। कथं तर्ह्यर्हति तदाह - स्वानुभवादित्यादिना। उक्तार्थमेवैतत्॥६॥

**गुणात्मन** इति। गुणात्मनः गुणानामात्मनः गुणाधिष्ठातुः ते तव पुनः गुणान् विमातुं एतावन्त इति गणयितुमपि क ईशिरे समर्था बभूवुः दूरतः तद्विशेषवार्ता। कथम्भूतस्य तव? अस्य विश्वस्य हिताय पालनाय बहुगुणाविष्कारेणावतीर्णस्य। ननु कालेन निपुणैः किं [9]कर्तुमशक्यमत आह — कालेनेति। वाशब्दो वितर्के। सुकल्पै[10]ः अतिनिपुणैः। बहुजन्मना [11]कालेन भूपरमाणवो विमिता विशेषेण गणिता भवेयुः। तथा खे [12]नभसि[13] मिहिका हिमकणा अपि तथा द्युभासः दिवि नक्षत्रादिकिरणपरमाणवोऽपि॥७॥

तस्माद्भक्तिरेव सङ्गच्छते इत्याह - **तदिति।** [14-]ते तव अनुकम्पां[-14] सुसमीक्षमाणः[15] कदा कृपा भविष्यतीति [16]तां बहुमन्यमानः स्वार्जितं च कर्मफलमनासक्तस्सन् भुञ्जान एव नातीव तप आदिना क्लिश्यन्नेव यो [17]जीवेत् स [18]मुक्तेः दायभाग्भवति। भक्तस्य जीवनव्यतिरेकेण दायप्राप्तौ[19] विमुक्तौ नान्यदुपयुज्यत इति भावः॥८॥

तदेवं स्तुत्वा भगवन्तं क्षमापयितुं स्वापराधं निवेदयति — **पश्येति।** हे ईश! मे अनार्यं दौर्जन्यं पश्य। यदहं अ[20-]नन्ते त्रिविधपरिच्छेदरहिते, आद्ये सर्वप्रपञ्चोपादानभूते[-20] मायिनामपि मायिनि विमोहके त्वय्यपि स्वमायां वि[21]तत्य प्रसार्य आत्मैश्वर्यमीक्षितुम् ऐच्छम् अभिलषितवान्। अहो एवं कर्तुं त्वयि अहं कियान् न किञ्चित्। यथा अग्नेरुद्भूता ज्वाला अग्नौ न किञ्चित् तद्वदिति॥ ९॥

**अत** इति। रजोभुवः रजसो जातस्य अतः अजानतः अत एव अजावलेपान्धतमोन्धचक्षुषः अजो जगत्कर्ता अहमिति मदेन गाढतमोरूपेणान्धीभू[22]ते नेत्रे यस्य। अतः त्वत्तः पृथगीशमानिनः अन्यत्र प्रभुत्वेन वर्तमानोऽपि मयि नाथे सति नाथवान् मद्भृत्य एव। अत एव अनुकम्प्य इति मत्वा क्षमस्वेत्यर्थः॥ १०॥

---

1. A,B,J add इदानीं 2. V °धे 3. A,B,J add अर्च्यते 4. A,B,J omit वृत्ति 5. V omits इति 6- -6. V omits 7. V यथा 8. V °स्तु तथा 9. A,B,J omit कर्तुम् 10. A,B,J °त्यैः 11. A adds महता 12. B,J,V omit नभसि 13. V adds मिहिकाद्युभासः 14- -14. A,B,J omit 15. A,B,J add तव 16. A,B,J omit तां 17. A,B,J जीवेत 18. A,B,J मुक्तौ 19. A,B,J add इव 20- -20. A,B,J omit 21. A,B,J omit वितत्य 22. V भूतनेत्रस्य

**वीर०** ननु "नेशे महि त्ववसितुम्" (भाग०. 10-14-2) इति मन्महिमा मदनुग्रहपूर्णपात्रभूतेनापि त्वया दुरवबोधत्वादितरैः[1] दुरवबोधः[2] कैमुत्यन्यायेनोक्तः। अत्र तु 'विबुध्य भक्तचेति' सुखावबोध्य उक्तः। कथमेतद्विरुद्धं वदसीत्यत्राऽऽह **तथापीति।** हे भूमन्! यद्यपि अगुणस्य प्राकृतगुणरहितस्य तव महि महत्त्वममलान्तरात्मभिः सनकादिभिः मत्प्रभृतिभिः कर्तृभिः विबोद्धुं तेषां बोधगोचरीभवितुं माऽर्हति नार्हति, तथाऽप्यविक्रियत्वादिरूपेण बोद्धुमर्हत्येवेत्यनुषज्यते, न च अन्यथा परिच्छिन्नत्वादिरूपेण नार्हति, अविक्रियात् विकाराभावात् अरूपतः कर्मायत्तशरीरसंयोगवियोगरहितत्वात् स्वयाथात्म्यानुभवादनन्यबोध्यात्मतया स्वेतराबोध्यस्वरूपतया स्वसंवेद्यैकस्वरूपतयेति यावत् अविक्रियात्स्वानुभवादरूपत इति निर्देशाः भावप्रधानाः। तृतीयार्थे पञ्चमी आर्षत्वात्। अविक्रियत्वादिरूपेण बोद्धु मर्हति, स्वरूपतः स्वभावतश्च विकाररहितत्वेन प्रकृतिपुरुषविलक्षणत्वेन स्वरूपेण ज्ञायत इत्यर्थः, प्रकृतेः स्वरूपतो विकारात् पुरुषस्य स्वरूपतः तदभावेऽपि स्वभावतस्तत्सम्भवात्। एवं च जीववत्स्वभावतो विकारं वारयितुमरूपत इत्युक्तम्। कर्मायत्तशरीरवियोगसंयोगप्रयुक्तो हि जीवस्य धर्मभूतज्ञानसङ्कोचविकासात्मको विकारः। अतो रूपाभावादविक्रियत्वेन ज्ञायत इत्यर्थः। जीवस्य रूपवत्त्वं च स्वयाथात्म्याननुभवप्रयुक्तमिति तदननुभवो वार्यते। स्वानुभवादित्यनेन स्वरूपस्यैवंविधत्वात्तन्महिमाऽप्यनितरसाधारणत्ववेषेण ज्ञायत इत्यर्थः। यद्वा अविक्रियादित्यनन्य बोध्यात्मतायां हेतुः, अविक्रियादित्यत्र हेतुः अरूप[3] इति। तत्रापि हेतुः स्वानु भवादिति। अयमर्थः-नित्यं प्रत्यक्षितस्वयाथात्म्यानुभवाद्धेतोः पराभिध्यानमूलककर्मायत्तशरीराभावात तत्संयोगवियोगप्रयुक्तस्वभावविकाराभावात् अचेतनवत् स्वरूपविकाराभावाच्च स्वरूपतः स्वभावतो वा विकृतस्यैवान्यबोध्यस्वरूपत्वात्तदुभयाभावेनानन्यबोध्यात्मतया ज्ञायत इति, अनन्यबोध्यात्मत्वरूपोऽयमेको महिमा अमलान्तरात्मभिः ज्ञायते, न तु स्वरूपस्वभावयोः इयत्ता ज्ञायत इति समुदायार्थः, अमलान्तरात्मभिः सनकादिभिस्सह मा लक्ष्मी रपि महत्त्वं विबोद्धुं नार्हतीति केचिद्योजयन्ति। तत्र तथाऽपीत्यस्यानन्वयापत्तिः तेनाऽऽक्षेपपरिहारयोः प्रतीतेः नञ् अध्याहारप्रसङ्गश्च॥ ६॥

न चान्यथेत्यनेनाभिप्रेतमेव विवृणोति — **गुणात्मन** इति। गुणानां कल्याणगुणानाम् आत्मनः आश्रयस्य तव गुणान् अपिशब्दात् स्वरूपमपि विमातुमियत्तया परिच्छेत्तुं क ईशिरे के **प्रभवन्ति न** केऽपीत्यर्थः। सत्यं परत्वेनावस्थितस्य मम गुणानपि मातुं नेशिरे न तु विभवस्थितस्येति शङ्कां वारयन् विशिनष्टि। अस्य जगतः हितायावतीर्णस्य विभवाऽऽस्थितस्यापि विमातुं नेशिरे इति भावः। के इत्यनेन बुद्धिकुशला विवक्षिताः, तदेव दर्शयितुं के इत्यनेन विवक्षितान् विशिनष्टि - कालेनेति। यैर्महता कालेनापि भुवः पांसवः तथा खे मिहिका हिमकणाः तथा द्युभासः दिवि नक्षत्रादिकिरणपरमाणवो विमिता विशेषेण गणिता भवेयुः। तेऽपि के ईशिर इत्यन्वयः॥ ७॥

एवं भक्तिप्रपत्त्योर्भगवद्वशीकारसाधनत्वमुक्त्वा इदानीं प्रपत्तेर्विशेषमाह - **तदिति।** तत्[4] तस्मात् दुरवबोधनिस्सीममहिमत्वात् त्वत्प्रपत्तिमन्तरेण त्वन्मायाया दुस्तरत्वाच्च केवलं तन्वादिभिः त्रिभिः[5] करणैः तुभ्यं नमो विदधत् शरणं कुर्वन् तवानुकम्पामपराधानवेक्षणेन केवलमनुजिघृक्षारूपां कृपां सुसमीक्षमाणः कृतापराधानामपि प्रपन्नानामुत्तारिकां मन्वानः आत्मकृतं स्वकर्मसम्पादितं विपाकं सुखदुःखादिफलं भुञ्जान एव, अनेन प्रपन्नानां प्रारब्धानुभवमात्रमेव कार्यम्, न तु भगवत्प्राप्तये यत्नान्तरमिति सूचितम्। यः पुमान् जीवेत स मुक्तिपदे दायभाक् अंशभाग्भवति। "अविज्ञाताः कुमारकाः" इति श्रुत्युक्तरीत्या त्वत्कुमारप्रायैर्जीवैर्नित्यमुक्तैस्सह त्वदनुभवात्मकं दायं रिक्थं विभज्यानुभवतीत्यर्थः॥ ८॥

इत्थमभिष्टूय स्वापराधं क्षमापयितुं तावन्निरूपयति — **पश्येति**। हे ईश! ममानार्यं दौर्जन्यं पश्य, किं तत्? यदहं मायिनामाश्चर्यशक्ति[6]युक्तानामपि मायिनि अत्याश्चर्यशक्तियुक्ते अनन्ते अपरिच्छेद्यस्वरूपस्वभावे जगत्कारणभूते परमात्मनि मायां वितत्याऽऽच्छाद्य आत्मैश्वर्यमीक्षितुमैच्छम् अभिलषितवानित्येतत्। अहम् एवं त्वयि कुर्वन् अहं कियान् न किञ्चित् अतितुच्छ इत्यर्थः। यथाऽग्नौ उत्थितार्चिः ज्वालास्फुलिङ्गः तद्वत्॥ ९॥

मम युक्तमेवैतदिति वदन् अपराधं क्षमापयति **अत**[7] इति। हे अच्युत! रजोभुव: रजसा जातस्य अत एव अजानत: त्वन्महिमिति[8] शेष:। त्वत्त: पृथगीशमात्मानं मां मन्वानस्य अजो ब्रह्मेति योऽवलेप: गर्व: स एवान्धं तम: तेनान्धीभूते चक्षुषी यस्य एवंविधस्य दौर्जन्यं युक्तमेवेति भाव:। अत:[9] दौर्जन्यं क्षमस्व। क्षमाप्रकारमाह - मयि नाथवान् मद्भृत्य एव अत एषोऽप्यनुकम्प्य इति मत्वा क्षमस्वेत्यन्वय:॥ १०॥

---

1. A,B °ध्य° 2. A,B °ध्य: 3. K अरूपत: 4. K,W omit तत् 5. W omits त्रिभि: 6. W omits शक्ति 7. K अद: 8. K महिमानमिति 9. K अद:

**क्वाहं तमोमहदहं खचराग्निवार्भूसंवेष्टिताण्डघटसप्तवितस्तिकाय:।**
**क्वेदृग्विधाविगणिताण्डपराणुचर्या वाताध्वरोमविवरस्य च ते महित्वम्॥ ११॥**

उत्क्षेपणं गर्भगतस्य पादयोः किं कल्पते मातुरधोक्षजाऽऽगसे ?
किमस्ति नास्ति व्यपदेशभूषितं तवास्ति कुक्षेः कियदप्यनन्तः॥ १२॥

जगत्त्रयान्तोदधिसंप्लवोदे नारायणस्योदरनाभिनालात्।
विनिर्गतोऽजस्त्विति वाङ्न वै मृषा किन्त्वीश्वर! त्वन्न विनिर्गतोऽस्मि॥ १३॥

नारायणस्त्वं न हि सर्वदेहिनामात्माऽस्यधीशो[1]ऽखिललोकसाक्षी।
नारायणोऽङ्गं नरभूजलायनात् तच्चापि सत्यं न तवैव मा[2]यया॥ १४॥

तच्चेज्जलस्थं तव सज्जगद्वपुः किं मे न दृष्टं भगवंस्तदै[3]व ?।
किं वा सुदृष्टं हृदि मे तदै[4]व किं नो सपद्येव पुनर्व्यदर्शि॥ १५॥

---

1. A,B,G,J °शाखि° 2. A,B,G,J,K,W माया 3. A,B,G,J °दैव; V °थवै 4. A,B,G,J,V °दैव

**श्रीध०** [1]ननु ब्रह्माण्डविग्रहस्त्वमपि ईश्वर एवेति चेत्तत्राह — **क्वाहमिति**। तमः प्रकृतिः [2-]महान् महत्तत्त्व[-2]म्। [3]अहं अहङ्कारः खमाका[4]शं, चरो वायुः, अग्निः [5]तेजः, वार्जलं, भूश्च। प्रकृत्यादि पृथिव्यन्तैः[6] एतैः संवेष्टितो योऽण्डघटः स एव तस्मिन् वा स्वमानेन सप्तवितस्तिः कायो यस्य सोऽहं क्व, क्व च ते महित्वम्। कथम्भूतस्य? ईदृग्विधानि [7] यानि अविगणितानि अण्डानि त एव परमाणवः तेषां चर्या परिभ्रमणं तदर्थं वाताध्वानो गवाक्षा इव रोमविवराणि यस्य तस्य तव। अतोऽतितुच्छत्वात् त्वया अनुकम्प्योऽहमिति॥ ११॥

**उत्क्षेपणमिति**। अपि च गर्भगतस्य शिशोः पादयोरुत्क्षेपणं मातुः किमपराधाय भवति लोके। अस्तिनास्तिव्यपदेशाभ्यां भावाभावशब्दाभ्यां स्थूलसूक्ष्मकार्यकारणशब्दैर्वा भूषितमभिहितम्। एतेषां शब्दानां भुवि विषये उषितं स्थितमिति वा। सर्वं वस्त्वित्यर्थः। हे अधोक्षज! तव कुक्षेः अनन्तर्बहिः कियदपि किञ्चिन्मात्रमपि किमस्ति। न किञ्चिदस्तीत्यर्थः। अतः सर्वस्य त[8]व कुक्षिगतत्वेन ममापि तथात्वात् मातृवदपराधः [9-]मदपराध[-9]ः सोढव्य इति भावः॥ १२॥

किञ्च विशेषतोऽपि त्वत्तः मम जन्म प्रसिद्धमित्याह - **जगदिति**। जगत्त्रयस्यान्ते प्रलये य उदधीनां संप्लवः संश्लेषः तस्मिन्नुदे उदके नारायणस्योदरे या[10] नाभिः तस्याः नालादजो विनिर्गत इति या ज[11]नवाक् सा तावन्मृषा न भवति। वै निश्चितम्। तथापि तु हे ईश्वर! त्वत्तोऽहं किं न विनिर्गतो नोत्पन्नोऽस्मि। अपि तु त्वत्त एव उत्पन्न इत्यर्थः॥ १३॥

तर्हि [12-]नारायणस्य पुत्रः स्यास्त्वं[-12], मम किमायातं तत्राह — **नारायण** इति। **नहीति** काक्वा त्वमेव नारायणं इत्यापादयति। कुतोऽहं नारायण इति चेदत आह — सर्वदेहिनामात्माऽसीति। एवमपि किं नारायणो न भवसि। नारं जीवसमूहोऽयनमाश्रयो यस्य स तथेति। त्वमेव सर्वदेहिनामात्मत्वात् नारायण इति भावः। हे अधीश! त्वं नारायणो नहीति पुनः काकुः। अधीशः प्रवर्तकः। ततश्च नारस्यायनं प्रवृत्तिः यस्मात् स तथेति,

पुन: त्वमेवासाविति। किञ्च त्वमखिललोक साक्षी अखिलं लोकं साक्षात् पश्यसि। अतो नारमयसे जानासीति त्वमेव नारायण इत्यर्थ:। नन्वेवं नारायणपदव्युत्पत्तौ भवेदेवं तत्तु अन्यथाप्रसिद्धमित्याशङ्क्याह — नारायणोऽङ्गमिति। नरादुद्भूता येऽर्था: [13-]चतुर्विंशतितत्त्वानि[-13] तथा नराज्जातं यज्जलं तदयनात् यो नारायण: प्रसिद्ध: सोऽपि तवैवाङ्गं मूर्ति:। तथा च स्मर्यते — "नराज्जातानि तत्त्वानि नाराणीति विदुर्बुधा:। तस्य तान्ययनं प्रोक्तं[14] तेन नारायण: स्मृत:। "(पाद्म. पु) इति। तथा च मनु:[15] "आपो नारा इति प्रोक्ता आपो वै नरसूनव:। ता यदस्यायनं पूर्वं तेन नारायण: स्मृत:॥ (मनु° स्मृ° 1-10) इति च। ननु मन्मूर्तेरपरिच्छिन्नाया: कथं जलाश्रयत्वं [16-]किन्तु तवैव मायया कल्पितमपरिच्छिन्नत्वादिति भाव[-16]:। अत आह — तच्चापि सत्यं नेति॥ १४॥

अपरिच्छेदमेवोपपादयति — **तच्चेदिति।** जगदाश्रयभूतं तव तद्वपु: जलस्थमित्येव[17] यदि सत् सत्यं स्यात्तर्हि तदैव कमलनालमार्गेणान्त:प्रविश्य संवत्सरशतं विचिन्वतापि मया हे भगवन्! अचिन्त्यैश्वर्य!। तत्र किमिति न दृष्टम्। [18-]तत आगत्य स्वस्थाने स्थित्वा संवत्सरशतं तपसि तप्ते सति तथैव मे मया हृदि किं वा सुदृष्टम्[-18]। हृद्यपि [19]सपदि किमिति नो व्यदर्शि न दृष्टम्। अत: त्वन्मूर्ते: देशविशेषपरिच्छेद: सत्यो न भवतीत्यर्थ:॥ १५॥ ★

---

1. V omits ननु 2- -2 V महत् 3. A,J omit अहं 4. V °शं 5. A,B,J omit तेज: 6. A adds अष्टभि: 7. A adds प्रकृत्यादिभि: संवेष्टितानि 8. V त्वत्कु° 9- -9 A,B,J omit 10. A,B,J omit या 11. A,B,J omit जन 12- -12. V °णपुत्रस्य 13- -13. A,B,J omit 14. A,B,J पूर्वं 15. A,B,J omit मनु: 16- -16. A,B,J omit 17. A,B,J °वं 18- -18. A,B,J तदैव तप:करणानन्तरं सपद्येव सुदृष्टम् अतो मायैव। 19. A,B,J omit सपदि ★ V adds अत्र केषुचिद्व्याख्याग्रन्थेषु एवं व्याख्यातम् — ननु न च बाह्यदृष्टं सद्वपु: किन्तु अन्त:करणदृश्यम् तदा हृद्यपि किमिति नो व्यदर्शि न दृष्टम् तथैव तप:करणानन्तरं सपद्येव च सुदृष्टम् अतो मायैव। अतस्त्वन्मूर्ते: देशविशेषपरिच्छेद: सत्यो न भवतीत्यर्थ:॥ १५॥

**वीर०** ननु अण्डाधिपति: त्वमीश्वर एव, न तु पृथगीशमानी, अतो न मयाऽनुकम्प्य:। तत्राऽऽह — **क्वाहमिति** । तम: प्रधानम् अहमहङ्कारो भूतादि: खमाकाश:, तच्चरो वायुश्च वा: जलं तमआदिभि: वेष्टिते अण्डघटे स्वमानेन सप्तवितस्तिपरिमित: कायो यस्य। सोऽहं क्व? एवम्भूतस्य मम महित्वं कियत् न किञ्चिदपि अतितुच्छमिति भाव:। क्व च तव महित्वम्? कथम्भूतस्य? ईदृग्विधानि यान्यविगणितानि असङ्ख्यातानि अण्डानि तान्येव परमाणव: तेषां चर्या भ्रमणं तदर्थं वाताध्वानो गवाक्षा इव रोमविवराणि यस्य तस्य तव। अत्र तमआदिषु पूर्वपूर्वापेक्षयोत्तरोत्तराणि अन्तरावरणानि विज्ञेयानि, वार्भ्वित्यत्र भ्विति वारां विशेषणम्। वारि च तानि भूतानि च वार्भूणि, अग्नेरुत्पन्नानि वारि चेत्यर्थ:। बहुलग्रहणात् विशेष्यस्यापि पूर्वनिपात:, तत: तमआदीनां द्वन्द्व: न तु वार्भि: भुवा पृथ्व्या च संवेष्टित इत्यर्थ:, वैष्णवे पुराणे भुव आवरणत्वानुक्ते: आवरणानां सप्तत्वोक्तेश्च। तथा हि "दशोत्तरेण पयसा मैत्रेयाण्डं च तद्वृतम्। सर्वोऽम्बुपरिधानोऽसौ वह्निना वेष्टितो बहि:॥ वह्निश्च वायुना वायुर्मैत्रेय! नभसाऽऽवृत:। भूतादिना नभस्सोऽपि महता परिवेष्टित:॥ दशोत्तराण्यशेषाणि मैत्रेयैतानि सप्त वै। महान्तं च समावृत्य प्रधानं [1]समुपस्थितम्। अनन्तस्य

न तस्यान्तं सङ्ख्यानं चापि विद्यते। तदनन्त मसङ्ख्यायातप्रमाणं चेति वै यत:। हेतुभूतमशेषस्य प्रकृतिस्सा परा मुने'' (विष्णु. पु. 2-7-23-27) इति दशोत्तराण्युत्तरोत्तरं दशगुणाधिकानीत्यर्थ:। न च खचरो वायुरेकमावरणम्, तेन सह तमआदीनि सप्तेति निर्वाह: आकाशस्याऽऽवरणत्वाभावप्रसङ्गेन ''वायुर्मैत्रेय! नभसाऽऽवृत:'' इति उदाहृतवचनविरोधापत्ते:। तस्मात् यथोक्त एवार्थ:। अतोऽतितुच्छत्वात्त्वयाऽनुकम्प्योऽहमिति भाव:॥ ११॥

अपि च हे अधोक्षज! गर्भगतस्य शिशो: पादयोरुत्क्षेपणमाघात: किं मातु: आगसे अपराधाय भवति? न भवत्येवेत्यर्थ:। विषमोऽयं दृष्टान्त: - तव मद्गर्भस्थत्वाभावादित्यत्राऽऽह - किमिति। तव कुक्षेरन्त: बहि: कियदपि किञ्चिन्मात्रमपि अस्तिनास्तीत्यपदेशाभूषितम् अस्तिनास्तीतिव्यवहारचिह्नितं तद्व्यवहार विषयभूतमिति यावत् चिदचिदात्मकं जगत्, किमस्ति? न किञ्चिदित्यर्थ:। चिद्वस्तुनस्सततमेकरूपत्वात् सदाऽस्तीत्येव व्यवहारभूषितत्वम्। अचिद्वस्तुनस्तु सततपरिणामित्वात् पूर्वपूर्वावस्थां विहाय उत्तरोत्तरावस्थापत्तौ सत्यां पूर्वपूर्वावस्थानां नास्तीतिव्यपदेशभूषितत्वात् तत्त्वमवगन्तव्यम्। अत: सर्वस्य त्वत्कुक्षिगतत्वेन ममापि तथात्वात् मातृवत् मदपराध: सोढव्य इति भाव:॥ १२॥

किञ्च विशेषतस्त्वत्त एव मम जन्म प्रसिद्धमित्याह - **जगदित्यादि।** जगत्त्रयस्यान्ते प्रलये य उदधीनां संप्लव: संश्लेष: तस्मिन् उदे उदके नारायणस्योदरे नाभिस्तस्या नालात् अजो विनिर्गत इति जनवाक्, सा तु मृषा मिथ्या न भवति किंत्वमृषैव। वै निश्चितम्। तथाहि हे ईश्वर! त्वत् त्वत्त: विनिर्गत: उत्पन्न: नास्मि किम्? अपि तु उत्पन्न एवेत्यर्थ:॥ १३॥

तर्ह्यस्तु भवान्नारायणपुत्र: तथाऽपि मम किमायातं तदाह - **नारायणस्त्वमिति।** नहीति काक्वा त्वमेव नारायण इत्युपपादयति कुतोऽहं नारायण इति चेत्तत्राह यत: सर्वदेहिनामात्माऽसि नारं जीवसमूह: तस्यायनमाश्रय: स वा अयनं यस्य स: त्वमेव सर्वदेहिनामाश्रयत्वात् सर्व शरीरकत्वेन तदाश्रयकत्वाच्च नारायण इति भाव:। हे अधीश! त्वं नारायणो नहीति पुन: काकु:। कुत:। यत: अधीश: प्रवर्तक: नारस्य अयनं प्रवृत्ति: यस्मात् स तथेति। किञ्च त्वमखिललोकसाक्षी आखिलं लोकं साक्षात्पश्यतीति तथा, अतो नारमेषि जानासीति नारायण:। ''इण् गतौ'' गत्यर्था बुद्ध्यर्था: नन्द्यादित्वात् कर्तरि ल्यु:। नन्विदं नारायणपदव्युत्पत्तौ भवेदेवम्। तत्तु अन्यथा प्रसिद्धम्। तथा हि ''आपो नारा इति प्रोक्ता आपो वै नरसूनव:। अयनं तस्य ता: प्रोक्तास्तेन नारायणस्स्मृत:'' (मनु. स्मृ. 1-10) इति। अत्राऽऽह - नारायणोऽङ्गमिति। नर: परमात्मा ''जह्नुर्नारायणो नर:'' इति नरशब्दस्य श्रीभगवन्नामसु पाठात् ''रिङ्क्षये' इति धातु: न रीयते न क्षीयते न नश्यतीति नर इति व्युत्पन्ननरशब्दप्रवृत्तौ निमित्तस्य नित्यत्वस्य श्री भगवत्यप्यनुगतत्वाच्च। ततश्च नराद्भुवां जातानां जलानामयनात् यो नारायण: प्रसिद्ध: सोऽपि तवैवाङ्गं मूर्ति:। 'राहोश्शिरं' इतिवत् तवाङ्गमित्यभेदसम्बन्धे षष्ठी। सोऽपि त्वमेवेत्यर्थ:। नन्वहमेव नारायणश्चेत् ''विश्वं नारायणं देवमक्षरं परमम्'' (महा. ना. उ. 9-1) इत्यादिभि: वेदान्तै र्विश्वसमानाधिकृतत्वेन प्रतीयमानस्य विश्वव्यापकस्य कथं विश्वान्तर्भूतजलमात्रवर्तित्वम् अत आह तच्चापि सत्यमिति। तव विभोरपि यज्जलाश्रयत्वं तत्सत्यमबाधितमेव। व्यतिरेकमुखेनापि द्रढयति न तु मायेति। तज्जलशायित्वं न माया न मृषा किन्तु सत्यमेवेत्यर्थ:। ''अणोरणीयान्महतो महीयान्'' (कठ. उ. 2-20) ''एष मे आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा

एष मे आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्, दिवो ज्यायानेभ्यो लोकेभ्यः" (छान्दो. उ. 3-14-3) "उभेऽस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्" (छान्दो. उ. 8-1-3) इत्यादिभिरवगतं स्वरूपतो रूपतश्च अणोरणीयस्त्वं महतो महत्तरत्वं चेत्युभयं जगन्निर्माणोपासनाद्युपयुक्ततया जीवहृदयगुहादिष्ववस्थितस्य सर्वशक्तेस्तवोपपन्नमिति जलशायित्वमबाधितमेवेत्यर्थः[6] ॥ १४ ॥

एवं चतुर्धा नारायणशब्दव्युत्पत्तिः दर्शिता। नराणामात्मत्वादधीशत्वाच्च अखिललोकसाक्षित्वाच्च जलायनत्वाच्च नारायण इति, अस्त्वेवं न मय्येतानि प्रवृत्तिनिमित्तानि दृष्टानीति नाहं नारायण इत्यपेक्षायां तत्प्रवृत्तिनिमित्तचतुष्टयमपि तस्मिन् स्वानुभवेन दर्शयति - **तच्चेत्यादिना।** सन्ति विद्यमानानि जगन्ति यस्मिन् तत्तव वपुः सृष्ट्यादौ जलस्थं चेत् त्वं नारायण एवेत्यर्थः। सज्जगदित्यनेन सर्वजगद्धारकत्वरूप तदात्मत्वमाद्यं प्रवृत्तिनिमित्तं तस्मिन् प्रदर्शितम्। जलस्थमित्यनेन तुरीयम्। तवेत्यनेन तवापि कुक्षिस्थाखिलचिदचिदात्मकलोकस्य स्रक्ष्यमाणस्य सर्गोपयुक्तप्रवर्तकत्वं साक्षित्वं चेत्युभयं विवक्षितम्। तव अधीशस्य अखिल लोकसाक्षिणश्चेत्यर्थः। चेदिति यद्यर्थकमव्ययम्। यदि शब्दश्च सम्भावनायाम्। सा च क्रियासु योग्यताध्यवसायरूपा। जलस्थं चेत् जलावस्थितिविषयकमदध्यवसायिविषयं चेदित्यर्थः। तत्र स्वानुभवमेव काक्वा विशदयति - हे भगवन्! तदेव जलस्थमेव वपुः मे मया न दृष्टं किम्? दृष्टमेवेत्यर्थः। यज्जलस्थं तदेव मे हृदि नेत्यनुषङ्गः, न सुदृष्टं किम्? सुदृष्टमेवेत्यर्थः। पुनस्सपद्येव तदैव नो व्यदर्शि तिरोधापितं न किम्? त्वयेति शेषः। नो व्यदर्शीत्यनेन तत्र प्रत्यभिज्ञा प्रमाणत्वेनोपन्यस्ता॥ १५॥

---

1. A,B समव° 2. A,B मम ग° 3. A,B° स्था ना° 4- -4. K,W omits 5. K,W omit यत् 6. A,B add अवतारभेदेन तत्तदाकृतिभेदेऽपि तत्तत्कालकार्यकर्मादिचरित्रभेदेऽपि च अवतारिणः तवाभेदः। अवतारी सदा त्वमेक एव न तु नानेति दिक्॥

**अत्रैव मायादमनावतारे ह्यस्य प्रपञ्चस्य बहिस्स्फुटस्य।**
**कृत्स्नस्य चान्तर्जठरे जनन्या मायात्वमेव प्रकटीकृतं ते॥ १६॥**

**यस्य कुक्षाविदं सर्वं सात्मं भाति यथा तथा।**
**तत्त्वय्यपीह तत्सर्वं किमिदं मायया विना॥ १७॥**

**अद्यैव त्वदृतेऽस्य किं मम न ते मायात्वमादर्शितम् ?**
**[2]एकोऽसि, प्रथमं ततो व्रजसुहृद्वत्सास्समस्ता [3]असि।**
**तावन्तो[4]ऽसि चतुर्भुजास्तदखिलैस्साकं मयोपासिता:**
**स्तावन्त्येव जगन्त्यभू[5]स्तदमितं ब्रह्माद्वयं शिष्यसे[6]॥ १८॥**

**अजानतां त्वत्पदवीमनात्म न्यात्माऽऽत्मना भासि वितत्य मायाम्।**
**सृष्टाविवाऽहं जगतो विधाने इव त्वमेषोऽन्त इव त्रिने[7]त्र:॥ १९॥**

**सूरेष्वृषिष्वीश! तथैव नृष्वपिं तिर्यक्षु यादस्स्वपि तेऽजनस्य।**
**जन्माऽसतां दुर्मदनिग्रहाय प्रभो! विधातस्सदनुग्रहाय[8] ॥ २०॥**

---

1. K,W °पि ह 2. A,B,G,J एकोऽसि; K. ह्येकोऽपि 3. A,B,G,J अपि 4. K °ऽपि 5. V °स्ततमिदं 6. A,B,G,J,V,W °ते 7. V °णे 8. A,B,G,J,K,V add च

**श्रीध०** अपि च यदि जलादिप्रपञ्च: सत्यस्स्यात् तर्हि तेन तव परिच्छेदो भवेत्। स तु मायाविलसित इति त्वयैव दर्शित इत्याह - **अत्रेति** श्लोकत्रयेण। हे मायादमन! मायोपशमन! अत्रैवावतारे, [1-]अस्य प्रपञ्चस्य[-1] बहि: स्फुटस्यापि [2]आत्मनो जठरमध्ये जनन्या: प्रदर्शनेन॥ १६॥

ननु बहि: सत एव। अन्तर्जठरे प्रतिबिम्बोऽस्तु [3]अत: सर्वथा [4-]मायाविलसितत्वं मयैवोक्तमिति कुत इत्यत आह[-4] - **यस्येति।** यस्य तव कुक्षौ सर्वमिदं यथा भाति तत्सर्वं इहापि बहिरपि तथैव भाति। किञ्च सात्मं त्वत्सहितं तदिदं [5]सर्वं त्वयि मायया विना [6-]कथं घटेतेति[-6]? अयं भाव: त्वयि प्रतिबिम्बश्चे[7]त्तर्हि बाह्याद्विलोमतया प्रतीयेत न तु तदस्ति तव च आदर्शस्थानीयस्य। त्वयि प्रतीति: न स्यात्। अत: सर्वथा मिथ्यात्वमेवेति॥ १७॥

अपि च न केवलं जनन्या: ममापि तथैव दर्शितमित्याह - **अद्यैवेति।** त्वदृते त्वां विना अस्य विश्वस्य मायात्वं त्वया ममैव च। तदप्यद्यैव किं न दर्शितम्? किन्तु दर्शितमेव। तथाहि एकोऽपीत्यादि। [8]तत् ततो मया सह अखिलै: तत्त्वादिभिरुपासिता:। तावन्तश्चतुर्भुजा असि। जगन्ति ब्रह्माण्डानीति प्रागनुक्तमपि दृष्टमिति ज्ञातव्यम्॥ १८॥

ननु ब्रह्मन्! तव मया दर्शितं शुद्धमेव चैतन्यं, कथं प्रपञ्चवन्मायेत्युच्यते ? सत्यम्। किन्तु अद्वितीये त्वयि नानात्वं गुणावतारमत्स्याद्यवतारेष्विव कार्यवशेन स्वतन्त्रमायानिबन्धनमित्याह - **अजानतामिति** श्लोकद्वयेन। त्वत्पदवीं तव स्वरूपम् अजानतां अनात्मनि प्रकृतौ स्थित:, आत्मैव त्वं आत्मनैव स्वातन्त्र्येण मायां वितत्य [9]आभासि। कथं जगत: सृष्टौ? अहमिव ब्रह्मेव विधाने पालने। एष: त्वमिव अन्ते [10]प्रलये। त्रिनेत्र इव[11] ॥ १९॥

ननु च स्वातन्त्र्ये कथं कुत्सितेषु मत्स्यादिषु जन्म, कथं वा वामनाद्यवतारे याच्ञ्यादिकार्पण्यं, कथं वाऽस्मिन्नेव कदाचिद्भयपलायनादि [12-]इत्यत आह — **सुरेष्विति** श्लोकद्वयेन[-12]। [13-]सुरेषु वामनजन्म, ऋषिषु नारदादिजन्म, तिर्यक्षु नृसिंहादिजन्म, यादस्सु मत्स्यकमठादिजन्म, नृष्वपि रामादिजन्म, असन्निग्रहाय सत्पालनाय च[-13] ॥ २०॥

1- -1. A,B,J omit 2. B,J स्वज° 3. A तत्कुत:? B,J कुत:? 4- -4. A,B,J मायात्वं तत्राह 5. V omits सर्वं 6- -6. A किं घटेत ? ; B,J किं घटते ? 7. B,J omit तर्हि 8. V omits तत् 9. A,B,J भासि 10. A,B,J omit प्रलये। 11. A,B,J add इति 12- -12. A,B,J omit 13- -13. A सुरेषु उपेन्द्र:, ऋषिषु परशुराम: नृष्वपि राम: ॥ २० ॥ ; B,J omit

**वीर०** ननु यज्जलस्थं यच्च भवता जले हृदि च दृष्टं यच्च तिरोभूतं तद्वपुरनिरुद्धमूर्ते: जगत्कारणभूतस्यैव न तु मम अतो नाहं नारायण इत्यपेक्षायामेतदवतारदशायामपि तच्चतुष्टयं त्वन्मात्राऽपि दृष्टमेवेत्याह - **अत्रैवेति**। हे मायादमन! अस्मदादिकर्तृकमायां मोहनात्मिकां दमयति निरस्यतीति तथाभूत प्रपन्नानां प्रकृतिसम्बन्धनिवर्तकेति वा, बहि: स्फुटस्यापि दमयति स्फुटस्यास्य चिदचिदात्मकस्य प्रपञ्चस्यास्मिन्नेव अवतारे अन्तर्जठरे जनन्या: प्रदर्शनेनेति शेष:। ते त्वया मायात्वं विचित्रशक्तित्वं प्रकटीकृतमेव। विपुलं जगत् अल्पीयसि मत्कुक्षौ जनन्या दृष्टिमित्येतद्वच: त्वदीयं "अग्निना सिञ्चेत्" इतिवत् अयोग्यार्थ प्रतिपादकमितीयमाशङ्का मायात्वं प्रकटीकृतमित्यनेन व्युदस्ता, विचित्रशक्तियुक्तत्वात् तद्दर्शयितुं प्रभुरेव त्वमिति भाव: ॥ १६ ॥

तदेव काक्वा विवृणोति - **यस्येति**। इदं परिदृश्यमानं चिदचिदात्मकं सात्ममातमभ्याम् आवाभ्यां सहितं सर्वं यथा बहिर्भाति तथा तत्सर्वं त्वय्यपि त्वज्जठरे भातमिति शेष:, हेति तदाश्चर्यशक्तिविषयक विस्मयद्योतकम्। इदं त्वज्जठरे भानं मायया त्वदाश्चर्यशक्त्या विना किम्? तन्मूलकमेवेत्यर्थ: ॥ १७ ॥

न केवलं जनन्या: ममापि तथैव विचित्रशक्ति: दर्शितेत्याह - **अद्यैवेति**। अद्य त्वदृते आधुनिकं त्वां विना अधुना गोपालकावस्थावस्थितं त्वां विनेत्यर्थ:। अस्य त्वत्पूर्वोत्तरावस्थाद्वयं पश्यतो मम ते त्वया मायात्वं विचित्रशक्तित्वं नादर्शितं किम्? दर्शितमेवेत्यर्थ:। विचित्रशक्तिमूलकं किं किं तव दर्शितमित्यत्राऽऽह - प्रथमं मया वत्सवत्सपापहरण-दशायामेकोऽपि ततस्समस्ता व्रजसुहृदो गोपबाला वत्साश्चासि। तत: तावन्त: यावन्तो व्रजसुहृद्वत्सा[1]: तावन्त: चतुर्भुजा असि, कथम्भूता:? मया सह अखिलै: चराचरादिभिरुपासिता: तत: तावन्ति यावन्त: चतुर्भुजा: तावन्ति जगन्त्यभू:, तावन्ति विराड्रूपाण्यासीरित्यर्थ:। इदं प्रागनुक्तमपि तदा दृष्टमत्रोच्यत इति ज्ञेयम्। तत्ततोऽमितमपरिच्छिन्नम् अद्वयं [2]स्वतुल्यवस्त्वन्तररहितं कृष्णात्मकं ब्रह्म शिष्यसे अवशिष्यसे ॥ १८ ॥

मया साकम् अखिलैरुपासिता इत्युक्तम्। तत्र नन्वहमेवंविधश्चेत् सर्वेषामप्येवं किं न प्रतीये तत्राऽऽह - **अजानतामिति**। अनात्मनि देहे आत्मात्मना आत्मभावेन देहात्माभिमानस्वतन्त्रात्माभिमानादि हेतुना त्वत्पदवीं त्वद्याथात्म्यमजानतां भासि। किं कृत्वा? मायां वितत्य तेषु मायां प्रसार्य, कथं भासि? जगतस्सृष्टौ अहमिव सृष्टौ निमित्तभूतायां सृष्ट्यर्थमिति यावत्, एवमुत्तरत्रापि। अहमि[3]व चतुर्मुख इव, विधाने रक्षणे एष त्वमिव विष्णुरिव, अन्ते संहारे त्रिनेत्र इव रुद्र इव, पृथक् स्वतन्त्र इव भासि, त्वत्पदवीं जानतां तु ब्रह्मरुद्राख्यजीवान्तर्यामितया तच्छरीरकत्वेन विधाने तु साक्षात्स्वावताररूपत्वेन भासीत्यर्थ:। मायाशब्दस्तु अत्र प्रकृतिपर: प्रकृतिगुणान् रजआदीन्वितत्येत्यर्थ:। स हि "मायान्तु प्रकृतिं विद्यात्" (श्वेता. उ. 4-10) इति प्रमाणवशात् क्वचित्प्रकृतिपर:। "माया वयुनं ज्ञानम्" (वे.नि. 3-9 निरुक्त धर्मव 22) इति निघण्टुपाठात् "मायया सततं वेत्ति" (भार. 15-2805) इत्यभियुक्तप्रयोगाच्च क्वचिज्ज्ञानपर:। क्वचिच्च विचित्रशक्तिपर:। "योगमायां समादिशत्"

(भाग. 10-2-6) इति भागवतप्रयोगादेव "ऋते मायां विशालाक्षीम्" (रामा. ला. 8-110-211) इति श्रीरामायणप्रयोगाच्च, "जलं संस्तभ्य मायया" इति जलस्तम्भनशक्तौ भारतप्रयोगाच्च। तस्मात् तत्र तत्र यथोचितः तदर्थो ग्राह्यः॥ १९॥

'विधाने इव त्वम्' इत्येतदेवोपपादयति - **सुरेष्विति**। हे ईश! अजनस्य कर्मायत्तोत्पत्तिरहितस्य ते तव सुरादिषु जन्म अवतारः हे प्रभो! विधातः! दुष्कृतां दुर्मदनाशाय[4] साधूनामनुग्रहाय च भवति। तत्र सुरेषु उपेन्द्रादिरूपं जन्म, ऋषिषु नरनारायण [5]परशुरामात्मकम् नृषु दाशरथ्या[6]दि रूप[-6]म्। तिर्यक्षु वराहादिरूपम्। यादस्सु मत्स्य कूर्मादिरूपम्॥ २० ॥

1. K दः ता° 2. W omit स्व 3. A,B omits इव 4. K °शनाय 5. W °णात्मकम् 6- -6 A,B °दिकम्।

को वेत्ति भूमन्! भगवन्परात्मन्योगी[1]श्वरोतीर्भवतस्त्रिलोक्याम्।
[2]क्व वा कथं वा कति वा कदेति विस्तारयन्क्रीडसि योगमायाम्॥ २१॥

तस्मादिदं जगदशेषम[3]सत्स्वरूपं स्वप्नाभमस्तधिषणं पुरुदुःखदुःखम्।
त्वय्येव नित्यसुखबोधतनावनन्ते मायात उद्यदपि यत्सदिवावभाति॥ २२॥

एकस्त्वमात्मा पुरुषः पुराणः सत्यस्स्वयंज्योतिरनन्त आद्यः।
नित्योऽक्षरोऽजस्रसुखो निरञ्जनः पूर्णोऽद्वयो मुक्त उपाधितोऽमृतः॥ २३॥

एवंविधं त्वां सकलात्मनामपि स्वात्मानमात्मात्मतया विचक्षते।
गुर्वर्कलब्धोपनिषत्सुचक्षुषा ये ते तरन्त्ये[4]व भवानृताम्बुधिम्॥ २४॥

आत्मानमेवाऽऽत्मतयाऽविजानतां तेनैव जातं निखिलं प्रपञ्चितम्।
ज्ञानेन भूयोऽपि च तत्प्रलीयते रज्ज्वामहेर्भोग भवाभवौ यथा॥ २५॥

1. A,B,G,J °गे° 2. A. क्वाऽहो 3. V °मसत्त्व° 4. A,B,G,J,V.° न्तीव

**श्रीध०** [1-]अत आह[-1] - **को वेत्तीति**। अन्वर्थैः सम्बोधनैः दुर्ज्ञेयत्वमेवाह - भूमन्नित्यादिभिः। भवत ऊतीः लीलाः त्रिलोक्यां को वेत्ति क्व वा, कथं वा, कदा वा, कति वेति। अचिन्त्यं तव योगमाया वैभवमिति भावः॥ २१॥

ननु भवत्ववताराणामचिन्त्यो महिमा, प्रपञ्चस्य [2]ह्यसत्त्वे कथं सत्त्वप्रतीतिः इति इमामाशङ्कां सपरिक[3]मुपसंहरन् परिहरति - **तस्मादिति**। अस्तधिषणं निरस्तप्रतिभासम्। त्वय्येवोद्यत् उद्भवदपि यन्नश्यत् सदिवेत्युपलक्षणमेतत्। नित्यमिव, [4-]सुखमिव[-4], चेतनमिव च अधिष्ठानभूतस्य तव गुणैः तथा तथा भातीत्यर्थः॥ २२॥

त्वमेव तु सत्य इत्याह - **एक** इति। एकस्त्वं सत्यः। कुतः? आत्मा। दृश्यमसत्यं दृष्टं न चात्मा दृश्यः, अतः सत्यः। किञ्च यद्विकारवत् तदसत्यं, न च त्वयि जन्मादयो विकाराः सन्तीत्याह - आद्यः कारणम्, अतो न जन्म। आद्यत्वे हेतुः पुराणः [5-] पुरातनः [-5]। कार्यात्पूर्वमपि वर्तमान इत्यर्थः। अत्र हेतुः - पुरुष इति। तथा च श्रुतिः - "पूर्वमेवाहमिहासमिति तत्पुरुषस्य पुरुषत्वम्" इति। [6]जन्मान्तरास्तित्वलक्ष[7]णं विकारं वारयति - नित्य इति। सनातन इत्यर्थः। पूर्णोऽजस्रसुखोऽक्षरोऽमृत इति चतुर्भिः पदैः क्रमेण वृद्धिविपरिणामापक्षयविनाशान् वारयति। पूर्णत्वे हेतुः - अनन्तोऽद्वय इति च। देशकालपरिच्छेदरहितो वस्तुपरिच्छेदरहितोऽपि। अमृतत्वोपपादनाय चतुर्विधक्रियाफलत्वं वारयति। स्वयंज्योतिर्निरञ्जन उपाधितो मुक्त इति पदत्रयेण। अयं भावः - तत्रोत्पत्तिराद्य इत्यनेनैव निराकृता, प्राप्तिरपि क्रियया ज्ञानेन वा भवेत्, क्रियया प्राप्तिरात्मपदेनैव निराकृता, ज्ञानतः प्राप्तिं वारयति स्वयंज्योतिरिति। विकृतिरपि तुषाऽपाकरणेनावघातेन व्रीहीणामिवोपाध्यपाकरणेन भवेत्। [8]तत्तु असङ्गतत्वान्न सम्भवतीत्याह - मुक्त उपाधित इति। संस्कारोऽपि किमतिशयाधानेन मलापाकरणेन वा। तत्रातिशयाधानं पूर्णत्वेनैव निराकृतम्। मलापाकरणं निवारयति - निरञ्जन इति। निर्मल इत्यर्थः॥ २३॥

तस्मादेवम्भूतज्ञानात् मुच्यन्त इत्याह - **एवंविध** मिति। त्वां ये विचक्षते सम्यक् पश्यन्ति। कथम्? आत्मात्मतया आत्मा प्रत्यक् तस्य स्वरूपेण। न चैतत्पुत्रादिष्विव गौणमित्याह। सकलात्मनामपि स्वात्मानम्। केन? गुरुरेवार्कः तस्मात् [9]लब्धं उपनिषत् ज्ञानं तदेव सचक्षुः तेन। भव एवानृताम्बुधिः तं ते तरन्तीव॥ २४ ॥

तत्र च ज्ञानेन तरन्तीति, तच्च तरन्तीवेति, तच्चात्मात्मतया ज्ञानेन, इत्यर्थत्रयं प्रतिज्ञातं क्रमेणोपपाद्यते। तत्र आत्मानमेवात्मतया इत्यनेन श्लोकेन ज्ञानेन तरन्तीत्युपपाद्यते। अज्ञानसंज्ञावित्यनेन तरन्तीवेत्येतत्। त्वामित्यादि श्लोकद्वयेन तु आत्मात्मतयेत्येतदुपपाद्यते। ननु ज्ञानेन कथं भवं तरन्तीति [10] तस्याज्ञानमूल[11]कत्वादित्याह - आत्मानमिति। तेनैव अज्ञानेनैव प्रपञ्चितं प्रपञ्चः। रज्ज्वामहेर्भोगभवाभवौ सर्पशरीरस्याध्यासापवादौ यथेति॥ २५॥

---

1- -1. V omits 2. V त्व° 3. V °रा° 4- -4. V omits 5- -5. A,B,J पुरापि नवः 6. A,B,J जन्मानन्त° 7. V °णवि° 8. V तच्च 9. A,B,J लब्धा 10. V adds आशङ्क्य 11. A,B,J omit क

**वीर०** अवतारप्रसङ्गात् तेषां जाति प्रकार सङ्ख्याकाल नियमाभावं क्रीडैकप्रयोजनत्वं विचित्रशक्तिमत्त्वं चाऽऽह - **को वेत्तीति**। अवतारदशायामपि स्वासाधारणविपुलानन्दरूपत्वषाड्गुण्यपूर्णत्वप्रशासितृत्वयोगनिर्वाहकत्वाद्यप्रहाणप्रदर्शनार्थं भूमन्नित्यादिसम्बोधनचतुष्टयम्। भवतः तव ऊतीः गतीश्चेष्टाः त्रिलोक्यां कः पुमान् क्व वा कस्यां जातौ कथं केन प्रकारेण, कति कियत्सङ्ख्याकाः, कदा कस्मिन्काले अवतारा इत्येतच्च वेद न कोऽपि जानातीत्यर्थः। केवलम् आश्चर्यशक्तिं विस्तारयन् एवं क्रीडसीति मम भातीति भावः॥ २१॥

किञ्च आजानताम् अहमादिरूपेण केवलं त्वमेव भासि जगदपि विपरीतं भातीत्याह - **तस्मादिति**। तस्मात् त्वद्व्यतिरिक्तस्वतन्त्रवस्त्वभावान्नित्यसुखबोधतनौ नित्यानुकूलज्ञानरूपे त्वय्येवानन्ते अपरिच्छेद्यमहिम्नि यन्मायातः

त्वत्सङ्कल्परूपज्ञानादुद्यत् उत्पद्यमानमपि यल्लीयमानम् अतः त्वदपृथक्सिद्धमिति भावः। पुरुभ्यो दुःखेभ्य उपरि तथाविधानि दुःखानि यस्मिन् स्वप्नाभं स्वप्नतुल्यम्। सर्वत्र दृष्टान्तदार्ष्टान्तिकयोस्साधर्म्ये सति वैधर्म्येण भवितव्यम् अन्यथा तयोरैक्यमेव स्यात्, तत्र उभयानुगतं साधर्म्यमनित्यत्वरूपम्। स्वप्ने तु तत्कालमात्रावस्थायित्वं तद्द्रष्ट्रेकानुभाव्यत्त्वरूपं वैधर्म्यम्। दार्ष्टान्तिके तु कालान्तरे[1]ऽप्यवस्थायित्वम् अनेकानुभाव्यत्वरूपं चेति विवेकः। इदं चिदचिदात्मकम[2]शेषं जगदसत्स्वरूपमपि अजानतां सदिव भाति सततविकारवदपि तद्विपरीतवदाभातीत्यर्थः॥ २२ ॥

यद्यसदिदं जगत् मच्छरीरभूतं मय्येवोत्पद्य लीयते, तर्हि त[3]द्गतदोषभाक् अहमपि असन्नेवेत्यतः तं प्रकृतिपुरुषविलक्षणत्वेन शोधयति **एक** इति। सत्यस्स्वयंज्योतिरनन्त इति पदत्रयेण "सत्यं ज्ञानमनन्तम् (तैत्ति. उ. 2-1-1) इति जगत्कारणत्वेन लक्षिते सूक्ष्मचिदचिद्विशिष्टे वस्तुनि विशेष्यांशशोधकं वाक्यं प्रत्यभिज्ञायते, सत्यः निर्विकारः, अनेनाचेतनात् तत्संसृष्टचेतनाच्च व्यावृत्तिः स्वयंज्योतिः सङ्कोचकाभावात् नित्यासङ्कुचितस्वयंप्रकाशस्वरूप इत्यर्थः। अनेन मुक्तजीवानां व्यावृत्तिः तेषां बद्धदशायां सङ्कुचितप्रकाशत्वात्। अनन्तः स्वरूपतस्स्वभावतश्च त्रिविधपरिच्छेदरहितः। अनेन नित्यसिद्धजी[4]वव्यावृत्तिः तेषां स्वभावत आनन्त्येऽपि स्वरूपतः तदभावत्। तत्र सत्यत्वमेव विवृणोति उपाधितोऽमृतो निरञ्जनोऽक्षरश्चेति। अमृत इति च्छेदः। जीवस्योपाधितो मरणं नाम कर्मायत्तदेहवियोगात्मकम्, तद्रहित इत्यर्थः। अमृत इत्यजात[5]त्वस्याप्युपलक्षणम्, उपाधित इत्यस्य काकाक्षिन्यायात् मुक्त इत्यनेनापि सम्बन्धः। उपाधितः मुक्तः नित्यं कर्मायत्तदेहसम्बन्धान्मुक्तः तत्प्रतिभट इत्ययमुपाधितोऽमृतत्वे हेतुः। निरञ्जनः पुण्यपापरूपाञ्जनरहितः तत्प्रतिभटः। अनेन प्रकृतिसंसृष्टजीवव्यावृत्तिः स्पष्टीकृता भवति। अक्षर इत्यनेन षड्भावविकारात्मकक्षरण स्वभावरहितवस्तुवाचिना प्रकृतेः व्यावृत्तिः स्पष्टीक्रियते। आनन्त्यं विवृणोति नित्यः पूर्णोऽद्वयश्चेति। नित्य इति कालपरिच्छेद व्यावृत्तिः। पूर्ण इति देशपरिच्छेदराहित्यमुच्यते। "तेनेदं पूर्णं पुरुषेण सर्वम्" (श्वेता. उ. 3-9) इति श्रुत्युक्तरीत्या सर्ववस्तुव्यापकत्वं तेन विवक्षितम्। अतो देशपरिच्छेदव्यावृत्तिः स्पष्टैव। अद्वय इत्यनेन वस्तुपरिच्छेदराहित्यमुच्यते, अद्वयः अब्रह्मात्मकद्वितीयवस्तुरहितः। सर्वस्य स्वात्मकत्वेन सर्ववस्तुसामानाधिकरण्यार्हत्वरूपं वस्तुपरिच्छेदराहित्यमुक्तं भवति। यद्वा अद्वयः स्वस्वरूपगुणापेक्षयोत्कृष्टगुणयुक्तवस्त्वन्तररहितः, निरतिशयगुणयुक्तत्वमपि वस्त्वपरिच्छेदः। तत्राऽऽद्यकल्पे स्वरूपस्यैव सर्वशरीरकत्वेन सर्ववस्तु सामानाधिकरण्यार्हत्वरूपं वस्तुपरिच्छेदराहित्यं न तु गुणानामित्यवगन्तव्यम्। द्वितीये तु निरतिशयत्वं स्वरूपे गुणेषु च अनुगतमित्युभयेषामपि वस्तुपरिच्छेदराहित्यमिति विवेकः। एवं प्रकृतिपुरुषव्यावृत्तस्य स्वरूपस्य कीर्तनमजस्रसुख इति। अजस्रं सतत[6]मविच्छिन्नं दुःखासम्भिन्नमिति यावत्। तत्सुखं यस्य सः, बहुव्रीहिणाऽवगतस्याजस्रसुखस्यान्यपदार्थसम्बन्धो राहोश्शिर इतिवत् अभेदरूपः, कथमेवं विधस्य ममासस्वरूपजगत्कारणत्वमित्यत उक्तमाद्य इति। आदौ भव आद्यः, एवं विधोऽपि जगत्कारणभूत इति साध्यधर्मनिर्देशः, अत्रोपपत्तिरुच्यते एक आत्मा पुरुषः पुराण इति। "एकमेवाद्वितीयम्" (छान्दो. उ. 6-2-1) इति स्थानप्रमाणेन तत्रेवात्रापि सृष्टिदशावस्थनामरूपविभागनिबन्धन प्रपञ्चगतबहुत्व[7] प्रतिसम्बन्धितदविभाग निबन्धनैकत्वमेकशब्देनोच्यते, नामरूपविभागानर्ह सूक्ष्मचिदचिद्विशिष्टतयैकत्व व्यपदेशार्हः[8] न विशेष्याकारेण कारणभूतः किन्तु विशिष्टत्वाकारेणेति भावः, आत्मेत्यनेन स्वशरीरभूत प्रकृतिपुरुषकालादिद्रष्टृत्वं विवक्षितम्। स्वक्षेत्रस्य द्रष्टा ह्यात्मा "एतद्योवेत्तीति" (भ.गी. 13-1) भगवदुक्तेः[9], यद्यपि सा क्षेत्रज्ञशब्दव्युत्पत्तिः तथाऽपि तत्पर्यायतया प्रयुज्यमानस्य आत्मशब्दस्यान्तःप्रविश्य धारकवाचिनः तत्पर्यन्तता अत्र विवक्षिता। अनेन निमित्तकारणत्वोपयुक्तं

सर्वज्ञत्वं विवक्षितम्। इदमुपादानकारणत्वोपयुक्तसर्वशक्तित्वस्याप्युपलक्षणम्। एक इति उपादानादिकारणत्वं प्रसाधितम्। अथ निमित्तकारणत्वं साधयति पुरुषः पुराणः। पुरुषशब्देनात्र कर्तृत्वं विवक्षितं, तस्यैव कर्तृत्वदर्शनात्। "कर्ता शास्त्रार्थवत्त्वात्" (ब्र.सू. 2-3-23) इति सूत्रस्वारस्याच्च। पुराणः [10-]पुराऽपि नव[-10]ः पुरा जगत्सृष्टेः पूर्वं वर्तमानः पुरुषः जगत्कर्तेत्यर्थः॥ २३॥

यतः त्वमेवं कारणभूतः अत एव "कारणं तु ध्येयः" (अथ. शिखा. उ. 3) इति श्रुत्युक्तरीत्या त्वाम् एवंविधं ध्यात्वा मुच्यन्त इत्याह - **एवमिति।** ये जनाः गुरुरेवार्कः सूर्यवत्तमसोऽज्ञानस्य निवर्तकत्वात् तथा रूपणम्। तस्मादुपलब्धा या उपनिषत् वेदान्तः, अत्र उपनिषच्छब्देन तद्वाक्यार्थज्ञानं विवक्षितम्, सैव [11]शोभनं चक्षुः तेन एवंविधं त्वां विचक्षते, चक्षिर्दर्शनेऽपि वर्तते, पश्यन्ति[12] गुरुमुखाद्वेदान्तवाक्यार्थं निश्चित्य तन्मननपूर्वकं प्रत्यक्षतापत्तिपर्यन्तरूपामुपासनां ये कुर्वन्तीति भावः। कथम्भूतम्? कथं च? तत्राऽऽह सकलात्मनां सर्वेषामात्मनामुपासकानां चान्तरात्मानम् आत्मनामुपासकानामात्मतया त्वच्छरीरतया यद्वा सकलात्मनां सर्वजीवानां देवमनुष्यादीनां ये आत्मानः देवमनुष्यादिशरीरान्तर्वर्तिनो जीवाः तेषामप्यन्तरात्मतया स्वात्मानमुपासकानामप्यन्तरात्मानं ये इह विचक्षते त एव भवानृताम्बुधिं तरन्तीत्यन्वयः। भवे संसारे यान्यनृतानि तान्येवाम्बुधिस्तं "यथा संपुष्पितस्य वृक्षस्य दूराद्गन्धो वाति" (महा.ना.उ. 7-2) इत्यादिना [13]पुण्यं कर्म प्रस्तुत्य तत्प्रतिसम्बन्धिनि पापे "एव मनृतादात्मानं जुगुप्सेत्" (महा.ना. 8-2) इत्यनृतशब्दप्रयोगादनृतशब्दः पापकर्मवाची, पापत्वं चानिष्ट साधनत्वम्। मुमुक्षोः स्वर्गादिफलस्याप्यनिष्टत्वेन तत्साधनं[14] कर्माप्यनृतशब्देन विवक्षितम्। एवं च पुण्यपापानि तरन्तीत्यर्थः॥ २४॥

ये विचक्षते ते तरन्तीत्युक्तम्। अथ प्रसङ्गात् [15]विपरीतानां का गतिः यदि संसृतिः तर्हि कस्तन्निवृत्त्युपायः तत्राऽऽह **आत्मानमिति।** अविजानतामिति च्छेदः, आत्मानं परमात्मानं त्वाम् आत्मतयैव सर्वान्तरात्मतयैव अविजानतां तेनैव तदविज्ञानेनैव निखिलं प्रपञ्चितं जातं प्रपञ्चो जातः संसारः प्राप्त इत्यर्थः, देहात्मभ्रमस्वतन्त्रात्मभ्रम [16-]मूलकपरमात्मानुपा[-16]सनादिनैव संसारः प्राप्त इत्यर्थः, तत्प्रपञ्चितं पुनः ज्ञानेन देहात्माद्यनभिमानपूर्वक परमात्मोपासनात्मकेन प्रलीयते नश्यति निवर्तत इति यावत्, परमात्मोपासनात्मकज्ञानाभावप्रयुक्तसंसारस्य ज्ञानसद्भावे सति निवृत्तौ दृष्टान्तमाह - यथा रज्ज्वामधिष्ठानभूतायामहेः सर्पस्य यो भोगः शरीरं तस्य भवाभवौ भोगविषयज्ञानोदयतल्लयौ रज्जुयाथात्म्यज्ञानप्रयुक्तौ, तद्वद्देहात्माद्यनभिमान पूर्वक प्रत्यक्षतापत्ति पर्यन्त भगवदुपासनात्मकज्ञानाभावतत्सद्भावप्रयुक्तौ संसार तन्मोक्षावित्यर्थः, मृषावादिनस्त्वत्र रज्जुयाथात्म्यज्ञान प्रयुक्त[17] सर्पभ्रमः तद्याथात्म्यज्ञानान्निवर्तते, एवमपरमार्थभूतो बन्धो ब्रह्माभिन्ने जीवे तत्त्वमस्यादिवाक्यजन्यतद्याथात्म्यज्ञानमूलकः तद्याथात्म्यज्ञानान्निवर्तत इति व्याचक्षते। तत्र वाक्यार्थज्ञानस्य निवर्तकत्वानुपपत्तिः तेन सत्यभूतस्यैव बन्धस्य निवृत्त्यनुपपत्तिश्च भाष्यादिषु सप्तविधानुपपत्तिप्रतिपादनपरप्रकरणे द्रष्टव्या, विस्तरभयात्तु अत्र न लिख्यते॥ २५॥

---

1. A,B omit अपि 2. K °वि° 3. A,B तद्दोष 4. A,B omit जीव 5. K°तस्या° 6. W °मपरिच्छिन्नं 7. W omits त्व 8. W °ज्ञानर्हः 9. K°क्तः 10- -10. W omits 11 W omits शोभनं 12. A,B add इत्यर्थः 13. W पुण्य 14. K,W °नक° 15. A,B तद्विप° 16- -16 A,B तन्मूलकापरमात्मोपा° 17. A,B°क्तः

अज्ञानसंज्ञौ भवबन्धमोक्षौ द्वौ नाम नान्यौ स्त [1]ऋतेऽज्ञभावात्।
अजस्र[2]चित्याऽऽत्मनि केवले परे विचार्यमाणे तरणाविवाह[3]नि॥ २६॥

त्वामात्मानं परं मत्वा परमात्मानमेव च।
आत्मा पुनर्बहिर्मृग्य [4-]अहो अज्ञजनाज्ञता[-4]॥ २७॥

अन्तर्भवेऽनन्त! भवन्तमेवह्यतत्त्यजन्तो मृगयन्ति सन्तः।
असन्तमप्यन्त्यहिमन्तरेण सन्तं गुणं तं किमु यन्ति सन्तः॥ २८॥

[5]अथाऽपि ते देव! पदाम्बुजद्वय प्रसादलेशानुगृहीत एव [6]हि।
जानाति तत्त्वं भगवन्महिम्नो न चान्य एकोऽपि चिरं विचिन्वन्॥ २९॥

तदस्तु मे [7]नाथन् स भूरिभागो [8]भवेऽत्र वाऽन्यत्र तु वा तिरश्चाम्।
येनाहमेकोऽपि भवज्जनानां भूत्वा निषेवे तव पादपल्लवम्॥ ३०॥

---

1. A,B,G,J,V ऋतज्ञ° 2. J चिन्त्या; V नित्या 3. A,B,G,V,W °नी 4- -4 A,B,G,J अहोऽज्ञजनताज्ञता 5. K,W त° 6. V omits हि
7. V देव! 8. A भवो°

**श्रीध०** ननु [1]ज्ञानेन तरन्त्येव किमिदमुच्यते तरन्तीवेति तत्राह - **अज्ञानसंज्ञाविति**। अज्ञानेन संज्ञा ययोस्तौ भवबन्धमोक्षौ भवेन बन्धः तन्मोक्षश्च तौ द्वौ नाम प्रसिद्धौ ऋतज्ञभावात् ऋतश्चासौ ज्ञश्च तयोः भावः तस्मादन्यौ न स्तः। ननु कथं महानपलापः क्रियते, परमार्थविचारादित्याह अजस्रेति। अखण्डानुभवरूपे परे शुद्धे आत्मनि नाज्ञानं न च बन्धः। अत एव ज्ञानं मोक्षश्च। तरणौ सूर्ये रात्र्यहनी इवेति॥ २६॥

ननु परमार्थज्ञानादज्ञानकृतो बन्धो निवर्तताम्, आत्मात्मतयैव ज्ञानादिति कोऽयमाग्रह इत्याशङ्क्य, यदध्यासादात्मनः पररूपा स्फूर्तिः तदपवादेन तत्रैव [2-]आत्मस्वरूपे[-2] ज्ञानं युक्तमिति इममर्थं विस्मयेनाक्रोशन्निवाह - **त्वामिति**। त्वामात्मानं परं देहादिं मत्वा आत्मनि देहादिमध्यस्य तथा परं देहादि मात्मानं मत्वा देहादावात्मानमध्यस्य [3]इत्यर्थः। [4]अत्र नष्ट आत्मा बहिर्मृग्य इति चित्रम्। न हि गृहे नष्टं वने मृग्यत इत्यर्थः॥ २७॥

विवेकिनस्तु प्रत्यक्स्वरूपे एव परमात्मानं विचिन्वन्तीत्याह - **अन्तर्भव** इति। भवतीति भवं चिज्जडात्मकं शरीरं तन्मध्य एव त्वां मृगयन्ति।[5] अतत् जडं त्यजन्तोऽपवदन्तः। ननु सतो ज्ञानेनऽलं, किमसतोऽपवादेनेत्याशङ्क्य [6]अध्यस्ताऽपवादं विना अधिष्ठान [7-]तत्वज्ञानं न जायते[-7] इति सतां व्यवहारेणाह - असन्त मिति। अन्ति समीपे असन्तमप्यहिमन्तरेण तन्निषेधं विना इत्यर्थः। सन्तं गुणं [8]तं, रज्जुं सन्तः किमु यन्ति जानन्ति। अन्ति सन्तमपि गुणमिति वा। न जानन्तीत्यर्थः।

तस्मादात्मात्मतयैव ज्ञानान्मुक्तिरिति भावः ॥ २८॥

नन्वेवं **ज्ञानैकसाध्ये मोक्षे** किमिति भक्तिरुद्बोधिता अत आह - **अथापीति।** यद्यपि हस्तप्राप्यमिव ज्ञानमुक्तम्। [9]तथापि हे देव! तव पदाम्बुजद्वयमध्ये एकदेशस्यापि यः प्रसादलेशोऽपि तेन अनुगृहीत एव भगवतस्तव महिम्नस्तत्त्वं जानाति। हे भगवन्! ते महिम्नः तत्त्वमिति वा। एकोऽपि [10-]अहं ब्रह्माऽपि काश्चि दपीति[-10] वा चिरमपि, विचिन्वन्न[11]पि, अतदंशापवादेन विचारयन्नपीत्यर्थः ॥ २९॥

**तदिति।** [12]तत्तस्मात् भूरिभागो महद्भाग्यम्। अत्र भवे ब्रह्मजन्मनि तिरश्चामपि मध्ये यज्जन्म तस्मिन् वा[13] येन भाग्येन भवदीयानां जनानामेकोऽपि यः कश्चिदपि भूत्वा निषेवेऽत्यर्थं सेवेये[14]ति॥ ३०॥

---

1. V ज्ञानिनः 2- -2. A,B,J omit 3. B,J,V omit इत्यर्थः। 4. A एवमन्तः 5. A adds कथम् 6. V असतोप° 7. A,B,J तत्त्वं न ज्ञायते 8. A,B,J omit तं, 9. V अ° 10- -10. A,B,J कश्चिदपि 11. V omits अपि 12. V omits तत् 13. A adds अन्यत्र 14. V omits इति

**वीर०** उक्तदृष्टान्तेनाभिप्रेतमेव दार्ष्टान्तिके पुनर्दृष्टान्तान्तरेणानुगमयति - **अज्ञानसंज्ञौ** इति। भवः संसारः तद्रूपो बन्धः तस्मान्मोक्षश्च इत्येतौ द्वौ अज्ञानसंज्ञौ अज्ञानम् उक्तविधपरमात्मोपासनात्मकज्ञानाभावः। संज्ञा तदुपासनात्मकं ज्ञानं ते अनयोः स्त इति तथाभूतौ। अर्शआदित्वात् मत्वर्थीयोऽच्, सम्बन्धोऽत्र हेतुहेतुमद्भावरूपः उपासनात्मकज्ञानाभावतत्सद्भावहेतुकौ भवबन्धमोक्षौ इत्यर्थः। नान्यौ स्तः अन्यमूलकौ न स्त इ[1]त्यर्थः। नामशब्दः शास्त्रीय प्रसिद्धिद्योतकः, एवं स्थिते यथा अहनि तरणौ सूर्ये सति मम इवेति शेषः। तदा अज्ञभावादृते देहात्मभ्रमस्वतन्त्रात्मभ्रमं विना अज्ञभावं विहायेत्यर्थः। अजस्रचिति नित्यज्ञानैकाकारे प्रत्यगात्मनि केवले परे परस्मिन्नात्मनि परमात्मनि विचार्यमाणे प्रत्यगात्मान्तरात्मत्वेन वेदान्तवाक्यार्थविचारपूर्वकं परमात्मन्युपास्यमाने इत्यर्थः। तत्प्रलीयत इत्यनुषङ्गः, प्रपञ्चितं प्रलीयत इत्यर्थः ॥ २६॥

अज्ञभावादित्यनेन उक्तमज्ञत्वमेव विशदयन् विस्मयते **त्वामिति।** देहात्मभ्रमोऽहमेव ईश्वर इत्येवं स्वतन्त्रात्मभ्रमश्चेति द्विविधोऽपि भ्रमोऽनर्थहेतुतया त्याज्यतया च तत्र तत्रोच्यते। अत्रापि उभयविधभ्रमस्याऽऽत्मपरमात्मयाथात्म्य[2]ज्ञान मूलकत्वमुक्त्वा विस्मयते, परं प्रकृतिपुरुषविलक्षणम् आत्मानं प्रकृतिपुरुषान्तःप्रवेशेन तद्गतदोषासंस्पर्शेन [3-]प्रशासनैश्च[-3] भर्तृत्वं,[4] यथोक्तं भगवता - "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः॥" (भ.गी. 15-17) इति। एवमत्यन्तविलक्षणमपि त्वामित्यर्थः। एवंविधं त्वामात्मानं प्रत्यगात्मानं मत्वा, चस्त्वर्थः, आत्मानं च प्रत्यगात्मानं तु परमन्यं देहमेव मत्वेत्यर्थः। आत्मा परमात्मा पुनर्बहिर्मृग्यः मृग्यत इत्यर्थः। अहो अज्ञजनानाम् इयमज्ञता, न हि गृहे नष्टं वने मृग्यत इति भावः। विवेकिनस्तु जीवान्तरात्मतयैव त्वामुपासत इति च भावः ॥ २७॥

इदमेव दृष्टान्तमुखेन काक्वा उपपादयति - **अन्तर्भव इति।** हे अनन्त! सन्तो विवेकिनः अन्तर्भवे भवतीति भवो देहः तन्मध्ये अतत् तदन्यार्थ[5]को नञ्, परमात्मनोऽन्यद्यज्जीवपर्यन्तं पञ्चविंशतितत्त्वजातं तत्त्यजन्तः, तस्मिन् परमात्माभिमानं

त्यजन्तः तद्विलक्षणमेवमुक्तविधं भवन्तं त्वां मृगयन्ति विविच्योपासत इत्यर्थः "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" (छान्दो. उ. 8-7-1) इति श्रुत्यनु[6]रोधात् सन्तः विवेकिनः रज्जुयाथात्म्यज्ञानवन्तः अन्ति समीपे सन्तं तत्त्वेनैव प्रतीयमानं गुणं रज्जुमसन्तमप्यहिं सर्पं किमु प्रतियन्ति सन्निहितस्यापि विस्मरणे व्यवहिताध्यासे चायं दृष्टान्तः। यथा विवेकिनः सन्निहिते गुणे अहिविलक्षणतया प्रतीयमाने न व्यवहितसर्पबुद्धिं कुर्वन्ति, एवं जीवान्तरात्मतया सन्निहिते त्वयि जीवपर्यन्ततत्त्वविलक्षणतया प्रमिते न जडजीवबुद्धिं कुर्वन्ति, किन्तु तां विहाय स्वरूपतः स्वभावतश्च तद्विलक्षणं त्वामध्यवस्यन्तः उपासते इत्यर्थः ॥ २८ ॥

ननु केचिदज्ञास्सन्तः संसरन्ति, केचित्तु विवेकिनस्सन्तः मामुपास्य तरन्तीत्युक्तम्, कस्तर्हि विवेकाविवेकहेतुरित्यत्र भवदनुग्रहविशेषभावाभावावेव इत्यभिप्रायेणाऽऽह **तथापीति**। यद्यपि केचिदज्ञास्संसरन्ति, केचिद्विवेकिनस्सन्तः तरन्ति, तथाऽपि हे देव! तव पदाम्बुजद्वयस्य प्रसादलेशेनानुगृहीत एव पुमान् प्रणत्यालम्बनस्य पदाम्बुजद्वयस्य तत्प्रसादमूलत्वादेवमुक्तिः। भगवतस्तव महिम्नस्तत्त्वं याथात्म्यं जानाति, अन्योऽननुगृहीतस्तु एकोऽपि निर्जनदेशस्थोऽपि चिरमपि विचिन्वन् न च नैव जानाति हि॥ २९ ॥

कस्तर्हि मदनुग्रहहेतुरित्यत्र त्वद्भक्तजनसङ्गतिविशेष एवेत्यभिप्रयन् तमेवात्मनः प्रार्थयते **तदस्त्विति**। तत्तस्मात् त्वदनुग्रहस्यैव विवेक हेतुत्वात् हे देव! स भूरिभागः महाभाग्यम् महांस्तु कोऽसौ, येन भाग्येन अहमत्र भवे चतुर्मुखजन्मनि अन्यत्र तु वा मनुष्यजन्मनि, किं बहुना तिरश्चां मध्ये वा भवज्जनानां केनापि प्रकारेण त्वदाभिमुख्यार्हाणां जनानां मध्ये एकोऽपि यः कश्चिदपि भूत्वा तव पादपल्लवं निषेवे नितरां सेवे तावत् मां भवज्जनान्तर्भूतत्वेन अनुगृहाणेति भावः ॥ ३० ॥

---

1. A,B omit इत्यर्थः 2. A,B,W °त्म्य° 3- -3. A,B,K प्रशासनेन च भर्तारं त्वां 4. A,B add इदमेव हि परमात्मशब्दप्रवृत्तिनिमित्तं यल्लोकत्रयान्तः प्रवेशनतद्गतदोषास्पर्शनप्रशासनैः भर्तृत्वं 5. A,B °कोऽत्र 6. A,B सारात्

**अहोऽतिधन्या व्रजगोरमण्यस्स्तन्यामृतं पीतमतीव ते मुदा।**
**यासां विभो! वत्सतरात्मजात्मना यत्तृप्तयेऽद्यापि च नालमध्वराः ॥ ३१ ॥**

**अहो! भाग्यमहो! भाग्यं नन्दगोपव्रजौकसाम्।**
**यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम्॥ ३२ ॥**

**[1]तेषां तु भाग्यमहिमाऽच्युत! तावदास्तामेकादशैव हि वयं बत! भूरिभागाः।**
**एतद्धृषीकचषकैरसकृत्पिबामः शर्वादयोऽङ्घ्र्युदजमध्वमृतासवं ते॥ ३३ ॥**

**तद्भूरि भाग्यमिह जन्म किमप्यटव्यां यद्गोकुलेऽपि कतमाङ्घ्रिरजोभिषेकम्।**
**यज्जीवितं तु निखिलं भगवा[2]न्मुकुन्दः त्वद्यापि यत्पदरज[3]श्श्रुतिमृग्यमे[-3]व ॥ ३४ ॥**

**एषां घोषनिवासिनामुत भवान् किं देव! रातेति न श्चेतो विश्वफलात्फलं त्वदपरं कुत्राप्ययन्मुह्यति।**
**सद्वेषादिव पूतनाऽपि सकुला त्वामेव देवाऽऽपिता [4]यद्धामार्थ[5]सुहृत्प्रियात्म[6-]तनयप्राणा[-6]शयास्त्वत्कृते॥ ३५॥**

---

1. A,B,G,J,V एषां 2. A,B,G,J °वाननन्त° 3- -3. V °भिर्विमृग्यम् 4. A ये धामार्थ 5. V सुतप्रि° 6- -6. V तनुगो प्राणी°

**श्रीध०** देवादिजन्मनो[1]ऽपि यत्र कुत्रचित् त्वद्भक्तिमज्जन्मैव श्रेष्ठमित्यौत्सुक्ये सप्तभिः श्लोकैः अभिनन्दति - अहो **इति।** व्रजगोरमण्यः व्रजस्थाः गावो [2]रमण्यः गोप्यश्च, ते, त्वया वत्सतरात्मजात्मना वत्सानामात्मजानां च रूपेण, यस्य तव तृप्तये सर्वेऽपि यज्ञाः, अद्यापि [3]नाऽलं न [4]समर्थाः ते त्वया प्रतिक्षणं तृप्यता यासां स्तन्यम् अमृतरूपं पीतमिति॥ ३१॥

तत्र भगवत्सखानां महिमा वक्तुं ज्ञातुं न शक्यत इत्याह **अहो** इति। [5-]अहो भाग्यमिति[-5] पुनरुक्त्या [6-]आदरेण[-6] भाग्यस्य सर्वधा अपरिच्छिन्नत्वमुक्तम् [7-]यन्मित्रं येषां मित्रम् ब्रह्म श्रीकृष्णस्वरूपं, परमानन्दं निरतिशय सुखस्वरूपं, तथा च प्राकृतमित्रस्य परस्परोपकारित्वापेक्षया कदाचिद्विषय विरोधात् मैत्रीभङ्गश्च श्रीकृष्णे तु परमानन्दे न तथा किन्तु तेषामानन्द एवेति भावः। प्राकृतमित्रस्य देशान्तरगमनेन विश्लेषदुःखमपि भवति। श्रीकृष्णे मित्रे न तथेत्याह - **पूर्णमिति।** तथा च गतागतादिरहितमित्यर्थः। अत्र यद्यपि श्रीकृष्णस्यापि गोचारणादिना विश्लेषदुःखं भवति। तथापि तच्चिन्ताप्यानन्दनियमः प्राकृतमित्रे तु न तथेति भावः। यद्वा, श्रीकृष्णास्य पूर्णत्वे सर्वव्यापकत्वे जाते, मथुराद्वारकावासिनामपि श्रीकृष्णे विश्लेषदुःखं नाभूदेव[-7]॥ ३२॥

किञ्च **एषामिति।** एषां भाग्यस्य महिमा तावदास्तां [8]तिष्ठतु। कस्तं वक्तुं शक्नोति। शर्वादयः शर्वः अहङ्काराधिष्ठाता आदिर्येषां चन्द्रादीनामेकादशानां ते तथा। वयं च, वयमित्यात्मानमेव बहुमन्यमान आह - एवं मनो बुद्ध्यहङ्कारचक्षुराद्यधिष्ठातारः त्रयोदशदेवा एव तावत्। बत अहो! भूरिभागाः, यस्मात् एतेषां [9-]नन्दगोपव्रजौकसां[-9] हृषीकाणीन्द्रियाण्येव चषकाणि पानपात्राणि तैः, ते [10]तव चतुर्दशस्य चित्ताधिष्ठातुः अङ्घ्री एव, उदजे वारिजे तयोर्मधु मकरन्दः तदेवामृतं स्वादु, आसवं [11]माद्वीकं पिबामः एतदुक्तं भवति। यदा प्रत्येकमिन्द्रियाभि मानिनो वयं कीर्तिसौन्दर्य सौगन्ध्याद्य[12]ेकदेशसेविनोऽपि कृतार्थाः तदा सर्वेन्द्रियैः सर्वसेविनामेतेषां किं वर्ण्यते भाग्यमिति॥ ३३॥

अतो मया प्रार्थितम् "तदस्तु मे नाथ! सभूरिभागः" (भाग०. 20-14-30) इति यत् [13]तदेतदेवेत्याह तदिति। किं तत्? इह मनुष्यलोके यत्किमपि जन्म तत्राप्यटव्यां यत् तत्रापि गोकुले यत् अहो! सत्यलोकं विहायात्र जन्मनि जाते को लाभ इत्यत आह - अपि कतमाङ्घ्रिरजोभिषेकमिति। गोकुलवासिनां मध्येऽपि कतमस्य [14]यस्य कस्याप्यङ्घ्रिरजसा अभिषेको यस्मिन् तत्। ननु कुतो गोकुलवासिन एव [15]अतिधन्याः तत्राह — यदिति। येषां जीवितं निखिलं [16]भगवान् मुकुन्द [17-]इति। निखिलं[-17] मुकुन्दपरमेव जीवनमित्यर्थः। दुर्लभतामाह — अद्यापीति।

श्रुतिमृग्यं वेदैरपि मृग्यत एव न तु दृश्यत इत्यर्थः॥ ३४॥

अपि च किं वर्ण्यते कृतार्थतामेतेषाम् [18]येषां भक्त्या भवानपि ऋणीवाऽऽस्ते। ननु किं दातुमसमर्थोऽहम्। येन ऋणी स्यामत आह - **एषामिति।** उत अपि भवानपि एषां कुत्रापि। किं विश्वफलात् सर्वफलात्मकात् त्वत्तः अपरं फलं राता दास्यतीति नश्चेतः अयत् सर्वत्र गच्छद्विचारयत् मुह्यति। ननु मामेव दत्त्वाऽनृणः स्यामिति चेन्नहि नहि। सद्वेषादिव सतां भक्तानां यो वेषः तदनुक[19]रणमात्रेण पापिष्ठा पूतनापि त्वामेवाऽऽपिता प्रापिता तर्हि [20] तत्सम्बन्धिनामपि [21] दास्यामीति चेत् तत्राह - सकुलेति बकाघासुरसहिता। एषामपि तावदेव चेदपर्याप्तमित्याह यदिति। येषां धामादयः त्वत्कृते त्वदर्थमेवेत्यर्थः॥ ३५॥

---

1. V °तोऽपि 2. V omits रमण्यः 3. B,J,V omit नाऽलं 4. A,B,J शक्ताः 5- -5. A,B,J omit 6- -6. A,B,J omit 7- -7. A,B,J omit 8. A,B,J omit तिष्ठतु 9- -9. B,J,V omit 10. B,J, V omit तव 11. A,B,J मादकं 12. V °चैकैक° 13. V तदेवे° 14. V omits यस्य 15. B,J, omit अति 16. V omits भगवान् 17- -17. A,B,J omit 18. V omits येषां 19. V कारमा° 20. A adds एतत् महद्रूपं फलं 21. A adds नन्दादीनामपीत्यर्थः। मां

**वीर०** चतुर्मुखजन्मतोऽपि यत्र क्वचित् त्वज्जनसङ्गि जन्मैव श्रेय इत्यौत्सुक्ये[1]न [2]नन्दगोपगोपिकादीन् अभिनन्दति **अहो** [3]इत्यादिभिः[3] सप्तभिः। व्रजस्य गावो रमण्यो गोप्यश्च अतिधन्याः, कुत इत्यत्र ता विशिनाष्टि - यासां व्रजगोरमणीनां स्तन्यामृतं वत्सरूपेणाऽऽत्मजरूपेण च त्वया[4]ऽतीव पीतम् विभोः तव तृप्तये अध्वरास्सर्वे यज्ञाश्च नाऽलं न पर्याप्तास्तेन त्वया इत्यन्वयः॥ ३१॥

नन्दादीनां भाग्यमहो कुतः? [5]यद्यतः निरतिशयानन्दं सर्वव्यापकं सनातनं ब्रह्म मित्रमभूत्॥ ३२॥

हे अच्युत! तेषां नन्दादीनां भाग्यस्य महिमा तावदास्तां कस्तमियत्तया [6]वर्णयितुं शक्नुयादित्यर्थः। शर्वोऽहङ्काराधिष्ठाता आदिर्येषां ते मनोबुद्धिचित्ताधिष्ठातॄणां चन्द्रादीनां ते वयमेकादश च, स्वस्य चित्ताधिष्ठातृत्वेऽपि मेढ्राधिष्ठातृत्वाच्च एकादशेत्युक्तम्। एवं चतुर्दश वयमिति भावः, वयं मेढ्रादिकर्म ज्ञानेन्दियोभयाधिष्ठातारश्च भूरिभागाः महाभाग्यवन्तः वयमित्यात्मानमेव बहुमन्यमानस्योक्तिः, एवं मनोबुद्ध्यहङ्कारोभ[7]याधिष्ठातारः त्रयोदश देवा विवक्षिताः। कुतः? यस्मादे[8]षां हृषीकाणीन्द्रियाण्येव चषकाणि [9]पात्राणि तैः, तवाङ्घ्रेरेव उदजं कमलं तस्य मधु मकरन्दः तदेवामृतं स्वादु आसवं मादकं पिबामः, एतदुक्तं भवति यथा प्रत्येकेन्द्रियाभिमानिनो वयं कीर्तिसौगन्ध्याद्येकैकदेशसेविनोऽपि कृतार्थाः तथा सर्वेन्द्रियैस्सर्वसेविनामेतेषां किमु वर्ण्यते भाग्यमिति॥ ३३॥

यन्मया प्रार्थनीयं [10]तदेतदेवेत्याह - **तदिति।** यन्मया प्रार्थनीयं भूरि भाग्यं, [11]तदेतदेवेत्यर्थः, किं तत्? इह मनुष्यलोके यत्किमपि मनुष्यजन्म तत्राप्यटव्यां यत् तत्रापि गोकुले यत् अहो सत्यलोकं विहाय अत्र जन्मनि

जाते को लाभः? अत आह - गोकुलवासिनां मध्येऽपि कतमस्य यस्य कस्यापि अङ्घ्रिरजसा अभिषेको यस्मिन् तत्, कतमं विशिनष्टि - यस्य गोकुलवासिनः कतमस्यापि जीवितं भगवान्मुकुन्द एव मुकुन्दपरमेव जीवनमित्यर्थः, तस्य दुर्लभत्वमाह- अद्यापीति। यस्य तव पदरजः केवलं श्रुतिभिः वेदान्तैः मृग्यत एव, न तु दृश्यत[12] इत्यर्थः ॥ ३४ ॥

इदमपि न प्रा[13]र्थये, किन्तु कमपि त्वत्सम्बन्धविशेषमेवेत्यभिप्रयन् येन केनापि रागद्वेषाद्यन्यतमेन त्वत्सम्बन्धमात्रेणैव निरतिशयानन्दपुरुषार्थभूतत्वत्प्राप्तौ सत्यां ततोऽन्यत्किं फलं दातुं व्रजवासिष्ववतिष्ठसे इति मन्मनो नितरां मुह्यतीत्याह - **एषामिति।** हे देव! सकुला बकासुरादि सहिता पापिष्ठाऽपि पूतना सद्वेषादिव सतां साधूनां वेषादिव साधुवेषानुकारमात्रेणैवेत्यर्थः। वस्तुतः जिघांसयाऽपीति भावः, यं त्वामेव प्रापिता सो[14]ऽयं भवानेषां घोषनिवासिनां विश्वस्य पुरुषार्थभूतात् त्वत्तोऽन्यत्परमुत्कृष्टं फलं राता दास्यतीति नोऽस्माकं चेतः कुत्रापि क्वा[15]पि स[16]र्वत्रापि यत् गच्छत् विचारयत्[-16] मुह्यति। विश्वफलभूतस्त्वं प्रत्यक्षतोऽवतिष्ठस एव तत उत्कृष्टस्य फलस्याभावात् किं दास्यसीति मच्चेतो मुह्यतीत्यर्थः घोषवासिनो विशिनष्टि — येषां घोषनिवासिनां ये[17] धामादयः ते[18] त्वत्कृते त्वदर्था एवेत्यर्थः। धाम गृहम्, अर्थो धनं, तनुः देहः, आशयो मनः ॥८३५॥

---

1. W°क्ये 2. K omits नन्द 3- -3. A,B इति 4. W omits अतीव 5. W omits यद्यतः 6. W वर्णितुं 7. A,B °येन्द्रियाधि° 8. A,B °देतेषां 9. W omits पात्राणि 10. A,B तदेवे° 11. A,B तदेवे° 12. A,B add एव 13. A,B,K प्रार्थनीयं 14. W योऽयं 15. A,B omit क्वापि 16- -16. A K,W सर्वत्र 17. K,W omit ये 18. K,W omit ते

तावद्रागादयः स्तेनास्तावत्कारागृहं गृहम्।
तावन्मोहोऽङ्घ्रिनिगलो[1] यावत्कृष्ण न ते जनाः ॥ ३६ ॥

प्रपञ्चं निष्प्रपञ्चोऽपि विडम्बयसि भूतले[2]।
प्रपन्नजनतानन्दसन्दोहं प्रथितुं प्रभो[3] ॥ ३७ ॥

जानन्त एव जानन्तु किं बहूक्त्या न मे प्रभोः।
मनसो वपुषो वाचो वैभवं तव गोचरः[4] ॥ ३८ ॥

अनुजानीहि मां कृष्ण! सर्वं त्वं वेत्सि सर्वदृक्[5]
त्वमेव जगतां नाथो जगच्चै[6]तत्तवार्पितम् ॥ ३९ ॥

श्रीकृष्णः वृष्णिकुल पुष्करजोषदायिन् क्ष्मानिर्जरद्विजपशूदधिवृद्धिकारिन्।
उद्धर्मशार्वरहरः! क्षितिराक्षसध्रु[7] गाकल्पमार्कसुमहन्[8]! भगवन्नमस्ते ॥ ४० ॥

---

1. A,B,G,J °ङो 2. V मायया 3. V भवान् 4. V, W °रम् 5. A °वित् 6. A,B,G,J, °दे° 7. K °सोढु° 8. A,B,G,J,V °मर्हन्

**श्रीध०** ननु वीतरागादिदोषाणां सन्न्यासिनामपि न मत्तः परं किञ्चिदस्ति, कथमेतेषामपर्याप्तमित्यत आह — **तावदिति।** हे कृष्ण! रागादयः तावदेव स्तेनाः चोरा भवन्ति। तदा तावद्गृहमपि कारागृहं बन्धनागारम्। मोहोऽपि तावदेव अङ्घ्रियुगलनिगलः पादशृङ्खला, यावत्ते त्वदीया जना न भवन्ति। त्वदीयानां तु रागादयोऽपि त्वन्निष्ठा मोचका एवेति न यतिभ्यो विशेषः। भजनं त्वधिकमिति भावः ॥ ३६ ॥

नन्वनृणत एवाहमेषां पुत्रादि रूपेण वर्ते इति चेत्तत्राह **प्रपञ्चमिति।** प्रपन्ना या जनता जनसमूहः तस्या आनन्दानां सन्दोहं समूहं प्रथयितुमिति। न हि कपटपुत्रत्वादिना तादृग्भक्तेः आनृण्यं सम्पद्यत इत्यर्थः ॥ ३७ ॥

तदेवमादित आरभ्य अचिन्त्यानन्तगुणत्वेन स्वयं दुर्ज्ञेयत्वमुक्तम्। केचित्तु वयं जानीम इति स्थिताः तानुपहसन्निवाह **जानन्त** इति। न तु मे मनआदीनां तव वैभवं विषय इति ॥ ३८ ॥

जगदीशत्वाद्यभिमानं परित्यज्याह - **अनुजानीहीति।** स्वमहिमानं अस्मदादीनां च ज्ञानबलादि सर्वं त्वमेव वेत्सि। यतः सर्वदृक् जगतां नाथस्त्वमेवेत्येतावज्ज्ञातम्, अतो ममतास्पदं जगत् एतच्छरीरं च तवार्पितम् ॥ ३९ ॥

तदेवं किङ्करं प्रस्थापयेत्यादरेण नमस्करोति **श्रीकृष्णेति।** वृष्णिकुलपद्मस्य प्रीतिदातृत्वेन हे सूर्योपम! क्ष्मा अवनिश्च निर्जरा देवाश्च द्विजाश्च पशवश्च त एव उदयस्तेषां वृद्धिकारित्वेन, हे चन्द्रोपम! उद्धर्मः पाषण्डधर्मः तदेव शार्वरं तमः तद्धरतीति तथा। अनेन हे द्वयोपम! हे क्षितिराक्षसध्रुक् क्षितौ राक्षसाः कंसादयः उद्यन्नेव तेभ्यो द्रुह्यतीति पुनः सूर्योपमा। सूर्याद्युपमापि न्यूनेति मत्वाऽऽह आर्कं अर्कमभिव्याप्य सर्वेषामर्हन् पूज्य! भगवन्! आकल्पं कल्पपर्यन्तं ते तुभ्यं नम इति ॥ ४० ॥

---

1. V विगत 2. A,B,J °मेषा° 3. A,B,J तथा 4. A,B,J omit युगल 5- -5. A,B,J नन्वत 6. B,J omit वयं 7. A,B,J °नुप 7. V omits अवनिः

**वीर०** ननु मत्प्राप्तिप्रतिबन्धकरागद्वेषादिमतामपि मत्सम्बन्धविशेषमात्रेणैव कथं मत्प्राप्तिः तत्राह - **तावदिति** । हे कृष्ण! तावदेव रागादयः स्तेनाः चोराः भवन्ति। त्वत्प्राप्तिप्रतिबन्धका भवन्ति तथा तावद्गृहमपि कारागृहं बन्धनागारम्, मोहोऽपि तावदेव पादशृङ्खलम्। यावत्ते तव जनाः येन केनापि प्रकारेण त्वत्सम्बन्धिनो न भवन्ति। त्वदीयानां तु रागादयोऽपि त्वन्निष्ठामोचका एवेति भावः ॥ ३६ ॥

एवं मोहितचित्तोऽपि पुनरेवमध्यवस्यामीत्यभिप्रयन्नाह - **प्रपञ्चमिति।** निष्प्रपञ्चोऽपि "निष्कलं निष्क्रियम्" (श्वेता. उ. 6-19) इति श्रृत्युक्तरीत्या प्राकृतशरीरतद्व्यापाररूपप्रपञ्चरहितोऽपि मायया सङ्कल्पेन प्रपञ्चं विडम्बयसि अनुकरोषि, किमर्थम्? हे प्रभो! प्रपन्नजनसमूहस्याऽऽनन्दसन्ततिं प्रथितुम् आविष्कर्तुं वर्धयितुमिति यावत् मम त्वेवं निश्चय इति भावः॥ ३७॥

ननु मम प्रपञ्चविडम्बनहेतुं तत्त्वतः त्वं न जानीष इत्यत्राऽऽह **जानन्त** इति। ये जनाः त्वत्स्वरूपस्वभावादिकं जानन्ति त एव विडम्बनहेतुं जानन्तु, मम बहुभाषितेन किम्? न किञ्चिदपि साध्यमस्तीत्यर्थः, एवमात्मनोऽज्ञत्वमाविष्कृतम्। पुनस्सर्वजनीनमेतत्तु जानामीत्यभिप्रयन्नाह - मनस इति। तव वैभवं मम[3] मनआदिकरणत्रयस्य गोचरः[4] नेत्यनु[5] वर्तते, न गोचरो[6] न विषय[7] इत्यर्थः, वपुष इति दृष्टान्तार्थम्। यथा वपुषो न गोचरः[8], तथा वाङ्मनसयोरपीति। अथवा तव वपुषोऽपि वैभवं वाङ्मनसाऽगोचरमित्येतावत्तु जानामीत्यर्थः॥ ३८॥

अथ जिगमिषुः आवयोः तारतम्यं सर्वज्ञस्त्वमेव वेत्सीति वदन् अनुज्ञां पृच्छति **अनुजानीहीति।** हे कृष्ण! सर्वदृक् हेतुगर्भमिदम्। तत्त्वात् सर्वं वेत्सि जगतां नाथः त्वम्। न त्वहमिति भावः। एतत्परिदृश्यमानं जगत् तव त्वया अर्पितम् उत्पाद्य स्वस्मिन्नेव निहितमित्यर्थः। न तु मये[9]ति भावः, अतो मामनुजानीहि आज्ञापयेत्यर्थः॥ ३९॥

एवमापृच्छ्याक्षिसङ्कोचनेनैव तदनुज्ञातः पुनः हर्षातिशयात् प्रकृतावतारासाधारणधर्मैस्सम्बोधयन् परिक्रम्य प्रणम्य च जगामेत्याह - **श्रीकृष्णेति** द्वाभ्याम्। वृष्णिकुलपद्मस्य प्रीतिदातृत्वेन सूर्योपमा, क्ष्मानिर्जराः भूदेवाः ये द्विजाः तेषां, यद्वा क्ष्मायाः निर्जराणां देवानां द्विजानां पशूनां च य उदधिवद्विस्तारः तस्य वृद्धिं करोतीति तथाभूत! तत्समुदायवृद्धिकारित्वेन चन्द्रोपमा, उद्धर्मः पाषाण्डधर्मः स एव शार्वरं तमः, तद्धरतीति तथा, अनेन हि द्व्योपमा, हे क्षितिराक्षस[10]ध्रुक् क्षितौ ये राक्षसाः कंसादयः, उद्यन्नेव तेभ्यो द्रुह्यतीति पुनस्सूर्योपमा। सूर्याद्युपमाऽपि न्यूनेति मत्वाऽऽह। आर्कम् अर्कमभिव्याप्य सर्वेषां सुमहन्! पूज्य! हे भगवन्! आकल्पं कल्पपर्यन्तं ते तुभ्यं नमः॥ ४०॥

---

1. A,B चौराः 2. A,B add इत्यर्थः 3. A,B omit मम 4. W°रम् 5. K,W नेति 6. W °रम् 7. W° यम् 8. W°रम् 9. A,B,W ममेति 10. K °सोद्धक्!

**श्रीशुक उवाच**

**इत्यभिष्टूय भूमानं त्रिः परिक्रम्य पादयोः।**
**नत्वाऽभीष्टं जगद्धाता स्वधाम प्रत्यपद्यत॥ ४१॥**

**ततोऽनुज्ञाप्य भगवान् स्वभुवं[1] प्रागवस्थितान्[2]।**
**वत्सान्पुलिनमानिन्ये यथापूर्वसखं स्वकम्॥ ४२॥**

**एकस्मिन्नपि यातेऽब्दे प्राणेशञ्चान्तराऽऽत्मनः ।**
**कृष्णमायाहता राजन्! क्षणार्धं मेनिरेऽर्भकाः॥ ४३॥**

**किं किं न विस्मरन्तीह मायामोहितचेतसः ।**
**यन्मोहितं जगत्सर्वमभीक्ष्णं विस्मृतात्मकम्॥ ४४॥**

**ऊचुस्स्वसुहृदं[3] कृष्णं स्वागतं तेऽतिरंहसा।**
**नैकोऽप्यभोजि कबल [4-]एहीतस्साधु[-4] भुज्यताम्॥ ४५॥**

---

1. V °गि° 2. K,W °तम् 3. A,B,G,J,V °चुश्च सु° 4. V एहि तत्साधु

**श्रीध०** "स[★] सखिवत्सक मोक्षणकौतुकद्भुतविलम्बितपुत्रमुदेऽद्भुतम्। निखिलरूपमतो दधदच्युतोऽवतु स वः कलयन् व्रजमङ्गलम्।" **इतीति** । पादयोर्नत्वा अभीष्टं सर्वतः पूजितं अभिप्रेतं वा॥ ४१॥

**तत** इति। अनुज्ञाप्य अनुज्ञां प्रदाय पृष्ट्वेत्यर्थः। स्वभुवं ब्रह्माणं यथापूर्वं सखायो यस्मिन् तत्। स्वकं पुलिनम्॥ ४२॥

नन्वेतावन्तं कालं कथं तत्रैव उपविष्टाः। कथं च क्षुत्पिपासादि विस्मरणम्? अत आह - **एकस्मिन्निति** श्लोकद्वयेन। अब्देऽपि याते प्राणेशं कृष्णम् अन्तरा च विनापि। प्रियविरहे क्षणोऽपि यद्यपि[1] वर्षाधिको भवति, तथापि मायाहताः[2] क्षणार्धं मेनिरे॥ ४३॥

**किमिति**। यत् यया मायया मोहितं जगत् अभीक्ष्णं पुनः पुनः [3-]विस्मृतात्मकं[-3] विस्मृतः आत्मा येन तत्तथा॥ ४४॥

**ऊचुरिति**। अत एवमूचुश्च। ते[4] त्वया अतिवेगेन स्वागतं सम्यगागतं एकोऽपि त्रासस्त्वां विना अस्माभिः नाभोजि न भुक्तः। इत एहि साधु अविक्षेपेण भुज्यतामिति॥ ४५॥

---

★ श्रीधरीयोऽयं श्लोकः। 1. A,B,J omit यद्यपि 2. V मोहिताः 3- -3. V omits 4. A omits ते

**वीर०** इति इत्थं सम्बोधनैः पूर्वोक्तैश्च धर्मैरभिष्टूय जगद्धाता ब्रह्मा भूमानमपि लीलया सङ्कुचितविग्रहं भगवन्तं परिक्रम्य पादयोर्नत्वा प्रणम्य स्वधाम सत्यलोकं प्रत्यपद्यत जगाम॥ ४१॥

**तत** इति। ततः[1] स्वस्माद्भुवं चतुर्मुखमाज्ञाप्य अक्षिसङ्कोचेनेति शेषः। यथापूर्वं सखायो यस्मिन् तत्स्वकं पूर्वाधिष्ठितं पुलिनं प्रत्येव वत्सानानिन्ये॥ ४२॥

नन्वेतावन्तं कालम् एते कथं तत्रैवोपविष्टाः ? कथं वा तेषां क्षुत्पिपासादिविस्मरणम् ? तत्राऽऽह - **एकस्मिन्निति द्वाभ्याम्।** अब्देऽपि याते आत्मनः प्राणेशं कृष्णमन्तरा विनाऽपि[2] प्रियविरहक्षणोऽपि वर्षाधिको भवति, तथाऽपि हे राजन्! कृष्णस्य मायया हताः मोहिताः क्षणार्धं मेनिरे॥ ४३॥

भगवन्मायया मोहितानि चेतांसि येषां ते, अत एव किं किं न विस्मरन्ति सर्वं विस्मरन्त्येव, यस्य मायया मोहितं जगत् अभीक्ष्णं पुनः पुनः विस्मृत आत्मैव येन तत् तथा। किमुत क्षुत्पिपासादिकमिति भावः॥ ४४॥

अत एव एवमूचुरित्याह **ऊचुश्चेति** । ते त्वया अतिवेगेन स्वागतं सम्यगागतम्। एकोऽपि ग्रासः त्वां विना अस्माभिः नाभोजि न भुक्तः। अत एहि साधु अविक्षेपेण भुज्यतामिति॥ ४५॥

---

1. K,W omit ततः 2. A,B विरहेणापि

**ततो हसन् हृषीकेशोऽभ्यवहृत्य सहार्भकैः।**
**दर्शयंश्चर्माऽऽजगरं न्यवर्तत वनाद्व्रजम्॥ ४६॥**
**बर्हप्रसूनन[1]वधातु विचित्रिताङ्गः प्रोद्[2]ध्मातवेणुदलशृङ्गरवोत्सवाढ्यः।**
**वत्सान् गृणन्ननुगगीतपवित्रकीर्तिं र्गोपीदृगुत्सवदृशिः प्रविवेश गोष्ठम्॥ ४७॥**
**अद्यानेन म[3]हाव्यालो यशोदा नन्दसूनुना।**
**हतोऽ[4]विता वयं चास्मादिति बाला व्रजे जगुः॥ ४८॥**

**राजोवाच**

**ब्रह्मन्! परोद्भवे कृष्णे इयान् प्रेमा कथं भवेत्।**
**योऽभूतपूर्वस्तोकेषु स्वोद्भवेष्वपि कथ्यताम्॥ ४९॥**

**श्रीशुक उवाच**

**सर्वेषाम[5]व जन्तूनां नृप! स्वात्मै[6]व वल्लभः।**
**इतरेऽपत्यवित्ताद्यास्तद्वल्लभतयैव हि॥ ५०॥**

---

1. A,B °वन° 2. A,B,G,J,V प्रोद्दाम 3. V महान् व्या° 4. K,W नीता 5. A,B,G,J °मपि भूतानां 6. B °क

**श्रीध०** **तत** इति। अभ्यवहृत्य भुक्त्वा॥ ४६॥

**बर्हेति।** प्रोद्दामो वेण्वादिः तस्य रवैः उत्सवः तेनाऽऽढ्य सम्पन्नः गृणन् उपलालनैः आह्वयन् [1]गोपीदृगुत्सवदृशिः[-1] गोपीनां दृशामुत्सवरूपा दृशिः दर्शनं यस्य सः। [2]अत्र घोषमिति पाठे व्रजमित्यर्थः[-2] ॥ ४७॥

**अद्येति।** यशोदानन्दसूनुनेति बहूनां मुक्तिः सहैव दर्शिता। केचिदाहुः यशोदासूनुना[3] अपरे नन्दसूनुनेति। यद्वा यशोदां नन्दयतीति यशोदानन्दः स चासौ सूनुश्चेति तथा तेन। अस्मात् महाव्यालाद्वयं चाविता रक्षिताः ॥ ४८ ॥

"व्रजौकसां स्वतोकेषु [4]स्नेहवल्ल्याऽऽब्द[-4] मन्वहम्। शनैर्निस्सीम ववृधे यथा कृष्णे त्वपूर्ववत्॥" (भाग० 10-13-26) इत्यादिना स्वतोकेभ्योऽपि परपुत्रे कृष्णे प्रेमाधिक्यमुक्तं, तत्र पृच्छति ब्रह्मन्निति ॥ ४९ ॥

श्रीकृष्णस्य साक्षादात्मत्वात् तस्मिन्नात्मीयेभ्यः प्रेमाधिक्यं युज्यत इति वक्तुं प्रथमं तावदात्मनः स्वतः [5]प्रेमास्पदत्वं[-5], अन्येषां तु तदुपाधिकमिति दर्शयति - **सर्वेषामिति** पञ्चभिः ॥ ५० ॥

---

1- -1. B,J omit 2- 2-. A,B,J omit 3. A adds इति 4- -4. वैक्लब्य° 5- -5. A,B,J प्रेष्ठत्वम्

**वीर०** ततोऽर्भकसहितोऽभ्यवहृत्य भुक्त्वा वनात् व्रजं प्रति न्यवर्तत आजगाम॥ ४६॥

कथम्भूतो न्यवर्तत? तत्राऽऽह - **बर्हेति।** बर्हादिभिः विचित्रितान्यङ्गानि यस्य, धातवो गैरिकादयः, प्रोध्माताः दाध्मायमानाः ये वेणवः दलानि च तरुपर्णानि वेष्टनीकृत्य मुखवायुपूरितानि शृङ्गाणि च तेषां रवेण य उत्सवो हर्षः तेनाऽऽढ्यः वत्सान् गृणन् हुङ्कारादिभिः प्रेरयन्नित्यर्थः। अनुगैः वत्सपैः गीता पवित्रा कीर्तिर्यस्य गोपीदृशामुत्सवरूपा दृशिर्दर्शनं यस्य तथाभूतो गोष्ठं प्रविवेश॥ ४७॥

ततो व्रजे आगता [1]बाला वत्सपाः जगुः जगदुः, किमिति? [2]तदाह - **अद्य** अस्मिन्नहनि अनेन अजगरो हतः, अस्मात् महाव्यालमुखात् वयमनेन नीताः व्रजं प्रापिताश्चेति॥ ४८॥

"व्रजौकसां स्वतोकेषु स्नेहवल्ल्याऽब्दमन्वहम्" (भाग 10-13-26) इत्युक्तं पुरस्तात्। तत्र स्नेहाधिक्यकारणं पृच्छति राजा **ब्रह्मन्निति।** स्वोद्भवेष्वप्यपत्येषु अभूतपूर्वः प्रेमा स परोद्भवे कृष्णे कथमभूदिति प्रश्नः, कथ्यतां तत्र हेतुः कथ्यताम्॥ ४९॥

"न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति" (बृह उ. 4-5-6) इत्यदिश्रुत्युक्तरीत्या पुत्रादिषु [3]प्रेमा यत्सङ्कल्पायत्तं तस्मिन्नेव साक्षात्पुत्रतामापन्ने सति युक्तमेव प्रेमाधिक्यमित्युत्तरमाह - **सर्वेषामिति।** स्वात्मा जीवान्तरात्मा परमपुरुष एव निरतिशयप्रियः, इतरे तु देहतदनुबन्ध्यादयो जीवपर्यन्तास्तस्य परमात्मनो वल्लभतयैव निरतिशयप्रियत्वेनैव हेतुना प्रियाः॥ ५०॥

---

1. A,B omit बाला: 2. W omits तदाह 3. K प्रेम

तद्राजेन्द्र! यथा स्नेहस्स्वस्वकात्मनि देहिनाम्।
न तथा ममतालम्बी पुत्रवित्तगृहादिषु॥५१॥

देहात्मवादिनां पुंसामपि राजन्यसत्तम!।
यथा देहः प्रियतमस्तथा न ह्यनु ये च तम्॥५२॥

देहोऽपि ममताभाक् चेत्तर्ह्यसौ नाऽऽत्मवत्प्रियः।
यज्जीर्यत्यपि देहेऽस्मिन् जीविताशा बलीयसी॥५३॥

तस्मात्प्रियतमस्स्वात्मा सर्वेषामपि जन्मिनाम्[1]।
तदर्थमेव[2] सकलं जगदेतच्चराचरम्[3]॥५४॥

कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम्।
जगद्धिताय सोऽप्यत्र देहीवाऽऽभाति मायया॥५५॥

---

1. A,B,G,J,V देहि° 2. W °मेतत् 3. V °च्चै°

**श्रीध०** कुतः ? तथादर्शनादित्याह - **तदिति**। तस्मादेव कारणात् स्वस्वकात्मन्यहङ्कारास्पदे[1] देहे॥५१॥

आत्माऽध्यासतारतम्येन प्रेमतारतम्यं दृश्यमानं तन्निबन्धनमेवेति दर्शयितुं मूढामूढभेदेन विशेषमाह - **देहेति** द्वाभ्याम्। तं देहमनु भवन्ति ये पुत्रादयः ते तु न तथा प्रियतमा इत्यर्थः॥५२॥

**देह** इति। यद्यस्मात् जीर्यत्यपि आसन्नमरणेऽपि जीविताशा भवति। अयं भावः - न जीविष्यतीति निश्चितेऽपि देहे यत्प्रेमास्पदत्वं तदात्मगतमेव सङ्गच्छत इति। अथवा यत् अस्मिन् देहे जीर्यत्यपि जीविताशा अविवेकदशायामासीत् सापि विवेकिनो यदा ममताभाग्भवति तदा [2-]आत्मवत्प्रियो न भवति, अतः[-2] तत्र नातीवास्ते इति॥५३॥

**तस्मादिति**। तदर्थमेव सकलं प्रियमित्यर्थः॥५४॥

प्रस्तुतमाह - **कृष्ण** मिति॥५५॥

1. V adds अपि 2- -2. V omits

**वीर०** तस्मात् हे राजेन्द्र! देहिनां निरतिशयप्रियस्वरूपपरमात्मसङ्कल्पायत्तप्रीतियुक्तानां जीवानां स्वस्वदेहे या ममता तदवलम्बी प्रेमा यथा स्वस्वदेहे न तथा पुत्रादिषु। अयं भावः - साक्षान्निरतिशयप्रियस्वरूपपरमात्मसम्बन्धात् आत्मनि या प्रीतिः न सा देहे जीवेन व्यवहितत्वात् या च देहे प्रीतिः न सा पुत्रे देहात्मभ्यां व्यवधानात्। या च पुत्रे न सा वित्ते, या च वित्ते न सा ॥५१॥

इदं च देहात्माभिमानि तदनभिमानिसाधारणमनुभवसिद्ध मित्याह - **देहात्मवादिनामिति।** हे राजन्यसत्तम! अपिशब्दस्य देहात्माभिमानरहितानामपीति भावः। तं देहमनु देहानुबन्धिनो ये इत्यर्थः, ते न तथा न देहवत्प्रियाः, किन्तु तारतम्येनेति भावः ॥५२॥

विवेकिषु एतावान्विशेष इत्याह - **देहोऽपीति।** ममताभाक् येषां देहोऽपि ममताविषयः न त्वहन्ताविषयः इति भावः। तर्हि तेषामसौ ममताभाग्देहः नाऽऽत्मवत्प्रियः, किन्तु ततः किञ्चिदूनप्रिय इत्यर्थः। ननु विवेकिनो देहे सुतरां प्रीत्यभावः किं न स्यात्? तत्राऽऽह - यत् यस्मात् देहे जीर्यत्यपि विपत्तुमुद्युक्तवत्यपि जीविताशा बलीयसी न जीर्णतां याति, किन्तु बलीयस्येवावतिष्ठते, अतः किञ्चिदूनप्रिय इति भावः ॥५३॥

अस्तु प्रकृते किमायतम्? तत्राऽऽह - **तस्मादिति।** तस्मात् लोकपरिपाटे रेवंविधत्वात् जन्मिनां जननवतां देहभृतामित्यर्थः। प्रियतमः कृष्ण इति शेषः। तत्र हेतुः - स्वात्मा, स्वेषां जीवानामन्तरात्मा अत एच्चराचरात्मकं जगत्सर्वं तदर्थमेव प्रियं तदिष्टसम्पत्तय एव प्रियमित्यर्थः। "आत्मनस्तु कामाय" (बृह. उ. 4-5-6) इति श्रुत्यनु [2-]गुणोऽयं[-2] निर्देशः। अर्थशब्दः प्रयोजनवाची, प्रयोजनं चेष्टसम्पत्तिः, तदिष्ट सम्पत्तय एव प्रियमिति यावत्। "न वा अरे" (बृह. उ. 4-5-6) इति श्रुतेस्त्वयमर्थः - पतिपुत्रादीनां कामाय कामसिद्ध्यै तदभीष्टसिद्ध्यै भार्यापुत्रादीन्प्रति पतिपुत्रादीनामभीष्टसिद्ध्यर्थं न पतिपुत्रादयः प्रिया भवन्ति, अपि त्वात्मनः तत्तत्पुत्रादिनिमित्तभोगप्रदातुः परमपुरुषस्यैव सङ्कल्पात्तेषां पतिपुत्रादिनां भार्यापुत्रादीन्प्रति प्रियत्वं भगवत्सङ्कल्पायत्तम्। अस्या भार्याया अयं पतिः [3] अस्य पितुः अयं पुत्रः प्रियः स्यादित्येवं भगवता सङ्कल्पिते सति तत्तत्प्रियं भवतीति। एवं च स्वस्य निरतिशयप्रियरूपत्वाभावे सति इतरेषां प्रियावहत्वासम्भवात् तस्य च तत्त्वं कैमुत्यनयसिद्धम्★ ॥५४॥

कृष्णे परमात्मत्वसंशयं [4-]निराकरोति[-4] **कृष्णमिति।** एनं कृष्णम् अखिलात्मनाम् आत्मानमवेहि जानीहि। यद्य[5]यमखिलात्मनामात्मा तर्हि किमर्थं मानुषतामापन्नः, तत्राऽऽह मायया आत्मीयसङ्कल्पेन, अत्र लोके गोपादिषु देहीव कर्मायत्तदेहभृदिवाऽऽभाति अविवेकिनामिति भावः ॥५५॥

---

1. A,B omit प्रिय 2- -2. A,B सारेणाऽयं 3. A,B add प्रियः * A,B, K add प्रेमास्पदत्वं प्रियतमत्वं पवित्रीकरणत्वं नित्यहीनमङ्गलसुखदायित्वं तत्वं च सर्वमङ्गलं च श्रीकृष्ण कमल एव नान्यत्रात्रत्यदेहकलत्र पुत्रमित्र धनासादौ चेति दिक्। 4- -4. W निराह 5. A,B °यखि°

वस्तुतोऽजानतामत्र कृत्स्नं स्थास्नु चरिष्णु च।
भगवद्रूपम[1]परं नान्यद[2]स्तीति किञ्चन॥५६॥

सर्वेषाम[3]व धातूनां भावार्थो भवतिस्स्मृत[4]ः।
तस्यापि भगवान् कृष्णः किम[5]तद्वस्तु रूप्यताम्॥५७॥

समाश्रिता ये पदपल्लवप्लवं महत्पदं पुण्ययशो मुरारेः
भवाम्बुधि र्वत्सपदं परं पदं पदं पदं यद्विपदां न तेषाम्॥५८॥

एतत्ते सर्वमाख्यातं य[6]त्पृष्टोऽहमिह त्वया।
यत्कौमारे हरिकृतं [7-]पौगण्डे कीर्तितं भुवि[-7]॥५९॥

एतत्सुहृद्भिश्चरितं मुरारेरघार्दनं शाद्वलभो[8]जनं च।
व्यक्तेतरद्रू[9-]पमजस्य संस्तुतिं[-9] शृण्वन्गृणन्नेति नरोऽखिलार्थान्॥६०॥

एवं विहारैः कौमारैः कौमारं जहतुर्व्रजे।
निलायनैः सेतुबन्धैर्मर्कटोत्प्लवनादिभिः ॥६१॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्त्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे पूर्वार्धे ब्रह्मस्तुतिर्नाम चतुर्दशोऽध्यायः॥१४॥

---

1. B,G,J,V °मखिलं 2. A,B,G,J °द्वस्त्विह; V °द्वस्त्वस्ति; W °दस्तीह 3. A °मेव भावानां; B, G,J °मपि वस्तूनां; V ° मपि भूतानां 4. A,B,G,J °स्स्थितः 5. B,K,W °मे° 6. B तत् 7- -7. A जगुः पौगण्डकेऽर्भका; B,G,J पौगण्डे परिकीर्तितम् 8. A,B,G,J जेमनं 9- -9. A,B,G,J,V °मजोर्वभिष्टवं

**श्रीध०** न केवलमात्मनामात्मा, [1]अपि तु जडानामपीत्याह - **वस्तुत** इति। सर्व जगत्कारणमिति कृष्णं जानतां पुंसां स्थावरं जङ्गमं च सर्वं [2-]भगवद्रूपं[2] भगवानेव स्वरूपं यस्य तत् नान्यत् [3-]अस्तीति भावः[-3] ॥५६॥

कुत इति [4-]तदाह[-4] - **सर्वेषामिति**। भावार्थः[5] परमार्थः[6]। भवतीति भवत् परिणामं प्राप्नुवत् कारणं तस्मिन्[7]। तस्यापि भवतः कारणस्यापि भगवान्कृष्णः [8]भवत् कारणम्। अतः कि[9]मतत् श्रीकृष्णव्यतिरिक्तं वस्तु [10]रूप्यताम्॥५७॥

तस्माच्छ्रीकृष्णस्यैव परमार्थत्वात् तदेकशरणानामयत्नसिद्धो मोक्ष इति प्रकरणार्थम् उपसंहरति **समाश्रिता** इति। पुण्यं यशो यस्य स पुण्ययशाः, स चासौ मुरारिश्च तस्य पदपल्लव एव प्लवः तं ये सम्यगाश्रिताः।[11] महात्पदं महतां पदमाश्रयम्। यद्वा महच्च तत्पदं चेति तथा। तेषां भवाम्बुधिः वत्सपदमात्रं भवति। किञ्च परं पदं श्रीवैकुण्ठाख्यं पदं स्थानं भवति। विपदां यत्पदं विषयः तत्पुनः कदाचिदपि तेषां न भवति। न ततः पुनरावर्तन्त इत्यर्थः ॥ ५८, ५९ ॥

**एतदिति**। सुहृद्भिश्चरितं "मुष्णन्तोऽन्योन्यशिक्यादीन्" (भाग०. 10-12-5) इत्यादिनोक्तम्। अघार्दनं च शाद्वले [12]जेमनं भोजनं च। व्यक्तेतरत् व्यक्तात् [13]जडात् प्रपञ्चादितरत् शुद्ध सत्त्वात्मकं [14]वत्सतत्पालरूपम्। यद्वा व्यक्तेतरच्चिद्विलासः [15]तदेव रूप्यत इति रूपम्। अजस्य उरुः महानभिष्टवः [16]स्तवः तं ब्रह्मकृतां स्तुतिम्। एतच्छृण्वन् गृणन् [17]गायन् नरः सर्वपुरुषार्थान् [18]प्राप्नोति ॥ ६०, ६१ ॥

★ इति श्रीपरमानन्द नृसिंहपदषट्पदः। व्याकरोच्छ्रीधरस्वमी यथामतिविधिस्तुतिम्॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे

श्रीधरस्वामिविरचितायां भावार्थदीपिकायां

व्याख्यायां चतुर्दशोऽध्यायः ॥ १४ ॥

---

1. V किं 2- -2. B omits 3- -3. A,B,J omit 4- -4. V अत आह 5. A adds सद्रूपार्थः 6. A adds इत्यर्थः 7. A adds भवति परिणामिनि स्थितः। "वाचारम्भणं विकारो नामधेयं वृत्तिकेत्येव सत्यम्" इत्यादि श्रुतेः। 8. V omits भवत्-9. B °मे° 10. V निरू° 11. A adds कथम्भूतम्? 12. V omits जेमनं 13. A,B,J जडप्र° 14. B,J वत्सपा° 15. B,J तत् 16. V omits स्तवः 17. V omits गायन् 18. V आ° ★ श्रीधरीयोऽयं श्लोकः।

**वीर०** तदेव विशदयति **वस्तुत** इति। स्थावरजङ्गमात्मकं कृत्स्नं जगत् भगवतश्शरीरम्। अन्यत्तत्पृथक्सिद्धं वस्तु किञ्चिदपि न विद्यत इत्येवं वस्तुतो[1]ऽत्र अजानतां देहीवाऽऽभाति इत्यन्वयः। एवं जानतां तु देवमनुष्यादिविजातीयत्वेनैव सर्वशरीरकत्वेनैव च भातीत्यर्थः ॥ ५६ ॥

नान्यद्वस्त्वस्ति इत्येतदेवोपपादयाति **सर्वेषामिति**। धातुशब्दोऽत्र "भूवादयो धातवः" (अष्टा. 1-3-2) इति सङ्केतितधातुपरः, स च तदुत्तर प्रत्ययानां तदुभयार्थानां चोपलक्षकः। सर्वे शब्दा व्युत्पन्ना इति व्युत्पत्तिपक्षश्चाभिप्रेतः। भवतिरिति भूधातुः। "इक्श्तिपौ धातुनिर्देशे" (वार्तिक under अष्टा. 3-3-108) इति विहितः तिप्प्रत्ययान्तोऽत्र निर्दिष्टः। तदयमर्थः - सर्वेषां शब्दानां तदर्थानां च यो भावः सत्ता स एवार्थोऽभिधेयो यस्य तथाभूतो भवतिः भूधातुः

स्मृतः "भू सत्तायाम्" इति स्मृत इत्यर्थः। सत्ता च प्रमाणसम्बन्धार्हत्वरूपा। एवं च तस्य सर्वशब्दतदर्थानां च या सत्ता तद्बोधकस्य भूधातोः तदर्थतत्प्रत्ययतदर्थादिरपि शब्दात् सर्वधातुतत्प्रत्ययतदुभयार्थानां च यो भावः सत्ता स भगवान् कृष्णः तत्सत्तानिर्वाहकः कृष्ण इति ★ फलितार्थः। एवं च सति अन्यत् कृष्णात्पृथक्सिद्धं वस्तु किमस्ति, तन्निरूप्यतामिति किमतद्वस्त्विति पाठे अतदकृष्णात्मकं वस्तु किमस्ति यन्निरूप्येतेत्यर्थः ॥ ५७॥

एवं भगवतः परत्वं सर्वकारणत्वं च उपपाद्य "ब्रह्मविदाप्नोति परम्" (तैत्ति. उ. 2-1-1) "कारणं तु ध्येयः" (अथ. शिखा. उ. 3) [2]इत्युक्तरीत्या तद्वेदनमेवानिष्ट परिहारपूर्वकेष्टप्रापणक्षममिति वदन्नुपसंहरति **समाश्रिता** इति। पुण्यं यशो यस्य तस्य मुरारेः महत्पदं महतामाश्रयं पदपल्लवप्लवं ये समाश्रिताः, समाश्रयणमत्र न्यासोपासनान्यतररूपम्। तेषामेव भवाम्बुधिः वत्सपदतुल्यो भवति[3]। किञ्च परं [4]पदं वैकुण्ठाख्यं, पदं स्थानं भवति[5]। विपदां [6]दुःखानां यत्पदं विषयः [7]संसारः तत्पुनः कदाचिदपि तेषां न भवति [8]ततो न निवर्तन्त इत्यर्थः ॥ ५८॥

पश्नस्योत्तरं कथितमित्याह [9-]बादरायणिः[-9] **एतदिति।** यत्प्रति अहं पृष्टः, किं तत्? यत्कौमारे श्रीकृष्णकृतं तत्कथमर्भकाः पौगण्ड[10]के विदुरित्येतत्, एतदुत्तरं सर्वं ते तुभ्यं मया आख्यातम्॥ ५९॥

अध्यायत्रयार्थश्रवणादिफलमाह - **एतदिति। सुहृद्भिश्चरितं** "मुष्णन्तोऽन्योन्य शिक्यादीरन्" (भाग. 10-12-5) इत्यादिनोक्तं मुरारिकर्तृक मघासुरहननं शाद्वले भोजनं, जेमनमिति पाठेऽपि स एवार्थः, व्यक्तात् प्रकृतिरूपादितरद्रूपं शुद्धसत्त्वात्मकं वत्सवत्सपादिरूपम् अजस्य ब्रह्मणोऽभिष्टवं स्तुतिं च इत्येतत्सर्वं शृण्वन् [11]गृणन् कथयंश्च पुमान् अखिला[12]नभीष्टार्थान् प्राप्नोति॥ ६०,६१ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां चतुर्दशोऽध्यायः ॥ १४॥

---

1. A,B omit अत्र ★ A,B add भावग्रहणं प्रवृत्तिस्थित्योः उपलक्षणं, सर्वशब्दः तदर्थसत्ता स्थितिनिर्वाहकः इति 2. A,B इति श्रुत्युक्त 3. A,B add नान्येषामित्यर्थः। 4. K omits पदं 5. A,B add इति 6. K,W omit दुःखानां 7. K,W omit संसारः 8. A,B पुन : 9- -9. W omits 10. A,B °ण्डे 11. K omits गृणन् 12. W° लाभी°

# पञ्चदशोऽध्यायः

## (विजयध्वजरीत्या त्रयोदशोऽध्यायः)

धेनुकासुरभञ्जनघट्टः

ततश्च पौगण्डवयस्समाश्रितौ[1-1] बभूवतुस्तौ पशुपालसम्मतौ।
गाश्चारयन्तौ सखिभिस्समं पदै र्बृन्दावनं पुण्यमतीव चक्रतुः ॥ १ ॥

तन्माधवो वेणुमुदीरयन्वृतो गोपैर्गृणद्भिस्स्वयशो बलान्वितः॥
पशून्पुरस्कृत्य पशव्यमाविश- द्विहर्तुकामः कुसुमाकरं वनम्॥ २ ॥

तन्मञ्जुघोषालिमृगद्विजाकुलं महन्मनः प्रख्यपयस्सरस्वता।
वातेन जुष्टं शतपत्रगन्धिना निरीक्ष्य रन्तुं भगवान् मनो दधे॥ ३ ॥

स तत्र तत्रारुणपल्लवश्रिया फलप्रसूनोरुभरेण पादयोः।
स्पृशच्छिखान्वीक्ष्य वनस्पतीन् मुदा स्मयन्निवाऽऽहाग्रजमादिपूरुषः ॥ ४ ॥

---

1- -1. A,B,G,J,M वयः श्रितौ व्रजे

## श्रीधरस्वामिविरचिता भावार्थदीपिका

ततः पञ्चदशे धेनुपालनं धेनुकार्दनम्।
कालियक्ष्वेल[1]तो गोपरक्षणं च निरूप्यते॥
अहिवक्त्रप्रवेशेन वृथा खिन्नान् सखीनतः।
कृष्णः प्रावेशयत्पक्वफलतालालिकावनम्॥
★ शैशवे पूतनां जित्वा कौमारे तु बकादिकान्।
पौगण्ड एव दैत्यानां महामदमहन्नजः॥

तत इति। पशुपालसम्मतौ [2]पशुपालने सम्मतौ, पशुपालानां वा सम्मतौ। ईषद्वयो बलातिरेकम् अनुकृतवन्तावित्यर्थः। अतीव चक्रतुः सर्वतः प्रसर्पणेन॥ १॥

तदिति। स्वयशो गृणद्भिः गोपैर्वृतः तद्वनं प्राविशत्॥ २॥

**तदिति।** तद्वनं निरीक्ष्य रन्तुं मनो दधे। कथम्भूतम्? मञ्जुघोषा ये अलिमृगद्विजाः भ्रमरमृगपक्षिणः तैराकुलं व्याप्तं महन्मनः प्रख्यपयस्सरस्वता, महतां मनसा प्रख्यं तुल्यं स्वच्छं पयो यस्मिन्, तत्सर आश्रयत्वेनास्ति यस्य। तेन वातेनेति शैत्यमुक्तम्। शतपत्र गन्धिनेति परिमलवत्वं, तेन जुष्टं वनमिति मान्द्यं च सूचितम्॥ ३॥

**स इति।** अरुणपल्लवश्रिया सह स्पृशन्त्यः शिखाः शाखाग्राणि येषां तान्॥ ४॥

---

1. A,B,J °ड° * This verse is not found in A,B,J editions 2. A पशूनां पा°

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ पौगण्डकावस्थावस्थितयो[1] रामकृष्णयोः काश्चित्क्रीडां वर्णयन् रामकर्तृकं धेनुकासुरभञ्जनम् उभयकर्तृकं तदनुचरभञ्जनं, कृष्णकृतं[2] कालिय ह्रदजलपानमूर्छितगोगोपोत्थापनं च वर्णयति पञ्चदशेन। ततः कैशोरानन्तरं प्राप्तपौगण्ड वयसौ पशुपालने सम्मतौ, पशुपालानां वा सम्मतौ, तौ रामकृष्णौ सखिभिस्सह गाश्चारयन्तौ पदैः पादविन्यासैः, बृन्दावनमतीव पुण्यवच्चक्रतुः॥ १॥

तत्तदा स्वकीर्तिं गृणद्भिः गोपैः परिवृतो बलेन सह समन्वितो वेणुमुदीरयन् नादयन्, पशूनपुरस्कृत्य विहर्तुमिच्छुः कुसुमानामाकरं पशुभ्यो हितं वनं प्राविशत्॥ २॥

मञ्जुः रमणीयः नादो येषां तैः अलिमृगपक्षिभिः व्याप्तं महतां योगिनां मनसा तुल्यं स्वच्छं पयो यस्मिन् तत्सर आश्रयत्वेनास्ति यस्य तेन, एवमतिशैत्यमुक्तम्। शतपत्राणां गन्धो यस्य तेन वातेन जुष्टम्, एवं परिमलयुक्तत्वमुक्तम्। एवंविधं वनं निरीक्ष्य रन्तुं मनश्चक्रे॥ ३॥

अरुणपल्लवानां श्रिया सह फलानां प्रसूनानां च भरेण पादयोः स्पृशन्त्यः शिखा अग्राणि येषां तान् तरून् वीक्ष्य आदिपूरुषः कृष्णः मुदा स्मयन्निव अग्रजं रामं प्रति इदं वक्ष्यमाणमाह॥ ४॥

---

1. A,B, °ण्डाव° 2. A,B **कर्तृक**

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

श्रवणमननाभ्यां दुरितहरणाय हरेः पौगण्डवयसि क्रियमाणं विक्रमं निरुपयत्यस्मिन्नध्याये। ततः कौमारात् पौगण्डवयः नव वर्ष लक्षणं वयं श्रितौ प्राप्तौ पशुपालत्वेन सम्मतौ योग्यौ॥ १॥

उदीरयन् ध्वनयन् कुसुमाकरं कुसुमोत्पत्ति स्थानम्॥ २॥

मञ्जवः मनोहराः घोषा येषां अलयश्च मृगाश्च द्विजाश्च मञ्जुघोषैः अलिमृगद्विजैः आकुलं महतां नारायणचरणारविन्दनिरन्तरमनसां मनः प्रख्यं मनस्तुल्यं निर्मलं पयोजलं यस्य तत्तथा, महन्मनःप्रख्यपयश्च तत्सरश्च महन्मनःप्रख्यपयस्सः, तदस्यास्तीति महन्मनःप्रख्यपयःसरस्वान् तेन शतपत्राणां पद्मानां गन्धोऽस्यास्तीति शतपत्रगन्धी, तेन वातेन वायुना ॥ ३ ॥

पल्लवारुणश्रिया युक्तयोः पादयोः प्रसूनोरुभारेण स्पृशन्त्यः शिखा एव कराग्रकोटचो येषां ते तथा, तान्वनस्पतीन् वृक्षान् दृष्ट्वा अत्र भक्तिभरभुग्नग्रीवाः पुरुषाः यथा पुष्पनिचयादिना मुकुन्द चरणारविन्दमर्चयन्ति, तथा वृक्षाश्च पुष्पभरोपनतशाखाकराग्रैः पूजयन्तीत्याक्षिप्तः, शेषार्थो बोद्धव्यः ॥ ४ ॥

श्रीभगवानुवाच

अहो! अमी देववरामरार्चितं पादाम्बुजं[1] ते सुमनःफलार्हणम्[2]।
नमन्त्युपादाय शिखाभिरात्मन स्तमोपहत्यै तरुजन्म यत्कृतम् ॥ ५ ॥

एतेऽलिनस्तव[3] यशोऽखिललोकतीर्थं गायन्त आदिपुरुषानुपदं[4] भजन्ते।
प्रायो ह्यमी[5] मुनिगणा भवदीयमुख्या गूढं वनेऽपि न जहत्यनघात्मदैवम्[6] ॥ ६ ॥

नृत्यन्त्यमी शिखिन ईड्य मुदा हरिण्यः कुर्वन्ति गोप्य इव ते प्रियमीक्षणेन।
सूक्तैश्च कोकिलगणा गृहमागताय धन्या वनौकस इयान् हि सतां निसर्गः ॥ ७ ॥

★ धन्येयमद्य धरणीतृणवीरुधस्त्व त्पादस्पृशो द्रुमलताः करजाभिमृष्टाः।
नद्योऽद्रयः खगमृगास्सदयावलोकै र्गोप्योऽन्तरेण भुजयोरपि यत्स्पृहश्रीः ॥ ८ ॥

[7-]श्रीशुकउवाच[-7]

एवं बृन्दावनं श्रीमत्कृष्णः[8][9] प्रीतमनाः पशून्।
रेमे सञ्चारयन्नद्रेः[10] स्सरिद्रोधस्सु सानुगः ॥ ९ ॥

क्वचिद्गायति गायत्सु मदान्धालिष्वनुव्रतैः।
उपगीयमानचरितः स्रग्वी[11] सङ्कर्षणान्वितः ॥ १० ॥

---

1. A,B,G,J,M,V पा° 2. M °णैः 3. K,W °ऽलय° 4. M °थं 5. A,B,G,J,M अ° 6. M °मरात्म ★ This verse is found in M bearing number 19 7- -7. K,M,V,W omit 8. M कृष्णः 9. M, श्रीमत्; K,W, पश्यन् 10. K,W °द्रि 11. B,G,J स्रग्वी

**श्रीध०** **अहो** इति। तरुजन्म येन तमसा[1] कृतं, तस्य तमसः पापस्यापहत्यै नाशाय, अथवा येन त्वया ईश्वरेण। सर्वोपकारकं तरुजन्मकृतं तं त्वां नमन्ति। एवं श्लाघ्येऽपि जन्मनि यदज्ञानरूपं तमः अस्ति तस्यापहत्यै ॥ ५ ॥

एत इति। हे अनघ! वने गूढमपि त्वां न त्यजन्ति। त्वयि मनुष्यवेषेण निगूढे सति, मुनयोऽप्यलिवेषेण निगूढास्त्वां भजन्तीत्यर्थः ॥६॥

नृत्यन्तीति। इयान् हि सतां निसर्ग इति। यदस्ति स्वस्मिन् तद्गृहमागताय महते [2] समर्पयन्तीति॥७॥

धन्येति। तृणवीरुधश्च तव पादौ स्पृशन्तीति तथा। करजाभिमृष्टा नखैः स्पृष्टाः। सदयैरवलोकनैः। श्रीरपि यस्मै स्पृहयति केवलं तेन भुजयोरन्तरेण वक्षसा गोप्यो धन्या इति॥८॥

एवमिति। एवं श्रीमद्वृन्दावनं प्रति प्रीतस्सन् अद्रेः समीपवर्ति सरित्तटेषु गाः[3] सञ्चारयन् सानुगः प्रीतमानाः सन् रेमे। [5-]यद्वा श्रीमद्वृन्दावनं प्रति पशून् सञ्चारयन् अद्रेः सरिद्रोधस्सु रेमे[-5]॥९॥

तामेव रतिमाह क्वचिदित्यादि [6]पञ्चभिः॥१०॥

---

1. V omits तमसा 2. A,B,J add महापुरुषाय 3. A,B,J पशून् 4. A,B,J add गोपैस्सह वर्तमानः 5- -5. A,B,J omit. 6. A,B,J दशभिः

वीर० तदेवाऽऽह - अहो इत्यादिभिः चतुर्भिः। स्वयं आदिपुरुषोऽपि लोकमर्यादास्थापनार्थं अवतीर्णत्वात् स्वशेषभूतमपि शेषमग्रतोऽवतीर्णत्वमात्रेण स्वतोऽधिकमिव सम्भावयन्नाह - अहो इति। हे देववर! यद्वा देववैरमरैः अर्चितं तव [1]पदाम्बुजं पुष्पफलादिरूपं पूजासाधनं उपादाय शिखाभिर्नमन्ति तरवः, किमर्थं आत्मनः तमसः तापस्य अपहत्यै नाशाय येन तमसा तरुजन्मकृतं सम्पादितं तस्य तमसोऽपहत्यै इत्यन्वयः॥५॥

हे आदिपुरुष! एते भृङ्गाः तव अनुपदमखिललोकपावनं यशो गायन्तः भजन्ते, तिरश्चां कथमेवंविधं ज्ञानम्? तत्राऽऽह - अमी अलयः प्रायेण भवद्भक्तेषु मुख्याः मुनिगणा एव, अत एव अनघानाम् आत्मनां [2]दैवं दैवतं गूढं गोपवेषेणेति शेषः। त्वां न जहति न त्यजन्ति॥६॥

हे ईड्य! अमी शिखिनो मयूराः नृत्यन्ति, तथा हरिण्यो गोप्य इव ईक्षणेन ते तुभ्यं प्रियं कुर्वन्ति। तथा स्वगृहं प्रति आगताय ते कोकिलानां गणाः सूक्तैः प्रियं कुर्वन्ति। एते कोकिलादयो वनौकसोऽपि धन्या एव। सतां निसर्गः स्वभावः इयान् हि। [3]यत्मृदूक्त्यादिभिः बहुमानमियानेव हि॥७॥

इयं धरिणी [4]तृणवीरुधश्च धन्याः, कुतः? यतः तव पादौ स्पृशन्तीति तथा। तथा द्रुमलताश्च धन्याः कुतः? करजैः [5]नखैः अभिमृष्टाः तथा अद्र्यादयोऽपि धन्याः। कुतः? सदयैरवलोकनैः त्वया वीक्षिता इति शेषः तथा गोप्योऽपि धन्याः, कुतः? भुजयोरन्तरेण वक्षसा आलिङ्गिता इति शेषः। कथम्भूतेन? यत् यस्मिन् स्पृहा [6-]यस्याः तथाविधा[-6] श्रीः, तेन॥८॥

★ एवमग्रजं वदन् शोभावद्वृन्दावनं पश्यन् अद्रिसरितां रोधस्सु तटेषु गाश्चारयन् सहानुगो रेमे॥९॥

तदेव प्रपञ्चयति क्वचिदि त्यादिना श्रीदामेत्यतः प्राक्तनेन। मदेन मधुपानमदेन अन्धेषु भृङ्गेषु गायत्सु सत्सु स्वयं सखीन् हासयन् क्वचिदनुगायति, अनुगैरुद्गीयमानं चरितं यस्य सखिभिः सङ्कर्षणेन चान्वितो रेमे॥१०॥

1. A,B पा° 2. A,B omit दैवं 3. A,B omit यत् 4. A,B तृणानि 5. A,B नखैः 6- -6. A,B स्पृहावती ★ The commentary on verse 9 is not found in A and B editions.

**विज०** इममेवार्थं विशदयति **अहो** इति। देववर! यद्वा देववराः ब्रह्मादयः, अमराः देवाः एतैरर्चितं सुमनः फलार्हणैः पुष्पफलोपायनैः, आत्मनः स्वस्य तमोपहत्यै अज्ञाननिमत्तपापनिरासाय, तरुषु जन्म येन, तमोनिमित्तपापेन ॥ ५॥

यतो यथा देवादयः मनुष्यलिङ्गमवाप्य भगवन्तं सेवन्ते तथा एते भ्रमरा अपि तेष्वे तेषु तस्मात् त्वच्चरणपद्मसेवाऽनवरतं न हातव्या मुमुक्षुभिः इति भावेनाऽऽह - **एत** इति। अलिनो भ्रमराः "भ्रमराणं पक्षमूलमलमाहुर्मनीषिणः" इति, अखिललोकतीर्थं समस्तजनस्य स्नानलक्षणं कीर्तनयोग्यं शुद्धिजननस्थानीयं "शास्त्रेष्वम्भसि पावने" इति च। यद्वा[1] अखिलः अनल्पः लोकः प्रकाशः ज्ञानं येषां ते तथा तेषां सेवायोग्यशास्त्रस्थानीयम्। "लुक् प्रकाशे" इति धातुः। अनुपथं "पथ गतौ" इति धातुः। यत्र गच्छसि त्वं तत्रानुगमनलक्षणसेवां कुर्वन्तीत्यर्थः। अनुपदं वा मुनिगणाः सर्वज्ञानां देवादीनां गणाः "वेता वेद्यस्य सर्वस्य मुनिः सद्भिः उदाहृतः (उत्पलमाला) इत्युत्पलमाला। त्वदीयेषु वैष्णवेषु मुख्या गूढं मनुष्यलिङ्गधरं न जहति त्यजन्ति। "ओ हाक् त्यागे" इति धातुः। जहातीति पाठे वा। "व्यत्ययो बहुलम्" (अष्टा 3-1-85) इति सूत्रात् निर्णयः। अमराणाम् आत्मदैवं कुलदैवं, अनघात्मदैवमिति पाठे अनघानां निर्दुःखानां मुक्तानां आत्मदैवं मुक्तानां परमागतिः (अंहो दुःख) "दुःखैनो व्यसनेष्वघम्" (अम को 3-184) इत्यमरः, अनघेति पृथक् पदं वा॥ ६॥

पूर्वोक्तमतिदिशति **नृत्यन्तीति**। शिखिनो मयूराः, अन्यत्र केशशिखाधारिणः तापसाः, हरिण्यः मृगस्त्रियः। अन्यत्र हिरण्मयवत्, तपस्तेजसा ज्वलन्तः, आसां भारोऽस्तीति हरिण्यः, परोपदेश सम्बन्धेन हरिभक्तजनतापहरिण्य इत्युच्यन्ते। "महेशाज्ज्ञानमन्विच्छेन्मोक्षमिच्छेज्जनार्दनात्" (ब्रह्माण्ड पु.?) इति स्मृतेः। "हरिणी सा हिरण्मयी" (हला. को. 1-131) इत्यभिधानम्। ते तव ईक्षणेन प्रियं कुर्वन्ति, कोकिलगणाश्च सूक्तैः कर्णरम्यैः वचनैः प्रियं कुर्वन्तीति। अन्यत्र कः ब्रह्मा, उः शिवः तयोः किल वार्ता कीर्तनं सम्भावना च येषां ते, कोकिलाः, इन्द्रादयः परभृतः इतरप्राणिरक्षार्थं प्राणधारिणः न स्वार्थं परमभागवता इत्यर्थः, स्मार्तन्यायः। गृहमिति गृहमागताय अतिथये, गृहिणार्घ्यपाद्यादिकं दातव्यमिति यत्तस्मात् वनौकसो मृगादयो वा, वानप्रस्थादयो वा, धन्याः कृतार्थाः स्वं स्वं निवासमागतं त्वां सभाजयन्ति। नितरां स्वभावः इयान् एतावान् हि यस्मात्तस्मादिदमुचितमिति भावः। "वैश्वानरः प्रविशत्यतिथिः ब्राह्मणो गृहान् तस्यैतां शान्तिं कुर्वन्ति हरवैवस्वतोदकं आशां प्रतीक्षे संगतसूनृतां चेष्टपूर्ते पुत्रपशूंच सर्वान् एतद्वृङ्क्ते पुरुषस्य अल्पमेधसो यस्यामश्नन्वसति ब्राह्मणो गृहे" (कठ. उ. 1-7) इति। "वार्ता सम्भाव्ययोः किल" (वैज को. 8-7-19) इति यादवः। ईड्य! सर्वकर!॥ ७॥

शुकः परीक्षितमाह - **धन्येयमिति।** कस्माद्धन्येत्यत्राऽऽह - तृणवीरुध इति। तस्य कृष्णस्य पादौ स्पृशन्तीति तत्पादस्पृशः, करजैः नखैः अभिमृष्टाः अभितः श्रिताः लूना इत्यर्थः। नद्यादयो दयासहितैः अवलोकैः अवलोकिताः गोप्यः श्रीः यद्भुजयोः अन्तरं वक्षःस्थलं स्पृहयतीति यत्स्पृहा, तस्मिन् भुजयोरन्तरेण मध्ये आलिङ्गिता इति यत् तस्मात् इयं पृथिवी, तद्गताः पदार्थाश्च धन्या इत्यर्थः॥८॥

कृष्णः एवंविधमाहात्म्यं बृन्दावनमवाप्य रेमे इत्यन्वयः। अद्रेः पादेषु सरितो नद्यः रोधस्सु तीरेषु पशून् सञ्चारयन्॥९॥

रतिप्रकारं दर्शयति - **क्वचिदिति।** अनुव्रतैः अनुचरैः सखिभिः संकर्षणेन चान्वितः अनुगतः॥१०॥

---

1. A,B,M omit यद्वा

**क्वचिच्च कलहंसानामनुकूजति कूजितम्।**
**अनुनृत्यति[1] नृत्यन्तं बर्हिणं हासयन्सखीन्[2]॥११॥**

**मेघगम्भीरया वाचा नामभिर्दूरगान् पशून्।**
**क्वचिदाह्वयति प्रीत्या गोगोपालमनोज्ञया॥१२॥**

**चकोरक्रौञ्च चक्राह्व भारद्वाजांश्च[3][4] बर्हिणः[5]।**
**अनुरौति स्म सत्वानां भीतवद्व्याघ्रसिंहयोः॥१३॥**

**क्वचित्क्रीडापरिश्रान्तं गोपोत्सङ्गोपबर्हणम्।**
**स्वयं विश्रमयत्यार्यं[6] पादसंवाहनादिभिः॥१४॥**

**नृत्यतो गायतः[7] क्वापि वल्गतो युध्यतो मिथः।**
**गृहीतहस्तौ[8] गोपालान् हसन्तौ प्रशशंसतुः॥१५॥**

---

1. A,B,G,J, M अभि° 2. A,B,G,J,M क्वचित् 3. V भ° 4. M °जाऽलिः; V °जांस्तु 5. M °णाम् 6. K,M,V,W विश्रा° 7. M °तो वापि 8. V हस्तान्

**श्रीध० क्वचिदिति।** बर्हिणं नृत्यन्तं अन्वभिनृत्यति बर्हिणमभिमुखो नृत्यतीति वा। सखीन् हासयन्॥११,१२॥

**चकोरेति।** चकोरादीननुसृत्य[1] रौति कदाचिच्च सत्त्वानां मध्ये व्याघ्रसिंहयोः ताभ्यां भीतवद्भवति। सत्वेषु पलायमानेषु पलायत इत्यर्थः। तयोः सत्त्वानां बलोद्रेकाणां च भीतवद्भवतीति वा॥१३॥

**क्वचिदिति।** आर्यमग्रजं विश्रमयति[2] विगतश्रमं करोति॥१४॥

**नृत्यत** इति। मिथो नृत्यादीन् कुर्वतो गोपान् प्रशशंसतुः ॥ १५॥

---

1. A,B,J °कृ° 2. V °श्रा°

**वीर०** क्वचित् कलहंसानां कूजितमनुसृत्य[1] कूजति चुकूज। तथा नृत्यन्तं बर्हिणमभिनृत्यति अनुनर्त[2]॥ ११ ॥

क्वचिन्मेघस्येव गम्भीरया वाचा सङ्केतितनामभिः सखीन् हासयन् दूरगान् पशून् आह्वयति। आजुहाव। कया? गवां गोपानां च मनोज्ञया प्रीत्या तयोपलक्षितो वा॥ १२॥

क्वचिच्चकोरादीननुसृत्य रौति रुराव; सत्वानां मृगाणां मध्ये व्याघ्रसिंहयोः ताभ्यां भीतवद्भवति॥ १३॥

क्वचिद्गोपानामुत्सङ्गोऽङ्क एवं उपबर्हणमुपधानं यस्य तं क्रीडापरिश्रान्तम् आर्यमग्रजं स्वयं पादपीडनादिभिः विश्रामयति॥ १४॥

वल्गतः उत्प्लवतः नृत्यादीन् कुर्वतो गोपान् गृहीतौ हस्तौ याभ्यां तथाभूतौ प्रशशंसतुः ॥ १५॥

---

1. A,B °कृ° 2. A,B अभिनयं करोतीत्यर्थः।

**विज०** हासयन् हासं जनयन्॥ ११॥

नामभिः प्रसूतिवारप्रयुक्तादिलक्षणैः गवां गोपालानां मनोऽन्तःकरणं ज्ञापयन्त्या बोधयन्त्या मनोरमया वा॥१२॥

व्याघ्र (शार्दूल) सिंहयोः सकाशात् भीतवत् स्वयमपि भीतो भवति॥ १३॥

गोपस्य उत्सङ्गोऽङ्क एव उपबर्हणं शिरःपीठं यस्य स तथा तं, आर्यं ज्येष्ठं पादसंवाहनादिभिः विश्रामयति क्रीडाप्राप्तक्लेशं नाशयति॥ १४॥

रामकृष्णौ नर्तनादिकुर्वाणान् गोपालान् नृत्यादिविशेषविषयेषु प्रशशंसतुः स्खलनादिविषये हसन्तौ वल्गतः उत्प्लवतः ॥ १५॥

**क्वचित्पल्लवतल्पेषु नियुद्धश्रमकर्शितः।**
**वृक्षमूलाश्रयश्शेते गोपोत्सङ्गोपबर्हणः ॥ १६॥**

**पादसंवाहनं चक्रुः केचित्तस्य महात्मनः।**
**[1-]परे तु[-1] हतपाप्मानो व्यजनैस्समवीजयन्॥ १७॥**

**अन्ये तदनुरूपाणि मनोज्ञानि महात्मनः।**
**गायन्ति स्म महाराज! स्नेहक्लिन्नधियश्शनैः[2] ॥ १८॥**

**एवं निगूढात्म[3]गतिस्स्वमायया गोपात्मजत्वं चरितैर्विडम्बयन्।**
**रेमे रमालालितपादपल्लवो ग्राम्यैस्समं ग्राम्यवदीशचेष्टित[4]ः॥ १९॥**
**श्रीदाम[5]नामा गोपालो रामकेशवयोस्सखा।**
**[6-]सुबलस्तोककृष्णद्या गोपाः प्रेम्णेदमब्रुवन्[-6]॥ २०॥**

---

1- -1. A,B,G,J,M अपरे 2. K हृद° 3. M मति; K,W रति 4. M °तम् 5. A,B,G,J,M °दामा नाम 6- -6. M सुबलाशोक कृष्णाद्यान् गोपान् प्रेम्णेदमब्रवीत्।

**श्रीध॰ पादेति।** व्यजनैः पल्लवादिनिर्मितैः ॥ १६-१८॥

**एवमिति।** ईशचेष्टित इति निगूढस्वभावत्वेऽप्यन्तरान्तरा ईशस्यैव चेष्टितानि दृश्यन्ते यस्मिन् सः ॥१९॥

ईशचेष्टितत्वमेव दर्शयितुमाह - **श्रीदामेति।** स्तोककृष्णः [1]इति कश्चित्॥ २०॥

---

1. B,J,V omit इति

**वीर॰** कचिन्नियुद्धेन बाहुयुद्धेन यः श्रमः तेन कर्शितः ग्लानः वृक्षमूलाश्रयः पल्लवतल्पेषु गोपानाम् उत्सङ्ग उपधानं यस्य तथाभूतः शेते शिश्ये॥ १६॥

तदा तस्य महात्मनः कृष्णस्य पादसंवाहनं केचिच्चक्रुः। अपरे अपहतपाप्मानः तत्सेवालाभादिति भावः। तरुपल्लवनिर्मितैः व्यजनैः सम्यगवीजयन्॥ १७॥

अन्ये तु, हे महाराज! प्रेमार्द्रचित्ताः हृदयङ्गमानि तदनुरूपाणि चेष्टितानि जगुः॥ १८॥

इत्थं निगूढा आत्मरतिः स्वात्मानुभूति र्येन तथाभूतः स्वसङ्कल्पेन चरितैश्चेष्टितैः गोपात्मजत्वम् अनुकुर्वन् रमया लालितौ पादावेव पल्लवौ यस्य, तथाभूतोऽपि ग्राम्यैः प्राकृतैस्सह तद्वद्रेमे। कथम्भूतः ? मध्ये मध्ये ईश्वरासाधारणानि चेष्टितानि यस्य तथाभूतः॥ १९॥

तदेव दर्शयति - **श्रीदामेत्यादिना।** श्रीदामा सुबलादयश्च इदं वक्ष्यमाणमब्रुवन्॥ २०॥

**विज॰** नियुद्धं बाहुवल्लीग्रहणादिद्वन्द्वयुद्धम्॥ १६,१७॥

महात्मनः कृष्णस्य मनोहराणि स्नेहेन क्लिन्ना आर्द्रा धियो येषां ते तथा॥ १८॥

बाललीलामुपसंहरति - **एवमिति।** स्वमायया स्वेच्छयैव निगूढात्ममतिः प्रच्छन्न स्वरूपानुभवः अन्यापेक्षयेति शेषः। ग्राम्यैः मूर्खजनैः किमर्थमेवं कृतमत्राह - ग्राम्यवदिति धर्म इति शेषः॥ १९॥

यद्देवकार्यार्थमवतीर्णं हरिणा तच्छेषं वक्तुमुपक्रमते - **श्रीदामेति**। सुबलश्च अशोकश्च कृष्णश्चाद्या येषां ते तथा तान्॥ २०॥

**राम! राम! महासत्त्व[1]! कृष्ण! दुष्टनिबर्हण!।**
**इतोऽविदूरे सुमहद्वनं तालालिसङ्कुलम्॥ २१॥**

**फलानि तत्र भूरीणि पतन्ति पतितानि च।**
**सन्ति किं त्ववरुद्धानि धेनुकेन दुरात्मना॥ २२॥**

**सोऽतिवीर्यो[2]ऽसुरो राम! हे कृष्ण! खररूपधृत्[3]।**
**आत्म[4]तुल्यबलैरन्यैर्ज्ञातिभिर्बहुभिर्वृतः[5] ॥ २३॥**

**तस्मात्कृतनराहाराद्भीतैर्नृभि रमित्रहन्!**
★ **न सेव्यन्ते पशुगणैः पक्षिसङ्घै[6]र्विवर्जितम्॥**
**विद्यन्तेऽभुक्तपूर्वाणि फलानि सुरभीणि च॥ २४॥**

**एष वै सुरभिर्गन्धो विषूचीनो[7]ऽनुगृह्यते।**
**प्रयच्छ तानि नः कृष्ण! गन्धलोभितचेतसाम्॥ २५॥**

---

1. A,B,G,J,M बाहो 2. M °तीव्रो 3. A,B,G,J,M °धृक् 4. M °साम्य° 5. W °भिः परिवारितः ★ This half verse is not found in K,V,W. 6. M सङ्घवि° 7. A,B,G,J °नोऽवि° M. °नो वि; V. नोऽद्य

**श्रीध० रामरामेति**। तालालिसङ्कुलं ता[1-]लानाम् अलिभिः प[-1]ङ्क्तिभिर्व्याप्तम्॥ २१ - २४॥

**एष** इति। विषूचीनः सर्वतः प्रसृतः॥ २५॥

---

1- -1. A,B तालानां पङ्क्ति°; B,J ताल पङ्क्ति°

**वीर०** महासत्त्व! महाबलेति रा[1]मस्य विशेषणम्। दुष्टनिबर्हण! दुष्टघ्नेति कृष्णस्य, अविदूरे समीपे तालानां पङ्क्तिभिः व्याप्तं महद्वनमास्ते॥ २१॥

कानिचित्फलानि पतन्ति पतितुमुद्युक्तानि कानिचित्पतितानि च सन्ति, किन्तु तानि दुरात्मना धेनुकासुरेणावरुद्धानि॥ २२॥

स चासुरोऽत्यन्तं वीर्यं यस्य तथाभूतः खररूपं बिभ्राणश्च स्वस[2]मान् रूपैः बहुभिः ज्ञातिभिः परिवृतश्च [3]कृतः॥ २३॥

कृतः नरा एवाऽऽहारो येन, तस्मात् असुराद्भीतैः नृभिः अभुक्तपूर्वाणि कदाऽप्यननुभूतानि सुरभीणि च फलानि सन्ति॥ २४॥

**एषः** अत्रापि सर्वतो व्याप्तः तत्फलसुरभिः गन्धोऽनुगृह्यते अस्माभिः, हे कृष्ण! तत्फलगन्धेन लोभितानि चेतांसि येषां तेषां नोऽस्मभ्यं तानि फलानि प्रयच्छ आदाय देहि॥ २५॥

---

1. A,B रामवि° 2. K,W सरूपैः 3. A,B omit कृतः

**विज०** दुष्टनिबर्हण! दुष्टजनोन्मूलन! अविदूरे निकटे तालानां आल्या पङ्क्त्या सङ्कुलं निबिडम् ॥ २१ ॥

तत्र खरतालवने फलान्यपरिपाकं प्राप्तानीति नेत्याह — पतितानीति। सन्तु तान्यानीय भुज्यन्तामिति तत्राह किन्त्विति ॥ २२ ॥

तीव्रः क्रूरः खररूपं गर्दभदेहं धारयतीति खररूपधृक् असहायश्चेत् निष्कासनीय इति नेत्याह आत्मेति ॥ २३॥

कृतः नराणामाहारो येन स तथा तस्मात्॥ २४॥

नृभिः अभुक्तपूर्वाणि विष्वक् सर्वत्र अञ्चतीति विषूचीनः सर्वत्र व्याप्तिमानित्यर्थः। विशेषेण गृह्यते घ्राणेन्द्रियेणेति शेषः॥ २५॥

**वा[1]ञ्छाऽऽसीन्महती राम! गम्यतां यदि रोचते॥ २६॥**

**एवं सुहृद्वचश्श्रुत्वा सुहृत्प्रियचिकीर्षया।**
**प्रहस्य जग्मतुर्गोपैर्वृतौ तालवनं प्रभू॥ २७॥**

**बलः प्रविश्य बाहुभ्यां तालान् सम्परिकम्पयन्।**
**फलानि पातयामास मतङ्गज इवौजसा॥ २८॥**

**फलानां पततां शब्दं निशम्यासुररासभः।**
**अभ्यधावत्क्षितितलं सनगं परिकम्पयन्॥ २९॥**

**समेत्य तरसा प्र[2]त्यग् द्वाभ्यां पद्भ्यां बलं बली।**
**निहत्योरसि काशब्दं मुञ्चन् पर्य[3]सरत्खरः ॥ ३०॥**

**पुनरासाद्य संरब्ध उपक्रो[5]ष्टा पराक्स्थितः।**
**चरणावपरौ राजन्! बलाय प्राक्षि[6]पद्रुषा॥ ३१॥**

---

1. B,G,J वाञ्छास्ति म°2. M °स वृत्य द्वा° 3. M चरद्बलम्; A,B,G,J °सरत्खलः 4. M °ष्टुं 5. M. °हिणो°

**श्रीध०** फलानामिति। सनगं सवृक्षम्॥ २६ - २९॥

**समेत्येति।** प्रत्यक् पश्चिमाभ्यां, [1-]द्वाभ्यां पद्भ्याम्। प्रत्यक् प्रतिमुखस्सन्निति वा[-1]। काशब्दमिति[2] गर्दभजातिशब्दानुकरणम् पर्यसरत् परितोऽधावदित्यर्थः॥ ३०॥

**पुनरिति।** उपक्रोष्टा गर्दभः। पराक् प्रतिमुखः अपरौ पश्चिमौ बलाय बलं हन्तुम्॥ ३१॥

---

1- -1. A,B,J omit 2. V adds केति

**वीर०** हे राम! महती वाञ्छा तत्फलानुबुभूषा वर्तते, यदि रोचते तर्हि गम्यतां न वयं नियन्तुं प्रभवाम इति भावः॥ २६॥

इत्थं सुहृदां वचः श्रुत्वा तेषां प्रियं कर्तुमिच्छया प्रहस्य गोपैः वृतौ प्रभू रामकेशवौ तालवनं प्रति जग्मतुः॥ २७॥

तत्र बलो रामः प्रविश्य बाहुभ्यां तालान्परितः कम्पयन्। कथम्? मतङ्गज[1] इव ओजसा बलेन फलानि पातयामास॥ २८॥

तदा पततां फलानां शब्दमाकर्ण्य रासभरूपोऽसुरः सवृक्षं क्षितितलं कम्पयन् अभ्यधावत्॥ २९॥

बलं रामं स बली असुरः समेत्य पाश्चात्याभ्यां पादाभ्यां तरसा बलेन उरसि निहत्य काशब्दं गर्दभध्वनिं मुञ्चन् स खरः पर्यसरत् परितश्चचार॥ ३०॥

पुनराशु आसाद्य संरब्धः क्रुद्धः उपक्रोष्टा गर्दभः अनभिमुखं स्थितः हे राजन्! रुषा अपरौ पाश्चात्यौ पादौ रामाय प्राक्षिपत् उद्योजयामास॥ ३१॥

---

1. W मत्तगज

**विज०** लोभ आकाङ्क्षा। 'लुभ गार्ध्ये, गृधु अभिकाङ्क्षया' मिति धातुः। अदनाकाङ्क्षा चेत् कालान्तरे आनेष्यामीति तत्राह वाञ्छेति॥ २६, २७॥

मतङ्गजः वारणः, ओजसा बलेन, अवष्टम्भेन वा। "ओजोऽवष्टम्भबलयोः" इति च॥ २८॥

रासभः गर्दभः, नगैः वृक्षैः, पर्वतैश्च सहितम्॥ २९॥

काशब्दं गर्दभजातिजं कर्णनिष्ठुरशब्दं पर्यचरच्च परितोऽवर्तत॥ ३०॥

उपक्रोष्टुं क्रोशतिरत्र क्षेपार्थः क्षेमुं पराक्स्थितः प्राङ्मुखः॥ ३१॥

स तं गृहीत्वा[1] पदयोर्भ्रामयित्वैकपाणिना।
चिक्षेप तृणराजाग्रे भ्रामणत्यक्त[2]जीवितम्॥ ३२॥

तेनाऽऽहतो म[3]हाताल: प[4]तमानो बृ[5]हच्छिरा:।
पार्श्वस्थं कम्पयन् भग्नस्स चान्यं सोऽपि चापरम्॥ ३३॥

बलस्य लीलयोत्सृष्टखरदेहहताहता:।
तालाश्चकम्पिरे सर्वे महावातेरिता इव॥ ३४॥

नैतच्चित्रं भगवति ह्यनन्ते जगदीश्वरे।
ओ[6]तं प्रोतमिदं यस्मिंस्तन्तुष्वङ्ग यथा पट:॥ ३५॥

---

1. A,B,G,J °त्वा प्रपदो: ; M °त्वाऽथ पदो: 2. V °मे° 3. K,W महांस्ता°4. A,B,G,J वेप° 5. B महाशिरा: 6. A,G,J,M ओतप्रो°

**श्रीध०** स इति। तृणराज: ताल:॥ ३२,३३॥

**बलस्येति**। उत्सृष्टेन खरदेहेन। हतै:[1] आहता: चकम्पिरे अकम्पन्त॥ ३४॥

**नेति**। यस्मिन् इदं विश्वं ओतं ऊर्ध्वतन्तुषु पट इव ग्रथितं, प्रोतं तिर्यसक्तन्तुषु पटवत् एवं सङ्ग्रथितं सर्वतोऽनुस्यूतं वर्तत इत्यर्थ:॥ ३५॥

---

1.A adds तालै:

**वीर०** तदा स राम: तमेकेनैव पाणिना पादयो: गृहीत्वा भ्रामयित्वा च भ्रा[1]मणेनैव त्यक्तं जीवितं येन तं तृणराजाग्रे तालाग्रे चिक्षेप प्राक्षिपत्॥ ३२॥

तेन प्र[2]क्षिप्तेनासुरेण हत: ताडित: महान् ताल: भग्न: पतमानो बृहच्छिरोऽग्रभागो यस्य, अत एव पार्श्वस्थं तालं पातयन् पपातेति शेष:। स च पार्श्वस्थ: पतमान: तथैवान्यं सोऽपि तथैवान्यम्॥ ३३॥

बलस्य रामस्य लीलया उत्सृष्टेन खरदेहेन हता: ये तै: हतास्सर्वे तालाश्चकम्पिरे यथा महावातेनेरिता: कम्पिता: तद्वत्॥ ३४॥

जगदीश्वरे अनन्ते एतन्न चित्रम्। कुतः? अङ्ग! हे राजन्! तन्तुषु पट इव इदं जगत् यच्छिरसि ओतं प्रोतं च॥ ३५॥

---

1. A,B भ्रमणेन 2. A,B परि°

**विज०** पदोः पादयोः भ्रामणेन परिभ्रमणकरणेन॥ ३२॥

तेन खररूपासुरशरीरेण बलेन पार्श्वस्थं तालं कम्पयन् भग्नोऽभूत्। किं च स च पार्श्वस्थः अन्यं तालं सोऽन्योप्यपरं तालमित्येवं परम्परया॥ ३३॥

बलस्य लीलया कर्मणा उत्सृष्टेन उत्क्षिप्तेन खरदेहेन [1]हततालाहताः॥ ३४॥

अन्यस्य चित्रमपि रामस्य एतत्कर्म चित्रं न भवतीति शुकः परीक्षितमाह - **नैतदिति**। हि शब्दो धराऽखिलेयं ननु सर्षपयतीति प्रसिद्धिं द्योतयति॥ ३५॥

---

1. A omits हत

**ततः कृष्णं च रामं च ज्ञातयो धेनुकस्य ये।**
**क्रोष्टारोऽभ्य[1]द्रवन्त्सर्वे संरब्धा। हतबान्धवाः॥ ३६॥**

**तांस्तानापततः कृष्णो रामश्च नृप! लीलया।**
**गृहीतपश्चाच्चरणान् प्राहिणोत्तृणराजसु॥ ३७॥**

**फलप्रकरसङ्की[2]र्णं दैत्यदेहैर्गतासुभिः।**
**रराज [3]खरतालाग्रैर्घनैरिव [4]नभस्स्थलम्॥ ३८॥**

**तयो[5]स्तु सुमहत्कर्म [6]निशाम्य विबुधादयः।**
**मुमुचुः पुष्पवर्षाणि चक्रुर्वाद्यानि तुष्टुवुः॥ ३९॥**

**अथ तालफलान्यादन् मनुष्या गतसाध्वसाः।**
**तृणं च पशवश्चेरुर्हतधेनुककानने॥ ४०॥**

---

1. V पत° 2. M °र्णा° 3. A,B,G,J,M भूः सता° 4. A,B,G,J,M नभस्तलम् 5. A,B,G,J,M °स्तत्सुम° 6. B,J,M निश°

**श्रीध०** **फलेति।** घनैर्नभ इव। भूतलं[1] रराज। तत्र फलप्रकरसङ्कीर्णमिति। **दैत्यदेहैः** खरतालाग्रैश्च[2] सङ्कीर्णमिति[3] अरुणश्वेतनीलघनसादृश्यसम्पादनम्॥ ३६ - ३९॥

**अथेति।** आदन् अभक्षयन्॥ ४०॥

---

1. A,B,J भुवस्तलं 2. A,B,J स्तयता° 3. A मित्यनेन च

**वीर०** ततो धेनुकस्य ये ज्ञातयः क्रोष्टारो गर्दभाः खरशब्दं कुर्वन्तो वा, हतः बान्धवो येषां ते, अत एव संरब्धाः सर्वे अभ्यद्रवन् अभिमुखं जग्मुः॥ ३६॥

हे नृप! गृहीतौ पश्चाच्चरणौ येषां तान् तालेषु प्राहिणोत् प्राक्षिपत्, प्रत्येकाभिप्रायकमेकवचनम्[1]॥ ३७॥

फलसमूहैः सङ्कीर्णा धरा गतप्राणैः दैत्यदेहैः कठिनैः तालाग्रैश्च घनैः नभस्स्थलमिव रराज, खरदेहैः तालाग्रैः इति अरुणश्वेतनीलघनसादृश्यसम्पादनम्॥ ३८॥

निशाम्य दृष्ट्वा विबुधादयः पुष्पवर्षाणि मुमुचुः ववृषुः। वाद्यानि दुन्दुभींश्चक्रुः वादयामासुः, तुष्टुवुः, [2-]विबुधादय इत्यनुवर्तते[-2]॥ ३९॥

अथ ततः गतभयाः मनुष्याः तालफलान्यादन् भक्षितवन्तः हतो धेनुको यस्मिन् तस्मिन् कानने पशवश्च तृणं अचरन्॥ ४०॥

---

1. K,W omit °क° 2- -2. W omits.

**विज०** क्रोष्टारः क्षेमुकामाः ताच्छीलिकः तृन्प्रत्ययः स्वजातिरवं कुर्वाणा[1] वा॥ ३६,३७॥

फलप्रकरसङ्कीर्णा तालफलसमूहेन व्याप्ता॥ ३८॥

तयोः रामकृष्णयोः॥ ३९॥

आदन् भक्षितवन्तः॥ ४०॥

---

1. A omits कुर्वाणा

**कृष्णः कमलपत्राक्षः पुण्यश्रवणकीर्तनः।**
**स्तूयमानोऽनुगैर्गोपैस्साग्रजो व्रजमाविशत्[1]॥ ४१॥**

तं गोरजश्छुरितकुन्तलबद्धबर्ह वन्यप्रसूनरुचिरेक्षणचारुहासम्।
वेणुं क्वणन्तमनुगै[2]रुपगीतकीर्तिं गोप्यो दिदृक्षितदृशो[3]ऽभ्यगमन्त्समेताः ॥४२॥

पीत्वा मुकुन्दमुख सार[4]घमक्षि भृङ्गै स्तापं जहुर्विरहजं व्रजयोषितोऽह्नि।
तत्सत्कृतिं समधिगम्य विवेश गोष्ठं सव्रीडहास[5]वि[6]नयं [7]यदपाङ्गमोक्षम्॥४३॥

[8]तयोर्यशोदारोहिण्यौ पुत्रयोः पुत्रवत्सले।
यथाकालं यथाकामं व्यधत्तां परमाशिषः॥४४॥

[9]विगताध्वश्रमौ तत्र [10-]म र्दनोन्मज्जनादिभि[-10]ः।
[11-]वा सो वसित्वा रुचिरं[-11] दिव्यस्रग्गन्धमण्डितौ॥४५॥

जनन्युपहृतं प्राश्य स्वाद्वन्नमुपलालितौ।
संविश्य [12]व रशय्यायां सुखं सुषुपतुर्व्रजे॥४६॥

एवं स भगवान् कृष्णो बृन्दावनचरः क्वचित्।
ययौ राममृते राजन्कालिन्दीं सखिभिर्वृतः॥४७॥

---

1. A,B,G,J °माव्रजत्; M ° मागमत् 2. A,B,G,J °रनु° 3. M °ऽप्य° 4. K,W °स° 5. M °गमो 6. V °त° 7. M °क्षः 8. M तदा य° 9. A,B,G,J गताध्वान° K,W ततो गत°10. A,B,G,J मज्जनोन्मर्दनादिभिः। 11- -11. A,B,G,J,M नीवीं वसित्वा रुचिरां 12. M मृदु°

**श्रीध० तमिति।** गोरजोभिः छुरितेषु कुन्तलेषु बद्धं बर्हं वन्यानि प्रसूनानि च यस्य, [1-]रुचिरमीक्षणं[-1] चारुहासश्च यस्य तं तं च दिदृक्षितदृशः दिदृक्षिताः दर्शनोत्[2]कण्ठिता दृशो यासां ताः॥४१,४२॥

**पीत्वेति।** मुकुन्दस्य मुखपद्मगतं सारघं मधु, अह्नि यो विरहः तस्माज्जातं तापम्। स च तासां सत्कृतिं पूजां, कां सत्कृतिं! कथं वा कृताम्? तामाह सव्रीडेति। [3]सव्रीडेन सलज्जेन हासेन, विनयो यथा भवति तथा। यदेतत्, किं [4]तत् अपाङ्गमोक्षं कटाक्षदर्शनम्। तथा [5]तासां सत्कृतिं प्राप्येति॥४३ - ४७॥

---

1- -1. A रुचिरे ईक्षणे ° 2. A,B,J त्कण्टायुक्ता 3. V omits सव्रीडेन 4. V omits तत् 5. A,B,J तां

**वीर०** श्रोतॄणां कीर्तयतां च पुण्यावहं यच्छ्रवणं कीर्तनं च तद्यस्य, सः कृष्णः साग्रजो व्रजमाविवेश॥४१॥

तं [1]व्रजमाविशन्तं दिदृक्षिताः दृशो यासां ताः गोप्यः समेतास्समुदिताः अभ्यगमन् अभिमुखमाजग्मुः, कथम्भूतम्? गोरजोभिः व्याप्तेषु कुन्तलेषु बद्धं बर्हं वन्यानि प्रसूनानि च यस्य, रुचिरमीक्षणं चारुः

हासश्च यस्य, अनुगैः उपगीता कीर्तिर्यस्य तम्॥ ४२॥

मुकुन्दस्य मुखसारसं मुखपद्मं पीत्वा तद्गतं मधु पीत्वेत्यर्थः। अह्नि यो विरहः तज्जं तापं जहुः। तासां व्रजयोषितां सत्कृतिं बहुमानं समधिगम्य, सत्कृतिस्वरूपमेवाऽऽह — सलज्जं सहासं सविनयं च यथा तथा अपाङ्गयोः नेत्रान्तयोः मोक्षः प्रसरणं यस्मिन् तत् यत् तद्रूपां तासां सत्कृतिं प्राप्य गोष्ठं विवेश॥ ४३॥

यथाकामम् इच्छानुगुणं कालानुगुणं च यथा तथा परमा आशिषः कामान् व्यधत्तां अकुर्वाताम्॥ ४४॥

तदेव दर्शयन्नाह तत्र गृहे अङ्गमर्दनादिभिः गतः अध्वसम्बन्धी श्रमो ययोस्तौ, रुचिरं नवं वस्त्रं वसित्वा, दिव्याभ्यां स्रगन्धाभ्यामलङ्कृतौ॥ ४५॥

जनन्या उपहृतं पात्रे दत्तं स्वादु मृष्टमन्नं प्राश्य उपलालितौ सुखं यथा तथा सुप्तवन्तौ॥ ४६॥

कदाचिद्रामं विना इतरैस्सखिभिः वृतः हे राजन्! कालिन्दीं यमुनां ययौ॥ ४७॥

---

1. W. omits व्रजम्

**विज०** गोरजसा छु[1-]रितकुन्तलैः[-1] छुरितकेशपाशैः बद्धानि बर्हवन्यप्रसूनानि पिच्छवनभवपुष्पाणि यस्स स तथा गोरजश्छुरितकुन्तलबद्धबर्हवन्यप्रसूनश्च, रुचिरे ईक्षणे चारुहासश्च यस्य स तथा तम्॥ ४१,४२॥

मुकुन्दस्य मुखमेव सारघं मधु सरघायोग्यं सारघम्। "सरघामधुमक्षिकाप्रोक्ता" (हला.को. 2-101) इति हलायुधः। अह्नि विरहजं तापं यासाम् अपाङ्गमोक्षः कटाक्षनिरीक्षणं व्रीडया सहितः सव्रीडश्चासौ हासश्च सव्रीडहासः तस्य विगमो राहित्यं विशेषेण प्राप्तिः वा यस्य स तथा तासां सत्कृतिं सत्कारं समधिगम्य प्राप्य॥ ४३,४४॥

मज्जनं स्नानं उन्मर्दनं शरीर मलोद्वर्तनं नीवीं वस्त्रं वसित्वा आच्छाद्य॥ ४५॥

प्राश्य पीत्वा, संविश्य शयित्वा॥ ४६॥

इदानीं कथान्तरं वक्तुं उपक्रमते **एवमिति** ॥ ४७॥

---

1- -1. A,B omit.

—: कालियमर्दनघट्टः :—

अथ गावश्च गोपाश्च निदाघातपपीडिताः।
दुष्टं जलं पपुस्तस्यास्तृषार्ता विषदूषितम्॥४८॥

विषाम्भस्तदुपस्पृश्य [1]दैवोपहतचेतसः।
निपेतुर्व्यसवस्सर्वे [2-]मूर्च्छिता वै[-2] कुरूद्वह॥४९॥

वीक्ष्य तान्वै तथाभूतान् कृष्णो यो[3]गेश्वरेश्वरः।
ईक्षयाऽमृतवर्षिण्या स्वनाथान्समजीवयत्॥५०॥

ते सम्प्रतीतस्मृतय [4-]उत्थाय च[-4] जलान्तिकात्।
आसन् सुविस्मितास्सर्वे वीक्षमाणाः परस्परम्॥५१॥

अन्वमंसत तद्राजन्! गोविन्दानुग्रहेक्षितम्।
पीत्वा विषं परेतस्य पुनरुत्थानमात्मनः॥५२॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे पूर्वार्धे धेनुकासुरवधो नाम पञ्चदशोऽध्यायः॥१५॥

---

1. K.W तदै° 2- -2. A,B,G,J सलिलान्ते 3. V °गी° 4- -4. A,B,G,J समुद्धाय

**श्रीध०** त इति। सम्प्रति सद्य एव इता प्राप्ता स्मृतिर्यैस्ते सम्प्रतीतस्मृतयः। यद्वा, सम्यक् [1]प्रतीता प्रति प्राप्ता स्मृतिर्यैस्ते तथेति॥४८ - ५२॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां पञ्चदशोऽध्यायः॥१५॥

---

1. V. omits प्रतीता

**वीर०** निदाघे ग्रीष्मर्तौ य आतपः तेन पीडिताः, अत एव तृषार्ताः तस्याः कालिन्द्याः कालियविषेण दूषितम्, अत एव दुष्टं जलं पपुः पीतवन्तः॥४८॥

तद्विषोदकमुपस्पृश्य, त[1-]दैवोपहतचेतसो मूर्च्छिताः व्यसवः प्राणव्यापाररहिताः हे कुरूद्वह! निपेतुः ॥ ४९॥

तथाभूतान् मूर्च्छितान् पतितांश्च तान् दृष्ट्वा मृतसञ्जीवनादियोगनिर्वाहकः कृष्णः, स्वः आत्मैव, नाथो रक्षको येषां तान् अमृतवर्षिण्या ईक्षया दृष्ट्या [2-]सम्यगजीवयत्[-2] ॥ ५०॥

ताश्च ते च ते "पुमान् स्त्रिया" (अष्टा. 1-2-69) इत्येकशेषः। गावो गोपाश्च सम्प्रतीताः सम्यक्प्राप्ताः स्मृतयः यैस्तथाभूताः जलान्तिकादुत्थाय परस्परं वीक्षमाणाः सुविस्मिताश्चाऽऽसन्॥ ५१॥

विषं पीत्वा [3]सम्परेतस्य मृतस्य आत्मनो यत्पुनरुत्थानं तद्गोविन्दस्यानुग्रहेक्षण कृतममन्यत॥ ५२॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां पञ्चदशोऽध्यायः॥ १५॥

---

1. A,B दैवोप°2- -2. A,B समजीवयत् सचेतनां करोति स्म॥ ५०॥ 3. K परे°

**विज०** निदाघातपः ग्रीष्मर्तुभवरविकिरण भवउष्णविशेषः तेन पीडिताः॥ ४८॥

उपस्पृश्य आचम्य पीत्वा च॥ ४९,५०॥

तथाभूतान् मृतप्रायान् ईक्षया दृष्ट्या सम्प्रतीतस्मृतयः सम्यक्प्राप्तप्रत्यभिज्ञानाः॥ ५१॥

विषं विषमिश्रजलं पीत्वा परेतस्य मृतस्याऽऽत्मनः पुनरुत्थानं गोविन्दस्य अनुग्रहयुक्तनिरीक्षणकृतम् अन्वमंसत न्यरूपयन्॥ ५२॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां
टीकायां दशमस्कन्धे पूर्वार्धे पञ्चदशोऽध्यायः॥ १५॥

(विजयध्वजरीत्या त्रयोदशोऽध्यायः)

# षोडशोऽध्यायः

## (विजयध्वजरीत्या चतुर्दशोऽध्यायः)

### कालियमर्दनम्

[1-]श्रीबादरायणिरुवाच[-1]

विलोक्य दूषितां कृष्णां कृष्णः कृष्णाहिना विभुः ।
तस्या विशुद्धिमन्विच्छन् सर्पं तमुदवासयत् ॥ १ ॥

राजोवाच

कथमन्तर्जलेऽगाधे न्यगृह्णाद्भगवानहिम् ।
स वै बहुयुगावासी[2] यथाऽऽसीद्विप्र[3]! कथ्यताम् ॥ २ ॥

ब्रह्मन्! भगवतस्तस्य भूम्नस्स्वच्छन्दवर्तिनः ।
गोपालो[4]दारचरितं कस्तृप्येतामृतं जुषन् ॥ ३ ॥

श्रीशुक उवाच

कालिन्द्यां कालियस्याऽऽसीत् ह्रदः कश्चिद्विषाग्निना ।
श्रप्यमाणपया यस्मिन्पतन्त्युपरिगाः खगाः ॥ ४ ॥

वि[5]प्रुष्मता विषोदोर्मिमारुतेनाभिमर्शिताः ।
म्रियन्ते तीरगा यस्य प्राणिनः स्थिरजङ्गमाः ॥ ५ ॥

तं चण्डवेग विषवीर्य मवेक्ष्य तेन दुष्टां नदीं च खलसंयमनावतारः ।
कृष्णः कदम्बमधिरुह्य ततोऽतितु[6]ङ्गात् आस्फोट्य गाढरशनो[7] न्यपतद्विषोदे ॥ ६ ॥

---

1- -1. A,B,G,J,M श्रीशुक उवाच 2. A,B,G,J,V °सं; K,W °सो 3. K,V,W °तत्र 4. W °पस्यो° 5. A,M °प्लु° 6. A,B G,J,V तुङ्गं
7. V,W °नोऽभ्य°

## श्रीधरस्वामिविरचिता भावार्थदीपिका

षोडशे कालियस्योक्तो निग्रहो यमुनाह्रदे।
तत्पत्नीभिः स्तुतेनाथ कृष्णेनानुग्रहः कृतः[1] ॥
हत्वा रासभदैतेयान् जग्ध्वा तालफलान्यलम्।
प्रीतोऽनृत्यत्फणारङ्गे कालियस्य कलानिधिः ॥

**विलोक्येति।** उदवासयत् निस्सारितवान् ॥ १ ॥

**कथमिति।** बहूनि युगान्यावासो यस्य तमहिम्। स वै अहिः अजलचरोऽपि तस्मिन्नन्तर्जले, यथा येन प्रकारेणासीत्। अथवा बहूनि युगानि आवासो यथा भवति तथा येन[2] प्रकारेण स वै तत्रासीदिति[3] कथ्यतामिति ॥ २ ॥

**ब्रह्मन्निति।** गोपालेन यदुदारं चरितम[4]माचरितं तदेवामृतम्। अतः कथ्यतामिति ॥ ३ ॥

**कालिन्द्यामिति।** श्रप्यमाणं पच्यमानं पयो यस्य सः। अत[5] उपरि गच्छन्तः खगा यस्मिन् पतन्ति ॥ ४॥

**विप्रुष्मतेति।** किञ्च विप्रुष्मता अम्बुकणयुक्तेन विषोदतरङ्गस्पर्शिमारुतेन स्पृष्टा यस्य तीरगा म्रियन्ते स ह्रद आसीदिति ॥ ५ ॥

**तमिति।** तं कालियम्। चण्डो वेगो यस्य, तद्विषमेव वीर्यं यस्य तम्। कदम्बमिति। भाविना श्रीकृष्णचरणस्पर्शभाग्येन स एकः तत्[6]तीरे न शुष्कः। अमृतमाहरता गरुत्मताक्रान्तत्वादिति च पुराणान्तरम्। आस्फोट्य बाहुं करतलेनाहत्य। गाढा दृढं बद्धा रशना [7-]कटिबन्धनवस्त्रं[-7] येन सः[8] ॥ ६ ॥

---

1. V पुनः 2. V केन 3. V adds यत्तत् 4. V omits चरितम् 5. A omits अतः 6. V omits तत् 7- -7. V काञ्ची 8. V adds तथा

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ कालियदमनात्मकं कर्मानुवर्णयितुकामस्तावत् राज्ञः प्रश्नावसरप्रदानाय तत्सङ्क्षिप्य दर्शयति **विलोक्येति।** कृष्णाहिना कालियेन दूषितां कृष्णां यमुनां विलोक्याऽऽलोच्य तस्याः कृष्णायाः विशुद्धिमन्विच्छुः तं सर्पमुदवासयत् ततो निष्कासितवान् ॥ १ ॥

तत्र विस्मितः पृच्छति राजा **कथमिति** [1-]द्वाभ्याम्[-1]। अन्तर्जले तत्राप्यगाधे तत्राप्यहिं सर्पं कथं निगृहीतवान्? स वै अहिः बहूनि युगान्यावसतीति तथाभूतो यथा येन प्रकारेणाऽऽसीत् तदपि हे विप्र! कथ्यताम् ॥ २ ॥

आत्मनः शुश्रूषाधिक्यं व्यनक्ति - **ब्रह्मन्निति।** भूम्नः विपुलमाहात्म्यस्य स्वतन्त्रस्यापि लीलया गोपालस्य सतः यदुदारं चरितं तदेवामृतं जुषन् कः पुमान् तृप्येत न कोऽपि॥ ३॥

विषाग्निना पच्यमानं पयो यस्मिन् तस्य ह्रदस्योपरिगाः उपरि चरन्तः खगाः पक्षिणः पतन्ति [2]पेतुः विषजलवायुप्रसारमात्रेऽपि मूर्च्छिताः पतन्तीत्यर्थः ॥ ४॥

यस्य ह्रदस्य तीरगाः स्थिरजङ्गमाः वृक्षादिरूपा मृगादिरूपाश्च प्राणिनः विप्रुष्मता शीकरयुक्तेन विषजलतरङ्गाणां मारुतेनाभिमर्शिताः संस्पृष्टाः म्रियन्ते। तथाविधः कश्चिद्ध्रदः कालियस्याऽऽवासभूतः कालिन्द्यामासीदित्यन्वयः ॥ ५॥

स्पर्शमात्रेणैव व्यापनशीलं विषमेव वीर्यं बलं यस्य तं कालियं ह्रदं वा तेन दुष्टां नदीं यमुनां चाऽऽलोक्य खलानां संयमनाय दमनाय अवतारो यस्य सः। हेतुगर्भमिदम्। तत्त्वात् कदम्बं वृक्षमधिरुह्य गाढा दृढीकृता रशना काञ्ची यस्यः सः, आस्फोट्य करतलेन भुजमुत्सङ्गं वा आहत्य अत्युन्नतात् ततः कदम्बात् [3] विषोदे न्यपतत्। अमृतमाहरता गरुत्मताऽऽक्रान्तत्वात् स कदम्बो विषजलेनापि न शुष्क इत्याहुः॥ ६॥

---

1- -1. K,W omit 2. K omits पेतुः 3. A,B add कथञ्चित्

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

हरौ भक्तिमतां संसारविषं निर्वीर्यं भवतीति निदर्शयितुम् अनन्तरातीताध्याये संक्षिप्योक्तं कालियनागमर्दनमहिमानं प्रपञ्चयति अस्मिन्नध्याये। तत्र राज्ञः प्रश्नमुत्थापयितुमाह **विलोक्येति।** कृष्णां यमुनां कृष्णाहिना कृष्णसर्पेण उदवासयत् ततोऽन्यत्राऽऽवासमकारयत्॥ १॥

अगाधे अतलस्पर्शे न्यगृह्णात् निगृहीतवान्। प्रसह्य गृहीतवानित्यर्थः। यथा येन प्रकारेण आसीत् स प्रकारः॥ २, ३॥

श्रप्यमाणं क्वाथ्यमानं पयो जलं यस्मिन् ह्रदे स तथा यस्मिन् ह्रदे॥ ४॥

विप्रुष्मता विशेषेण दहता "प्रुषप्लुषदाहे" इति धातुः। विषेण विशिष्टमुदं विषोदं तेन युक्ता ऊर्मयः विषोदोर्मयः यस्य स तथा स चासौ मारुतः विषोदोर्मिमारुतः तेनाभिमर्शिता आवृत्य गृहीताः यस्य ह्रदस्य॥ ५॥

तेन कालियेन खलानां संयमनार्थं निग्रहार्थं अवतारो यस्य स तथा। आस्फोट्य द्विगुणीकृतहस्तप्रहारं कृत्वा गाढरशनः दृढबद्धकक्षप्रदेशः विषोदे विषमिश्रितजले ह्रदे इति शेषः ॥ ६॥

**[1]सर्पह्रदः [2]पुरुषसार निपातवेग सङ्क्षोभितोरगविषो[3]च्छ्वसिताम्बुराशिः।**
**पर्यक् प्लुतो विष[4]कषायितभीषणोर्मिः [5]रश्चन्धनु[-5]ः शतमनन्तबलस्य किं तत्?॥ ७॥**

[6]तस्मिन् ह्रदे विहरतो भुजदण्डघूर्ण वार्घोषमङ्ग वरवारणविक्रमस्य।
आश्रुत्य [7]तत्स्वसदनाभिभवं [8]ससैन्यः चक्षुश्श्रवास्समसरत्त[9]दमृष्यमाणः ॥८॥

तं प्रेक्षणीयसुकुमारघनावदातं श्रीवत्सपीतवसनं स्मितसुन्दरास्यम्।
क्रीडन्तमप्रतिभ[10]यं कमलोदराङ्घ्रिं सन्दश्य मर्मसु रुषा भुज[11]गश्चछाद॥९॥

तं नागभोग परिवीतमदृष्टचेष्ट मालोक्य तत्प्रियसखाः पशुपा भृ[12]शार्ताः।
[13]कृष्णेऽर्पितात्मसुहृदर्थकलत्रकामा दुःखानु[14]शोक भयमूढधियो निपेतुः ॥१०॥

---

1. M सा° 2. K,W वर्य 3. V °न्नमि° 4. A,B,G,J,M °षायविभी° 5- -5. A,B,G,J °र्मिधावन् धनुः M °र्मिभीमोधनु° 6. A,B,G,J तस्य 7. K,W तं स्व° 8. A,B,G,J,V निरीक्ष्य 9. M °त्तम° 10. V बलं 11. A,B,G,J,V °या च ° 12. K,W भया° 13. K कृष्णा° 14. V °र्ति

**श्रीध० सर्पेति।**[1] सर्पस्य ह्रदः पुरुषश्रेष्ठस्य पतनभ[2]रेण, सङ्क्षोभितानाम् उरगाणां विषैरुन्नमितोऽम्बुराशिः यस्य सः। विषेण कषायीकृता भयङ्करा ऊर्मयो यस्य सः, पर्यक् परितः। धा[3]वन् धनुश्शतं प्लुतः प्रसृतः। नैतच्चित्रमित्याह अनन्तबलस्येति॥७॥

**तस्मिन्निति।** [4-]ह्रदे विहर[-4]तः भुजदण्डाहतोदकघोषं श्रुत्वा तत् ततः स्वसदनाभिभवं च निरीक्ष्य, तदसहमानः सर्पः समसरत् समाजगाम॥८॥

**तमिति।** प्रेक्षणीयश्च सुकुमारश्च घनवदुज्ज्वलश्च तम्। श्रीवत्सपीतवसनं श्रीवत्सेन संयुक्तमुज्ज्व[5]लत्पीतं वस्त्रं यस्य तम्। भुजया भोगेन चछाद अवेष्टयत्॥९॥

**तमिति।** सः प्रियो येषां ते तत्प्रियाः। ते च ते सखायश्चेति तथा॥१०॥

---

1. B,J add तदा 2. V भरेण 3. V अभ्रत् 4- -4. V omits 5. A,B,J °च्च°

**वीर०** सर्पस्य ह्रदः पुरुषवर्यस्य पुरुषोत्तमस्य निपातवेगेन सङ्क्षोभितानामुरगाणां विषैरुच्छ्वसितः प्रवृद्धोऽम्बुराशिः वारिपूरो यस्य, विषैः कषायिताः कषायीकृताः [1]क्वथिताः भीषणा ऊर्मयो यस्मिन्, तथाभूतः पर्यक् परितोऽभ्रद्धनुश्शतं तत्परिमाणस्थलं प्लुत आवृतः, नैतच्चित्रमित्याह अनन्तबलस्य तत्किं कियत्॥७॥

[2]तस्मिन् ह्रदे विहरतः गजश्रेष्ठस्येव विक्रमो यस्य तस्य भगवतः भुजदण्डाहतोदकघोषमाकर्ण्य अङ्ग! हे राजन्! स्वनिलयतिरस्कारमसहमानः चक्षुश्श्रवाः सर्पः स्वसैन्यसहितः समसरत् आजगाम ॥८॥

भुजगः कालियः तं कृष्णं मर्मसु सन्दश्य चच्छाद वेष्टितवान्। कथम्भूतम्? प्रेक्षणीयश्च सुकुमारश्च घनवन्निर्मलश्च तं, श्रीवत्सशब्दोऽत्रार्श आद्यजन्तः, श्रीवत्सयुक्तं पीतं वस्त्रं यस्य तं च, स्मितेन सुन्दरमाननं यस्य, प्रतिपक्षाद्भयरहितं कमलवदुदरमङ्घ्री च यस्य तम्॥९॥

नागस्य भोगेन देहेन विष्टितम् अत एव अदृष्टा इतरैरलक्षिता चेष्टा यस्य तं कृष्णमालोक्य तस्य कृष्णस्य प्रियाः सखायः गोपाः भयेनाऽऽर्ताः कृष्ण एव अर्पिता आत्मानो मनांसि शरीराणि वा सुहृदादयश्च यैः तथाभूताः अर्थो वित्तं कामाः इष्टार्थाः दुःखादिभिर्मूढाः धियो येषां ते निपेतुः। दुःखं मानसिकं, शोको रोदनम्॥१०॥

---

1. K क° 2. W ततः

**विज०** सर्पस्य निवासभूतह्रदः सार्पह्रदः पुरुषसारस्य पुरुषवरस्य पुरुषश्रेष्ठस्य पुरुषोत्तमस्येत्यर्थः। निपातवेगेन सङ्क्षोभितस्य सञ्चालितस्य स्वस्थानस्थितिक्लिष्टस्य उरगस्य विषेण सह उच्छ्वसितः उद्रेचितः अम्बुराशिः यस्य ह्रदस्य स तथा। विषकषायेण विषक्वाथेन विषरागेण वा विभीषणोर्मिभिः भयङ्करतरङ्गैः भीमः भयजनकः "रागे क्वाथे कषायोऽस्त्री निर्यासे सौरभे रसे" (वैज.को. 7-5-22) इति यादवः । एवंविधो ह्रदो धनुश्शतं तीरस्थानमुल्लङ्घ्य पर्यक् प्लुतः परितः उद्रिच्य गतः हरेः एतत् न चित्रमित्याह अनन्तबलस्येति। लक्षयोजनविस्तारायामपरिमितभूप्लावनेऽपि न चोद्यं किमुत धनुश्शतमित्यर्थः ॥७॥

अङ्ग! नृप! शृणु! वरवारणविक्रमस्य गजेन्द्रविक्रमस्य यद्वा अङ्गैरवयवैः वरणीयस्य वारणस्य विक्रम इव विक्रमो यस्य स तथा। तस्य हरेः भुजदण्डाभ्यां घूर्णस्य मन्द्रध्वनितया क्षुब्धस्य वारः जलस्य घोषमाश्रुत्य तस्मात् स्वसदनाभिभवो यः तम्, अमृष्यमाणः [1-] असहमानः [-1] चक्षुश्श्रवाः सर्पः तं कृष्णं समसरत् संसृतवान् बाधितुमागतवानित्यर्थः। "वरो ना रूप जामात्रोर्देवादेरीप्सिते वृतौ" (वैज.को. 6-5-72) इति॥८॥

अवदातः श्यामलः। "अवदातोऽरुणे पीते श्वेते श्यामे निरामये" इति च। चच्छाद आच्छादितवान् आवृतवानित्यर्थः ॥९॥

परिवीतं परिवेष्टितं अदृष्टचेष्टं निश्चेष्टम्॥१०॥

---

1- -1. A,B omit

**गावो वृषा वत्सतर्यः क्रन्दमानास्सुदुःखिताः।**
**[1] कृष्ण[2-]न्यस्तेक्षणा[-2] भीता [3] रुदन्त्य इव तस्थिरे॥११॥**

**अथ व्रजे महोत्पातास्त्रिविधा [4]अतिदारुणाः।**
**उत्पेतु[5]र्भुवि दिव्यात्म[5]न्यासन्न भयशंसिनः॥१२॥**

**तानालक्ष्य भयोद्विग्ना गोपा नन्दपुरोगमाः।**
**विना रामेण गाः कृष्णं ज्ञात्वा चारयितुं गतम्॥१३॥**

**तैर्दुर्निमित्तैर्निधनं मत्वा प्राप्तमतद्विदः।**
**तत्प्राणास्तन्मनस्कास्ते[6] दुःखशोकभयातुराः॥१४॥**

**आबालवृद्धवनितास्सर्वेऽङ्ग पशु[7]वृत्तयः।**
**निर्जग्मुर्गोकुलाद्दीनाः कृष्णदर्शनलालसाः॥१५॥**

---

1. A,B,G,J कृष्णे 2- -2. A °णप्राणाः 3. A क्रन्दन्त्य; G,J रुदत्य 4. A,B,G,J ह्यति 5- -5. M °र्दिवि भूम्यात्म° 6. M °श्च 7 K,W वत्सलाः

**श्रीध०** **अथेति।** भुवि भूकम्पादयः दिवि उल्कापातादयः, आत्मनि वामनेत्रस्फुरणादयः आसन्नं भयं शंसितुं शीलं येषां ते॥११, १२॥

**तानिति।** तानालक्ष्य गोकुलान्निर्जग्मुरिति तृतीयेनान्वयः। भयोद्विग्नाः भयहेतुभ्यो भीताः भयेन कम्पमाना इति वा॥१३॥

**तैरिति।** न तं [1]हरिं विदन्तीति अतद्विदः॥१४॥

**आबालेति।** पशुवृत्तय अतिवत्सलाः॥१५॥

---

1. B,J,V omit हरिं

**वीर०** वत्सतर्यो दम्याः सुतरां दुःखिताः क्रन्दमाना आह्वयन्त्यः कृष्ण एव न्यस्तानि ईक्षणानि याभिः ताः रुदन्त्य इव तस्थुः॥११॥

दिवि भुवि आत्मनीत्येवं त्रिविधा आसन्नभयसूचकाः उत्पाताः बभूवुः, तत्र भुव्युत्पाता भूकम्पादयः, दिव्युल्कापातादयः, आत्मनि वामनेत्रस्फुरणादयः॥१२॥

तानुत्पातानालक्ष्य भयेन उद्विग्नाः कम्पितगात्राः नन्दप्रभृतयो गोपाः रामेण विना गाश्चारयितुं गतं कृष्णं ज्ञात्वा॥१३॥

तन्माहात्म्यानभिज्ञाः तैर्दुर्निमित्तैः निधनं [1]तद्विपत्तिं प्राप्तमिव ज्ञात्वा यतः तस्मिन्नेव प्राणाः तस्मिन्नेव मनांसि च येषाम्, अतः शोकभयाभ्यामातुराः॥ १४॥

सर्वे अङ्ग! हे राजन्। पशुवत्सलाः धेनुवद्वात्सल्ययुक्ताः कृष्णस्य दर्शने निमित्ते लालसाः निर्जग्मुः ॥ १५॥

---

1. A,B तस्य वि°

**विज०** वत्सतर्यः गर्भाधानयोग्यवयसः ॥ ११॥

त्रिविधा इत्युक्तं विव्रीयते - दिवीत्यादिना। दिवि उत्पाताः आदित्यमण्डले कबन्धादिदर्शनं निर्घातादिभिः भुवि कम्पादिकं आत्मनि देहे वामनेत्रस्फुरणादि, आसन्नभयशंसिनः समीपभयसूचकाः॥ १२ - १४॥

पशुवत् वृत्तिर्येषां ते तथा दृष्टमात्रव्यवहारिणः॥ १५॥

**तांस्तथा कातरान् वीक्ष्य भगवान् [1-]माधवो बलः[-1]।**
**प्रहस्य किञ्चिन्नोवाच प्रभावज्ञोऽनुजस्य सः॥ १६॥**

**तेऽन्वेषमाणा दयितं कृष्णं सूचितया पदैः।**
**भगवल्लक्षणैर्जग्मुः पदव्या यमुनातटम्॥ १७॥**

**ते तत्र तत्राब्जयवाङ्कुशाशनि ध्वजोपपन्नानि पदानि विश्पतेः।**
**[2]मार्गे गवामन्यपदान्तरान्तरे निरीक्षमाणा ययुरङ्ग सत्वराः॥ १८॥**

**अन्त[3]र्जले भुजगभोगपरीतमारात्कृष्णं निरीहमुप[4]लभ्य जलाशयान्ते।**
**गोपांश्च मूढधिषणान्परितः पशूंश्च सङ्क्रन्दतः परम[5]कश्मलमापुरार्ताः॥ १९॥**

**गोप्योऽनुरक्तमनसो भगवत्यनन्ते तत्सौहृदस्मितविलोकगिरस्स्मरन्त्यः।**
**ग्रस्तेऽहिना प्रियतमे भृशदुःखतप्ताः [6-]शून्यं प्रियव्यतिहृतं ददृशुस्त्रिलोकम्[-6]॥ २०॥**

---

1- -1. V रोहिणी सुतः 2. M मार्गं 3. A,B,G,J,M °ह्रदे 4. M लक्ष्य 5. V कल्मषमा° 6- -6 K शून्यां प्रियेण रहितां ददृशुस्त्रिलोकीम्। W शून्यां प्रियव्यतिहृतां ददृशुस्त्रिलोकीम्।

**श्रीध० तामिति।** कातरान् भीतान्॥ १६॥

**त** इति। भगवन्तं लक्षयन्ति यानि पदानि, तैः पदैः सूचितया पदव्या मार्गेण॥ १७॥

[1]पदैर्मार्गज्ञान प्रकारमाह - **त** इति। विश्पतेः श्रीकृष्णस्यान्येषां पदानामन्तरान्तरे मध्ये मध्ये तत्तदपोह्ये[2]। गवां श्रुतीनां मार्गे सत्वरा अप्रमत्ता योगिनः तत्तदुपाध्यपवादेन यथा परं तत्त्वं मृगयन्ते तद्वदिति भावः ॥ १८॥

**अन्तरिति।** ततश्च सर्पश[3]रीरवेष्टितं कृष्णं दूरान्निरीक्ष्य गोपांश्च पशूंश्च तथा [4]तथा निरीक्ष्य, आर्ताः [5-]परमकश्मल[-5] परं मोहं प्रापुः ॥ १९॥

**गोप्य** इति। प्रियेण श्रीकृष्णेन [6]व्यतिहृतं विरहितं त्रैलोक्यं शून्यं ददृशुः ॥ २०॥

---

1. V omits पदैः 2. V °हनेन 3. V परिवे° 4. B,J omit तथा 5- -5. V omits 6. V omits व्यतिहृतं

**वीर०** तदा तान्निर्गच्छतः कातरांश्चावलोक्य माधवो बलो रामः मधुवंशप्रभवत्वात् माधवः अनुजस्य प्रभावाभिज्ञोऽत एव [1]प्रहस्य किञ्चिदपि नोवाच॥ १६॥

ते नन्दादयः कृष्णं मृगयन्तः भगवन्तं लक्षयन्तीति तथा तैः ध्वजवज्रा[2-]दि चिह्नितै[-2]रिति भावः, पदैस्सूचितया पदव्या मार्गेण यमुनायास्तटं जग्मुः॥ १७॥

तदेव प्रपञ्चयति - **त** इत्यनेन। विश्पतेः विश्वस्य पत्युः कृष्णस्य तत्र तत्र ध्वजादिरेखाभिरुपपन्नानि युक्तानि पदानि तत्राशनिः वज्रः गवां मार्गे अन्येषां पदानामन्तरान्तरे मध्ये मध्ये निरीक्षमाणाः अङ्ग! हे राजन्! त्वरायुक्ताः ययुः ॥ १८॥

जलमध्ये भुजग[3]देहेन परिवेष्टितम् अदृष्टचेष्टितं कृष्णं ह्रदस्य तीरे मूर्छितान् गोपांश्च सङ्क्रन्दतः पशूंश्च आरादेवोपलभ्य ज्ञात्वा आर्तास्सन्तो महत्कश्मलं मोहं प्रापुः ॥ १९॥

तस्य कृष्णस्य सौहृदेन सौहार्देन यत्स्मितं ये च विलोकाः कटाक्षाः तान् गिरश्च समरन्त्यः निरतिशयप्रीतिविषये तस्मिन् सर्पेण ग्रस्ते सति नितरां दुःखेन तप्ताः प्रियेण रहिताः त्रिलोकीं शून्यां ददृशुः ॥ २०॥

---

1. A,B omit प्रहस्य 2- -2. A,B °दिभिश्चिह्नै° 3. W भोगेन

**विज०** माधवो मधुकुलोद्भवः ॥ १६॥

भगवल्लक्षणैर्हरेः पद्मध्वजादिलक्षणोपेतैः पदैः चरणन्यासैः सूचितया सूचयन्त्या पदव्या मार्गेण॥ १७॥

वैशद्याय पुनरुक्तं विवृणोति **त** इति। यवो व्रीहिविशेषः अशनिः वज्रम्। "दम्भोलिदशनिर्द्वयोः" (अम.को. 1-47) इत्यमरः। विश्पतेः प्रजापतेः कृष्णस्य गवां मार्गे कृष्णपादेनान्यस्य गोपस्य अन्यासां गवां पादेनान्तरान्तरे मध्ये मध्ये मिश्रित इति शेषः। गवां पादेन अन्यपदेन वज्रादिलक्षणेन पदेन इतरलक्षणेन पदेन अन्तरान्तरे मध्याविनाभूते वा॥ १८॥

जलाशयान्ते ह्रदसमीपे परितः स्थितान् गोपादीनुपलक्ष्य परमं कश्मलं मोहम्॥ १९॥

तस्य कृष्णस्य सौहृदं च स्मितं च विलोकश्च गिरश्च तत्सौहृदस्मितविलोकगिरः ताः स्मरन्त्यः प्रियव्यतिहृतं विरहितम्॥ २०॥

ताः कृष्णमातरमपत्यमनु[1]प्रतमां तुल्यव्यथास्सम[2]नुगृह्य शुचस्स्रवन्त्यः।
[3]स्ताः [4]प्रियव्रजकथाः कथयन्त्य आसन् कृष्णाननेऽर्पितदृशो मृतकप्रतीकाः॥ २१॥

कृष्णप्राणान्नि[5]विशतो नन्दादीन् वीक्ष्य [6]तं ह्रदम्।
प्रत्यषेधत्स भगवान्रामः कृष्णानुभाववित्॥ २२॥

इत्थं [7]स्वगोकुलमनन्यगतिं निरीक्ष्य सस्त्रीकुमार मति दुःखित मात्महेतोः।
आज्ञाय मर्त्यपदवीमनुवर्तमानः स्थित्वा मुहूर्तमुदतिष्ठदुरङ्गबन्धात्॥ २३॥

तत्प्रथ्यमानवपुषा व्यथितात्मभोग स्त्यक्त्वोन्नमय्य कुपितः स्वफणां भुजङ्गः।
तस्थौ श्वसञ्छ्वसनरन्ध्र[8]विषोऽम्बरीष स्तब्धेक्षणोल्मुकमुखो हरिमीक्षमाणः॥ २४॥

तं जिह्वया द्विशिखया परिलेलिहानं द्वे [9]सृक्किणी [10]अतिकरालविषाग्निदृष्टिम्।
क्रीडन्नमुं परिससार यथा खगेन्द्रो बभ्राम [11]सोऽप्यवसरं प्रसमी[12]क्षमाणः॥ २५॥

---

1. A,B,G,J,M प्रविष्टां 2. V. मधिगम्य 3. A,B,G,J,K तास्ताः 4. A,G,J,M,V व्रजप्रिय 5. A,B,G,J,M °र्विं° 6. V,W तद्ध्रदम् 7. A,B,G,J,M,V स्व° 8. A,B,G,J, विषाऽ° 9. A,G,J,M सृक्कि° ; W सृक्व 10. A,B,G,J,V ह्यति° 11. M °ऽप्यपसरन् 12. M °क्ष्य°

**श्रीध० इत्थमिति** । अनन्यगतिम् आत्मानम् इत्थं निरीक्ष्य, अत एव आत्महेतोः स्वगोकुलमति दुःखितमाज्ञाय उरगबन्धात् उदतिष्ठत् इत्यन्वयः ॥२१ - २३॥

**तदिति**। तस्य प्रथ्यमानेन [1-]प्रवर्धमानेन[-1] वपुषा व्यथितात्म[2]शरीरः भुजङ्गः [3-]कुण्डली श्रीकृष्णं[-3] त्यक्त्वा, कुपितः स्वफणानुन्नमय्य श्वसन् केवल[4]मीक्षमाणः तस्थौ। कथम्भूतः ? श्वसनरन्ध्रेषु नासाविवरेषु विषं यस्य स तथा। अम्बरीषं [5]भ्राष्ट्रः [6]मण्डपाकभाजनमि[7]त्यर्थः। तद्वत् सन्तप्तानि स्तब्धानि ईक्षणानि यस्य स तथा। उल्मुकानि मुखेषु यस्य। स च [8]स च ॥२४॥

**तमिति**। हरिश्च क्रीडन् तममुं सर्पं परिससार परितो बभ्राम। अतिकराला विषाग्नियुक्ता दृष्टिर्यस्य तम्। जिह्वया द्विशिखयेति प्रतिमुखम्॥ २५॥

---

1- -1. A,B,J omit 2. V °तात्मा पीडितश° (व्यथितात्म भोगः पीडितनिज शरीरः।) 3- -3 A,B,J °लीं उन्मुच्य तं 4. V °लसमी° 5. A,B,J omit भ्राष्ट्रः 6. V मण्डकपा° 7. A,B,J omit इत्यर्थः 8. V omits स च

**वीर०** तां कृष्णस्य मातरं यशोदामपत्यमनूद्दिश्य प्रतप्तां दुःखिताम् अनुगृह्य सम्यग्गृहीत्वा ह्रदे पतितुमुद्युक्तां निवार्येत्यर्थः। शुचोऽश्रूणि स्रवन्त्यः तया तुल्यदुःखाः प्रियो व्रजो यस्य तस्य कृष्णस्य तास्ताः कथाः[1] पूतनायमलार्जुनभञ्जनादिरूपाः कथंयन्त्यः कृष्णस्य आनने अर्पिताः निहिताः दृशो याभिः ताः मृतकप्रतीकाः मृतकल्पाः[2] आसन्॥ २१॥

कृष्ण एव प्राणो येषां तान् कृष्णैकजीवनान् नन्दादीन् तं ह्रदं विशतः प्रवेष्टु मुद्युक्तान् रामः प्रत्यषेधत् निवारितवान्, तत्र हेतुः तत्प्रभाववित् तत्रापि हेतुर्भगवान् ॥ २२॥

न विद्यतेऽन्या गतिः रक्षणोपायो यस्य तत्, आत्मनः स्वस्य हेतोः स्त्रीकुमार पर्यन्तं दुःखितं गोकुलं निरीक्ष्य आज्ञाय तद्दुःखं ज्ञात्वा मर्त्यपदवीमनुवर्तमानोऽत एव मुहूर्तमात्रं तूष्णीं स्थित्वा तत उरङ्गबन्धादुदतिष्ठत् त्याजितोरगबन्धो बभूवेत्यर्थः ॥ २३॥

तस्य कृष्णस्य प्रथ्यमानेन भारीक्रियमाणेन पृथुशब्दात्तत्करोतीति ण्यन्तात् "र ऋतो हलादेः लघोः (अष्टा 6-4-161) इति कतरभावात् कर्मणि लटः शानच्, वपुषा व्यथितस्वशरीरो भुजङ्गः कृष्णमुन्मुच्य कुपितः फणानुन्नमय्य श्वसन् केवलं हरिमीक्षमाणः तस्थौ। कथम्भूतः नासारन्ध्रेषु विषं यस्य, अम्बरीषवत्सन्तप्तानि स्तब्धानि चेक्षणानि यस्य । अम्बरीषशब्दो भ्राष्ट्रवाची "अम्बरीषः पुमान्भ्राष्ट्रं", (वैज.को. 4.3.56) "क्लीबेऽम्बरीषां भ्राष्ट्रो ना" (अम.को. 2-607) इत्यादिनामानुशासनात् "अम्बरीषः" (उणादि सू. 469) इत्यौणादिकसूत्रेण "अबि शब्दे" इत्यस्माद्धातोः "कृतॄभ्यामीषन्" (उणादि.सू. 466) इत्यत ईषन्नित्यनुवर्तमाने तत्सन्नियोगेन रुडागमो निपात्यते समस्तपाठे नासिकाच्छिद्रमेव विषपाकभ्राष्ट्रं यस्य स चासौ स्तब्धेक्षणः उल्मुकान्यग्नि कणानि मुखे यस्य उल्मुकवज्ज्वलन्मुखो वा॥ २४॥

द्वे शिखे अग्रभागौ यस्यास्तया जिह्वया द्वे सृक्किणी[3] ओष्ठप्रान्तौ लेलिहानम् अतिकराला विषाग्निभीषणा दृष्टिर्यस्य तममुं कालियं क्रीडन्निव परितश्चचार। "अभितः परितस्समया" इत्यादिवचनेनामुमिति षष्ठ्यर्थे द्वितीया, अमुष्य परितस्ससारेत्यर्थः। यथा गरुडः तद्वत्, सोऽपि कालियोऽप्यवसरं दंशनार्थमन्तरमन्वेषयन् परिबभ्राम॥ २५॥

---

1. W omits कथाः 2. A,B तुल्याः 3. A °क्कि° W °क°

**विज०** अपत्यमनुप्रविष्टां आत्मना पुरस्थितह्रदे प्रविष्टां शरीरेण तीरे स्थितां कृष्णमातरं, यशोदां समनुगृह्य परिरभ्य यशोदादुःखतुल्यव्यथाः शुचः शोकादश्रूणि स्रवन्त्यः बाष्पधारया नदीं कुर्वत्यः याः पूर्वं व्रजप्रियस्य कृष्णस्य कथाः कथयन्त्यः आसन् ता अधुना त्रस्ताः कृष्णाननेऽर्पितनेत्राः गोप्यो मृतकप्रतीकाविज्ञाता अनेनेति शेषः ॥ २१॥

कृष्ण एव प्राणो येषां ते तथा तान् ह्रदं निविर्शतः प्रवेष्टुकामान्॥ २२॥

आज्ञाय ज्ञात्वा उरगबन्धात् सर्पकृतबन्धनात् उदतिष्ठत् उत्थितोऽभूत्॥ २३॥

भगवति उत्थिते सर्पः किङ्क्रियोऽभूदित्यत्राह - **तत्प्रथ्यमानेति।** तेन कृष्णेन प्रथ्यमानवपुषा वर्ध्यमानशरीरेण व्यथितः आत्मभोगः स्वशरीरं यस्य स तथा। अत एव कुपितः अत एव श्वसन् दीर्घश्वासं कुर्वन् श्वसनरन्ध्रे नासिकाछिद्रे

विषाम्बरीष्टं विषभ्राष्टं यस्य स तथा। "क्लीबेऽम्बरीषं भ्राष्टो ना कन्दुर्वा स्वेदिनी स्त्रियाम्" (अम.को. 2-607) इत्यमरः। स्तब्धेक्षण उल्मकमुखश्च स्तब्धे ईक्षणे उल्मुके मुखे यस्य स तथा। "अङ्गारेऽलात उल्मुकम्" (अम. को. 2-606) इत्यमरः। एवंविधो भुजङ्गो हरिमीक्षमाणः तस्थावित्यन्वयः॥ २४॥

तं अमुं सर्पं परिससार परितश्चचार, द्वे सृक्किणी[1] ओष्ठान्तर्भागौ स सर्पोऽप्यपसरन् तिर्यग्गच्छन् बभ्राम चतुर्दिशं परिवर्तमानोऽभूत्॥ २५॥

1. A °क्कि°

एवं परिभ्रमहतौजसमुन्नतांसमानम्य तत्पृथुशिरस्स्[1]वधिरूढ आद्यः।
तन्मूर्धरत्ननिकरस्पर्शातिताम्रपादाम्बुजो[2]ऽखिलकलादि गुरुर्ननर्त॥ २६॥

तं नर्तुमुद्यतमवेक्ष्य तदा तदीया[3] गन्धर्वसिद्ध[4]मुनि चारणदेववध्वः।
प्रीत्या मृदङ्गपणवानकवाद्यगीतपुष्पोपहारनुतिभिस्सहसोपसेदुः॥ २७॥

यद्यच्छिरो न नमते[5-]ऽङ्ग शतैकशीर्ष्णो[-5] स्तत्तन्ममर्द खल[6]दण्डधरोऽङ्घ्रिपातैः।
[7-]क्षीणायुषो भ्रमत उल्बणमास्यतोऽसृङ्नस्तो[-7] वमन् परमकश्मलमाप नागः॥ २८॥

तस्याक्षिभिर्गरलमुद्वमतश्शिरस्सु यद्यत्समुन्नमति निश्श्वसतो रुषोच्चैः।
[8]नृत्यन्पदाऽनुनमयन् [9-]दमयाम्बभूव[-9] [10-]पुष्पैस्सुपूजित इवेह पुमान्[-10] पुराणः॥ २९॥

तच्चित्रताण्डवनि[11]रुग्ण [12-]फणासहस्रो[-12] रक्तं मुखैरु[13]रु वमन् नृप! भग्नगात्रः
स्मृत्वा चराचरगुरुं पुरुषं पुराणं नारायणं तमरणं मनसा जगाम॥ ३०॥

कृष्णस्य गर्भजगतोऽतिभरावसन्नं पार्ष्णिप्रहार परिरुग्णफणातपत्रम्।
दृष्ट्वाऽहिमा[14]द्यमुपसेदुरमुष्य पत्न्य आर्ताश्श्लथद्वसनभूषणकेशबन्धाः॥ ३१॥

तास्तं सु[15]विग्नमनसोऽथ पुरस्कृताऽ[16]र्भाः का[17]यान्निधा[18]य भुवि भूतपतिं प्रणेमुः।
साध्व्यः कृताञ्जलिपु[19-]टाश्शमलस्य[-19] भर्तुर्मोक्षेच्छ[20]वश्शरणदं शरणं प्रपन्नाः॥ ३२॥

1. M स्यधि° 2. M °ऽमृत 3. A,B,G,J,M °य° 4. A,B,G,J सुर 5- -5. M तेगरकाल शीर्ष्णं° 6. A,G,J °र° 7- -7 M क्षीणे बले भगवतोल्बणमाशु वक्त्राद्रक्तं 8. V,W नृत्यत्प° 9- -9. M स यदा बभूव 10- -10. B,G,J पुष्पैः प्रपूजित इवेह पुमान्; M पुष्पैस्तुतोऽथ भगवान् पुरुषः V पुष्पैस्सुपूजित इवेह पुनः 11. A,B,G,J,M वि 12- -12. A,B,G,J,M फणाऽऽतपत्रो; V फणासहस्रैः 13. K रु° 14. M राज° 15. A,M विपन्न 16. °ऽर्हाः 17. A,B,G,J,M कायं नि 18. V पात्य 19- -19 M पुटी परमस्य 20. A,B,G,J °स°

**श्रीध० एवमिति।** एवं परिभ्रमेणैव हतमोजो यस्य तम्। उन्नतौ अंसौ यस्य तम्। तस्य मूर्धसु ये रत्ननिकराः तेषां स्पर्शेन अत्यरुणं पादाम्बुजं यस्य सः। [1-]अत्र छन्दोभङ्गः आर्षः[-1]। ननु कथं चञ्चलेषु शिरस्सु ननर्त ? तत्राह- अखिलकलानाम् आदिगुरुः ॥ २६ ॥

**ता[2-]मिति** उपसेदुः प्राप्ताः[-2] ॥ २७ ॥

**यद्यदिति।** शतैकशीर्ष्णः शतं एकानि मुख्यानि शीर्षाणि यस्य तस्य क्षीणायुषोऽपि पुनर्भ्रमतः यद्यच्छिरो न नमते स्तब्धतां न जहाति। नृत्यच्छलेनाङ्घ्रिपातैः तत्तन्ममर्द। तथा च आस्यतो मुखेभ्यः, नस्तो नासाविवरेभ्यश्च असृग्वमन् ॥ २८ ॥

**तस्येति।** पुनरपि रुषा उच्चैः निश्वसतो यद्यत्समुन्नमति तत्तत्[3]पदाघातेनानुनमयन् इहास्मिन्नवसरे हृष्टैर्गन्धर्वादिभिः शेषासनः [4]पुराण पुरुष इव [5]स यशोदा[6] नन्दनः पुष्पैः [7]पूजितः यद्वा तदा गन्धर्वादिभिः पुष्पैः [8]सुपूजितो गोपैः पुराण इव पुमान् दृष्ट इति। यद्वा, पुष्पैः [9]सुपूजित इव प्रसन्नस्सन् दमयाम्बभूव हितं कृतवानित्यर्थः ॥ २९ ॥

**तदिति** । अरणं शरणम् ॥ ३० ॥

**कृष्णस्येति।** गर्भे जगन्ति यस्य तस्यातिभरेण, अवसन्नमाक्रान्तं, पार्ष्णिः पादपृष्ठम्। आद्यं श्रीकृष्णं, श्लथन्तो विस्रंसमानाः वसनादयो यासां ताः ॥ ३१ ॥

**ता** इति। [10]ताः शरणं प्रपन्नास्सत्यः तं प्रणेमुः। सुविग्नमनसः [11]अतिविह्वलचित्ताः भुवीति तस्मिन् स्थाने [12]जलादधस्ताद्वा तीरे वा। शमलस्य पापात्मनोऽपि, भर्तुः मोक्षेच्छ[13]वः भर्तुर्यच्छमलं तस्य वा। भूतपतिं प्राणिमात्रस्य पतिं, शरणदं आश्रयप्रदम् ॥ ३२ ॥

---

1- -1. A,B,J omit 2- -2. V omits 3. B त्पा° 4. V omits पुराण 5. A,B,J,omit स 6. B adds नन्द 7. A,B,J add प्र 8. A,B,J प्र 9. A,B,J प्र 10. V omits ताः 11. V omits अति 12. A,B,J °लाध° 13. A,B,J °प्स°

**वीर०** एवं परिभ्रमणेनैव गतबलम् उन्नतौ अंसौ यस्य तं कालियमानम्य नम्रं कृत्वा तस्य पृथुषु विपुलेषु शिरस्स्वधिरूढः आद्यः अखिलविद्याकारणभूतः अखिलानां भरतशास्त्रविदाम् आदिगुरुः, हेतुगर्भमिदम्। तत्त्वात् चपलेष्वपि शिरस्सु ननर्त। कथम्भूतः? तस्य मूर्धसु ये रत्नसमूहाः तेषां स्पर्शेन अत्यरुणं पदाम्बुजं यस्य तथाभूतः ॥ २६ ॥

नृत्यं कर्तुमुद्युक्तं तं कृष्णमवेक्ष्य तदीया भगवत्सेवकाः गन्धर्वादयः प्रीतिपूर्वकं मृदङ्गादिभिरुपलक्षिता सहसा आशु उपसेदुः आजग्मुः। यद्वा तदीयाः कालियस्य परिजनाः उपसेदुः। गन्धर्वादयश्च तथा भगवन्तं सेवितुं मृदङ्गादिभिस्सह उपसेदुरित्यन्वयः ॥ २७ ॥

शतमेकानि मुख्यानि शिरांसि यस्य तस्य शतैकशीर्ष्णः कालियस्य आर्षत्वात् "शीर्षन् छन्दसि" (अष्टा 6-1-61) इति शिरश्शब्दस्य शीर्षन्नादेशः। यद्यच्छिरो न नमते नम्रं नाभूत् अङ्ग हे राजन्! तत्तच्छिरः कर्म अङ्घ्रिपातैः खलदण्डधरः हेतुगर्भम्। तत्त्वात् ममर्द। कथम्भूतस्य? क्षीणमायुर्बलं वा यस्य भ्रमतः तदा आस्यतो मुखेभ्यः नस्तो

नासिकाभ्यश्च उल्बणमुष्णमधिकं वा असृक् रुधिरं वमन् उद्गिरन् स नागः कालियः परमधिकं कश्मलं मोहं मूर्छां दुःखं वा अवाप[1] लेभे॥ २८॥

अक्षिभिः नेत्रैः विषमुद्वमतः पुनः रुषा क्रोधेन उच्चैः निश्वसतः श्वासं मुञ्चतः तस्य शिरस्सु मध्ये यद्यच्छिरः कर्तृसमुन्नमति उद्धृतं[2] बभूवेत्यर्थः। तत्तत् पदा पादघातेन अनुनमयन् प्रह्वीकुर्वन् इत्थं नृत्यन् दमयाम्बभूव दण्डयामास। कथम्भूतः ? पुष्पैः पुष्पवर्षैः सुपूजितः गन्धर्वादिभिरिति कर्तृपदाध्याहारः। तादात्विकं भगवन्तं लक्षयति इह अस्मिन्नवसरे पुराणः पुमानिव शेषासनो भगवानिवाऽलक्ष्यतेत्यर्थः॥ २९॥

तस्य भगवतः चित्रेणोद्भटेन ताण्डवेन नृत्तेन निरुग्णं नितरां पीडितं फणानां सहस्रं यस्य, भग्नं गात्रं यस्य स कालियः हे नृपः मुखैः रुधिरमनुवमन्[3] उद्गिरन् तदा तं कृष्णं चराचरात्मक सर्वभूतनियन्तारं पुराणं पुरुषं श्रीनारायणं स्मृत्वा तमेव मनसा अरणं शरणं जगाम॥ ३०॥

कृष्णस्य गर्भे यज्जगत् तस्य अतिभरेणावसन्नं पीडितं पार्ष्णिप्रहारैः पादपृष्ठघातैः परितो रुग्णाः पीडिताः फणा एवाऽऽतपत्राणि यस्य तमहिं कालियं दृष्ट्वा अमुष्य कालियस्य पत्न्यः, आर्ता दुःखिताः विस्रंसमानाः वसनादयो[4] यासां ताः। आद्यं श्रीकृष्णमुपसेदुः उपजग्मुः॥ ३१॥

ताः कालियस्य[5] पत्न्यः सुविग्नानि नितरां भीतानि मनांसि यासाम्, अत एव पुरस्कृताः पुरोनिधापिताः अर्भाः बालाः याभिः ताः तथाभूताः भुवि कायान् देहान् निधाय दण्डवत्पातयित्वा तं भूतपतिमपराधानवेक्षणेन शरणागतभूतमात्ररक्षितारं कृष्णं प्रणेमुः नमश्चक्रुः। ततः ताः साध्व्यः पतिव्रताः शमलस्य पाप्मनो भर्तुः बिभ्रतः मोक्षेच्छवः भर्तुश्शमलस्य वा। कृताञ्जलिपुटाः[6] शरणदं शरणं रक्षणोपायमात्मानं ददातीति तथा तम्। "य आत्मदा बलदा" (तैत्ति. सं 4-1-8) इति श्रुतेः। तं कृष्णं शरणमुपायं प्रपन्नाः अध्यवसितवत्यः। "अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम्। तदेकोपायतायाच्ञ्या प्रपत्तिश्शरणागतिः" (विष्वक्सेनसंहिता) इत्युक्तविधां प्रपत्तिं चक्रुरित्यर्थः॥ ३२॥

---

1. K आप 2. K उन्नतं 3. A,B °मुद्वमन् 4. A,B वस्त्रादयो 5. A,B °यप° 6. A,B,W धृ°

**विज०** हतौजसं क्षीणबलम् आनम्य आनमय्य[1] प्रह्वीकृत्य अमृतकलस्य चन्द्रस्याधिगुरुः परमगुरुः अमृतकलानामधिको गुरुः उद्गिरणशील इति भावः। इदं विषौषधज्ञानार्थमुक्तम्॥ २६॥

उपसेदुः उपस्थिताः॥ २७॥

गरकालशीर्ष्णः विषेण नीलशिरसः सर्पस्य। "मूर्छा तु कश्मलं मोहः" (2-566) इत्यमरः॥ २८॥

शिरस्सु मध्ये यद्यच्छिरः समुन्नमति तत्तच्छिरः अनुनमयन् नृत्यन् बभूव॥ २९॥

अङ्घ्रिपातविशेषेण रुग्णं भुग्नम्[2]। अरणं शरणं क्षीरसागरशायीयस्तम्॥ ३०॥

गर्भे जठरे जगद्यस्य सः गर्भ जगत् तस्य कृष्णस्य अतिभरेणावसन्नः पीडितः पार्ष्णिः पादपृष्ठभागो यः तेन कृतेन प्रहारेण परिरुग्णं फणातपत्रं यस्य स तथा तम्॥ ३१॥

पुरस्कृतार्हाः अग्रे कृतपूजनाः परमस्य सकाशात् पत्युर्मोक्षेच्छवः ॥ ३२।

1- -1. A omits 2. A,B भ°

## —: कालिय पत्नीकृत कृष्णस्तुति :—

### नागपत्न्य ऊचुः

**न्याय्यो हि दण्डः कृतकिल्बिषेऽस्मिंस्तवावतारः खल निग्रहाय!**
**रिपोस्सुतानामपि तुल्य दृष्टि[1]र्धत्से दमं [2]फलमेवानु [3]शंसन्॥ ३३॥**

**अनुग्रहोऽयं भवता[4] कृतो हि नो दण्डोऽसतां ते खलु कल्मषापहः।**
**यद्दन्दशूकत्वममुष्य देहिनः क्रोधोऽपि तेऽनुग्रह एव सम्मतः॥ ३४॥**

**तपस्सुतप्तं किमनेन पूर्वं निरस्तमानेन च मानदेन?।**
**धर्मोऽभवा सर्वजनानुकम्पया यतो भवांस्तुष्यति सर्वजीवः[5]॥ ३५॥**

**कस्यानु भावोऽस्य न देव! विद्महे तवाङ्घ्रिरेणु स्पर्शाधिकारः।**
**यद्वाञ्छया श्रीललनाऽऽचरत्तपो विहाय कामान् सुचिरं धृतव्रता॥ ३६॥**

**न नाकपृष्ठं न च सार्व भौमं न पारमेष्ठ्यं न रसाधिपत्यम्।**
**न योगसिद्धि[6]रपुनर्भवं वा वाञ्छन्ति [7]यत्पादरजः प्रपन्नाः॥ ३७॥**

1. A,B,G,J,M,V °ष्टे° 2. धर्म 3. M शंस्यम्। 4. A,G,J °तः 5. K,W °वनः 6. V °द्धिर्न° 7. M तत्पा°

**श्रीध०** प्रथमं तावत् कुपितं भगवन्तं दण्डानुमोदनेनोपशमयन्त्यः स्तुवन्ति, **न्याय्य इति**। तत्र — ★ "दण्डानुमोदनं षड्भिः दशभिश्च हरेस्स्तु[1]तिः। प्रार्थना[2] पञ्चभिश्श्लोकैस्ततः पन्नगयोषिताम्"॥ न च निग्रहानुग्रह लक्षणम् वैषम्यं [3]तवास्तीत्याहः धत्सेहुः [4]दममिति। [5]फलम् अनुशंसन् ओलाचयन्॥ ३३॥

निग्रहो[6]ऽप्यनुग्रहायेत्युक्तं [7]पूर्वम्। इदानीमनुग्रह एवायम्। न निग्रह इत्याहुः — **अनुग्रह** इति। नोऽस्माकं यस्मा[8]दमुष्य सर्पत्वं दृश्यते। अतः तन्मूलपापनिवर्तको दण्डः अनुग्रह एवा क्रोधत्वेन प्रतीयमानोऽपीत्यर्थः॥ ३४॥

महांश्चायमनुग्रह इति तस्य पूर्वपुण्यमभिनन्दन्ति[9] — **तप** इति। स्वयं मानरहितेन अन्येभ्यो मानदेन च। सर्वं जीवयतीति सर्वजीवः॥ ३५॥

न तप आदिनिमित्तकं[10] एष भाग्योदयः किन्तु अचिन्त्यं तव कृपावैभवमित्याहुः **कन्येति** श्लोकत्रयेण। तपआदिना ब्रह्मादयोऽपि यस्याः श्रियः प्रसादमिच्छन्ति। सा श्रीः [11]ललनापि श्रीरेव[-1] ललना उत्तमा स्त्री। यस्य त्वदङ्घ्रिस्पर्शाधिकारस्य

वाञ्छया। स्पं[12-] शाधिकार इत्यत्र छन्दोभङ्ग आर्षः[-12]। तप आचरत्। अस्य सर्पस्य किं[13-] कृतमिति[-13] को वेत्तीत्यर्थः॥ ३६॥

**नेति**। यत्तव पादरजः प्रपन्नाः प्राप्ताः पारमेष्ठ्याद्य[-14]पि तुच्छं मन्यन्ते॥ ३७॥

---

★ श्रीधरीयोऽयं श्लोकः 1. A,B,J °र्नीतिः 2. A,B,J °नं 3. V omits तवास्ति 4. V omits दमं 5. A,B,J omit फलम् 6. V °स्या° 7. A,B,J omit पूर्वम्। 8. V°दस्य 9. V °ति 10. A,B,J omitक 11- -11. A,B,J omit 12- -12. A,B,J omit 13- -13. B सः किं कृतवानिति 14. V °दीनपि

**वीर०** तत्र भगवतः तदितरासाध्यस्वभर्तृप्राणसंरक्षणात्मकस्वाभीष्टोपायतां महाविश्वासपूर्वकं यियाचिषवः तावद्याचनीयत्वोपयुक्तगुणवत्तां स्तुतिव्याजेनाऽऽविष्कुर्वत्यः तावद्रक्षणीयस्य स्वभर्तुः कार्पण्यं भवान्तरसुकृतवत्त्वं च सूचयन्त्यः प्रकृतमेतस्य दमनमहितव्याजं हितमेव तच्च समदृशा त्वया कर्तुमुचितमेवेति विज्ञापयामासुः **न्याय्य** इत्यादिना द्वयेन। ततः चतुर्भिः कार्पण्यसुकृतवत्वे, ततो दशभिर्याचनीयत्वोपयुक्तगुणानाविष्कर्तुं स्तुतिः। ततः पञ्चभिः याच्ञेति विवेकः। कृतं किल्बिषं हृदविदूणात्मकं त्वद्दंशनात्मकं वा येन। अस्मिन् यस्त्वया धृतो दण्डः स न्याय्य उचित एव। कृतकिल्बिष इत्यनेन तस्य दण्डयत्वम् आकिञ्चन्यं प्रत्युत सापराधत्वं च सूचितम्। अथ[1]तद्दण्डयितृत्वं न्याय्यमित्यभिप्रायेणाऽऽहुः तवावतारः ख[2-]लनिग्रहाय[-2] खलानां दु[3-]ष्कृतां[-3] निग्रहार्थं हि तवावतार इत्यर्थः। नन्वेवमपि वात्सल्यनिधेर्ममैतदनुचितमित्यत्राऽऽहुः - रिपोरिति। रिपोस्सुतानामपि विषये तुल्या वैषम्यरहिता दृष्टिर्यस्य तथाभूतस्त्वं फलं हितात्मकमेव अनु समनन्तरमेव शंसन् सूचयन् तावद्दमं दण्डं धत्से करोषि। रिपोस्सुतानानमपीत्यनेन मित्रामित्रविभागानादरेणापराधिनां सर्वेषामपि दमं धत्से इति सूचितम्। अत एव तुल्यदृष्टिः, यद्वा "हरिर्दुःखानि भक्तानां हितबुद्ध्या करोति वै। शस्त्रक्षा[4]राग्निकर्माणि स्वपुत्राय पिता यथा" इत्युक्तरीत्या अनुगृह्यमाणानां तावत् पुत्रादीनामिव सर्वेषामपि तादात्विकाहितव्याजं हितमेव करोषीति सूचितम्। अतोऽयं दण्डोऽनुग्रहरूप एव। अ[5]तः वात्सल्यनिधेः तव उचितश्चेति भावः॥ ३३॥

दण्डस्यानुग्रहरूपतामेव स्पष्टयन्ति **अनुग्रह** इति। भवता यः कृतो दण्डस्सोऽयं नोऽस्माकमस्मद्विषये अनुग्रह एव। कुतः य[6]तस्ते दण्डः त्वत्कर्तृको[7] दण्डोऽसतां नोऽस्माकं कल्मषापहः दुरितापहः। किं तत् कल्मषम्? यदपहन्ता मद्दण्डः। तत्राऽऽहुः अमुष्य देहिनः कालियाख्यजीवस्य यत् यस्मात् कल्मषात् दन्दशूकत्वं सर्पत्वं प्राप्तमिति शेषः। तत्कल्मषापह इत्यर्थः। अतस्तव क्रोधोऽप्यनुग्रह एव। अनुग्रहगर्भ एव सम्यक् मतः विज्ञातः॥ ३४॥

कृतकिल्बिषे दन्दशूकत्वमिति पदद्वयेन साधनान्तरराहित्यात्मकम् आकिञ्चन्यरूपं कार्पण्यं सूचितम्। अथ ईश्वरानुग्रहनिमित्तं सुकुतवत्त्वमनुमान्ति **तप** इति। अनेनास्मद्भर्त्रा पूर्वं पूर्वस्मिन् जन्मनि निरस्ताहङ्कारेण मानदेन महद्भ्यः पूजाप्रदेन च सता किं तपस्सुतप्तं सुष्ठु कृतम्? पाकं पचतीतिवन्निर्देशः। अथवा सर्वभूतानुकम्पया कश्चिद्धर्मो वा अनुष्ठितस्स्यात्। कथमेवं ज्ञायत इत्यत्राऽऽहुः। यतः सर्वान् जीवयति "को ह्येवान्यात्कः प्राण्यात्" (तैत्ति.आ. 2-7) इति श्रुत्युक्तरीत्या भोगमोक्षप्रदानेनोज्जीवयतीति तथा। भवान् तुष्यति तुष्टो भवितुं तावद्दण्डयतीति भावः। तपोधर्मयोरनिर्वचनीयत्वाभिप्रायकः किंशब्दः। अनेनानुष्ठितौ तपोधर्मौ इदमित्थंतया नास्माभिरल्पबुद्धिभिनिर्वक्तुं शक्यौ। किं तु केवलं सर्वान्तरात्मनो भवतस्तोषाल्लिङ्गात् तन्निमित्तं किञ्चित् तपआदिकं कृतमित्यनुमास्या[8]मः इति भावः। यद्वा तप इत्यादिभिश्चतुर्भिः कार्पण्यमेवाऽऽविष्क्रियते।

अयमर्थः पूर्वमनुग्रहरूपात् दण्डात्प्राग[9]नेन निसर्गतः क्रूरेणानेन सर्पेण किं तपस्सुतप्तम् न किञ्चित्, अथवा को धर्मः न कश्चित्, यतो येन तपसा धर्मेण वा भवांस्तुष्यति, तन्न किञ्चिदपि कृतमित्यर्थः। स्वभावतः क्रूरस्य निरस्तमानत्वाद्यसम्भावनाप्रदर्शनाय तद्विशेषणानि॥ ३५॥

**कस्येति।** अस्य कालियस्य त्वत्पादरजस्स्पर्शाधिकारः कस्य पुण्यस्यानुभावः प्रभावः? तत्पुण्यमयं न वेद वयमपि न विद्मः। यद्वा कस्य न कस्यचिदपि तादृशं पुण्यमस्मिन् सर्पजातौ किञ्चिदपि सम्भावितमित्ययं न वेद वयमपि न विद्मह इत्यर्थः। तवेत्यनेन तदङ्घ्रिरेणौदौर्लभ्यमभिप्रेतम्। तदेवाऽऽविष्कुर्वन्ति यद्वाञ्छयेति। यद्वाञ्छया यदङ्घ्रिरेणुलिप्सया श्रीललना श्रीर्लक्ष्मीरिव ललना यस्याः पादरजो ब्रह्मादयो लिप्सन्ति। सा श्रीरपि कामानङ्घ्रिरेणुव्यतिरिक्तान् पुरुषार्थान् विहायानिच्छन्ती धृतव्रता धृतं तपश्चर्योपयुक्त मिन्द्रियजयात्मकं व्रतं यथा तथाभूता तपो बहुकालमचरत्। पुरा श्रीर्वेदवतीरूपेण तपश्चचारेति श्रीरामायणकथा अत्र सूच्यते॥ ३६॥

**नन्वैश्वर्यकैवल्यादिषु** प्रार्थनीयपुरुषार्थेषु सत्स्वपि तान्विहाय किंविशेषेण मदङ्घ्रिरेणुं वाञ्छन्तीत्यत्राऽऽहुः — **नेति।** ये त्वत्पादरजःप्रपन्नास्ते पारमेष्ठ्यादिकं न वाञ्छन्ति। पारमेष्ठ्यादिभ्योऽतिशयपुरुषार्थरूपं त्वत्पादरजः सेवमानास्तेनैव तृप्ताः पारमेष्ठ्यं चतुर्मुखैश्वर्यम्। नाकपृष्ठं स्वर्लोकं, सार्वभौमं चक्रवर्तित्वम्। रसाधिपत्यं भूलोकादधस्तनलोकाधिपत्यम्। योगसिद्धीः अणिमादीः, अपुनर्भवं कैवल्यम्॥ ३७॥

---

1. K omits तत् 2- -2. A,B omit 3- -3. A,B दुष्टानां 4. A,B क्षु° 5. A,B omit अतः 6. W omits यतः 7. A,B °क° 8. A,B,W °महे 9. A,B °गेवानेन

**विज०** दण्डः शासनं न्याय्यो युक्तं रिपोः सुतानामिति षष्ठी सप्तम्यर्थे। रिपोः सुतेष्वपि तुल्यदृष्टे। त्वं तेषु उभयेषु अपराधेषु दमं दण्डं धत्से। कथं धत्स इति तत्राह - फलमिति। अनुशंस्यं अपराधानुरूपं फलम् अनुग्रहलक्षणं दण्डं करोषीत्यन्वः ॥ ३३॥

ननु निगृह्णतः कथमनुग्रहो भवतीत्यत्राह **अनुग्रह** इति। हिशब्द एवार्थे। भवता सर्वपूज्येन त्वया नः अस्माकं अयमनुग्रह एव कृतः न तु विरोधः कृतः। ते त्वया क्रियमाणो दण्डोऽसताम् असाधुभावानां दुष्टकर्मणां तामसयोनिं प्राप्तानां कल्मषापहः खलु पापपरिहारक एव अमुष्यासत्वं कथमत्राह — यदिति। अमुष्य कालियनाम्नो दन्दशूकत्वं तत्तत्प्राणिदंशनशीलयोनित्वमभूत् इति ज्ञायते। यद्यस्मात्तस्मात् असत्त्वं योग्यं तथा। अतः ते तव क्रोधः क्रोधकारणदण्डो योग्यस्य देहिनोऽनुग्रहः सम्मतः अस्माभिः प्रतिपन्न इत्यन्वयः। "दण्डोऽपि भगवच्चीर्णो ममैषोऽनुग्रहः कृतः" (महाकौर्मे) इत्यादिस्मृतेः। भक्तिमत एवायं विशेष इति ज्ञायते॥ ३४॥

यद्दन्दशूकत्वमपि न दुष्कर्मनिमित्तम् अपि तु पूर्वजन्मन्यत्युत्कटत्वद्विषय तप आदि प्रभावोपनतमिति मन्यामहे। "**अत्युत्कटैः पुण्यपापैः** इहैव फलमश्नुते"। यतोऽस्य गवादि प्राणिद्रोहत्वद्दंशनोत्पन्नपापपरिहाराय तव लक्ष्म्यादि सर्वदेवतावाञ्छितसेवा चरण सरोजरेणुमन्दिरमूर्द्धाऽभूदिति भावेन वदन्ति **तप** इत्यादिना। भूदानादिलक्षणो धर्मः। सर्वेषां जीवानां प्राणभूतः सर्वान् जीवयतीति वा॥ ३५॥

तप आदिषु कस्य पुण्यस्यानुभावोऽयं प्रभावः अध्यवसायो वा। काम्यन्त इति कामाः विषयाः तान्॥ ३६॥

कीदृशाविषया इति भावेन तानाहुः **न नाकेति।** "नाकस्य पृष्ठे सुकृतेऽनुभूत्वा इमं लोकं हीनतरं वा विशन्तिति (मुण्ड.उ. 1-210) इति पारमेष्ठ्य सत्यलोकः। सार्वभौमं चक्रवर्तिपदं। "इमारामाः सरथाः सतूर्याः" (कठ.उ. 1-25) इत्यादिलक्षणं रसाधिपत्यं अखिलस्वर्गविभवं, योगसिद्धीः अणिमादिलक्षणाः अपुनर्भवं अपक्वभक्तिलभ्यं मोक्षम्। "अपुनर्भवमात्रद्धि हरिसामीप्यमुत्तमम्" (पाद्मे) इत्यादि स्मृतेः॥ ३७॥

**[1]तदेष नाथाऽऽप दुरापमन्यै स्तमोजनिः क्रोधवशो[2] ह्यहीशः।**
**संसारचक्रे भ्रमतश्शरीरिणो [3-]यदृच्छया स्याद्भवतस्समक्षम्[-3]॥ ३८॥**

**नमस्तुभ्यं भगवते पुरुषाय महात्मने।**
**भूतावासाय भूताय पराय परमात्मने॥ ३९॥**

**ज्ञानविज्ञाननिधये ब्रह्मणेऽनन्तशक्तये।**
**अगुणायाविकाराय नमस्ते[4] प्राकृताय च॥ ४०॥**

**कालाय कालनाभाय कालावयवसाक्षिणे।**
**विश्वाय [5]तदुपद्रष्ट्रे तत्कर्त्रे [6]विश्वहेतवे॥ ४१॥**

**भूतमात्रेन्द्रिय प्राणमनोबुद्ध्याशयात्मने।**
**[7]त्रिगुणेनाभिमानेन गूढस्वात्मानुभूतये॥ ४२॥**

---

1. M तदीश 2. A,B,G,J °शोऽप्यहीशः; M °शोऽप्यनीशः; V °शो ह्यहीन्द्रः 3- -3. A,B,G,J यदिच्छतः स्याद् विभावः समक्षः; M यदीप्सितं स्यद्धि भवत्समक्षम्; V यदिच्छतः स्याद् विभवः समक्षम्। 4. A,G,K,M °स्तेऽप्रा° 5. K,W विश्वरूपाय 6. A तस्य 7. M निर्गु°

**श्रीध० तदिति।** अहो तदेष अयत्नत एव प्राप। अन्यैः [1]ब्रह्मादिभिरपि। [2]पुनः कथम्भूतं पादरजः? यदिच्छतः सेव्यं मे भवत्विति [3-]प्रार्थयमानस्यैव[-3]। [4]समक्षं प्रत्यक्षं[5-]त एव[-5]। विभवः अपेक्षिता सम्पद्भवति॥ ३८॥

**नम** इति।[6] भगवते अचिन्त्यैश्वर्यादिगुणाय। तदुपपादानाय[7] दशभिश्श्लोकैः विशेषणानि। पुरुषाय पूर्षु अन्तर्यामिरूपेण वर्तमानाय। महात्मने एवमपि [8]अपरिच्छिन्नाय। कुतः? भूतावासाय आकाशाद्याश्रयाय। [9]तदपि कुतः? भूताय पूर्वमपि स ते कुतः? पराय कारणाय। किञ्च परमात्मने कारणातीताय[10]॥ ३९॥

कारणत्वं कारणातीततत्त्वं च समर्थयितुमाहुः **ज्ञानेति**। ज्ञानविज्ञाननिधये ज्ञानं ज्ञप्तिः। विज्ञानं चिच्छक्तिः त[11]योः निधये, ताभ्यां प[12]रिपूर्णाय कथं तथा त्वम् अत उक्तम् ब्रह्मणे अनन्तशक्तये। ब्रह्मणे कथम्भूताय? अगुणायाविकाराय, पु[13]नः कथम्भूताय? अनन्तशक्तये, प्राकृताय प्रकृतिप्रवर्तकाय। य[14]द्वा अप्राकृताय[15] अप्राकृतानन्तशक्तियुक्ताय। अयमर्थः- अगुणत्वा दविकारं ब्रह्मज्ञप्तिमात्रत्वात्कारणातीतं प्रकृति प्रवर्तकानन्तशक्तिविज्ञाननिधित्वादीश्वरः कारणम्। तदुभयात्मने नम इति॥४०॥

अनन्तशक्तित्वात् कालशक्त्या विश्वस्रष्टृत्वादिरूपेण नमस्यन्ति **कालायेति**। कालाय कालस्वरूपाय, कालनाभाय कालक्त्याचाश्रयाय। कालावयवानां सृष्टचादिसमयानां साक्षिणे। ततश्च विश्वाय विश्वस्व[16] रूपाय, तर्हि किं जडोऽहम्? न हि, तदुपद्रष्ट्रे, न च द्रष्टृमात्राय। किन्तु तत्कर्त्रे न च कर्तृमात्राय। विश्वहेतवे सर्वकारण[17] रूपाय॥ ४१॥

तदेवाहुः **भूतेति**। आशयः चित्तं, भूतादिरूपाय। अतः सर्वका[18]रण रूपायेति अहङ्कारात्मतया नमस्यन्ति त्रिगुणेनेति। एवं सृ[19]ष्टिकार्ये यस्त्रिगुणोऽभिमानः। तेन गू[20]ढानां स्वांशभूतानामात्मनाम्[21] अनुभूतिः येन तस्मै॥ ४२॥

---

1. A,B,J श्वादि° 2. A,B,J omit पुनः 3- -3. V °यत एव। 4. A,B,J °क्षः 5- -5. A,B,J °क्ष एव। 6. A,B,J add नमुस्तुभ्यं 7. V adds एतानि 8. A,B,J नातिपरि 9. A,B,J एत° 10. V adds इति वा 11. A,B,J उभयोः 12. A,B,J omit परि 13. B,J omit पुनः 14. A,B,J omit यद्वा 15. A,B,J add इति वा। 16. A,B,J omit स्व 17. A,B,J °क 18. A,B,J °क 19. A,B,J सृष्टे कार्ये 20. A,B,J गूढा 21. A,B,J add जीवानाम्

**वीर०** तर्ह्येवं कृपणस्यापि कथं दुर्लभतममत्पादरजस्पर्शाधिकारः तत्राऽऽहुः - **तदिति**। एषः अहिशस्सर्पाधिपः तमोजनिः तमःप्रचुरजन्मा अत एव क्रोधवशः तदपि तथाऽपि हे नाथ! अन्यैः दुष्प्रापं त्वत्पदाम्बुजस्पर्शम् आप लेभे। यद्भवतः समक्षं प्रत्यक्षत्वं तदन्यैर्दुरापमप्येष आपेति वा अन्वयः। युक्तं चैतदित्याहुः - संसारचक्रे स्वकर्मभिर्भ्रमतो जीवस्य यदृच्छया भवतस्समक्षत्वं स्यात्। "एवं संसृति चक्रेऽस्मिन्भ्राम्यमाणे दुरत्यये। जीवे दुःखाकुले विष्णोः कृपा काऽप्युपजायते" (अहिर्बुध्न्यसंहिता) इति स्मरणात् इति भावः। विभव इति पाठे विभवः त्वदनुग्रहरूपो विभवस्समक्षः प्रत्यक्षः स्यादेव यादृच्छिकादिसुकृतविशेषरूपव्याजमात्रावलम्बनेनानुजिघृक्षोर्वात्सल्यनिधेः तवानुग्रहरूपो विभवः प्रत्यक्षस्स्यादेव। अन्यथा कस्यापि चेतनस्य निर्दुष्टस्यासम्भवात् त्वत्कृपा निर्विषयैव स्यादिति भावः॥ ३८॥

तदेवं, कार्पण्यमाविष्कृत्याथ शरण्यत्वोपयुक्तगुणैर्विशि[1]षन्त्यः स्तुवन्ति - **नम** [2]इत्यादिभिः दशभिः। चतुर्थ्यन्तानां भगवते इत्यादीनां तुभ्यं नम इत्यन्वमः। तत्र आश्रितकार्यनिर्वाहका आश्रयणसौकर्यापादकाश्चेति द्विविधाश्शरण्यगुणाः। तत्र ज्ञानशक्तिपूर्तिप्राप्तचादय आश्रितकार्यनिर्वाहकाः। तत्र ज्ञानमनिष्टपरिहारेष्टप्रापणोपयुक्तरूपम्। तच्च ज्ञानविज्ञाननिधय इत्यनेनोक्तम्। ज्ञानमनिष्टपरिहारोपयुक्तं, विज्ञानमिष्टप्रापणोपयुक्तम्। तयोर्निधिराश्रयः तस्मै। शक्तिर्नामाघटितघटनसामर्थ्याद्यात्मिका। सा चानन्तशक्तय इत्यनेनोक्ता। ब्रह्मण इत्यनेन सर्वशेषित्वादिगुणबृहत्त्ववाचिना भगवत इत्यनेन च षाड्गुण्यपूर्णत्ववाचिना पूर्तिप्राप्ती विवक्षिते, पूर्तिः अवाप्तसमस्तकामत्वम्। प्राप्तिः निरुपाधिकशेषित्वम्। आश्रयणसौकर्यापादकास्तु गुणाः परत्वस्वामित्वसौशील्यवात्सल्यादयः। तत्र भूताय पराय परमात्मन इति परत्वमुक्तम्। परत्वं नाम स्वेतरापेक्षयोत्कृष्टत्वम्। "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः" (भ.गी.15-17) इति स्वेतरनिखिलजगदन्तःप्रवेशनप्रशासनाभ्यां व्याप्यगतदोषास्पर्शेन

च धारकत्वं हि परमात्मशब्दप्रवृत्तिनिमित्तमवगतम्, अनेन स्वेतरनियाम्यसर्ववस्त्वपेक्षयोत्कृष्टत्वं स्पष्टमेव। पराय भूताय, भूतत्वमत्र सर्वेभ्यः कारणतया प्रगवस्थितत्वम्। परमकारणायेत्यर्थः। अनेनापि परत्वं स्पष्टमेव। भूतावासाय इत्यनेन सौलभ्यमवगतम्। परत्वयुक्तोऽपि न मेर्वादिवद्दूरतरः। अपि तु सर्वभूतहृदयगुहावास इति भावः। अनेन सौलभ्यं सुव्यक्तमेव। पुरुषाय महात्मने इत्यनेन सौशील्यं विवक्षितम्। स्वयं वाचामगोचरमाहात्म्ययुक्तोऽपि यादवानामन्यतमपुरुषरूपेण तैस्सह संश्लेषस्वभाव इति भावः। महतो मन्दैस्सह संश्लेषस्वभाववत्त्वं हि सौशील्यम्। महापराधिनं कालियमनुग्रहीतुमुद्योगप्रख्यापनपरेणानेन प्रकरणेन वात्सल्यं व्यक्तमेवावगतम्। भूतावासाय परमात्मने इति व्यापकत्वोक्त्या प्रसक्तं व्याप्यगतदोषं परिजहुः अगुणायेति। हेयगुणरहिताय पराय भूतायेति कारणत्वोक्त्या प्रसक्तविकाराश्रयत्वपरिहाराभिप्रायेणाविकारायेत्युक्तिः। सद्वारकविकाराश्रयत्वेन कारणत्वेऽपि स्वरूपतः स्वभावतश्चाविकारायेत्यर्थः। सद्वारकविकाराश्रयत्वमेव स्पष्टयन्ति। प्राकृताय "भूमिरापोऽनलो वायुः" (भ.गी. 7-4), "अपरेयमितस्त्वन्याम्" (भ.गी. 7-5) इतिश्लोकद्वयोक्तप्रधानपुरुषात्मकप्रकृतिद्वयद्वारा तद्गतविकाराश्रयाय॥ ३९,४०॥

सत्त्वादिप्रकृतिगुणक्षोभननिमित्तकालस्यापि पृथङ्निमित्ततान्युदासाय तस्य तत्सामानाधिकरण्यनिर्देशः **कालायेति।** कालात्मकायेत्यर्थः। तदात्मकत्वं न मृदात्मको घट इतिवत् स्वरूपाभेदनिबन्धनम्; अपि तु आत्मा देवो जात इतिवत् शरीरात्मभावनिबन्धनमित्यभिप्रायेणाऽऽहुः कालनाभायेति। कालो नाभिवदङ्गभूतो यस्य स कालनाभः। "अच्प्रत्यन्ववपूर्वात्सामलोम्नः" (अष्टा. 5-4-75) इत्यत्र अजिति येगविभागाश्रयणात् सर्वसमासान्तोऽच्प्रत्ययः। यद्वा कालस्य नाभिः नेम्यरादीनां नाभिवद्धारकः आत्मभूत इति यावत्। देवमनुष्यादिदेहपारवश्येन जीवस्य तच्छरीरकत्ववत् न कालपारवश्येन तच्छरीरकत्वम्, अपि तु तद्याथात्म्यावलोकनेन इत्यभिप्रायेणाहुः - कालावयवसाक्षिण इति। कालावयवानां निमेषादि वत्सरान्तानां साक्षिणे साक्षाद्द्रष्ट्रे पराय भूतायेत्युक्तकारणत्वप्रयुक्तकार्यानन्यत्वाभिप्रायेण कार्यसामानाधिकरण्येन निर्दिशन्ति विश्वायेति। विश्वात्मकायेत्यर्थः। तदात्मकत्वं किं तत्स्वरूपाभेद निबन्धनम्? नेत्याहुः विश्वरूपायेति। विश्वं रूपं शरीरं यस्य तस्मै शरीरात्मभावनिबन्धनं सामानाधि करण्यमिति भावः। यद्वा सूक्ष्मचिदचिद्विशिष्टस्यैव कारणत्वात् तस्य स्थूलचिदचिद्विशिष्टेनाऽऽत्मना साकमनन्यत्वाभिप्रायेण विश्वायेत्युक्तिः विशेष्यांशस्यापि शरीरात्मभाव निबन्धनविश्वसामानाधिकरण्याभिप्रायेण विश्वरूपायेत्युक्तिः न केवलमुपादानकारणभूताय, अपि तु जगन्निमित्तभूताय च इत्यभिप्रायेणाऽऽहुः - तत्कर्त्रे इति। उपकरणाधिकरणादिकमपि त्वमेवेत्यभिप्रायेणोक्तं विश्वस्य हेतव इति। हेतुत्वं कारकषट्कसाधारणम्, गोबलीवर्दन्यायेन तत्कर्त्रे इत्युक्तिः॥ ४१॥

विश्वाय विश्वरूपायेत्युक्तयोः कार्येण सह विशिष्टविशेष्यांश सामानाधिकरण्ययोः निबन्धनद्वयमाहुः - **भूतेति।** भूतादिरूपेण परिणतत्वाद्भूताद्यात्मने, अत्र भूतादिशब्दाः भूतादिकार्यरूपेण परिणताचिद्विशिष्टब्रह्मपराः। एवं च कार्यावस्थब्रह्माभिन्नकारणावस्थब्रह्मण इत्यर्थः। भूतादीनामात्मने तदन्तः प्रवेशप्रशासनाभ्यां भर्त्रे इत्यप्यर्थस्तन्त्रेण विवक्षितः। अन्तः प्रवेशप्रशासनाभ्यां भर्तृत्वमेव हि आत्मशब्द प्रवृत्तिनिमित्तम्। तत्र भूतान्याकाशादीनि, मात्राः शब्दादयः, पञ्च, इन्द्रियाणि ज्ञानकर्मोभयेन्द्रियाणि श्रोत्रादीनि दश, प्राणाः पञ्च, मनो बुद्धिश्च आशयो वासना, एवं सूक्ष्माचिद्विशिष्ट ब्रह्मणः स्थूलावस्थाचिद्विशिष्टब्रह्माभेदे तयोः कार्यकारणभावो विशेषण विशेष्ययोश्शरीरात्मभावश्चेति निबन्धनद्वयमुक्तम्। अथ चित्सामानाधिकरण्येऽपि निबन्धनमाहुः त्रिगुणेनेत्यर्धेन। त्रिगुणेन गुणत्रयहेतुकेनाभिमानेन - देहात्माद्यभिमानेन गूढा च्छन्ना स्वात्मानुभूतिर्जीवानां यस्मात् तस्मै ज्ञानविकासरूपजीवगतकार्यं प्रति कारणभूतायेत्यभिप्रेतार्थः॥ ४२॥

1. W °शिष्य स्तु° 2. A,B इति 3- -3 A,B omit

**विज०** किं बहुवक्तव्यमिति भावेन वदन्ति — **तदिति**। ईश! नाथ! शङ्कर! स्वामिन्। यद्भवत्समक्षं भवतः साक्षात्करणं तदापा दुरापं, "न चक्षुषा पश्यति कश्चिनैनम्" (कठ.उ. 6-9) "नान्यैर्देवै र्मनसा नापि वाचा" इत्यादिश्रुतेः। साधनसामग्रीमन्तरेण दुष्प्रापमित्यर्थः। तमसा गुणेन जनिः जन्म यस्य स तथा अत एव क्रोधस्वभावः तथाप्यनीशोऽसमर्थः ॥ ३८॥

"दण्डोऽपि भगवच्चीर्णः " (महाकौर्मे) इति स्मृत्यर्थमात्मनि ज्ञापयितुं कृष्णं स्तुवन्ति - **नम** इत्यादिना। भूतावासाय इत्यनेन "भूतनाशेन नाशःस्यात्" इत्युच्यत इति शङ्कां निवारयति भूतायेति। सर्वदा विद्यमानाय "भू सत्तायम्" इति धातुः॥ ३९॥

अविकारायेत्युक्तं समर्थयते अप्राकृतायेति॥ ४०॥

कालाय भक्तकामधेनवे, कालनाभाय कालाश्रयाय, विश्वाय स्वाधीनप्रपञ्चाय तस्य विश्वस्य उपद्रष्ट्रे अध्यक्षाय तस्य कर्त्रे अवान्तरकारणाय प्रकृतेः मूलकारणत्वं निवारयति विश्वहेतव इति। प्रपञ्चस्य मूलकारणाय "विश्वस्य तदधीनत्वात् विश्वं विष्णुरुदीर्यते" (आग्नेये) इत्यादिस्मृतेः। विश्वाय विराट्पुरुषाय तत्कर्त्रे विश्वस्योत्पादनमायाप्रेरकाय इत्यादिरर्थो न युक्तः अप्रामाणिकत्वादिति॥ ४१॥

विश्वस्य भगवदधीनत्वं विवृणोति — **भूतेति**। भूतानि पञ्चमात्राः शब्दादयः इन्द्रियाणि श्रोत्रादीनि, प्राणाः दश मनः सङ्कल्पविकल्पलक्षणं, बुद्धिः निश्चयहेतुः, एषामाशयः स्थानं, आत्मा स्वभावो यस्य स तथा तस्मै। "आत्मा यत्नो धृतिः बुद्धिः स्वभावो ब्रह्मवर्ष्म च" (अम.को. 3-206) इत्यमरः। "स्थानेऽभिप्राय आशयः" (वैज.को. 7-517) इति यादवः। निर्गुणेन सत्त्वादिगुणजन्मरहितेन अभिमानेनाऽज्ञानेन गूढा अप्रकाशिता स्वात्मानुभूतिः यस्य स तथा तस्मै॥ ४२॥

**नमोऽनन्ताय सूक्ष्माय कूटस्थाय विपश्चिते।**
**नानावादानुरोधाय वाच्यवाचकशक्तये॥ ४३॥**

**नमः प्रमाणमूलाय कवये शास्त्रयोनये।**
**प्रवृत्ताय निवृत्ताय निगमाय नमो नमः॥ ४४॥**

**नमः कृष्णाय रामाय वसुदेवसुताय च।**
**प्रद्युम्नायानिरुद्धाय सात्त्वतां पतये नमः॥ ४५॥**

**नमो गुणप्रदीपाय गुणात्मच्छादनाय[1] च।**
**गुणवृ[2-]त्त्युपलक्ष्याय[-2] गुणद्रष्ट्रे स्वसंविदे॥ ४६॥**

**अव्याकृतविहाराय सर्वव्याकृतसिद्धये।**
**हृषीकेश नमस्तेऽस्तु मुनये मौनशीलिने॥ ४७॥**

1. M °स्योदयाय च। 2- -2. K,W वृत्त्युपलभ्याय; M प्रत्युपलक्ष्याय

**श्रीध०** त्वं तु अहङ्कारानावृत इति स्तुवन्ति — **नम** इति। नमो[1]ऽनन्ताय, अहङ्कारापरिच्छेदात् अतः सूक्ष्माय, अदृश्यत्वात्। अत एव कूटस्थाय, उपाधिकृतविकाराभावात्। अत एव विपश्चिते सर्वज्ञाय। एवं व[2]स्तुतः स्तुत्वाऽचिन्त्यमायत्वेन स्तुवन्ति नानावादानुरोधाय। अस्ति नास्ति सर्वज्ञः किञ्चिज्ज्ञो बद्धो मुक्त एकोऽनेक इत्यादि नानावादान् अनुरुणद्धि माययाऽनुवर्तते यस्तस्मै। किञ्च वाच्यवाचकशक्तये। अभिधानाभिधेयशक्तिभेदादपि नानात्वेन प्रतीयमानायेत्यर्थः ॥ ४३ ॥

अनावृतत्वमेव हेत्वन्तरेणापि सूचयन्त्यः स्तुवन्ति **नम** इति। न[3]मः प्रमाणमूलाय, चक्षुरादीनां चक्षुरादिरूपाय। अत एव कवये स्वयं तन्निपेक्षज्ञानाय। कुतः? शास्त्रयोनये वेदात्मकनिश्श्वासाय। कि[4]ञ्च प्रवृत्ताय निवृत्ताय निगमाय नमो नमः[-4] ॥ ४४ ॥

किञ्च अनावृतैश्वर्यत्वादेव चतुर्मूर्ति स्व[5]रूपेण सर्वोपास्यत्वेन नमन्ति - **नमः** कृष्णायेति श्लो[6]केन। रामाय सङ्कर्षणाय। वसुदेवसुताय च। वसुदेवशब्दितं शुद्धं सत्त्वं तत्र प्रकाशमानाय वासुदेवायेत्यर्थः। सात्वता[7]मुपासकानां पतये सोलोक्यादिना पालकाय। एवं चतुर्मूर्तये कृष्णाय तुभ्यं नम इति ॥ ४५ ॥

कथं चतुर्मूर्तितिति तदाहुः- **नमो गुणप्रदीपायेति**। गुणाः अन्तःकरणानि तानि प्रदीपयति प्रकाशयतीति तथा तस्मै। चित्ताद्यधिष्ठातृत्वेन चतुर्मूर्तितित्यर्थः[8]। ननु तथाप्येकस्यैव कथं चतुष्ट्वमत आहुः — गुणात्मच्छादनाय च तैरेव गुणैरुपासकानां फलवैचित्र्यायात्मानमाच्छाद्य नानात्वेन प्रकाशमानायेत्यर्थः। ननु तर्हि कथं प्रतीतिरत् उक्तम् — गुणवृत्त्युपलक्ष्याय चित्तादीनां चेतनाध्यवसायादिवृत्तिभिरुपलक्ष्याय। उपलक्षणमेवाहुः - गुणद्रष्ट्रे तत्साक्षिणे। कथंचिदुपलक्ष्य एव न तु ज्ञेय इत्याहुः — स्वसंविदे, अगोचरायेत्यर्थः ॥ ४६ ॥

अगोचरत्वमुपलक्ष्यत्वं च दर्शयन्त्यो न[9]मन्ति — अव्याकृतविहाराय, अत[10]र्क्यमहिम्ने इत्यर्थः। सर्वव्याकृतसिद्धये सर्वकार्योत्पत्ति प्रकाशहेतुत्वेनोपलक्षणयोग्यायेत्यर्थः। उपलक्षणान्तरमाहुः — हे हृषीकेश! करणप्रवर्तक! किं विषय लिप्सया? न, मुनये आत्मारामाय। किं साधनवेशेन वा[11]? न हि न[12]हि मौनशीलिने मौनमात्त्मारामता तत्स्वभावाय ॥ ४७ ॥

1. V omits नमः 2. V omits वस्तुतः 3. V omits नमः 4- -4. V omits 5. A,B,J omit स्व° 6. V omits श्लोकेन 7. A °तामेतदुपा° 8. V °ति भावः 9. V नमस्यन्ति 10 A add °प्र° 11. V omits वा 12. B,J omit न हि

**वीर०** एवं जगत्कारणत्वेन परत्वनिर्वहणलक्षितस्य परमात्मनश्चिदचिद्विशिष्टस्य स्वरूपं विशेष्यांशभूतं जगन्निमित्तकारणं विशोधयन्ति **नमोऽनन्तायेति।** अत्र सत्यादिवाक्यं प्रत्यभिज्ञाप्यते अनन्तपदेन तस्य। कूटस्थपदेन निर्विकारवाचिना सत्यपदस्य, विपश्चिच्छब्देन ज्ञानपदस्य च प्रत्यभिज्ञानात्, विविधं पश्यतीति विपश्चित्, तस्मै नित्यांसङ्कुचितसर्ववस्तु विषयकधर्मभूतज्ञानाश्रयायेत्यर्थः। पृषोदरादित्वाद्यशब्दस्यचिभावः, एवमचेतनात् त्रिविधजीवेभ्यश्च व्यावृत्तायेत्युक्तं भवति। अनन्तायेत्यनेन सर्ववस्तुसामानाधिकरण्यार्हत्वरूपवस्तुपरिच्छेदराहित्यमप्युक्तम्। सर्ववस्तुसामानाधिकरण्यार्हत्वं च सर्वान्तः प्रवेशेन तच्छरीरकत्वेन च, तत्र कथमणुस्वरूपजीवान्तःप्रवेशेन तच्छरीरकत्वं विभोः परमात्मनः सङ्गच्छत इत्यत्राऽहुः — सूक्ष्मायेति। "अणोरणीयान्" (कठ.उ. 2-20) "नित्यं विभुं सर्वगतं सुसूक्ष्मम्" (मुण्ड.उ. 1-1-6) इत्यादि श्रुत्युक्तरीत्या सूक्ष्मादपि सूक्ष्मत्वाज्जीवान्तः प्रवेशयोग्यायेति भावः। नन्वेवम्भूतं मां कथं केचिन्निमित्तकारणमेव वदन्ति। केचिच्च जीवाभिन्नमित्यादि इत्यत्राऽऽहुः, नानावादाः वेदविरुद्धाःताननुवृत्यावस्थिताय अनधिगतवेदान्तवाक्यैकवाक्यानां विप्रतिपन्नबुद्धीनां तत्तद्वादानुरूपेणापि प्रतीतायेत्यर्थः। तत्र हेतुः वाच्यवाचकशक्तये। वाचकाः तत्तद्वादिप्रयुक्ताः विवक्षितार्थविषया शब्दाः वाच्याः तत्तच्छब्दविवक्षिता अर्थाः, तत्र वाच्यशक्तिरुपस्थाप्यत्वयोग्यतालक्षणा, वाचकशक्तिरूपस्थापकत्वलक्षणा तदुभयशक्ति निर्वाहकत्वात् नानावादानुरोधायेत्यर्थः॥ ४३॥

एवमपि केवलं शास्त्रयोनये शास्त्रं योनिः कारणं स्वस्वरूप स्वभाव प्रमितिजनकं यस्य तस्मै शास्त्रस्य भ्रमप्रमादविप्रलिप्सादिपुरुषदेषसम्भावनां निराकुर्वत्यो विशिंषन्ति। प्रमाणमूलाय प्रमाणं स्वप्रमितिसाधनं शास्त्रं तस्य मूलाय तदाविष्कर्तृत्वेन तत्कारणाय। तथा च स्मर्यते - "अनादि निधना ह्येषा वागुत्सृष्टा स्वयम्भुवा। आदौ वेदमयी नाम्ना यतस्सर्वाः प्रसूतयः" (भार. शान्ति. मो 238 - 56) इति श्रूयते च - "तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेद" (सुबा.उ. 2-1) इति, "ऋचस्सामानि जज्ञिरे छन्दाँसि जज्ञिरे तस्मात् यजुस्तस्मादजायत" (पु.सू. 1-4) इति च। प्रमाणमूलत्वासम्भावनां निराकुर्वन्ति। कवये पूर्वपूर्वानुपूर्वीविशिष्टत्वेन शास्त्राविष्कारोपयुक्तसार्वज्ञ्ययुक्ताय न केवलं प्रमाणमूलाय अपि तु प्रमेयनिर्वाहकायापीत्याहुः, प्रवृत्ताय निवृत्ताय च उभयकर्मनिर्वाहकाय निगमायोपनिषज्ज्ञानप्रवर्तकाय॥ ४४॥

सत्यं परत्वावस्थितोऽहमुक्तगुणयुक्तो न तु व्यूहविभवाद्यवस्थ इत्यत्राऽऽहुः। **नमः कृष्णायेति।** रामकृष्णादिविभवावस्थायां प्रद्युम्नानिरुद्धादिव्यूहावस्थायां चाहीनस्वस्वभावायेति भावः। विभवावस्थायां सौशील्यमेकमधिकमाविष्कृतमित्यभिप्रायेणाऽऽहुः — वसुदेवसुतायेति। यद्वा शरण्यत्वोपयुक्तमाश्रितार्तिपरिजिहीर्षैकशीलत्वमाहुः नमः कृष्णायेति। व्यूहविभवादिरूपेण सात्त्वतामाश्रितानां पतये अनिष्टपरिहारपूर्वकं पालकाय॥ ४५॥

पालकत्वप्रकारमेवाऽऽहुः गुणप्रदीपायेति। सात्वतामित्यनुवर्तते, तेषां गुणस्य धर्मभूतज्ञानस्य प्रदीपाय प्रदीपवद्विषयावारकनिवारकाय सात्त्वतां गुणप्रदीपायेत्यनेन असात्त्वतां तद्वैपरीत्यं सूचितम्। तदेव स्पष्टी कुर्वन्ति गुणात्मच्छादनाय गुणेन गुणमयमायया आत्मनो जीवान् असात्त्वतश्छादयति सङ्कुचितज्ञानान्करोतीति तथा तस्मै। एतद्विशेषणद्वय - प्रसक्तवैषम्यपरिजिहीर्षया विशिंषन्ति। गुणवृत्त्युपलभ्याय गुणस्य गुणपरिणामात्मकमनसोवृत्त्या न्यासोपासनान्यतररूपया उपलभ्याय उपलक्ष्याय गुणवृत्तिरूपव्याजमात्रापेक्षत्वाद्वैषम्यरहितायेति भावः, गुणवृत्त्यपरिज्ञानासम्भावनां निराकुर्वन्ति। गुणद्रष्टे सर्वान्तः

करणवृत्तीनां साक्षाद्युगपद्द्रष्ट्रे, तत्र हेतुः, स्वसंविदे स्वासाधारणापरिच्छिन्ननिरुपाधिकनित्यासङ्कुचितधर्मभूतज्ञानाश्रयाय॥ ४६॥

यद्यहं गुणद्रष्टा, तर्हि तथात्वेन किं न ज्ञाये इत्यत्राऽऽहुः - **अव्याकृतेति।** अव्याकृतः अनभिव्यक्तः विहारः गुणद्रष्ट्रत्वादिरूपो यस्य तस्मै न केवलं गुणद्रष्ट्रे अपि तु सर्वव्याकृतानां देवादिपदार्थानां तद्बुद्धिवृत्तीनां च सिद्धये निष्पत्तिहेतवे न केवलं तेषां सिद्धिहेतुरेव अपि तु सर्वेन्द्रियप्रशासिता चेत्यभिप्रायेण सम्बोधयन्ति हृषीकेशेति। हृषीकाणाम् [2]इन्द्रियाणाम्[2] ईशः नियन्ता शरण्यत्वोपयुक्तं गुणान्तरमाहुः। मुनये तापत्रयातुरजीवोज्जीवनाय यादृच्छिक प्रासङ्गिकानुषङ्गिकाद्यन्यतमसुकृतलेशानुचिन्तनात्मकमननशीलाय मौनशीली अजल्पाकः परिपूर्णैश्वर्यत्वाद्ब्रह्मादिस्तम्बपर्यन्तं जगत् तृणीकृत्य जोषमासीनायेत्यर्थः। अयमपि परत्वावहो गुणः॥ ४७॥

---

1. A,B मनो 2- -2. A omits

**विज०** अनन्ताय नित्याय सर्वगताय सूक्ष्माय इन्द्रियाविषयाय "नित्यं विभुं सर्वगतं सुसुक्ष्मम्" (मुण्ड. उ. 1-1-6) इति श्रुतेः। कूटस्थाय शश्वदेकप्रकाराय विपश्चिते सर्वज्ञाय निपुणबुद्धये वा। नानावादानां सिद्धान्तानां अनुरोधाय अनुकूलवर्तमानाय वाच्योऽर्थः तस्य प्रतिपाद्यत्वे योग्यत्वं वाच्यशक्तिः वाचकः शब्दः तस्यार्थप्रतिपादनसामर्थ्यं तद्द्वयं यस्य स तथा तस्मै॥ ४३॥

प्रमाणमूलाय प्रत्यक्षादिप्रमाणप्रतिष्ठापकाय कवये अतिक्रान्तदर्शिने शास्त्रं वेदः योनिः ज्ञप्तिकारणं यस्य स तथा तस्मै। "योनिः स्त्रीणां भगे स्थाने कारणे ताम्रके पणे' (वैज. को. 6-5-66) इति यादवः। निर्देशकारणाय इदं कुर्यात् इदं न कुर्यात् इति विधिकर्त्रे "निदेशग्रन्थयोः शास्त्रम्" (अम.को. 335) इत्यमरः। प्रवृत्ताय प्रवृत्तिमार्गप्रवर्तकाय, [1]निवृत्ताय निवृत्तिमार्गप्रवर्तकाय[1] च सृष्टौ प्रवृत्ताय'प्रलये निवृत्ताय इति वा। उभयेषां निगमाय मार्गाय विषयाय इत्यर्थः। "अयनं पदवीमार्गः पद्या च विनिगद्यते निगमः" (हला.को. 2-105) इति हलायुधः। वेदमूर्तये वा निश्चायकाय वा। "निगमो निश्चये वेदे परे पथिवणिक्पथे" (वैज.को. 7-1-35) इति यादवः॥ ४४॥

कृष्णाय उत्कृष्टानन्दरूपाय भक्तजनदुरितकर्षणशीलाय वा। शत्रूणामग्नये वा नीलवर्णाय वा। "कृष्णं सीसाद्यलोहेषु कृष्णो नीलेऽनले कलौ। शूद्रे काके पिके व्यासे ध्वान्तपक्षेऽर्जुने हरौ" (वैज.को. 6-5-14,15) इति च। रामाय रामनाम्ने अभिरामाय वा; प्रकृष्टद्युत्याऽमेयाय। यद्वा प्रकृष्टधनाय। "द्युम्नं द्रव्यं द्रविणम्" (हला० को. 1-80) इति हलायुधः। अनिरुद्धाय ज्ञानिनां निरोधरहिताय॥ ४५॥

गुणाः सत्त्वादयः भक्तिज्ञानादयो वा, तेषां प्रदीपाय ज्ञापकाय गुणात्माप्रकृतिः तस्यां स्थितः उदयः स्वरूपं यस्य स तथा तस्मै। गुणैः श्रोत्रादीन्द्रियजन्यज्ञानैः प्रत्युपलक्ष्याय अनुमेयस्वरूपाय गुणद्रष्ट्रे गुणसाक्षिणे स्वसंविदे स्वयं प्रकाशाय, "तद्ब्रह्म वेद" "अहं ब्रह्मास्मि" (बृह.उ. 1-4-10) इति श्रुतिः। अनेनापि अस्यापि अन्यो द्रष्टा, तस्यापि अन्य इत्यनवस्था निरस्तेति ज्ञातव्यम्॥ ४६॥

अव्याकृताः व्याहर्तुमशक्याः सृष्ट्यादिविहारा यस्य स तथा तस्मै। ननु व्याहर्तु मशक्यविहारश्चेत् कथं तर्हि तज्ज्ञानमत्राहुः सर्वेति। सर्वैः व्याकृता विवृता सिद्धिः स्वरूपज्ञानं यस्य स तथा। स्वानुग्रहेण ज्ञापित स्वरूप इत्यर्थः तस्मै। यद्वा, सर्वव्याकृतसिद्धये नामरूपात्मकं जगत्सर्वं व्याकृतं तस्य सिद्धिः उत्पत्तिर्येन स तथा तस्मै। मुनये सर्वज्ञानाय मौनशीलिने असम्भावितभाषणशीलरहिताय॥ ४७॥

---

1- -1. A,B omit

पार[1]वरगतिज्ञाय सर्वाध्यक्षाय ते नमः।
अविश्वाय च विश्वाय तद्द्रष्ट्रे[2]ऽस्य च हतवे॥ ४८॥

त्वं ह्यस्य जन्मस्थितिसंयमान्विभो[3]! गुणैरनीहोऽकृत कालशक्तिधृत्[4]।
[5]त त्तत्स्वभावान्प्र[-5]ति[6]बोधयन्सत स्समीक्षयाऽमोघविहार ईहसे॥ ४९॥

तस्यैव तेऽभूस्तनवस्त्रिलोक्यां शान्ता अशान्ता उत मूढयोनयः।
शान्ताः प्रियास्ते ह्यधुनाऽवितुं[7] सतां स्थातुश्च ते धर्म[8]परीप्सयेहतः॥ ५०।

अपराधस्सकृद्भर्त्रा सोढव्यस्स्वप्रजाकृतः।
क्षन्तुमर्हसि शान्तात्मन्[9] मूढस्य त्वामजानतः॥ ५१॥

अनुगृह्णीष्व भगवन्प्राणांस्त्य[10]क्ष्यति पन्नगः।
स्त्रीणां नस्साधुशोच्यानां पतिः प्राणः प्रदीयताम्॥ ५२॥

विधेहि ते किङ्करीणामनुष्ठेयं त[11] वाज्ञया।
यच्छ्रद्धयाऽनुतिष्ठन्वै मुच्यते स[12-] पुमान्भयात्[-12] ॥ ५३॥

---

1. V °प° 2. A तस्य K,M विश्व 3. A,B,G,J प्रभो 4. A,B,G,J,M °धृक् 5- -5. M तस्मात्स्वभावात्प्र° 6. M °यत्स्वन° 7. M °तुः 8. M कर्म° 9. V सर्वात्मन् 10. A,B,G,J,M स्त्यजति 11. K त्वदा° 12- -12 A,B,G,J सर्वतो भयात्; V सर्वबन्धनात्

**श्रीध०** **परावरेति।** कुतः? परावर[1] गतिज्ञाय स्थूलसूक्ष्माणां गतिज्ञत्वेन न क्वापि सज्जमानायेत्यर्थः अपि[2] च सर्वाध्यक्षाय सर्वस्याधिष्ठात्रे। कुत एतत्? अविश्वाय न विश्वं यस्मिन्। तन्निषेधावधये[3] विश्वाय च तद्विवर्ता[4]धिष्ठानायेत्यर्थः [5]किञ्च तद्द्रष्ट्रे अध्यासापवादसाक्षिणे अपि च। अस्य च विश्वाध्यासस्य तदपवादस्य च विद्याऽविद्याभ्यां हेतवे। यद्वा, अविश्वाय विश्वतैजसाद्यवस्थारहिताय विश्वाय च मायया स्वांशैः तत्तदवस्थाय। तद्द्रष्ट्रे, तासामवस्थानां भावाभावसाक्षिणे अन्यत्समानं[6], तस्मात् सर्वगतिज्ञत्वसर्वाधिष्ठातृत्वात्मारामत्वादिभिर्निरतिशयैश्वर्याय तुभ्यं नम इति। ★ "विशेषणरसङ्कीर्णैः पञ्चपञ्चाशतानुतः। अहिस्त्रीभिः प्रसन्नो[7] यस्तासामे[8]व भवेद्धरिः"॥ ४८॥

एवं तावद्दण्डानुमोदननमस्कारैश्च[9] भगवन्तं प्रसाद्येदानीं त्वदधीनं[10] प्राणिनां कोऽपराध इत्याशयवत्यः प्रार्थयन्ते - **त्वं हीति।** अस्य लोकस्य जन्मादीन्[11] त्वमेव अकृत अकरोः। ततश्च तान् तान् संस्काररूपेण सतः स्वभावान्, घोरत्वादीन् प्रति बोधयन् ईहसे क्रीडसि। यद्वा अस्य जन्मादीन् त्वमेवमीहसे[12] इत्यन्वयः। कथम्भूतः? अकृता अनादि र्या कालशक्तिः तां धारयतीति तथा। अन्यत्समानम्॥ ४९॥

**तस्येति।** अतः तस्य तवैव अमूः तनवः तन्यन्त इति तनवः, क्रीडोपस्कराः, तथापि तवाधुना शान्ताः प्रियाः, कुतः? सतां धर्मपरिपालनेच्छया, ईहतः प्रवर्तमानस्य अतः तानवितुं स्थातुः स्थितस्य॥ ५०॥

एवं च तव अप्रियाचरणाद्यपराधः तर्हि सोढव्य इत्याहुः[13] **अपराध** इति॥ ५१,५२॥

युष्मदनुग्रहो[14]ऽपि अन्येषां मृत्युरेवेति चेन्नेत्याहुः[15] - **विधेहीति।** त्वदाज्ञया प्राणिनो नाऽद्यामेति भावः॥ ५३॥

---

1. V °प° 2. V omits अपि च 3. B °धवि° 4. V °वरा° 5. V omits किञ्च ★ श्रीधरीयोऽयं श्लोकः 6. J. °नतः 7. A,B,J वः 8. A,B,J °मि° 9. A,B,J °नेन 10. A,B,J °नानां 11. A,B,J °दि त्व° 12. A,B,J °मीह° 13. A,B,J इति॥ ५१,५२॥ 14. A,B,J °हे अन्ये° 15. A,B,J चेत्तन्ने°

**वीर०** परावरगतिज्ञाय बन्धमोक्षाभिज्ञाय आश्रितानां मोचकाय अनाश्रितानां बन्धकाय चेत्यर्थः। तथाचोक्तं भगवतैव - "तेषामहं समुद्धर्ता मृत्युसंसारसागरात्" "(भ.गी. 12-7) इति। "तानहं द्विषतः क्रूरान् संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु" (भ.गी. 16-19) इति च आश्रयणसौकर्यापादकोऽयं गुणः कृतपराधानप्याश्रयणरूपव्याजमात्रावलम्बनेन रक्षितुमुद्यमो ह्याश्रयणसौकर्यापादकः, अनेन वैषम्यराहित्यं कारुणिकत्वं चाभिप्रेतम्। तथा च स्मर्यते "सर्वज्ञोऽपि हि सर्वशस्सदा कारुणिकोऽपि सन्। संसारतन्त्रवाहित्वाद्रक्षा[1]पेक्षामपेक्षते[1]" (लक्ष्मीतन्त्रे) इति। सर्वाध्यक्षाय सर्वपुरुषार्थाधिपतये आश्रितानां धर्मादि स्वात्म पर्यन्तप्रदातृत्वरूप महावदान्याये इत्यर्थः। अयमाश्रितकार्यापादको गुणः, पूर्वं पराय भूतायेत्युक्तपरत्वोपयुक्तजगदुपादानत्वप्रयुक्तविश्वानन्यत्वम्। विशिष्टस्य तथात्वेऽपि विशेष्यांशास्य विश्वशरीरकत्वेन तद्भिन्नत्वं तन्निमित्तत्त्वं तत्सृष्टौ स्वेतरोपकरणान्तर निरपेक्षत्वं च। "विश्वाय विश्वरूपाय तत्कर्त्रे विश्वहेतवे" इत्युक्तम्। तदेव विश्वाय तुभ्यं नम इति। युष्मच्छब्दविवक्षितषाड्गुण्यपूर्णत्वाभिमुखत्वादि विशेषणानां विश्वशब्दाद्यभिप्रेतविश्वानन्यत्वादीनां चैकविशेष्यवृत्तित्वरूपमर्थसामानाधिकरण्यमुक्तम्। अथ भिन्नप्रवृत्तिनिमित्तवद्विशेष्याभिधायिनां तत्तच्छब्दानामेकविशेष्य पर्यवसानात्मकं शब्दसामानाधिकरण्यमाहुः विश्वाय। "नतास्स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती" (विष्णु.पु. 1-14-23) "वचसां वाच्यमुत्तमम्" (जितन्ता) इत्युक्तरीत्या सकलशब्दवाच्यायेत्यर्थः, विश्वशब्दस्य अत्र पूर्वत्र च लाक्षणिकत्वात् सर्वनामकार्यभावः संज्ञापूर्वक विधेरनित्यत्वाद्वा। एकस्यैव सर्वशब्दवाच्यत्वप्रयुक्तं सर्वेषां शब्दानां पर्यायत्वं निराहुः अविश्वायेति। तदन्यत्वमत्र नञर्थः, न विश्वः अविश्वस्तस्मै तत्तच्छब्दप्रवृत्तिनिमित्तेभ्यो विलक्षणायेत्यर्थः। न हि स्वख प्रवृत्तिनिमित्त विलक्षणैक

विशेष्यनिष्ठप्रवृत्तिनिमित्तविशिष्टैक विशेष्याभिधायिनां शब्दानां पर्यायत्व प्रसङ्ग इति भावः। कथं जातिगुणाद्याश्रय तत्तद्विशेष्यपर्यवसायिनामेकविशेष्याभिधायित्वमित्यत्राऽऽहुः — विश्वहेतव इति। अस्य च हेतवे इति च पाठः। तदा विश्वपरामर्शीदं शब्दः, जातिगुणाद्याश्रयनिखिल विशेष्यजातगतसत्तास्थितिप्रवृत्तिहेतवे तत्सत्तादिहेतुत्वेन विश्वस्य तदपृथक्सिद्धविशेषणत्वादपृथक्सिद्धविशेषणवाचिनां मत्वर्थीयप्रत्ययमन्तरेणापि विशेष्यपर्यवसायित्वमाकृति नयसिद्धमिति भावः। विश्वसत्तादिहेतुत्वासम्भावनां निराकर्तुं हेतुत्वोपयुक्ततज्ज्ञानवत्तामाहुः तद्द्रष्ट्रे इति॥ ४८॥

तदेवं शरण्यत्वोपयुक्तगुणाविशिष्टं स्तुत्वा अथ "अविज्ञाताः कुमारकाः" इति श्रुत्युक्तरीत्या त्वत्कुमारप्रायस्य त्वच्छरीरभूतस्यास्मद्भर्तुः कदाचिदननुकूलस्य स्वशरीरस्येव स्वपुत्रस्येव चापराधः करणकलेबरादिप्रदानेनाखिलजीवोज्जिजीवयिषया सर्वजगदुदयविभवलयलीलेन सर्वशरीरेण विपुलापराधवत्त्वेऽपि किञ्चिदानुकूल्ययुक्तजीवोज्जिजीवयिषया कृतावतारेण त्वया सोढुमुचित इति क्षमापयन्त्यः तावत् भर्तृप्राणरक्षां कैङ्कर्यं च प्रार्थयन्ते त्वमिति पञ्चभिः। हे विभो! त्वं ह्यनादिकालाख्यशक्तियुक्तः अनीहः सङ्कल्पेतरव्यापारशून्यः, अनेन "अकलितश्रम एव सृजत्यसौ" इति वचनार्थोऽभिप्रेतः। गुणैः रजस्सत्त्वतमोभिरस्य जगतो जन्मस्थितिलयान् कुर्वन्निति शेषः। तत्तत्स्वभावान् रजस्तमस्तदुभयस्वभावानपि सतो जीवान् समीक्षया अनुग्रहगर्भया दृष्ट्या[2] प्रतिबोधयन् तावत् दण्डनेन प्रबुद्धान्कुर्वन् अप्रतिहतजगद्व्यापाररूपविहारश्चेष्टसे, यद्वा त्वं समीक्षया "बहु स्यां प्रजायेय" (छान्दो. उ. 6-2-3) इत्युक्तया सङ्कल्पात्मिकया दृष्ट्या अनीहस्तद्व्यतिरिक्तव्यापारशून्यः प्रलयदशायां तत्तत्स्वभावान् तत्तत्कर्मवासनात्मक स्वभावमात्रयुक्तान् सङ्कुचितज्ञानानसत्प्रायान्सतो जीवान् प्रतिबोधयन् स्वाराधनोपयुक्तकरणकलेबरादिप्रदानेन विकसितज्ञानान् कुर्वन् एवंविधं महोपकारं कर्तुमिति भावः, अप्रतिहत जगद्व्यापारात्मकविहारोऽस्य जगतो जन्मादीनीहसे चेष्टसे करोषीति यावत् तत्तत्स्वभावान् प्रतिबोधयन्नित्यनेन सर्वजीवसाधारण्येन तद्विषयकमहोपकारैकशीलत्वं सूचितम्। एवमपराधानवेक्षणेन केवलमुपकारैकशीलस्य तव कियानयमपराध इति भावः॥ ४९॥

[3]जन्मादीनीहमानस्य ते तव त्रिलोक्याममूस्सर्वाश्शान्तास्सात्त्विक्यः अशान्ताः राजस्यः मूढयोनयस्तामस्यश्च प्रजाः तनवः देहाः आधेया विधेयाश्शेषाश्चेत्यर्थः, सर्वा अप्यनुग्राह्या एवेति भावः। ननु सर्वासामनुग्राह्यत्वे जगद्व्यापारोच्छेदप्रसङ्गः तत्राऽऽहुः यद्यप्येवं तथापि स्थातुः स्थितिकर्तुः अत एव सतां धर्मपरिपालनेच्छया ईहतः प्रवर्तमानस्य कृतावतारस्येति यावत्। ते तव शान्तास्तनवः अवितुं रक्षितुं प्रिया इष्टा हि। सदा सकलजन्मसु सापराधा अप्यधुनाऽपराधविरिंसवः प्रियाः, अतोऽस्यानुग्राह्यत्वेऽपि न जगद्व्यापारोच्छेदप्रसङ्ग इति भावः॥ ५०॥

अतोऽयं यावच्छान्तिदण्डितोऽप्यधुनोपशान्तः पुत्रवत्सोढव्य एवेत्याहुः अपराध इति। भर्तुरस्मद्भर्तुः अपराधः सकृत्सोढव्यः, इतःपरं पुनरपराधः कृतश्चेन्न सोढव्य इत्यभिप्रायेण सकृदित्युक्तिः, स्वप्रजाकृतः स्वपुत्रकृतत्वाच्च सोढव्य इत्यर्थः। अनेन भगवतः पितुस्थानीयत्वं सर्वजीवानां पुत्रस्थानीयत्वं चाभिप्रेतम्। किञ्च अज्ञानकृतोऽपराधः क्षमापणेन सह्य एव सर्वथेति लोकपरिपाटीमभिप्रेत्याऽऽहुः क्षन्तुमर्हसीति। अधुना त्वयि शान्त्या भवितव्यमित्यभिप्रायेण शान्तात्मन्निति सम्बोधनम्। यद्वा कृतापराधेष्वप्यधुना शान्तेषु त्वदानुकूल्योपयुक्त शान्तिमत्सु आत्मा अनुग्रहप्रवणं मनो यस्य तथाभूतेति सम्बोधनम्। मूढस्य अत एव त्वामजानतः क्षन्तुमर्हसि, अपराधमिति विभक्तिपरिणामेनानुषङ्गः[4], प्रकृतत्वाच्छेषो वा॥ ५१॥

हे भगवन्। अयं पन्नगस्सर्पः प्राणान् त्यक्ष्यति। अतोऽनुगृहणीष्व साधुशोच्यानां साधुभिर्दयनीयानां स्त्रीणामस्माकं पतिरेव प्राण, स प्रदीयताम्॥ ५२॥

युष्मदनुग्रहोऽन्येषां मृत्युरेवेति चेत्, तत्राऽऽहुः विधेहीति। त्वदाज्ञया यत्तव किङ्करीणा मस्माक मनुष्ठेयं तद्विधेहि, अनुष्ठेयं विशिंषन्ति। स पुमान् कालियो यदनुष्ठेयं श्रद्धयाऽनुतिष्ठन् भयात् प्रकृतात् मृत्युभयात् मुच्यते, यथाऽस्मत्तो लोका न भीतास्स्युः यथा चायं मृत्युभयान्मुच्येत, तादृशमनुष्ठेयं कर्माऽऽज्ञापयेत्यर्थः॥ ५३॥

---

1- -1. K °क्ष्यापेक्षाम्प्रतीक्षते। 2. A,B add दृष्ट्वा 3. A,B add 'जन्मादीनि ईहसे' इत्यनेन सर्वजीवान् प्रति तस्य पितृस्थानीयत्वं सूचितम्। किञ्च तस्यैव प्रतिबोधयतोऽस्य 4. A,B, add वि

**विज०** परावरगतिज्ञाय कार्यकारणस्थितिज्ञाय सर्वाध्यक्षाय सर्वेषामुपरिगताय अविश्वाय विश्वेभ्यो जीवेभ्योऽन्यस्मै "शरीरेषु प्रविष्टत्वात् विश्वो जीव उदीर्यते" (माहात्म्ये) इत्यादिस्मृतिः। तात्पर्यात्पुनरुक्तमाहुः - विश्वायेति। जीवस्य जगदन्तः पतित्वेपि चेतनत्वेन स्वातन्त्र्यशङ्कानिवारणार्थं पृथग्जीवग्रहणम् "जीवस्य तदधीनत्वात् विश्वो विष्णुः" (माहात्म्ये) इति स्मृतः। "अस्योत्पत्त्यादिहेतुत्वात् विश्वहेतुश्च कीर्तितः" (माहात्म्ये) इति॥ ४८॥

प्रातिस्विकजीवाभीष्टदातृत्वात् त्वद्दृष्टे इति प्रपञ्चस्य मूलकारणं हरिरित्युक्तम्। तत्स्पष्टयितुमाह त्वं हीति। "सत्यधर्मा सत्यकर्मा" इति श्रुतेः। अमोघविहारस्त्वं अत एव अनीहोऽक्लिष्टकर्मात्वं सत्त्वादिगुणैः अस्य जगतो जन्मादीनीहसे हि यस्मात् "देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा" इति श्रुतेः तस्मात् तव सत्यप्रपञ्चस्रष्टृत्वस्वभावात् समीक्षया सम्यग्ज्ञानेन नोऽस्मान् प्रतिबोधयस्व इत्यन्वयः। यथा तव जगत्सष्टृत्वं स्वभावः तथाऽस्मत्प्रतिबोधनमपि स्वभावोऽस्त्वित्याशयः। लोके स्वरूपशक्त्यभावाद्वरादिना मायया वाऽन्यसहायेन बा क्रमेण कर्तृत्वं न तथा तव इत्याशयेनाऽऽह अकृतेति। कालः कारणं ज्ञानं वा। अकृता वरादिना नान्यनिमित्तं स्वरूपमिति यावत्। एवंविधां शक्तिं धारयसीति स्वरूपभूतज्ञानक्रियाशक्तिधर इत्यर्थः। तदुक्तम् "हरेः स्वरूपशक्तिर्या कालशक्तिरुदीर्यते। सदा सर्वगुणात्मत्वात्" (प्रकाशिकायम्) इति। यथा स्वाधीनत्वात् सत्त्वादिगुणैः सृष्टिं करोषि तथा स्वनियतदुर्गावायुभ्यां संहारस्थिती करोषीत्याशयेनोक्तं अकृतेति। तयोरपि कालादीनत्वेन कालशब्दवाच्यत्वादित्यर्थः। तदुक्तम्[1] "दुर्गा चाप्यवरा ततः सर्वसंहारकारित्वाद्वायुः सर्वस्य जीवनात् कालाभिमानिनावेतौ दुर्गा वायुश्च कीर्तितौ" (प्रकाशिकायाम्) इति च॥ ४९॥

विश्वायेत्यादिना हरेर्जगदात्मकत्वमुक्तमिति मन्दाशङ्कानिरासाय स्थावराजङ्गमस्य पृथक्कृत्य त्रैविध्यकथनेन मिथोपि भेदस्तात्त्विक इति दर्शनार्थं तस्य भगवत्प्रतिमात्वेन तत्त्वतः स्तवनेन हरेरतिशयिता प्रीतिः भवतीति भावेनाऽऽहुः तस्यैवेति। यस्त्वं "नमस्तुभ्यं भगवते" (भाग. 10-16-39) इत्यादिना प्रसक्तस्तस्य ते तवैवामूस्तनवः प्रतिमास्थानीयाः शान्ता अशान्ता मूढयोनय उतेति याः त्रिधा भिन्ना अमूरित्यर्थः। त्रिलोक्यां जङ्गमसंज्ञा इति शेषः। अत्रापि तारतम्यमस्तीत्याहुः

शान्ता इति। सुखान्तं सुखस्वभावमेवाप्नुवन्तीति यत् तस्मात् शान्ता देवाः सतामप्यवितुः ते तव प्रियाः। परा पूर्वेषां सख्या "वृणक्ति वितर्तुराणो अपरेभिरेति" इति श्रुतिः। प्रियस्यापि तारतम्यविशेषद्योतको हिशब्दः। प्रियं द्विविधं अन्तर्बहिश्चेति। तत्रान्तःप्रियाः सन्तः, बहिःप्रिया असन्तः। अत्रापि कश्चन विशेषः। संहारहेतुत्वादसन्तः ईषदन्तः प्रिया इव स्थितिहेतुत्वात्सन्तो विशेषान्तः प्रिया इत्यतोऽधुनेति विशेषणम्। तदुक्तम्[1] - "अन्तः प्रियं बहिश्चेति द्विधा प्रियमुदाहृतम्" (षाड्गुण्ये) इत्यादि। देवादीनां शान्तत्वादिकम् "सुखान्तं प्राप्नुयुर्यस्माद्देवाः शान्ता उदीरिताः" (प्रकाशिकायाम्) इत्यादि स्मृतिसिद्धम्। अशान्ताः मानुषाः प्रोक्ताः मूढयोनयोऽसुरा इत्यर्थः। अवनादि कर्मप्रवर्तनं च प्राणमुखेनेत्याहुः स्थातुरिति। कर्मप्रवर्तनार्थं सर्वशरीरेषु स्थातुरीहतः "ईह चेष्टायाम्" इति धातुः। चेष्टकत्वमीहशब्दस्य प्रवृत्तिनिमित्तम्। अवनशब्दस्यापि तदेवात ईहतः प्राणस्य सकाशात् कर्मपरीप्सया कर्मपालनेच्छया पालनं प्रवर्तनं तदिच्छया प्राणस्य सकाशात् कर्मप्रवर्तन मिच्छति भगवानित्यतः समहाविभुरित्यर्थः। तदुक्तं "वायोः सकाशाज्जगतः प्रवृत्तिं कामायत्यज" (प्रकाशिकायाम्) इत्यादि, "प्राणस्य प्राणम्" (बृह.उ. 4-4-18) इति श्रुतिश्च शब्दगृहीता॥५०॥

सोढव्यः क्षन्तुमर्हसीति द्विर्वचनमादरार्थं स्वचापाल्यप्रकटनार्थं च शान्तानां देवानामात्मन्, स्वामिन् मूढस्येत्यस्य विवरणं त्वामजानत इति॥५१ - ५३॥

---

1. A,B omit तदुक्तम्

श्री[1] बादरायणिरुवाच[-1]

इत्थं स नागपत्नीभिर्भगवान्समभिष्टुतः।
मूर्च्छितं भग्नशिरसं विससर्जाङ्घ्रिकुट्टनैः॥५४॥

प्रतिलब्धेन्द्रियप्राणः कालियश्शनकैर्हरिम्।
कृच्छ्रात्समुच्छ्वसन्दीनः कृष्णं प्राह कृताञ्जलिः॥५५।

[-2]नाग उवाच[-2]

वयं खलास्सहोत्पत्त्या तामसा दीर्घमन्यवः।
स्वभावो दुस्त्यजो नाथ! भूतानां[3] यदसद्ग्रहः॥५६॥

त्वया सृष्टमिदं[4] सर्वं[5] धातर्गुणविसर्जनम्।
नानास्वभाववीर्यौजो योनिबीजाशयाकृतिः॥५७॥॥

**वयं च तत्र भगवन् ! सर्पा जात्योरुमन्यवः[6] ।**
**कथं त्यजामस्त्वन्मायां दुस्त्यजां मोहितास्त्वया[7] ॥ ५८ ॥**
**भवान् हि कारणं तत्र सर्वज्ञो[8] जगदीश्वरः[9] ।**
**अनुग्रहं निग्रहं वा मन्यसे तद्विधेहि नः ॥ ५९ ॥**

---

1- -1. A,B,G,J,M श्रीशुकउवाच 2- -2. A,G,V कालिय उवाच: B,J,M omit 3. A,B,G,J,M °त्यु° 3. A,B,G,J लोकानां 4. A,B,G,J,M विश्वं 5. M °तु° 6. A,B,G,J,M °त्यु° 7. A,B,G,J स्वयम्। ; M प्रभो। 8. M°ज्ञ! 9. M °र!

**श्रीध०** **वयमिति** यदसद्ग्रह इति। यतः स्वभावः असद्ग्रहरूपः। यद्वा यतः स्वभावात् असति देहादौ यो[1] ग्रहः[-1]। स दुस्त्यज इति ॥ ५४ - ५६ ॥

**त्वयेति**। गुणैर्विविधतया सृज्यत इति गुणविसर्जनम्। तत्रापि नानास्वभावादयो यस्य तत् ॥ ५७ ॥

**वयमिति**। जात्या जन्मनैव। उरुः मन्युर्येषां ते। वयं स्वयं[2] कथं त्यजामः ॥ ५८ ॥

**भवानिति**। हि यस्मात् तत्र त्वन्मायात्यागे भवानेव कारणमित्यनुग्रहं विधेहि ममाऽऽज्ञया खादतेति[3]। ईश्वरत्वान्निग्रहं वा। विधेहि इति[4] ॥ ५९ ॥

---

1- -1. A ग्रहोऽभिमानः, B,J ग्रहः 2. V omits स्वयं 3. A,B,J °दन्तीति 4. V omits इति

**वीर०** इत्थं[1] स भगवान् कृष्णः नागपत्नीभिरभिष्टुतः याचितश्च अङ्घ्रिसङ्घट्टनैः भग्नशिरसं मूर्च्छितं च कालियं विससर्ज ॥ ५४ ॥

ततः शनकैः प्रतिलब्धानीन्द्रियाणि प्राणाश्च येन तथाभूतः कालियः कृच्छ्रादत्यायासात् श्वासं मुञ्चन् कृताञ्जलिः हरिं प्राह ॥ ५५ ॥

उक्तिमेवाऽऽह — **वयमिति** त्रिभिः। वयमुत्पत्त्या सह उत्पत्तिप्रभृति खलाः दुष्टाः तामसाः दीर्घो मन्युर्येषां तथाभूताश्च, वयमिति तिर्यगभिप्रायेण निर्देशः, अत एव 'वयं च तत्र भगवन्' इत्यनेन अपौनरुक्त्यम्। हे नाथ! भूतानां स्वभावः औत्पत्तिको गुणः दुस्त्यजः यत् यतः स्वभावः असद्ग्रहः दुष्टपिशाचतुल्यः अतो दुस्त्यजः ॥ ५६ ॥

**त्वयेति**। हे धातः! गुणैर्विविधतया सृज्यत इति गुणविसर्जनमिदं तिरश्चां जालं त्वया सृष्टम्। कथम्भूतम्? नाना स्वभावादयो यस्य तथाभूतं, तत्र वीर्यं बलम्। ओजः प्रवृत्तिसामर्थ्यम्। योनिरुत्पत्तिक्षेत्रम्। बीजं कारणम्। आकृतिः संस्थानम् ॥ ५७ ॥

ततः किम्? अत आह - **वयं चेति**। हे भगवन्! तत्रापि तिरश्चां मध्येऽपि वयं सर्पाः जात्या जन्मनैव उरुर्मन्युः येषां तथाभूताः दुस्त्यजां त्वदनुग्रहमन्तरेण दुःखेनापि त्यक्तुमशक्यां त्वन्मायामोहिताः वयं[2] त्वन्मायां मायागुणरजःकार्यं क्रोधं कथं त्यजामः ॥ ५८॥

हि यस्मात् तत्र त्वन्मायात्यागे भवानेव कारणं, त्वं तु सर्वज्ञो निग्रहानुग्रहोचितज्ञानवान् जगदीश्वरः तदुचित सामर्थ्ययुक्तः, अतः त्वमनुग्रहं निग्रहं वा यत्[3] मन्यसे, त्वमेवं[4] कुर्विति नियन्तुं च अहं न प्रभुरिति भावः, तत् त्वदभिमतं नोऽस्मभ्यं विधेहि आज्ञापय॥ ५९॥

---

1. A,B एवं 2. A,B,W add कथं 3. W omits यत् 4. W ज्ञातुमेवं

**विज०** अङ्घ्रिकुट्टनैः अङ्घ्रिमर्दनैः ॥ ५४, ५५॥

यदसद्ग्रहो यो दुराग्रहः ॥ ५६॥

धातुः हिरण्यगर्भस्य सकाशात् गुणभूतं सर्जनं सृष्टिः अस्य जगतः प्रधान्येन विष्णोः एषा सृष्टिः "विष्णुः प्रधानतः स्रष्टा गुणस्रष्टा चतुर्मुखः" (नारदीये) इति वचनात् नानास्वभावा अग्नेरूर्ध्वज्वलनं, वायोस्तिर्यग्गमनम् इत्यादिनानाविधाः स्वभावाः। वीर्याणि पराक्रमादीनि, ओजोऽवष्टम्भः बीजं शुक्रादि, आशयः अभिप्रायः एषामाकृतिः स्वरूपं यस्य तत्॥ ५७ - ५९॥

**श्रीशुक उवाच**

**इत्याकर्ण्य वचः प्राह भगवान्कार्यमानुषः ।**
**नात्र स्थेयं त्वया सर्प समुद्रं याहि मा चिरम्॥**
**स्वज्ञात्यपत्यदाराढ्यो[1] भुज्यतां[2] गोनृभिर्नदी[3]॥ ६०॥**

**य एतत्संस्मरेमर्त्यस्तुभ्यं मदनुशासनम्।**
**कीर्तयन्नुभयोस्सन्ध्यो न युष्मद्भयमाप्नुयात्॥ ६१॥**

**योऽस्मिन्[4] स्नात्वा ह्रदे[5] मर्त्यो देवादींस्तर्पयेज्जलैः ।**
**उपोष्य[6] मां स्मरन्नर्चेत्[7] सर्वपापैः प्रमुच्यते॥ ६२॥**

दीपं रमणकं हित्वा ह्रदमेत[8]मुपाश्रितः ।
यद्भयात्स सुपर्णस्त्वां नाद्यान्मत्[9-]पाद लाञ्छनम्[-9] ॥ ६३ ॥

[10-]श्री शुक उवाच[-10]

[11-]एवमुक्तो भगवता[-11] कृष्णेनाद्भुतकर्मणा ।
तं पूजयामास [12]मुदा नागः [13-]पत्न्यश्च सादरम्[-13] ॥ ६४ ॥

दिव्याम्बर स्रङ्मणिभिः [14]परार्ध्यैरपि भूषणैः ।
दिव्यगन्धानुलेपैश्च महत्योत्पलमालया ॥ ६५ ॥

पूजयित्वा जगन्नाथं प्रसाद्य गरुडध्वजम् ।
[15]नागराजोऽभ्यनुज्ञातः [16-]परिक्रम्याभिवन्द्य[-16] तम् ॥ ६६ ॥

सकलत्र सुहृत्पुत्रो द्वीप[18]मब्धोर्जगाम ह ।
तदैव साऽमृतजला यमुना निर्विषाऽभवत् ॥
अनुग्रहाद्भगवतः क्रीडा[19]मनुज रूपिणः ॥ ६७ ॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां आष्टादश साहस्र्यां,
श्रीहयग्रीव ब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे पूर्वार्धे षोडशोऽध्यायः ॥ १६ ॥

---

1. M स° 2. A,B,G,J,M राढ्यो 3. M °ते 4. A अस्मिन् 5. A,B,G,J,K मडाक्रीडं, M. मनालीडे 6. K.V.W. वा 7. V °न्नर्चन् 8. M.V.W °दु° 9- -9. A,B,G,J पाडलञ्छितम्; V पदलाञ्छितम् 10- -10. V ऋषिरुवाच; W omits 11- -11 K.W उक्तो भगवता राजन्; V मुक्तो भगवतो राजन्! 12. K,W तदा 13- -13. पत्नीभिरादरम् । 14. B,J परार्ध्यै 15. A,B,G,J ततप्रीतोऽ° 16- -16. K क्रम्याभिवाद्य; M क्रम्यप्रणम्य 17. A,M च 18. A,M मध्ये ज° 19. A,B,G,J,K,W मानुष

**श्रीध०** इतीति । यतो गोभिर्नृभिश्च नदी भुज्यतामिति ॥ ६० ॥

**य इति** । तस्य युष्माभिः भयं नोत्पादनीयमित्याज्ञा ॥ ६१ ॥

इतोऽपि त्वया निर्गतव्यमित्याह - य इति । त्वयि स्थिते तन्न सम्भवतीति भावः ॥ ६२ ॥

न च तव गरुड भयं भवेदित्याह - दीपमिति ॥ ६३, ६७ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वमिविरचितायां भावार्थदीपिकायां
व्याख्यायां षोडशोऽध्यायः ॥ १६ ॥

---

1. A,B,J add न युष्मात्तो भयमायात् ।

**वीर०** कार्यमानुषः दुष्कृद्दमन साधु परित्राणात्मक कार्यार्थं मानुषः स्वेच्छोपात्तमनुष्याकृतिः इत्थं कालियस्य वच आकर्ण्य प्राह, उक्तिमेवाऽऽह [1-]नात्रेत्यादिभिः[-1] चतुर्भिः । हे सर्प ! अत्र ह्रदे त्वया न स्थयम्, किन्तु स्व ज्ञात्यादिभिस्सह माचिरमचिरात् समुद्रं याहि, नदी यमुना गोभिर्नृभिश्च भुज्यतां पीयताम् ॥ ६० ॥

तुभ्यं मत्कर्तृक दण्डनात्मकम् एतच्चरित्रं यः पुमान् उभयोस्सन्ध्ययोः संस्मरन् कीर्तयंश्च स्यात्, स युष्मत्तो भयं सर्पेभ्यो मृत्युभयं नाऽऽप्नुयादित्याज्ञान्तरम् ॥ ६१ ॥

मद्विहारस्थानेऽस्मिन् ह्रदे यः पुमान् स्नात्वा जलैः देवान् आदि शब्दात् पितॄन् ऋषींश्च तर्पयेत् उपोष्ये मां स्मरन् अर्चेच्य, स सर्वैः पापैर्मुच्यते इत्याज्ञान्तरम् ॥ ६२ ॥

ननु [2]सुपर्ण भयात् रमकाख्यं सामुद्र द्वीपं हित्वाऽस्मिन् ह्रदे प्रविष्टः पुन रितस्तत्र गतं मां गरुडोऽद्यात्, तत्राऽऽह द्वीपमिति । यस्य सुपर्णस्य भयात् एनं ह्रदं त्वमाश्रितः स सुपर्णः त्वां नाद्यात् तत्र हेतुः मत्पादलाञ्छनमिति ॥ ६३ ॥

हे राजन्! इत्थमुक्तो नागः तं कृष्णं पूजयामास, तथा नागस्य पत्न्यश्च सादरं दिव्याम्बरादिभिः पूजयामासुः । परार्थ्यैरनर्घैः, ततस्तं परिक्रम्य प्रदक्षिणीकृत्य अभिवाद्य च वक्त्रादिभिः सहितः अब्धोः दीपं रमणकाख्यं जगाम ॥ ६४ - ६६ ॥

क्रीडार्थं न तु कर्मफल भोगार्थम्, मानुषं रूपमस्यास्तीति तथा तस्य भगवतोनुग्रहात् तदैव सा यमुना निर्विषा अमृत तुल्य जला चाभवत् ॥ ६७ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां षोडशोऽध्यायः ॥ १६ ॥

---

1- -1. A,B नेति 2. A,B गरुड

**विज॰** देवकार्यार्थं मानुषविडम्बः ॥ ६० ॥

सन्ध्योः सन्ध्ययोः ॥ ६१ ॥

ममाऽऽक्रीडे क्रीडास्थाने ॥ ६२ ॥

त्वं पूर्वं यस्य सुपर्णस्य भयात् नाम्ना रमणकं द्वीपं हित्वा एतत् ह्रदमुपाश्रितः । अथ सुपर्णो मत्पादलक्षणं मत्पादलाञ्छनमिव लाञ्छनं यस्य स तथा तं च, त्वां नाद्यात् न भक्षयेत् ॥ ६३, ६४ ॥

परार्ध्यैरनर्घ्यत्वेनोत्तमैः ॥ ६५ - ६७ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
दशमस्कन्धे पूर्वार्धे षोडशोऽध्यायः ॥ १६ ॥
(विजयध्वजरीत्या चतुर्दशोऽध्यायः)

# सप्तदशोऽध्यायः

## (विजयध्वजरीत्या पञ्चदशोऽध्यायः)

### -: कालियस्य कालिन्दीह्रदागमन कारणोपन्यासः :-

राजोवाच

नागालयं रमणकं कस्मात्तत्याज कालियः ।
कृतं किंवा सुपर्णस्य तेनैकेनाऽसमञ्जसम् ॥ १ ॥

श्रीशुक उवाच

उपहार्यैः सर्पजनैः[1] मासि मासीह यो बलिः ।
वानस्पत्योह महाभागो नागानां प्राङ् निरूपितः ॥ २ ॥

स्व स्वं भागं प्रयच्छन्ति नागाः पर्वणि पर्वणि[2] ।
गोपीथायाऽऽत्मनः[3] सर्वे सुपर्णाय महात्मने ॥ ३ ॥

विषवीर्यमदाविष्टः काद्रवेयस्तु कालियः ।
कदर्थीकृत्य गरुडं स्वयं[4] तं बुभुजे बलिम्[5] ॥ ४ ॥

तच्छ्रुत्वा कुपितो राजन् गरुत्मान्[6] भगवत्प्रियः ।
विजिघांसुर्महावेगः[7] कालियं समुपाद्रवत् ॥ ५ ॥

---

1. K,W °र्व° 2. K,W कल्पिते 3. K,W °नां 4. M. स्वयं तां; V. स्वयन्तु 5. A, बली 6. A,B,G,J,M,K,W भगवान् 7. M वीर्य

### श्रीधरस्वामि विरचिता भावार्थदीपिका।

नागं सप्तदशे नागालयं तं निरयापयत्। ब[1-]न्धून् स्वदुःखितः[-1] श्रान्तान् सुप्तांस्तत्र दवादपात् ॥

नागेति। असमञ्जसभ् अप्रियम् ॥ १ ॥

उपहार्यैः भक्ष्यैः सर्पजनैः सर्पा[2]यत्तैः जनैः, वानस्पत्यः वनस्पतेर्मूले देयः नागानां तद्बाधापरिहाराय यो बलिः निरूपितः उपकल्पितः [3-]यद्वा उपहार्यैः सुपर्णभक्ष्यैः सर्पा एव जनाः तैः नागानां सम्बन्धी भागः यस्मिन् एकैको नागो दीयते तथा भूतो यो बलिः सुपर्णाय निरूपित इति[-3] ॥ २ ॥

**स्वमिति।** ते च नागाः स्वं स्वं भागं जनैः दत्तं सुपर्णाय प्रयच्छन्ति ततो भीताः गोपीथाय रक्षणाय[4]॥ ३॥

**विषेति।** विषवीर्याभ्यां यो मदः तेनाविष्टः काद्रवेयुः कद्रू पुत्रः कालियः[5] गरुडं कदर्थीकृत्य अविगणय्य [6]स्वं भागमदत्वा अन्यैः[-6] दत्तमपि तं बलिं स्वयमेव बुभुजे॥ ४,५॥

---

१- -1. V बन्धूश्च सखिनः 2. V यतैः 3- -3 अयं व्याख्यानांशः A,B,J प्रकाशेषु चतुर्थश्लोकव्याख्यायां योजितः। 4. V °का° 5. A,B,J omit कालियः 6- -6. A,B,J तत्र स्वं स्वं भागं सर्वे नागाः प्रयच्छन्ति कालियस्तु न प्रयच्छति किन्तु अन्यैः

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

यदुक्तम् — "द्वीपं रमणकं हित्वा ह्रदं एतमुपाश्रितः। यद्भयात्" (भाग. 10-16-63) इति। तत्र कालियस्य द्वीपत्यागनिमित्तस्य सुपर्णात् भयस्य निमित्तं बुभुत्सुः पृच्छति राजा **नागालयमिति।** नागालयमित्यनेन तद्द्वीपस्थानां नागानां न सुपर्णात्भयमस्ति इति सूचितम्। अत एव पृच्छति कृतमिति। तेन एकेन कालियेन स्वस्य भयनिमित्तं सुपर्णस्य असमञ्जसम् अप्रियं किं कृतम्? अन्येषु निर्भयेषु सत्स्वपि अनेन स्वभयनिमित्तं किं अप्रियं कृतम्, अन्येषां वा भयाभाव निमित्तं च किमिति प्रश्नार्थः॥ २॥

तावत् तत्रत्यानां नागानां सुपर्णात् भयाभावनिमित्तमाह **उपहार्यैरिति।** हे महाबाहो! प्राक् पुरा काले सर्वैः जनैः "सर्पो नो मा दशतु" इति तेषां यो बलिः उपहार्यैः भक्ष्यैः मासि मासि वानस्पत्यः, वनस्पतिः अपुष्पफलवृक्षः तन्मूले देयो वानस्पत्यः वनस्पति गते चन्द्रे अमावास्यायां प्रवर्तमानो वा, निरूपितः कल्पितः॥ २॥

तत्र सर्वे नागाः जनैः पर्वणि कल्पिते बलौ स्वं स्वं भागं आत्मनां गोपीथाय रक्षणार्थं, महात्मने सुपर्णाय प्रयच्छन्ति। अतस्तत्रत्यानां न गरुडात् भयमस्तीत्युक्तम्॥ ३॥

एवं सर्वेषु नागेषु प्रयच्छत्सु एष काद्रवेयः कद्र्वास्सुतः कालियस्तु विषवीर्याभ्यां यो मदस्तेनाऽऽविष्टः सुपर्णं कदर्थीकृत्य तुच्छीकृत्य अविगणय्य इति यावत् तं गरुडाय देयं बलिं स्व बलि भागं स्वयमेव बुभुजे॥ ४॥

हे राजन्! तत् कालियस्य कर्माऽऽकर्ण्य भगवतः प्रियो भगवान् गरुडः कालियं हन्तुमिच्छुः महावेगः समुपाद्रवत्॥ ५॥

## श्रीविजयध्वजतीर्थ कृता पदरत्नावली

असमञ्जसम् अपराधम्॥ १॥

उपहार्यैः उपहारकैः [1]गरुडादीनां पूजकैः अन्यजनेन पूज्यै र्वा। सर्प जनैः इह यो बलिः मासि मासि प्रतिमासं क्रियत इति शेषः। कीदृशः? वानस्पत्यः सोमे वनस्पतिं गते क्रियमाणः अमावास्यायां क्रियमाण इत्यर्थः। यद्वा वनस्पतौ क्रियमाणः स बलिः प्राङ् नागानामैकमत्येनात्मरक्षणार्थं निरूपित इत्यन्वयः॥ २॥

आत्मनः गोपीथाय गोपनाय आत्मरक्षणाय॥ ३॥

कद्रोरपत्यं काद्रवेयः जातिज्ञानार्थमिदमुक्तम्। कदर्थीकृत्य धिक्कृत्य तां बलिं पूजां बलिशब्दः पूजार्थः स्त्रीलिङ्गः "पूजायां स्त्री बलिर्दैत्य भेदे ना कर एव च" इति॥ ४॥

विजिघांसुः हन्तुकामः॥ ५॥

---

1. Ma omits गरुडादीनां

तमापतन्तं तरसा विषायुधः[1] प्रत्यभ्ययादुच्छ्रितनैकमस्तकः[2]।
दद्भिः सुपर्णं व्यदशद् ददायुधः[3] करालजिह्वोच्छ्वसितोग्रलोचनः॥ ६॥

तं तार्क्ष्यपुत्रस्सनिरस्य मन्युमान्[4] प्रचण्डवेगो मधुसूदनासनः।
पक्षेण सव्येन हिरण्यरोचिषा जघान कद्रूसुतमुग्रविक्रमः॥ ७॥

सुपर्णपक्षाभिहतः कालियोऽतीव विह्वलः।
ह्रदं विवेश कालिन्द्याः तदगम्यं दुरासदम्॥ ८॥

तत्रैकदा जलचरं गरुडो भक्ष्यमीप्सितम्।
निवारितस्सौभरिणा प्रसह्य क्षुधितोऽहरत्॥ ९॥

मीनान् सुदुःखितान् दृष्ट्वा दीनान् मीनपतौ हते।
कृपया सौभरिः प्राह तत्रत्यक्षेमम[5]माचरन्॥ १०॥

---

1. A नखायुधम् 2.A °दुत्थित; M °दुद्धृत 3. V ददा° 4. °ना प्र° 5. M तत्क्षे°

**श्रीध० तमिति**। विषमेवायुधं यस्य सः प्रत्यभ्ययात् योद्धुं प्रतिजगाम, उच्छ्रितनैकमस्तकः उन्नमितानेक फणः, रदायुधः[1] दन्तायुधः करालजिह्वश्चासौ उच्छ्वसितोग्रलोचनश्च उच्छ्वसितानि उज्जृम्भितानि उग्राणि लोचनानि यस्य सः॥ ६॥

**तमिति**। तार्क्ष्यपुत्रो गरुडः मधुसदनस्यासनं यस्मिन् सः॥ ७॥

**सुपर्णेति**। तस्य गरुडस्यागम्यं अगाधतया च दुरासदम्॥ ८॥

तदगम्यत्वे कारणान्तरमाह[2] — **तत्रेति**। निवारितोऽपि [3-]अहरत् अभक्षयत्[-3]॥ ९,१०॥

---

1. A,B,J द° 2. A,B,J °णमाह 3- -3. A,B,J omits

**वीर०** तमापतन्तं गरुडं विषमेव आयुधं यस्य स कालियः तरसा बलेन प्रत्यभ्यपतत्। दद्भिर्दन्तैः व्यदशत् दष्टवांश्च। कथम्भूतः ? उच्छ्रितान्युद्धृतानि[1] नैकान्यनेकानि मस्तकानि फणा येन, दन्ता एव आयुधानि यस्य करालजिह्वश्च[2-2] उच्छ्वसितोग्रलोचनश्च[3-3] उच्छ्वसितानि उच्छ्रितानि[4] उग्राणि लोचनानि यस्य सः ॥ ६ ॥

मधुसूदनस्यासनमुपवेशनं यस्मिन् सः उग्र विक्रमो यस्य प्रचण्डः वेगो यस्य सः। ताक्ष्यपुत्रो गरुडो मन्युमान्[5] तं कद्रूसुतं निरस्य इतस्ततः प्रक्षिप्य हिरण्यरोचिषा सव्येन वामेन पक्षेण जघान ताडितवान्॥ ७॥

सुपर्णस्य पक्षेणाभिहतः कालियः अतीव विह्वलः उद्विग्नः तेन सुपर्णेन अगम्यं गन्तुं अशक्यं, दुरासदमगाधत्वया अन्यैश्च दुष्प्रवेशं यमुनायाः ह्रदं विवेश[6] ॥ ८॥

कुतः तदगम्यमित्यत्र तत् कारणमाह - **तत्रेत्यादिभिः** त्रिभिः। तत्र ह्रदे कदाचित् गरुडः स्वाभीष्टं भक्ष्यं जलचरं मीनपतिं क्षुधितः, प्रसह्य बलादहरत् जहार। कथम्भूतः ? सौभरिणा ऋषिणा[7] निवारितोऽपि॥ ९॥

एवं मीनपतौ गरुडेन हृते सति सुतरां दुःखितान् दीनान्[8] मीनान् दृष्ट्वा सौभरिः कृपया तत्रत्यानां ह्रदस्थानां[9] जन्तूनां क्षेमं गरुडाद्भयाभावरूपमाचरन्[10] कुर्वन् प्राह॥ १०॥

---

1. V °द्ध° 2- -2. A,B °ला जिह्वा यस्य 3- -3. A,B omit 4. A,B, उदस्तानि 5. A,B क्रोधवान् 6. A,B add प्रविष्टवान् 7. A,B omit ऋषिणा 8. A,B omit दीनान् 9. A,B omit ह्रदस्थानां 10. A,B omit गरुडात्

**विज०** विषमेवाऽऽयुधं यस्य स तथा, उद्धतनैकमस्तकः उद्धृतानेकफणः दद्भिः दन्तैः व्यदशत् दंशितवान्। दन्ता एव आयुधं यस्य स तथा। करालजिह्वश्च उच्छ्वसितोग्रलोचनश्च तथा। उच्छ्वसितः दीर्घश्वासोपेतः उग्रे लोचने यस्य स तथा॥ ६॥

जघान अहनत्, आत्मपादैः ताडितवानित्यर्थः ॥७॥

कालिन्द्याः यमुनायाः तेन गरुडेन अगम्यं दुरासदं पक्ष्यादीनामिति शेषः ॥ ८॥

गरुडस्य अगम्यत्वे निमित्तमाह - **तत्रेति**। भक्ष्यत इति भक्ष्यम्॥ ९॥

तत्क्षेमं तेषां शिष्टानां क्षेमं योग्यरक्षाम्॥ १०॥

अत्र प्रविश्य गरुडो यदि मत्स्यान् स खादति।
सद्यः प्राणैः वियुज्येत[1] सत्यमेतद्ब्रवीम्यहम्॥ ११॥
तत्कालियः[2] परं वेद नाऽन्यः कश्चन लेलिहः[3] ।
अवात्सीत् गरुडाद्भीतः कृष्णेन च विवासितः॥ १२॥
कृष्णं ह्रदात् विनिष्क्रान्तं दिव्यस्रग् गन्धवाससम्[4]।
महामणिगणाकीर्णं जाम्बूनदपरिष्कृतम्॥ १३॥
उपलभ्योत्थितास्सर्वे लब्धप्राणा इवासवः[5]।
प्रमोदनिभृतात्मानो गोपाः प्रीत्याभिरेभिरे॥ १४॥
यशोदा रोहिणी नन्दो गोप्यो गोपाश्च कौरव।
कृष्णं समेत्य लब्धेहा आसन् लब्धमनोरथाः॥ १५॥

---

1. K,W °मुच्येत 2. A,B,G,J तं का° 3- -3. M कश्चित्स लेलिहा 4. M मण्डितम्। 5. A,M, इव। प्रजाः

**श्रीध०** **तदिति**। लेलिहः सर्पः। अतः तत्र अवात्सीत्॥ ११,१२॥

**कृष्णमिति**। जाम्बूनदं सुवर्णं तेनालङ्कृतम्॥ १३॥

**उपलभ्येति**। असवः इन्द्रियाणिप्रमोद निभृतात्मनः आनन्दपूर्णमनसः॥ १४॥

**यशोदेति**। लब्धेहाः लब्धचेष्टाः॥ १५॥

**वीर०** किम्? अत्र ह्रदे प्रविश्य यदि गरुडो मत्स्यान् खादति तर्हि स गरुडः सद्य एव प्राणैः वियुज्येत, एतदहं सत्यं ब्रवीमीति ब्राह्मणवाक्यस्य माननीयत्वात् परमपुरुषेणेव गरुत्मता तत्प्रतिघातशक्तिमतापि तस्यानुरोधः उपपद्यते॥ ११॥

तत् शापात्मकं सौभरेः वचः केवलं कालिय एव वेद तदन्यः कोऽपि लेलिहः[1] सर्पो न वेद। अतोऽयं गरुडात् भीतः तत्र ह्रदे अवात्सीत्। ततः कृष्णेन विवासितः निष्कासितश्चेति कालियदमनात्मकवृत्तान्तोपसंहारः॥ १२॥

अथ तत उपरितनं वृत्तान्तमाह - **कृष्णमिति** यावदध्यायसमाप्ति। दिव्यानि स्रग्गन्धवासांसि नागपत्नीभिः समर्पितानि यस्य तं महतां अनर्घाणां मणीनां गणैः आकीर्णं सर्वतः समलङ्कृतं जाम्बूनदेन सुवर्णेन अलङ्कृतं, ह्रदात् विनिर्गच्छन्तं कृष्णं उपलभ्याऽऽलक्ष्य लब्धप्राणाः असवः इन्द्रियाणीव सर्वे गोपादयः उत्थिताः ततः प्रमादेन निभृताः पूर्णा आत्मानो

देहाः मनांसि वा येषां तथा भूताः गोपाः प्रीत्या कृष्णमभिरेभिरे आलिङ्गितवन्तः ॥ १३,१४ ॥

यशोदादयो गोप्यो नन्दादयो गोपाश्च हे कौरव! कृष्णं समेत्य सङ्गत्य लब्ध चेष्टा [2]लब्धमनोरथाश्च बभूवुः ॥ १५ ॥

---

1. A,B °हानः 2. W बद्ध

**विज०** खादति भक्षति प्राणवियोगं मरणमाप्नोतु॥ ११॥

लेलिहा लेलिहानः सर्पः। छन्दोभङ्गभयादेवमुक्तम्। गरुडात् भीत्यैव अवात्सीत्, सौभरेः शापातिक्रमणसमर्थेन तेन किमर्थं ह्रदं प्रविश्य हननं न कारीति इयं आशङ्का। "विष्णुना विष्णु भक्तैश्च ब्रह्मशापोऽनुवर्त्यते। ब्राह्मणानामपीडायै बलिभिः क्षत्रियादिभिः"॥ (ब्रह्माण्डे) इत्यादि ब्रह्माण्डवचनेन निस्तुर्षा कर्तव्या। एतद्विवक्षया वा लेलिहेत्युक्तम्॥ १२,१३॥

उपलभ्य दृष्ट्वा, प्रमोदनिभृतात्मनः आनन्दपूर्णात्मानः, अभिरेभिरे आलिङ्गनं चक्रुः। अभीत्युपसर्गात् मुख्यामुख्यभेदो द्रष्टव्यः॥ १४॥

लब्धेहाः लब्धचेष्टाः पूर्वं शवप्राया इत्यर्थः॥ १५॥

**रामश्चाच्युतमालिङ्ग्य जहासास्यानुभाववित्।**
**★ प्रेम्णा तमङ्कमारोप्य पुनः पुनः रुदैक्षत।**
**[1-]नगा गावो[-1] वृषा वत्साः लेभिरे परमां मुदम्॥ १६॥**

**नन्दं विप्रास्समाग[2]म्य गुरवः सकलत्रकाः।**
**ऊचुस्ते कालियग्रस्तो दिष्ट्या मुक्तस्तवात्मजः॥ १७॥**

**△ यशो[3]दा च महाभागा नष्टलब्धप्रजासती।**
**परिष्वज्याङ्कमारोप्य मुमोचा[4-]श्रुकणान् बहून्[-4]॥ १८॥**

**★ ततश्चास्तङ्गते भानौ कृष्णो वासमकल्पयत्।**
**सरामस्सह गोपा[5]लैः मात्रा पित्रा सगोधनः[6]॥ १९॥**

**तां रात्रिं तत्र राजेन्द्र क्षुत्तृड्भ्यां श्रमकर्शिताः।**
**ऊषुर्व्रजौकसो गावः कालिन्द्याः उपकूलतः॥ २०॥**

---

★ This extra half verse is found in K,W editions only and the same is commented by Sri Veera Raghava
1- -1. A नरा नार्यो 2. A,B,G,J °गत्य; K,W °साद्य △ देहि दानं द्विजातीनां कृष्णनिर्मुक्ति हेतवे। नन्दः प्रीतमनाः राजन् गाः सुवर्णं तदादिशत्। The above extra verse is found in A,B,G,J editions. 3. A,B,G,J °दाऽपि 4- -4. A,B,G,J कलां मुहुः
★ It is not found in A,G,J editons 5. V ° ल: 6. B,M °नैः

**श्रीध०** **राम** इति। नागाः वृक्षाः अपि पूर्वं शुष्कास्सन्तः सद्य एव विरूढा इत्यर्थः॥ १६॥

**नन्दमिति**। ते विप्राः ऊचुः॥ १७॥

**यशोदेति**। नष्टलब्धप्रजा, नष्टप्राया पुनर्लब्धा प्रजा यया सा॥ १८,१९॥

**तमिति**। श्रमेण च कर्शिताः उपकूलतः कूलप्रान्ते॥ २०॥

**वीर०** रामस्तु कृष्णमालिङ्ग्य अस्य कृष्णस्य प्रभावं जानन् केवलं जहास हसितवान् ततस्तं कृष्णं अङ्कमारोप्य पुनः पुनः प्रीत्या [1]उदैक्षत समवैक्षत। नगादयः परमां मुदं लेभिरे। तत्र नगाः वृक्षाः वृक्षा अपि पूर्वं[2] शुष्कास्सन्तः पुनः फलपुष्पादिभिः विरूढा इत्यर्थः॥ १६॥

सभार्याः विप्राः नन्दं समेत्य कालियेन ग्रस्तः तवात्मजो मुक्तः तस्मात् विमुक्तः किल, दिष्ट्या अयं महानानन्दः [3]इत्यूचुः॥ १७॥

नष्टप्राया पुनर्लब्धा प्रजा पुत्रो यया सा सती यशोदा सुतं परिष्वज्य अङ्कमारोप्य च बहूनानन्दाश्रुकणान् मुमोच॥ १८॥

ततः तां रात्रिं तत्र यमुनायाः तीर एव व्रजौकसः [4]गावश्च ऊषुः उषितवन्तः। कथम्भूतः? क्षुतृड्भ्यां श्रमेण च कर्शिताः॥ १९, २०॥

---

1 K,W omit उदैक्षत 2. K,W °र्व° 3. K,W omit इत्यूचुः 4. K,W omit गावश्च

**विज०** नष्टा च लब्धा च प्रजा यस्याः सा तथा। अश्रुकणान् बाष्पबिन्दून्॥ १६ - १९॥

क्षुतृड्भ्यां उत्पन्नश्रमेण कर्शिताः अभिभवं प्राप्ताः उपकूलतः कूलसमीपे॥ २०॥

★ **एतस्मिन्नेव काले तु व्रजे कौरवसत्तम!**
**[1-]तदाऽऽशु विपिनोद्भूतो[-1] [2]दवाग्निः [3-]सर्वतो व्रजम्[-3]।**
**[4]सुप्तान्निशीथ [5]आवृत्य प्रदग्धुमुपचक्रमे॥ २१॥**

### -: दावाग्नितः गोपसंरक्षण घट्टः :-

तत उत्थाय सम्भ्रान्ता दह्य[6]माना व्रजौकसः ।
कृष्णं ययुस्ते शरणं मायामनुजमीश्वरम् ॥ २२ ॥

कृष्ण कृष्ण महाभाग! हे रामाऽमित विक्रमः ।
एष घोरतमो वह्निः तावकान् ग्रसते हि नः ॥ २३ ॥

सुदुस्तरात्स्वान्नः पाहि कालाग्नेः सुहृदः प्रभो ।
न शक्नुमस्त्वच्चरणं सन्त्यक्तुमकुतोभयम् ॥ २४ ॥

इत्थं स्वजनवैक्लव्यम् निरीक्ष्य जगदीश्वरः ।
तमग्निमपिब[7]त्तीव्रम् अनन्तोऽनन्तशक्तिधृ[8]त् ॥ २५ ॥ ★

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीव ब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे पर्वार्धे
दावाग्निमोचनं नाम सप्तदशोऽध्यायः ॥ १७ ॥

(श्री विजयध्वजरीत्या पञ्चदशोऽध्यायः ॥ १५ ॥)

---

★ This extra half verse is not found in A,G,J,K,V,W editons 1- -1. B,G,J तदा शुचि वनोद्भूतो; M. घोरः शुचि बलोद्भूतो; V. तदाऽऽशु विपिनोद्भूतो 2. A,B,G,J,M दावा° 3- -3. K,W परितो व्रजम्; M. सर्वतो वृतः 4. A,B,G,J,V सुप्तं नि° 5. W. आसाद्य 6. A.W मानुष° 7. A,K, °च्छीघ्रं 8. A,B,G,J,M °क् श्री विजयध्वजीयव्याख्यारीत्या अस्यैकाध्यायस्य (15) अन्तिमः श्लोकः (27) 'अथ कृष्णः' इत्यारभमाणः श्रीधरीयवीरराघवीयव्यारव्ययोः (तद्रीत्या) अष्टादशाध्याये प्रथमश्लोकत्वेन स्वीकृतः

**श्रीध०** कालाग्नेः मृत्युरूपादग्नेः न मृत्योर्बिभीमः । किन्तु त्वच्चरणवियोगादित्याहुः न शक्नुम इति ॥ २१ - २५ ॥

★ विमोहा नहि दण्डेन ततस्त्व[1]च्छरणं गतान् । गोपानपादनन्तोऽसावनन्त वनवह्नितः ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां सप्तदशोऽध्यायः ॥ १७ ॥

---

★ श्रीधरीयोऽयं श्लोकः 1. A,B,J °स्त्वं शरणा ग°

**वीर०** तदा रात्रौ अरण्य प्रभवो दवाग्निः निशीथे सुप्तं व्रजं व्रजस्य परित आवृत्त्य प्रदग्धमुपाक्रान्तवान्॥ २१॥

ततो दवाग्निना दह्यमानाः व्रजौकस उत्थाय सम्भ्रान्ताः व्याकुलचित्ताः मायया आत्मीय सङ्कल्पेन मनुजं साक्षादीश्वरं कृष्णं शरणं ययुः। रक्षणोपायत्वेन अध्यवसितवन्तः॥ २२॥

शरणयानप्रकारमेवाऽऽह — **कृष्ण कृष्णेति** द्वाभ्याम्[1]। तावकान् त्वदेकरक्षान् नः अस्मान् एष वह्निः ग्रसते॥ २३॥

स्वान् स्वकान् सुहृदो नः अस्मान् सुदुस्तरात् कालाग्नेः प्रलयाग्नितुल्यात् दवाग्नेः पाहि हे प्रभो! नास्ति कुतोऽपि भयं यस्मात् तं तव चरणं सन्त्यक्तुं न शक्नुमः। न वयं मृत्योः बिभीमः अपि तु त्वच्चरणवियोगादिति भावः॥ २४॥

स्वजनानां वैक्लव्यं निरीक्ष्य अनन्तशक्तिधृत्[2] हेतुगर्भमिदम्। तत्त्वात् [3-]जगदीश्वरः कृष्णः[-3], शीघ्रं तमग्निं अपिबत्॥ २५॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां सप्तदशोऽध्यायः॥ १७॥

---

1. K,W omit द्वाभ्याम् 2. A,B °क् 3- -3. W omits

**विज०** शुचिः पवनः तस्य बलेनोद्धूतः शुचि नाम्नो मरुतो बलेन वा। वृतः परिवेष्टितः। निशीथे अर्धरात्रे। अनन्तशक्तिधृक् अनियतशक्ति धृक्॥ २१ - २५॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां
व्याख्यायां सप्तदशोऽध्यायः॥ १७॥
(विजयध्वजरीत्या पञ्चदशोऽध्यायः)

# अष्टादशोऽध्यायः

## (विजयध्वजरीत्या षोडशोऽध्यायः)

### -: ग्रीष्मर्तु वर्णन प्रारम्भः :-

श्रीशुकउवाच

★ अथ कृष्णः परिवृतो ज्ञातिभिर्मुदितात्मभिः[1]।
अनुगीयमानो न्यविशद्व्रजं गोकुलमण्डितम्[2]॥ १॥

व्रजे विक्रीडतोरेवं गोपालच्छद्ममायया[3]।
ग्रीष्मो नामर्तुरभवन् नातिप्रेयान् शरीरिणाम्[4]॥ २॥

स च बृन्दावनगुणैर्वसन्त इव लक्षितः।
यत्राऽऽस्ते भगवान् साक्षाद्रामेण सह केशवः॥ ३॥

यत्र निर्झरनिर्ह्राद निवृत्तस्वनझिल्लिकम्।
शश्वत्तच्छीकरै[5] जुष्ट द्रुममण्डल[6]मण्डितम्॥ ४॥

सरित्सरः प्रस्रवणोर्मिवायुना कह्लारकञ्जोत्पलरेणु हारिणा।
न विद्यते यत्र वनौकसां दवो निदावहन्यर्क भवोऽतिशाड्वले[7]॥ ५॥

---

* This verse has been added at the end of 15th adhyayh according to Vijayadwajiya, and which is 17th adhyaya according to the other commentaries. 1. A बन्धुभिः 2. V °तः। 3. A,M. रूपिणोः 4. M °णः। 5. A,B,G,J °र्जीष 6. M पिप्पल 7. A,V °ड्वले

## श्रीधरस्वामिविरचिता भावार्थदीपिका

अष्टादशो ततो ग्रीष्मे वसन्त गुणलक्षिते। अघातयद्बलेनालं प्रलम्बं लीलय हरिः॥
कृत्वा नृत्यं फणाग्रेषु कलियस्य सकौतुकम्। बलं प्रलम्बतुङ्गां समारोहयदमित्र[1] हा॥
व्रज इति। गोपालच्छद्ममायाया गोपालनमेव च्छद्म यस्यां तया माय्या[2]॥ १ - ३॥

वसन्तसाम्यमाह — चतुर्भिः **यत्रेति।** यत्र ग्रीष्मेऽपि निर्झराणां निर्हृदिन घोषेण निवृत्तस्वनाः च्छन्नध्वनयः झिल्लिकाः कठोरध्वनयः[3] सूक्ष्मकीटा यस्मिन्। तथा भूतं बृन्दावनं भवति। किञ्च, शश्वत्तेषां निर्झराणां शीकरैः अम्बुकणैः, जुष्टाः[4] स्निग्धाः ये द्रुमास्तेषां मण्डलैर्मण्डितम्॥ ४॥

**सरिदिति।** यत्र ग्रीष्मे वने वा निदाघो ग्रीष्मः, तेन तत्कालीन वह्न्यर्काभ्यां च भवति यो दवः तापः अतिशाद्वले[5] अतिहरित तृणाकीर्णे। यद्वा अतिक्रान्तः शाद्वलेऽपि स्थाने॥ ५॥

---

1. A,B,J °दरातिहा 2. V omits मायया 3. A,B,J ध्वनिसू° 4. A,B,J ऋजीषाः 5. V °ड्व°

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ बलदेव कृतं कृष्णकारितं प्रलम्बासुरवधात्मकं कर्मानुवर्णयति अष्टादशेन, तावत्तदुपोद्धातत्वेन काश्चित् पौगण्ड क्रीडाः तदुपयुक्तं वनं कालं च अनुवर्णयितुं तावत् वृत्तेन सङ्गमयितुं[1] वृत्तशेष माह — **अथेति।** अथ तद्रात्रि व्यतिक्रमानन्तरं मुदिता आत्मानो मनांसि येषां तैः ज्ञातिभिः गोपैः अनुगीयमानो भगवान् गवां समूहेन मण्डितं व्रजं प्राविशत्॥ १॥

गोपालच्छद्म गोपाल इति व्याजो यतः तया मायया आत्मसङ्कल्पेन इत्थं व्रजे सम्यक् क्रीडतोः सतोः रामकृष्णयोरिति शेषः। ग्रीष्माख्यः ऋतुः प्रवृत्तः अनेनोक्ताः क्रीडा वासन्तिका इति सूचितम्॥ २॥

स च यद्यपि शरीरिणां नातीव सुखकरः तथापि बृन्दावनस्य गुणैः वसुन्तर्तुतुल्यो बभूव।[2] के ते गुणाः ? यैः वसन्त इव लक्षितः ऋतुधर्मम् अतिक्रम्यापि कुत स्तस्य ते गुणा इत्यत्राह — यत्रेति। यत्र[3] साक्षात् भगवान् केशवो रामेण सह आस्ते[2]। भगवदावासप्रभावेन गुणव्यत्यय इति भावः। यत्र बृन्दावने भगवान् आवासस्तस्य गुणैरित्यन्वयः॥ ३॥

ग्रीष्मस्य वसन्त तुल्यतां ख्यापयितुं बृन्दावनगुणाननुवर्णयति **यत्रेति।** यत्र शब्दानां बृन्दावन सहचरिते ग्रीष्मऋतावित्यर्थः। निर्झराणां घोषेण निवृत्तस्वनाः छन्नध्वनयः झिल्लिकाः कठोरध्वनयः सूक्ष्मकीटविशेषाः। यस्मिन् तथा भूतं बृन्दावनं अभवदित्यर्थः। किञ्च शश्वत् सदा तेषां निर्झराणां शीकरैः अम्बुकणैः। जुष्टाः स्निग्धाः ये द्रुमाः तेषां मण्डलैः मण्डितम्॥ ४॥

**सरिदित्यादि।** सरितां सरसां प्रस्रवणानां निर्झराणां च ये ऊर्मयः तेषां सम्बन्धिना वायुना कह्लारादीनां रेणून् हरतीति तथाभूतेन यत्रातिशाद्वले अतिहरित तृणाकीर्णे अतिक्रान्तशाद्वलेपि वा निदाघो ग्रीष्मस्तेन तात्कालिक वह्न्यर्काभ्यां च भवति यो दव स्तापः स वनौकसां न विद्यते॥ ५॥

---

1. A,B उप° 2- -2. W omits 3. A,B omit यत्र

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

हरेः भूभार हरणस्य यदन्तरङ्गं कर्तुं अवतीर्णं शेषेण तद्वक्तुमपक्रमते - **व्रज** इत्यादिना। गोपालच्छद्मरूपिणोः गोपालाविति कपटशब्दिनोः "रूपं शब्दे पशौ श्लोके ग्रन्थावृत्तौ सितादिषु। सौन्दर्ये च स्वभावे च" (वैज. को. 6-3-28) इति यादवः। नातिप्रेयान् नातिप्रियतरः धर्महेतुत्वात्॥ १- ३॥

वसन्ततुल्यत्वे निमित्तमाह - **यत्रेति**। यत्र बृन्दावने निर्झरस्य निह्रदिन शब्देन निवृत्तस्वनाः प्रतिष्टध्वस्वराः झिल्लिकाः कीटविशेषाः यस्मिन् तत्तथा तस्य निर्झरस्य शीकरैः वायुशीर्णवारिबिन्दुभिः॥ ४॥

सरित् नदी सरो देवखातः एतयोः प्रस्रवणं निर्झरं ऊर्मिस्तरङ्गः एतत्सम्बन्धिवायुना च कल्हारं सौगन्धिकं कञ्जं पद्मं, उत्पलं नीलोत्पलं एषां रेणुभिः परागैः हारिणा मनोहरेण यद्वा रेणूनां हारो हरणं अस्यास्तीति हारी तेन निदाघवह्न्यर्केभ्यो भवः उत्पत्तिः यस्य स तथा दवस्तापः -'दवपरिताप' इति धातुः, अचू प्रत्यये एतत्सिध्यति। वनाग्निरित्यर्थाङ्गीकारे वन्हीत्येतद्वचर्थं भवति। अतिशाद्वले कोमलतर तृणोपेते॥ ५॥

**अगाथ तोय ह्रदिनी तटोर्मिभिः[1] द्रवत्पुरीष्याः[2] पुलिनैः समन्ततः।**
**न यत्र चण्डांशुकराविषोल्बणा भुवो रसं शाद्वलितं[3] विगृह्णते[4]॥ ६॥**

**वनं कुसुमितं श्रीमत् नदच्चित्रमृगद्विजम्।**
**गायन्मयूरभ्रमरं कूजत्कोकिलसारसम्॥ ७॥**

**क्रीडिष्यमाणः कत्कृष्णे भगवान् बलसंयुतः।**
**वेणुं विरणयन् गोपैर्गोधनैः संवृतोऽविशत्॥ ८॥**

**प्रवाल बर्हस्तबकः स्रग्धातुकृत भूषणाः।**
**रामकृष्णादयोगोपा ननृतुर्युयुधुर्जगुः॥ ९॥**

**कृष्णस्य नृत्यतः केचित् जगुः केचिदवादयन्।**
**वेणुपाणितलैः[5] शृङ्गैः प्रशशंसुरथापटे॥ १०॥**

---

1. M तटेरुहैः 2. M °त्पुलिन्याः ; K. W त्पुरीषैः 3. A,M °ह्व° 4. A,B,G,J च गृ° M निगृ° 5. M वेणुं

**श्रीध०** ननु शाद्वलमेव[1] कुतस्त्यम्? तत्राह — **अगाधेति**। अगाधानि तोयानि यासां तासां ह्रदिनीनां तटस्पर्शिभिः[2] ऊर्मिभिः पुलिनैस्सह द्रवत् पुरीषं पङ्को यस्या तस्याः भुवः रसं शाद्वलितं[3] शाद्वलरूपतां[4] च विषवदुल्बणाऽपि सूर्यरश्मयो न विगृह्णते[5] न हरन्ति॥ ६॥

**वनमिति**। तद्वनम् [6-]अविशदित्युत्तरेणान्वयः[-6]। नदन्तः चित्राः मृगाः द्विजाश्च यस्मिन्, गायन्तो मयूराः भ्रमराश्च यस्मिन्, कूजन्तः कोकिलाः सारसाश्च यस्मिन् तत्॥ ७॥

**क्रीडिष्यमाण** इति। तद्वनम्[7] अविशत्॥ ८ - १०॥

1. V °द्ध° 2. B स्पर्शिनीभिः 3. V °द्ध° 4. V °द्ध° 5. A,B,J omit वि 6- -6. V omits 7. A,B,J omit वनम्

**वीर०** ननु शाद्वलमेव कुतः तत्राह — **अगाधेति**। अगाधानि तोयानि यासां तासां ह्रदिनीनां तटस्पर्शिभिः ऊर्मिभिः हेतुभिः पुलिनैस्सह द्रवत् पुरीषं पङ्को यस्याः तस्याः भुवः रसं शाद्वलितं शाद्वलरूपतां च विषवदुल्बणा अपि सूर्यस्य रश्मयो, यत्र न विगृह्णते न हरन्ति, आशुतरव्याप्तौ विषदृष्टान्तः, तद्वन माविशत् इत्युत्तरेणान्वयः ॥ ६ ॥

श्रीमत् फलकिसलयादिसमृद्धिमत् भगवदावासत्वात् लक्ष्मीवद्वा, नदन्तश्चित्रा मृगा द्विजाः पक्षिणश्च यस्मिन्, गायन्तो मयूराः भ्रमराश्च यस्मिन्, कूजन्तः कोकिलाः सारसाश्च यस्मिन् तत् ॥ ७ ॥

एवम्भूतं वनं[1] भगवान् कृष्णः क्रीडिष्यमाणो बलदेवेन संयुतः वेणुं विशेषेण रणयन् नादयन् गोपैः गोधनैश्च संवृतः प्राविशत् ॥ ८ ॥

ततः प्रवालादिभिः कृतानि भूषणानि यैः तथा भूताः रामकृष्णादयो गोपाः ननृतुः, युयुधुः मिथो बाहुभिः, जगुश्च ॥ ९ ॥

तत्र कृष्णस्य नृत्यतः सतः केचिद्गोपाः जगुः केचिच्च वेण्वादिभिः अवादयन्, केचिच्च प्रशशंसुः ॥ १० ॥

1. K,W omit वनं

**विज०** विषवदुल्बणाः चण्डांशुकराः सूर्यरश्मयः, यत्र शाद्वलितं बालतृणनिबिडं भुवो गतं रसं जलं न निगृह्णते। किं कारणमत्राह — **अगाधेति**। अगाधं तोयं यस्याः सा अगाधतोया सा च ह्रदिनी नदी तत्तस्याः तटेरुहैः तीरजातैः; वृक्षैः समन्ततः द्रवन्त्यः स्यन्दमानायाः पुलिन्याः विभक्त नद्याः शाखाद्य इत्यर्थः। पुलिनैः निमित्तैः सर्वदा द्रवीभूत स्थलत्वादित्यर्थः ॥ ६,७ ॥

विरणयन् विविधैः स्वरैः ध्वनयन् कृष्णः तद्वनमविशत् इत्यन्वयः ॥ ८ ॥

धातुर्गैरिकः ॥ ९,१० ॥

**गोपजाति प्रतिच्छन्नौ[1] देवा गोपाल रूपिणः।**
**ईडिरे कृष्ण रामौ च नटा इव नटं नृप ॥ ११ ॥**
**भ्रामणैर्लङ्घनैः[2] क्षेपैः आस्फोटनविकर्षणैः।**
**चिक्रीडतुर्नियुद्धेन काक पक्ष धरावुभौ[3] ॥ १२ ॥**
**क्वचिन्नृत्यत्सुचान्येषु गायकौ वादकौ स्वयम्।**
**शशंसन्तुर्महाराज साधुसाध्विति वादिनौ ॥ १३ ॥**

**क्वचित्कुम्भैः क्वचित्बिल्वैः क्वचामलकमुष्टिभिः[4] ।**
**अस्पृश्यनेत्र बन्धाद्यैः क्वचिन्मृगखगेहया ॥ १४ ॥**

**क्वचिच्च दर्दुरप्लावैः विविधैरुपहासकैः ।**
**कदाचिद्[5]आन्दोलिकया[6] कर्हिचिन्नृपचेष्टया ॥ १५ ॥**

1. A,B,J,V °त्वा 2. V °भ्र° 3. A,B,G,J,K,W धरौक्वचित् 4. K,W शुक्तिभिः 5. M कचित्तथान्दो° 6. A,B,G,J °चित्स्पन्दो°

**श्रीध० भ्रमणैरिति।** काक पक्षाः चूडाकरणात् प्राक्तनकेशाः [1]भ्रमणादिप्रकारैः नियुद्धेन बाहुयुद्धेन चिक्रीडतुः ॥ ११ - १३ ॥

**क्वचिदिति।** कुम्भैः कुम्भ वृक्षफलैः अस्पृश्यत्वं, नेत्रबन्धश्च तदाद्यैः मृगाणां खगानां च चेष्टया ॥ १४ ॥

**क्वचिदिति।** दर्दुरप्लावैः मण्डूकप्लुतिभिः [2]आन्दोलिकया [3]दोलालम्बनेन नृपाणामिव लीलया ॥ १५ ॥

1. A,B,J भ्रा° 2. A,B,J स्पन्दो° 3. V डो°

**वीर०** गोपजातिप्रतिच्छन्नौ साक्षादीश्वरावतार भूतौ रामकृष्णौ गोपालरूपिणो देवा ईडिरे तुष्टुवुः हे नृप! नटं नटा इव ॥ ११ ॥

भ्रामणादिभिः नियुद्धेन बाहुयुद्धेन च, काकपक्ष धरौ रामकृष्णौ क्वचित् चिक्रीडतुः काकपक्षा चूडाकर्मणः प्राक्तनकेशाः । तत्र भ्रामणं नाम जिघृक्षतः प्रतिद्वन्द्वि जनादात्मानं कौशलेन वञ्चयता परितः तत्सञ्चारणं, लङ्घनमासन्नस्य प्राप्त स्वग्रहणस्य वञ्चनार्थं लाघवेनेतस्ततो वल्गनं, स्वगृहीतस्य भूमौ पातनं क्षेपः, करतलैः भुजैः व्याघात अस्फोटनं बलपरीक्षार्थं अन्योन्यं आकर्षणं विकर्षणम् ॥ १२ ॥

क्वचिदन्येषु गोपेषु नृत्यत्सु सत्सु स्वयं गायकौ वादकौ च भूत्वा हे महाराज! साधु साध्विति वदन्तौ [1] प्रशशंसतुः ॥ १३ ॥

क्वचिद्बिल्वादिभिः इत्येवं लोकप्रसिद्धाभिः बालक्रीडाभिः रामकृष्णौ विचेरतुः, सञ्चरितवन्तौ [2-]इति त्रयाणामन्वयः[-2] । कुम्भो नाम वृक्ष विशेषः, तस्य फलैः गुच्छैरिति पाठान्तरम् । आमलकैः शुक्तिभिः कालिन्दीपुलिनगत मुक्तास्फोटैश्च अस्पृश्यं, आवां मिथो न स्पृश्यविति, भाषाबन्धनेन तदनुकूलं कर्म, नेत्रबन्धः आगमिष्यतो नामकथनार्थं पाणिभ्यां कस्यचिन्नेत्र प्रच्छादनम् । मृगाणां खगानां चेहया तत्सजातीयचेष्टया दर्दुरप्लावैः मण्डूकप्लुतिभिः उपहासकैः परिहासक वाक्यैः आन्दोलिकया तदाकारदोलालम्बनेन नृपाणा मिव लीलया च ॥ १४,१५ ॥

1. A,B add सन्तौ 2- -2. K,W omit

**विज०** भ्रामणैः मण्डलाकारेण तिर्त्तिरैः लङ्घनैः दशपदान्युत्पतनैः क्षेपैः आक्षेप वचनैः पाषाणक्षेपणैर्वा। आस्फोटनैः एकं हस्तं द्विगुणीकृत्येतरेण पाणिनाऽऽस्फालनानि आस्फोटनानि तैः परस्परैः पाणिना पाणिम् अवलम्ब्य आकर्षणं विकर्षणं नियुद्धेन मल्लयुद्धेन काकपक्षधरौ अकृतचौलकेशधरिणौ त्रिवृत्कृतवेणीधारिणावित्यर्थः ॥ ११,१२ ॥

कुम्भैः कुम्भफलैः वर्तुलाकारैः। "कुम्भोलूखलकेक्लीबे कौशिको गुग्गुलः पुमान् (अम.को. 2-80) इत्यमरः। पृष्ठतो धावनात्स्प्रष्टुमशक्यं त्वं मां स्पृशेत्युक्त्वा पुरतो लीलया धावतीति यत्तदिदमस्पृश्यक्रीडनम्। वस्त्रेणनेत्रमाच्छाद्य मां स्पृशेतिनिगद्य तं मुक्त्वा पुरतो भ्रमणं नेत्र बन्धलीला। दूरान्तर प्रदेशे स्थितं वृक्षं लक्षीकृत्योभाभ्यां प्राक् वृक्षस्य स्पर्शी विजयी स्यादितीयं क्रीडाधावन संज्ञेत्यादिकमादिपद गृहीतम्॥ १३ ॥

दर्दुरप्लावैः मण्डूकवत् उत्पतनैः ॥ १४ ॥

दोणीनिम्नसानुस्थलं अन्तर्लता निबिडो ह्रस्वादिकुञ्जः "निकुञ्ज कुञ्जौ वा क्लीबे लतादिपिहितोदरे" (अम.को. 2-46) इत्यमरः ॥ १५ ॥

**एवं तौ लोकसिद्धाभिः क्रीडाभिश्चेरतुर्वने।**
**नद्यद्रिद्रोणिकुञ्जेषु काननेषु[1] सरस्सु[2] च ॥ १६ ॥**

**पशूंश्चारयतोर्गोपैः तद्वनेरामकृष्णयोः।**
**गोपरूपीप्रलम्बोऽगात् असुरस्तज्जिघांसया[3] ॥ १७ ॥**

**-: प्रलम्ब वध घट्टः :-**

**तं विद्वानपि दाशार्हो भगवान् सर्वदर्शनः।**
**अन्वमोदततत्सख्यं वधं तस्य विचिन्तयन् ॥ १८ ॥**

**तत्रोपाहूय[4] गोपालान् कृष्णप्राह विहारवित्।**
**हे गोपा विहरिष्यामो द्वन्द्वीभूय यथा यथम् ॥ १९ ॥**

**तत्र चक्रुः परिबूढौ[5] गोपा रामजनार्दनौ।**
**कृष्णसंघट्टिनः केचित् आसन्[6] रामस्य चापरे ॥ २० ॥**

---

1. M पुलिनेषु 2. A,K,W सरित्सु 3. A,B,G,J,V °जिहीर्षया 4. M.V °प° 5. A,B,G,J,M °वृ° 6. M गोपाः

**श्रीध०** एवमिति। नद्यः अद्रिद्रोणयः कुञ्जानि च एषु[1] ॥ १६ ॥

**पशूनिति।** चारयतोस्सतोः तद्वने तस्मिन् वने तयोः जिहीर्षया॥ १७,१८॥

**तत्रेति।** यथायथं वयो बलाद्यनुरूपं द्वन्द्वीभूय॥ १९॥

**तत्रेति।** परिवृढौ नायकौ। तत्र केचन श्रीकृष्ण संघट्टिनः श्रीकृष्ण पक्षीयाः॥ २०॥

---

1. A,B,J एतेषु

**वीर०** नद्यादिषु रामकृष्णयोर्गोपैः सह पशूंश्चारयतो गोपरूपी प्रलम्बोऽगादित्युत्तरेणान्वयः। द्रोणः पर्वतसन्धिप्रदेशः तज्जिघांसया रामकृष्णहननेच्छया॥ १६, १७॥

सर्वदर्शनः हेतुगर्भ मिदम्। सर्वज्ञत्वात् तं जिघांसु मागतं गोप रूपिणं प्रलम्बासुरं विद्वानपि सद्यो न तं जघानेति वाक्यशेषः। किन्तु उपायान्तरेण तस्य वधं विचिन्तयन् तेन सह सख्यमेवान्वमोदत अन्वमन्यत॥ १८॥

तत्र गोपानाहूय तद्वयोचित विहारक्रमाभिज्ञः प्राह। उक्ति मेवाह हे गोपा इति। यथायथमाकृति वयोबलानुरूपं द्वन्द्वीभूय संघद्वयं भूत्वा विहरिष्याम इति॥ १९॥

तत्रैवं भगवतोक्ते सति गोपाः रामकृष्णौ परिवृढौ संघयोः नायकौ चक्रुः, ततः केचित् गोपाः [1-] कृष्णसंघट्टिनः [-1] कृष्णपक्षीया बभूवुः अपरे तु रामस्य संघट्टिनः॥ २०॥

---

1- -1. A,B omit

**विज०** यस्य यो विहार तं वेत्तीति॥ १६ - १९॥

परिवृढौ नायकौ, कृष्ण संघट्टिनः कृष्णपक्षीयाः॥ २०॥

**आचेरुः विविधाः क्रीडाः वाह्यवाहकलक्षणाः।**
**[1]तत्रारोहन्ति जेतारो वहन्ति च पराजिताः॥ २१॥**

**वहन्तो वाह्यमानाश्च चारयन्तश्च गोधनम्।**
**भाण्डीरकं नाम वटं जग्मुः कृष्णपुरोगमाः॥ २२॥**

**रामसंघट्टिनो [2]यर्हि श्रीदामवृषभादयः।**
**क्रीडायां जयिन [3]स्तांस्तान् कृष्णादयो नृप॥ २३॥**

**उवाह कृष्णो भगवान् श्रीदामानं पराजितः।**
**वृषभं भद्रसेनस्तु प्रलम्बो रोहिणी सुतम्॥ २४॥**
**अविषह्यं मन्य मानः कृष्णं दानवपुङ्गवः।**
**वहन् द्रुततरं प्रागात् अवरोहणतः परम्॥ २५॥**

---

1. A,B,J,K,W यात्रा° 2.A,V ये हि; M. ये तु 3. V °स्तंस्ते ह्यूहुः

**श्रीध० वहन्त** इति। वाह्यमानाः पृष्ठेनोह्यमानाः॥ २१ - २४॥

**अविषह्यमिति**। कृष्णदृष्टिवञ्चनाय अवरुह्यतेऽस्मिन्नित्यवरोहणं मर्यादा। ततः परं दूरमगात्॥ २५॥

**वीर०** [1]इत्थं भूत्वा वाह्यवाहकेति भावप्रधानो निर्देशः। वाह्यत्ववाहकत्वे लक्षणे फले यासु ताः वाह्या वाहकाश्च जयपराजय कृता यास्त्विति वा तथा भूताः विविधाः क्रीडाश्चेरुः। वाह्यवाहकलक्षणा इत्येतदेव विशदयति — **यत्रेति**। यत्र यासु क्रीडासु जेतार आरोहन्ति पराजितास्तु वहन्तीति॥ २१॥

एवं क्रीडायां जयेन [2]हेतुना वाह्यमानाः पराजयेन हेतुना वहन्तश्च गोधनं चारयन्तश्च कृष्णप्रभृतयो गोपाश्शनैः भाण्डीराख्यं वटं वृक्षं जग्मुः॥ २२॥

तत्र यर्हि यदा श्रीदामादयो राम संघट्टिनः क्रीडायां जिग्युः तदा तान् हे नृप! कृष्णादयः ऊहुः ऊढवन्तः॥ २३॥

तत्र भगवान् श्रीकृष्णः पराजितः श्रीदामानमुवाह, भद्रसेनस्तु वृषभं तथा श्रीकृष्णसंघट्टी प्रलम्बासरो रोहिणीसुतं बलदेवमुवाह॥ २४॥

तावद्रामसंघट्टी किं न बभूव प्रलम्ब इति इमामाशङ्कां निराकुर्वन् तं विशिनष्टि कृष्ण मविषह्यं सोढुं अशक्यं व्योमासुर वृत्तान्त स्मरणेन दुर्वहं मन्यमानः श्रीकृष्णसङ्घट्टी भूत्वा रामेण पराजितः तमेव उवाहेत्यर्थः। यद्यहं रामसंघट्टी भवेयं तर्हि यदा कृष्णेन पराजितः तं वहेयं तर्हि व्योमासुरवत् म्रियेयेत्यभिप्रायेण कृष्णसङ्घट्टी बभूवेत्यभिप्रायः। रोहिणी सुतं वहन् अवरुह्यतेऽस्मिन् इत्यवरोहणं मर्यादास्थानं ततः परं दूरं द्रुततरं यथा तथा प्रागात्॥ २५॥

---

1. A,B एवं 2. K,W omit हेतुना

**विज०** वाह्यवाहकत्वं विशदयति तत्रेति 'उवाह कृष्णो भगवान्' इत्यत्र व्यत्ययेननेतव्यः श्रीदामाकृष्णमुवाहेति कुत एवं विकल्प्यते, हरिवंशादि वचनात् — तथाप्ययं दुराग्रह इति न वक्तव्यं, बहुमानविरोधेतु व्यत्यासः शब्दतोऽर्थतः (ब्रह्मतर्के) इत्यादि निर्णयवचनात्॥ २१ - २४॥

प्रलम्बः कृष्णं विहाय राममवहत्। तत्र किं कारणमत्राह अविषह्यमिति॥ २५॥

**तमुद्वहन् धरणि[1] धरेन्द्रगोरवं महासुरोवि[2]गतरयो निजंवपुः ।**
**स आस्थितः पुरटपरिच्छदो बभौ तडि[3]द्द्युमानुडुपतिमा[4]निवाम्बुधः ॥ २६॥**

**निरीक्ष्य तद्वपुरलमम्बरे चरत्[5] प्रदीप्तदृग्भ्रुकुटितटोग्रदंष्ट्रकम्[6]।**
**ज्वलच्छिखं कटककिरीट कुण्डलः विषाद्भुतं हलधर ईषदत्रसत्॥ २७॥**

**अथाऽऽगत स्मृतिरभयोरिपुं बलो विहायसार्थमिव[7] हरन्तमात्मनः ।**
**रुषाऽहनच्छिरसि[8] दृढेन मुष्टिना सुराधिपो गिरिमिव वज्ररंहसा॥ २८॥**

**स आहतस्सपदि विशीर्णमस्तको[9] मुखाद्वमन् रुधिरमपस्मृतोऽसुरः ।**
**महारवं व्यसुरपतत्समीरयन् गिरिर्यथा मघवत आयुधाहतः ॥ २९॥**

**दृष्ट्वा प्रलम्बं निहतं बलेन बलशालिना।**
**गोपास्सुविस्मिता [10-]आ सन्साधु साध्विति वादिनः[-10] ॥ ३०॥**

**आशिषोऽभिगृणन्तस्तं[11] प्रशशंसुस्तदर्हणम्।**
**प्रेत्यागतमिवालिङ्ग्य प्रेमविह्वलचेतसः ॥ ३१ ॥**

**पापे प्रलम्बे निहते देवाः परमनिर्वृताः ।**
**अभ्यवर्षन् बलं माल्यैश्शशंसुस्साधुसाध्विति॥ ३२॥**

इति श्रीमद्भागवते महापुराणे श्रीवैय्यासिक्यां अष्टदशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धेपूर्वार्धे
प्रलम्बवधो नाम अष्टादशोऽध्यायः ॥ १८॥

---

1. V °णी° 2. K,W विहत; V. निहत 3. A,B,G,J,M °डि° 4. B,G,J,V °वाडिवा° 5. A,V चरन्; M. चरं 6. V °ष्ट्रम् 7. M सोर्ध्वश्च ह° K,W सार्थमपह° 8. V.W. °र° 9. K,M शीर्षको 10- -10. V आसन्नसाधुं साधुरूपिणम्; M. आसन्नसाधु साध्विति राविणः 11. A °श्च; M °स्ते

**श्रीध० तमिति।** धरणि[1]धरेन्द्रवत् गौरवं यस्य तं निजं आसुरं वपुः [2-]आस्थित[-2]ः पुरटपरिच्छदः सुवर्णालङ्कारः तटिद्युमान् विद्युद्दीप्तिमान् इत्यलङ्कारोपमा। उडुपतिवाडिति रामोपमा। उडुपतिं वहतीत्युडुपतिवाट्।[3] यथोचितस्थानेषु स्थिता विद्युतो भवन्ति, उपरि च उडुपति तथा सोऽम्बुदो यथा भाति [4-]तद्वद्भातीत्यर्थ[-4]ः॥ २६॥

**निरीक्ष्येति।** अलं अतिवेगेन प्रदीप्ते दृशौ यस्मिन् वपुषि तत् भ्रुकुटि तट संलग्ना [5]उग्रदंष्ट्रा यस्मिन् तत्, प्रदीप्तदृक् भ्रुकुटितटं यस्मिन्, उग्राः दंष्ट्राः यस्मिन्, तच्च तच्चेति वा। ज्वलन्त्यः शिखाः केशाः यस्मिन् तत्॥ २७॥

अथेति। आगतस्मृति अभय इव आत्मनः सार्धं गोपसमूहं विहाय हरन्तं रिपुं अहनत्। यद्वा, विहायसा आकाशमार्गेण आत्मनः प्राप्तं अर्धमिव हरन्तमिति। वज्ररंहसा वज्र वेगेन मुष्टिना॥ २८॥

**स** इति। अपस्मृतः गतस्मृतिः महारवं समीरयन्॥ २९,३०॥

**अशिष** इति। तदर्हणं प्रशंसार्हम्॥ ३१,३२॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामि विरचितायां भावार्थदीपिकायां व्याख्यायां
अष्टादशोऽध्यायः॥ १८॥

---

1. V °णी° 2- -2. V omits 3. A,B,J add यदि 4- -4. A,B,J द्वभावित्यर्थः। 5. A,B,J उग्रा

**वीर०** धरणीधरेन्द्रवत् पर्वतवत् गौरवं यस्य तं बलदेवं वहन् स महासुरः प्रलम्बः निहतरयो नष्टवेगः निजं स्वासाधारणं वपुरास्थितस्सन् स्वर्णालङ्कारः बभौ। तटिद्युमानित्यलङ्कारोपमा। उडुपातिमानिवेति रामोपमा। यदि यथोचितस्थानेषु विद्युतो भान्ति उपरि चोडुपतिः तदा सोऽम्बुदो यथा भवति तद्वत् बभावित्यर्थः॥ २६॥

**निरीक्ष्येति।** हलधरः [1-]बलदेवस्तु[-1] तद्वपुः निरीक्ष्य किञ्चिदबिभेत्। कथम्भूतम्? अम्बरे चरत् आकाशस्पर्शी अत्युन्नतमित्यर्थः। अलमतिवेगेन प्रदीप्ते दृशौ यस्मिन्। भ्रकुटि तट लग्ना उग्रदंष्ट्रा यस्मिन्। तच्च तच्चेति वा। ज्वलन्त्यः शिखाः केशाः यस्मिन् कटकादीनां त्विषा अद्भुतं चित्रम्॥ २७॥

अथाऽऽगतस्मृतिः लब्धासुरस्वशक्यादिज्ञानः अतएवाभयः बलदेवः आत्मनः सार्थं सहायं गोप समूहं विहाय दूरतो हरन्तं रिपुं रुषा शिरसि दृढेन मुष्टिना जघान यथा सुराधिप इन्द्रो वज्ररंहसा वज्रवेगेन गिरि तद्वत्॥ २८॥

सोऽसुरः प्रलम्बः आहतः ताडितः सपद्येव भग्नशिराः मुखाद्रुधिरं वमन् उद्गिरन् अपस्मृतः अपगतं स्मृतं स्मृतिः यस्य सः। महारवं उच्चैः स्वरमीरयन् व्यसुर्गतप्राणो न्यपतत् यथा मघवतः इन्द्रस्य आयुधेन आहतोगिरिस्तद्वत्॥ २९॥

बलशालिना बलदेवेन हतं असुरं दृष्ट्वा विस्मिता बभूवुः॥ ३०॥

आशिषः प्रयुञ्जानाः प्रशंसार्हं तं बलदेवं प्रशशंसुः मृतिं प्राप्य पुनरागतमिवालिङ्ग्य प्रेम्णा विक्लबानि अधृष्टानि चेतांसि येषां ते प्रशशंसुः इत्यन्वयः ॥ ३१ ॥

परमनिर्वृताः नितरां हृष्टाः [2]देवाश्च माल्यैः पुष्पैः बलदेवं [3-]पापे सर्वदुःखकरे प्रलम्बे निहते सति[-3] अभ्यवर्षन्। साधु साध्विति प्रशशंसुश्च ॥ ३२ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्र चन्द्रिकायां
व्याख्यायां अष्टादशोऽध्यायः ॥ १८ ॥

---

1- -1. K,W omit 2. K,W omit देवाश्च 3- -3. W omits

**विज०** धरणि धरेन्द्रः पर्वतराजः तद्वत् गौरवं अतिभारवत्त्वं यस्य स तथा तं, पुरटपरिच्छदः स्वर्णालङ्कारः तडिता द्युमता आदित्येन च संयुक्तः तडिद्युमान् उडुपतिः चन्द्रः तद्वानम्बुद इतीयमाशङ्का अभूतोपमा। यद्वा तडिद्युमान् तडिता युक्तो मेघ [1-]इव, तत्र मेघ[-1]स्थाने प्रलम्बः तडिस्थाने पुरटपरिच्छदः चन्द्रस्थानीयो रामः ॥ २६ ॥

अम्बरे चरमित्यलुक् ॥ २७ ॥

अथ कृष्णस्तवानन्तरं आगतस्मृतिः उपात्तमूलस्मरणः वज्ररंहसा वज्रवेगेन ॥ २८ ॥

महारवं समीरयन्, व्यसुः गतप्राणः ॥ २९ ॥

बलशालिना रामेण राविणः वादिनः ॥ ३०,३१ ॥

माल्यैः पुष्पैः ॥ ३२ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीविजयध्वजतीर्थ विरचितायां पदरत्नावल्यां
व्याख्यायां अष्टादशोऽध्यायः ॥ १८ ॥
(विजयध्वजरीत्या षोडशोऽध्यायः)

---

1- -1. A,B,M omit

# एकोनविंशोऽध्यायः

## (विजयध्वजरीत्या सप्तदशोऽध्यायः)

### -: दवाग्निपानवृत्तान्तः :-

श्रीशुक उवाच

क्रीडासक्तेषु गोपेषु तद्गावो दूरचारिणीः।
स्वैरं चरन्त्यो विवशुस्तृणलोभेन गह्वरम्॥ १॥

अजा गोवो [1]महिष्यश्च नि[2]विशन्त्यो वनाद्वनम्।
[3]मुञ्जाटवीं [4]निविविशुः [5]क्रन्दन्त्यो [6]दावतर्षिताः॥ २॥

तेऽपश्यन्तः पशून्गोपाः कृष्णरामादयस्तदा।
जातानु[7]तापा [8]न विदुर्विचिन्वन्तो गवां गतिम्॥ ३॥

तृणैस्तत्खुरदच्छिन्नैर्गोष्पदैरङ्कितैर्गवाम्।
मार्गमन्वगमन्सर्वे [9]नष्टाजीव्या विचेतसः॥ ४॥

मुञ्जाटव्यां भ्रष्टमार्गं क्रन्दमा[10]नं [11]स्व गोधनम्।
[12]अ प्राप्य तृषिताः [13]श्रा न्तास्ततस्[14]ते संन्यवर्तयन्॥ ५॥

---

1. K,W मुनुष्याश्च 2. A,B,G,J °र्वि° 3. A,B,G,J,K,W इषीका° 4. B,G,J निर्विविशुः ; A,K,W विविशुः 5. W क्रीडन्त्यो 6. W तापिताः 7. K,W कम्पा 8. V विविशुः 9. M नष्टजीवा 10. M °नाः 11. A च 12. A,B,G,J सम्प्राप्य 13. M याता° 14. V °स्तेन न्यव°

## श्रीधरस्वामिविरचिता भावार्थदीपिका

ऊनविंशे निविष्टं तु गोपगोकुलमच्युतः।
मुञ्जारण्यमरण्याग्नेररक्षत्तन्निपानतः॥

क्रीडेति। दूरचारिणीः दूरचारिण्यः [1-]प्रथमार्थे द्वितीया[-1]॥ १॥

**अजा** इति। वनाद्वनान्तरं [2]निविशन्त्यो दावेन तर्षिताः [3]तृषिताः क्रन्दन्त्य इषीकाटवीमत्युच्छ्रितघनतृणविशेषारण्यं [4]नि र्विविशुः[-4] ॥ २ ॥

**त** इति। कृष्णरामौ [5]आदी येषां ते न तु तौ॥ ३ ॥

**तृणैरिति**। तासां गावां खुरैः दद्भिश्च च्छिन्नैः तृणैः गोष्पदैरङ्कितैः भूप्रदेशैश्च गवां मार्गमन्वगमन्। नष्टाजीव्या गतजीविकासाधनाः ॥ ४ ॥

**मुञ्जाटव्यामिति**। मुञ्जाटव्यपि सैव [6]इषीकाटवी[-6] ॥ ५ ॥

---

1- -1. A,B,J,Va omit 2. A,B,J,Va निर्वि° 3. V omits तृषिताः 4- -4. V विविशुः 5. V आदौ 6- -6. V omits.

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ [1]दवाग्निपानानन्तरं [2]श्रीकृष्णकर्मानु[3]वर्णयितुं तावत् [4]तत्प्राक्तनं वृत्तान्तमाह **क्रीडेति**। प्रलम्बवधानन्तरमपीत्यादिः, गोपेषु क्रीडासक्तेषु सत्सु तेषां गावो दूरचारिण्यो यथेच्छं चरन्त्यः तृणलोभेन गह्वरं विविशुः ॥ १ ॥

तदेव प्रपञ्चयति - **अजा** इति। अजादयो वनाद्वनं विशन्त्यः दावेन तापेन तर्षिताः तृषिताः आक्रोशन्त्यः इषीकाटवीमत्युच्छ्रितसान्द्रतृणविशेषारण्यं विविशुः, इषीकाटव्येव पूर्वत्र [5]गह्वरशब्दविवक्षिता॥ २ ॥

ततस्ते क्रीडासक्ताः कृष्णादयो गोपास्तदा पशून् अपश्यन्तोऽत एव जाता अनुकम्पा येषां तथाभूताः गवां गतिं गतिकृत खुरविन्यासात्मकं चिह्नं विचिन्वन्तोऽपि न विदुः न लक्षितवन्तः ॥ ३ ॥

ततः कथञ्चिल्लब्धैः तासां गावां खुरैः दद्भिः दन्तैश्च च्छिन्नैः तृणैः गोष्पदैश्च अङ्कितं गवां मार्गम् अन्वगमन् अनुसृत्य जग्मुः, ततः पुनरपि नष्टजीव्याः नष्टः लीनः आजीव्यः जीवनसाधनमार्गो येषां ते, अत एव विचेतसः विचाराक्रान्तचित्ताः ॥ ४ ॥

मुञ्जाटव्यां भ्रष्टो लीनः मार्गो यस्य तत्, क्रन्दमानं गोरूपधनमप्राप्य तृषिता अत एव श्रान्तास्ते गोपाः सन्न्यवर्तयन् प्रत्याजग्मुः अन्वेषणाद्विरेमिरे॥ ५ ॥

---

1. K दा° 2. T,W omit श्रीकृष्ण 3. A,B वर्णितुं 4. A,B omit तत् 5. A,B,J,W गहन

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

स्वभक्तजनसंसारविनाशनं हरेरेव सुशकं नान्यस्येति निदर्शनाय दावाग्निपानप्रकटितमाहात्म्यमस्य वक्तुमुपक्रमतेऽस्मिन्नध्याये। तेषां गोपानां गावः दूरचारिणीः दूरगामिन्यः स्वैरं स्वेच्छया गह्वरं गम्भीरकक्षम्॥ १॥

मुञ्जाट ईषिकाटवीं[1] शराटवीं वा उभयं च प्रचुरं तत्रेत्यर्थः। "शरो मुञ्ज इतीरितः" (हला.को. 2-36) इति हलायुधः। दावेन तापेन तर्षिताः जलं पातुकामाः॥ २॥

अपश्यन्तः, अनुतापः पश्चात्तापः, विचिन्वन्तः अन्वेषमाणाः॥ ३॥

तासां गवां खुरैः दद्भिः दन्तैः च्छिन्नैरङ्घितैः भूतलैः नष्टजीवाः जीवन्मृता; विचेतस इतोगता। अत्र गता इति विविधबुद्धयः, वौ दैवे गतं चेतो येषां ते तथा ये दैवमेव चेतस वचसा च शरणं गच्छन्त इत्यर्थः॥ ४॥

भ्रष्टमार्गं मार्गं हित्वा इतस्ततो गतं ततो मुञ्जाटव्याः सन्न्यवर्तयन् गतमार्गमिव आगन्तुकामा अभवन्नित्यर्थः॥ ५॥

---

1. A इ°

★ **ता आहूता भगवता मेघगम्भीरया गिरा**
**स्वनाम्नां निनदं श्रुत्वा प्रतिनेदुः प्रहर्षिताः॥ ६॥**

**ततस्समन्ताद्वनधूमकेतुर्यदृच्छयाऽभूत्क्षयकृद्वनौकसाम्।**
**समीरितस्सारथिनोल्बणोल्मुकैर्विलेलिहानः स्थिरजङ्गमान्[1] महान्॥ ७॥**

**तमापतन्तं परितो दवाग्निं गोपास्स्वगावः[2] प्रसमीक्ष्य भीताः।**
**ऊचुश्च[3] कृष्णं सबलं प्रपन्ना यथा हरिं मृत्युभयार्दिता[4] जानाः॥ ८॥**

**कृष्णकृष्ण! महावीर्य![5] हे रामाऽमितविक्रम![6]।**
**दवाग्निना दह्यमानान् प्रपन्नांस्त्रातुमर्हथः॥ ९॥**

**नूनं त्वद्बान्धवाः कृष्ण! न[8] चार्हन्त्यवसादितुम्[9]।**
**वयं हि सर्वधर्मज्ञ! त्वन्नाथास्त्वत्परायणाः॥ १०॥**

---

★ कृष्णप्रोत्तुङ्गमारुह्य वृक्षं मेघनिभच्छविः। आर्तास्ता आह्वयामास दर्शयन्गास्स्वनामभिः॥ The above extra verse is found in B.K.V.W edns. and the same is not commented. 1. K,W °मं 2. A,B,G,J,M °श्च गा° 3. M ऊचुः स्म 4. M °तो ज° 5. G,J °वीर! 6. M °ऽमोघ° 7. A,B,G,J,M दा° 8. V. नार्हन्त्येवाव° 9. A,B,G,J,M °सी°

**श्रीध०** **तत** इति। [1-]वनौकसां[-1] [2]गोगोपानां नाशहेतुः वनवह्निः सर्वतः प्रादुरभूत्। सारथिना वायुना॥ ६ - १०॥

---

1- -1. B,J,V,Va omit 2. V omits गो

**वीर०** तदा भगवता कर्त्रा मेघस्येव गम्भीरया गिरा आहूतास्ताः गावः स्वस्वनाम्नां ध्वनिमाकर्ण्य प्रहर्षिताः प्रतिदध्वनुः। ततः प्रतिनादेन गोधनानि संजग्मुरित्यर्थतोऽत्र विवक्षितम्॥ ६॥

ततस्तदा यदृच्छया महान् [1]वनधूमकेतुः दवाग्निरभूदुदभवत्। कथम्भूतः? वनौकसां क्षयं नाशं करोतीति तथा सारथिना वायुना समीरितः उद्दीपितः उल्बणैरुल्मुकैः ज्वालायुक्तैः तृणकाष्ठादिभिः स्थावरजङ्गमात्मकं भूतजातं विलेलिहानः पुरः पुरः संस्पृशन्॥ ७॥

परित आपतन्तं व्याप्याऽऽगच्छन्तं दवाग्निमवलोक्य भीतास्सगावो गोपाः सरामं कृष्णं प्रपन्नाश्शरणं गताः ऊचुः। यथा मृत्युभयेन [2-]संसारभयेन[-2] अर्दिताः पीडिताः जनाः हरिमाश्रितबन्धहरं भगवन्तं प्रपन्नाः स्वदैन्यं विज्ञापयन्ति तद्वत्॥ ८॥

उक्तिमेवाऽऽह - **कृष्णेति** द्वाभ्याम्। त्वमेव बान्धवो येषां ते, अवसादितुं दुःखितुं नार्हन्त्येव नूनं ध्रुवम्। हे धर्मज्ञ! प्रपन्नपरिपालनात्मकधर्मज्ञ! वयं त्वमेव नाथो रक्षको येषां, त्वमेव परमयूनं रक्षणोपायो येषां तथाभूताश्च॥ ९,१०॥

---

1. T,W omit वन 2- -2. T,W omit

**विज०** ततः कृष्णेन किमकारीति तत्राह - **ता** इति। प्रतिनेदुः प्रत्याक्रोशं चक्रुः॥ ६॥

संसारस्तु सदा दुःखाकर इति दर्शनार्थं एकदुःखशमनानन्तरं दुःखान्तरं वदति **तत** इति। ततः गोदर्शनानन्तरं धूमकेतुः अग्निः सारथिना वायुना समीरितः प्रेरितः वर्धितः उल्बणोल्मुकैः क्रूरतरज्वालाभिः स्थिरजङ्गमान् विलेलिहानः विशेषेणाऽऽस्वादयन्॥ ७॥

प्रपन्नाः शरणमिति शेषः॥ ८,९॥

नूनमिदानीम्॥ १०॥

## श्रीशुक उवाच

**वचो निशम्य कृपणं बन्धूनां भगवान् हरिः।**
**निमीलयत मा भैष्ट लोचनानीत्यभाषत॥ ११॥**

तथेति मीलिताक्षेषु भगवानग्निमुल्बणम्।
पीत्वा मुखेन तान्कृच्छ्राद्योगाधीशो व्यमोचयत्॥ १२॥

ततश्च तेऽक्षीण्युन्मील्य पुनर्भाण्डीरमापिता[1]ः।
निशाम्य[2] विस्मिता आसन्नात्मानं गाश्च मोचिताः॥ १३॥

कृष्णस्य योगवीर्यं तद्योगमायानु[3] भावितम्।
दवाग्ने[4] रात्मनः[5] क्षेमं वीक्ष्य तं[6] मेनिरेऽमरम्॥ १४॥

गास्सन्निवर्त्य[7] सायाह्ने सहरामो जनार्दनः।
वेणुं विरणयन्गोष्ठम[8]गाद्गोपैरभिष्टुतः॥ १५॥

गोपीनां परमानन्द[9] आसीद्गोविन्ददर्शने[10]।
क्षणं यु[11-]गशतानीव[-11] यासां येन विनाऽभवत्॥ १६॥ ★

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे पूर्वार्धे एकोनविंशोऽध्यायः॥ १९॥
(विजयध्वजरीत्या सप्तदशोऽध्यायः)

---

1. K,W मागताः ; M. माश्रिताः 2. M °श° 3. K,W °ताः। 4. A,B,G,J,M दा° 5. K,W °नां 6. B,G,J,M ते 7. K,W°पत्य 8. K,W °ष्टं प्रा° 9. W °न्दमा° 10. K,W °नम्। 11- -11. A,B,G,J युगशतमिव ; M. यथा युगशतं ★ श्रीविजयध्वजव्याख्यायां अस्यैवाध्यायस्य सम्बन्धित्वेन, अत्रैव योजितौ 17,18 संख्यान्वितौ 'तयो' रिति, 'गोपवृद्धौ' इति च आरभमाणौ द्वौ श्लोकौ श्रीधरीयव्याख्यायां श्रीवीरराघवीयव्याख्यायां च अनन्तराध्याये तद्रीत्या विंशे प्रथम द्वितीय श्लोकत्वे नोपात्तौ।

**श्रीध० वच** इति। कृच्छ्रात् गह्वरप्रवेशक्षुत्तृड्[1]श्रमादिजनितात्। त[2-]त्क्षणमेव भाण्डीरं नीत्वा तान् अमोचय-दित्यर्थ[-2]ः॥ ११, १२॥

**तत** इति। क्षणेनैव भाण्डीरं प्रापिताः। ततोऽक्षीण्युन्मील्य विस्मिताः आसन्[3]॥ १३ - १६॥

★ श्रीदामादिस्वगोपानां स्वाङ्कमारुह्य हृष्यताम्। स्वैश्वर्यमाविरकरोद्वनवह्निनिपानतः॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
एकोनविंशोऽध्यायः॥ १९॥

---

1. V omits क्षत् 2- -2. A,B,J,Va omit 3. A,B,J,Va omit आसन् ★ श्रीधरीयोऽयं श्लोकः ।

**वीर०** हरिः आश्रितार्तिहरो भगवान् कृपणं बन्धूनां वचो निशम्य आकर्ण्य मा भैष्ट भयं मा कुरुत, लोचनानि निमीलयत पिहितानि कुरुतेत्युवाच॥ ११॥

तथेत्यङ्गीकृत्य सर्वेषु गोपेषु मीलितान्यक्षीणि यैस्तथाभूतेषु सत्सु भगवान् उल्बणमुत्कटमग्निं मुखेन पीत्वा, तत्र हेतुः योगाधीशः आश्चर्यशक्त्यात्मकयोगवतामधीशः, मुखेन पीत्वेत्यस्य उत्पत्तिस्थाने लीनं कृत्वा इत्यर्थः। "मुखादिन्द्र श्चाग्निश्च" (पु.सू. 1-6) इति श्रुतिः। कृच्छ्रात् दवाग्निजा दुःखात् सगोधनान् गोपान् अमोचयत्॥ १२॥

ततस्ते गोपाः लोचनान्युन्मील्य पुनर्भाण्डीरं प्रत्यागताः आत्मानम् आत्मनः प्रत्येकाभिप्रायकमेक[1]वचनम्। तथा मोचिता गाश्च आलोक्य विस्मिता आसन्॥ १३॥

ततस्तस्य कृष्णस्य योगमायया आश्चर्यशक्तिरूपया अनुभाविताः तत्प्रभावविषयीकृताः [2]तस्य कृष्णस्य योगात्मकं वीर्यं दवाग्नेरात्मनां क्षेमं च वीक्ष्य तं कृष्णममरं दैवतं मेनिरे॥ १४॥

ततस्सायाह्ने गास्सन्निपत्य सङ्घीकृत्य सरामः कृष्णो वेणुं [3-]वि[-3]रणयन् वादयन् गोपैरभिष्टुतो गोष्ठं प्रागात्॥ १५॥

तदा गोविन्दस्य दर्शनं गोपीनां यशोदादीनां परमानन्दकरमासीत्। तत्र हेतुं वदन् [4]दर्शनं विशिनष्टि। यासां गोपीनां येन कृष्णेन विना क्षणमपि युगशतमिवाभवत्, अतः तद्दर्शनं परमानन्दकरं बभूव[5]॥ १६॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां एकोनविंशोऽध्यायः॥ १९॥

---

1. K,T,W omit क 2. T,W omit तस्य 3- -3. K,T,W omit 4. K,T,W omit दर्शनं 5. A,B add इत्यर्थः।

**विज०** योगमायानुभावितं स्वरूपसामर्थ्येन प्रभावितं अमरं जरामरणशून्यं नारायणं मेनिरे॥ ११ - १४॥

सायाह्ने सन्ध्याकाले॥ १५॥

यथा यावान् युगशतं कालः यासां गोपीनां येन गोविन्ददर्शनेन विना क्षणः कालः तावान् अभवत्॥ १६॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां
टीकायां दशमस्कन्धे पूर्वार्धे एकोनविंशोऽध्यायः॥ १९॥

(विजयध्वजरीत्या सप्तदशोऽध्यायः)

# विंशोऽध्यायः

## (विजयध्वजरीत्या अष्टादशोऽध्यायः)

### -: वर्षर्तुवर्णन घट्टः :-

श्रीशुक उवाच

★ तयोस्तदद्भुतं कर्म [1]दवाग्नेर्मोक्षमात्मनः ।
गोपास्स्त्रीभ्यस्समाचख्युः प्रलम्बवधमेव च ॥ १ ॥

गो[2]पवृद्धाश्च गोप्यश्च तदुपाकर्ण्य विस्मिताः ।
मेनिरे देवप्रवरौ रामकृष्णौ व्रजं गतौ ॥ २ ॥

ततः प्रावर्तत प्रावृट् सर्वसत्त्वसमुद्भवा ।
विद्योतमानपरिधिः विष्[3]फूर्जित [4]नभस्स्थला ॥ ३ ॥

सान्द्रनीलाम्बुदैर्व्योम सविद्युत्स्तनयित्नुभिः ।
अस्पृष्टज्योतिराच्छन्नं ब्रह्मेव सगुणं बभौ ॥ ४ ॥

[5]अष्टौ मासान्निपीतं य[6]द्भूम्यामुदमयं वसु ।
स्वगोभिर्मोक्तुमारेभे पर्जन्यः काल आगते ॥ ५ ॥

---

★ अत्रत्यौ द्वौ श्लोकौ (१, २) विजयध्वजरीत्या पूर्वाध्यायस्य अन्तिम श्लोकौ भवतः ।

1. A,B,G,J,M,Ma दा° 2. V °पा° 3. A,B,G,J,M,Ma,V °स्फू° 4. A,B,G,J,M,Ma °भस्त° 5. G अष्ट 6. A,B,G,J °श्चोद°

## श्रीधरस्वामिविरचिता भावार्थदीपिका

विंशे प्रावृट्छरच्छोभा वर्णनेन वनोचिताः ।
प्रावृट्क्रीडा निरूप्यन्ते गोपरामयुजो हरेः ॥

हेयादेयोपमानेन प्रावृट्छरदृतुश्रियोः।
वर्णनं त्वद्भुतैश्वर्य कृष्णलीला विवक्षया॥

तत्र प्रावृट् वर्णनं - **तत** इत्यादि द्वाविंशत्या। सर्वेषां प्राणिनां समुद्भवः उत्पत्तितः जीवनतश्च यस्यां सा। प्रावृट् विद्योतमानाः परिधयः परिवेषादिशोभाः यस्यां सा, विष्फूर्जितं[1] संक्षुभितं नभःस्थलं च यस्यां सा॥ १ - ३॥

**सान्द्रेति**। सान्द्रैः निबिडैः नीलाम्बुदैः विद्युद्गर्जितसहितैः आच्छन्नं सगुणं गुणैराच्छन्नं जीवाख्यं विद्युद्गर्जिताम्बुदानां सत्त्वरजस्तमोभिरुपमा॥ ४॥

**अष्टाविति**। पर्जन्यः सूर्यः स्वगोभिः निजरश्मिभिः[2] काले यथोचित समये। अत्र राजोपमा, करादानतः समये पुनर्दानतश्च सूचिता॥ ५॥

---

1. A,B,J,P °स्फू° 2. P.V omit निज

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं वसन्तग्रीष्मयोः भगवतः क्रीडा अनुवर्णिताः। अथ प्रावृट् छरदो स्ता अनुवर्णयितुं दृष्टान्तैस्तैस्तावत्[1] देयोपादेयविभागं प्रदर्शयन्नेव प्रावृषं[2] तात्कालिकान् कांश्चिद्विहारांश्च अनुवर्णयति विंशेनाध्यायेन[3]। तावत् प्र[4-]थमं भगवत्क्रीडा[-4] वृत्तशेषमाह - **तयोरिति** द्वाभ्याम्। अत्मनः आत्मनां, दवाग्नेः मोक्षणात्मकं तद्रामकृष्णयोः अद्भुतं कर्म प्रलम्बवधं च गोपाः स्त्रीभ्यो यशोदादिभ्यः कथयामासुः॥ १॥

तद्गोपबालैः उक्तमाकर्ण्य विस्मिता गोपवृद्धाः नन्दादयः[5] गोप्यश्च रामकृष्णौ व्रजं गतौ देवश्रेष्ठौ मेनिरे देवश्रेष्ठावेव रामकृष्णरूपेण व्रजे जनितौ[6] इत्यमन्यन्तेत्यर्थः॥ २॥

ततः प्रावृड् [7-]वर्षऋतुः[-7] प्रार्वतत। प्रावृषं विशिनष्टि सर्वेषां प्राणिनां समुद्भवः उत्पत्तितो जीवनतश्च यस्यां विद्योतमानाः [8-]विद्युद्भिः द्योतमानाः[-8] परिधयो दिशो यस्यां विस्फूर्जितं वज्रनिर्घृष्टं नभस्स्थलं यस्यां सा प्रावृट् प्रावर्ततेत्यन्वयः॥ ३॥

**सान्द्रेति**। सान्द्रैः निबिडैः नीलाम्बुदैः विद्युद्गर्जितसहितैः आच्छन्नमत एव अस्पष्टानि[9] ज्योतींषि सूर्यचन्द्रादीनि यस्मिन् तद्व्योम सगुणं ब्रह्मेव बभौ, यथा प्रकृत्त्या तिरोहितं ज्योतिः ज्ञानरूपत्वात् विषय प्रकाशक धर्मभूतज्ञानं यस्य तत् सगुणं, ब्रह्म गुणत्रयवश्यं ब्रह्मगुणतो बृहत्त्वार्हं जीवस्वरूपं भाति तद्वदित्यर्थः। अनेन आकाशस्य यावच्छरदं नीलाम्बुद

विद्युत्स्तनयितृसम्बन्ध वज्जीवस्य यावन्मुक्ति, गुणवश्यत्वं सूर्यादिज्योति स्थानीयधर्मभूतज्ञानस्य सङ्कोचेन प्रसराभाव ः। व्योमवत्स्वतो निर्मलस्य आगन्तुकमालिन्यं चेति तदपनोदक मोक्षोपाये यतितव्यमित्यभिप्रेतम्, ब्रह्मशब्देन मुक्तिदशायां ज्ञानद्वारा बृहत्वमस्तीति सूचितम्॥ ४॥

**अष्टाविति।** यत् अष्टौ मासान् अत्यन्तसंयोगे द्वितीया। कार्तिकादारभ्य यावज्ज्येष्ठं स्वगोभिः स्वकिरणैः नितरां पीतं गृहीतं उदकात्मकं वसु धनं तत्स्वगोभि रेव पुनरुचितकाले आगते प्राप्ते सति मोक्तुं पर्जन्यो वर्षाधिदेवः सूर्यः प्रारेभे। अनेन राज्याधिकृतः शिक्षितः पर्जन्यवत् यथोचित[10] काले प्रजाभ्यो धनानि गृहीत्वा पुनरर्थिभ्यो दद्यादिति, यावज्ज्ञानोदयं गृहीतान् कामान् सति ज्ञानोदये जह्यादिति मुमुक्षुशिक्षा वा॥ ५॥

---

1. K,T,W omit तैः 2. A,B प्रावृड्तुं 3. K,T,W omit अध्यायेन 4- -4. K,T,W omit 5. K,T,W omit नन्दादयः 6. A,B जातौ 7- -7. A °तुं तं -8 -8. K,W omit 9. A,B °स्मृ° 10. A,B °तं कालेषु

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

किं तत् कर्मेति तत्राह - दावाग्नेरिति। चशब्दः समुच्चये। दावाग्निमोक्षं प्रलम्बवधं चेति द्वयमेवेत्यर्थः॥ १॥

एकश्चशब्दः समाहारे "चोन्वाचये समाहारे" (वैज.को. 8-7-4) इति यादवः। व्रजं गतौ कृष्णरामौ देव प्रवरौ मेनिरे इत्यन्वयः॥ २॥

नारायण भक्ति वैशद्याऽवैशद्यदृष्टान्तत्वेन प्रावृट् ऋतुं वर्णयत्यस्मिन्नध्याये। ततः ग्रीष्मर्त्वनन्तरं सर्वेषां सत्त्वानां स्थावरजङ्गमलक्षणानां पदार्थानां समुद्भवो यस्यां सा तथा। "सत्त्वं द्रव्ये सत्ता स्वभावयोः"(वैज.को. 6-5-94) इतिः यादवः। विद्योतमानाः तडिदन्तरे प्रकाशमानाः परिधयः परिवेषा यस्यां सा तथा। विस्फूर्जितं अशनिगर्जनोपेतं नभस्तलं यस्याम्। एवंविधा प्रावृट् प्रावर्तत इत्यन्वयः॥ ३॥

प्रावृड्गुणान्तरं दर्शयति - **सान्द्रेति।** जलेन सान्द्रनीलाम्बुदैराच्छन्नं व्योम नभो बभौ। विद्युता स्तनयित्नुना गर्जितेन सहितैः अत एवास्पष्ट सूर्यज्योतिः। "परायणं ज्योतिरेकं तपन्तम्" (प्रश्न.उ.1-8) इति श्रुतिः। कथमिव? सगुणं चतुर्मुखाख्ये ब्रह्मेव॥ ४॥

अष्टौ मासानिति द्वितीया सप्तम्यर्थे "कालाध्वनोरत्यन्तसंयोगे" (अष्टा.2-3-5) इति सूत्रात् संवत्सरमधीते, क्रोशं कुटिला नदीति प्रयोगः। उदमयं जलात्मकं वसु वस्तु भूम्यां विद्यमानं स्वगोभिः स्वरश्मिभिः पीतं ताभिरेव मोक्तुं

प्रारब्धवान् पर्जन्यो गर्जन्मेघः अभिमन्यमानेनाभिमानी सविता लक्ष्यते। "पर्जन्यो गर्जदभ्रेऽध्वाने शक्रेऽस्त्रयन्त्रके" (वैज.को.7-1-42) इति। स्वगोभिः इत्युक्त्या सवितेति गम्यते। "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते आदित्या ज्जायतेगा वृष्टिर्वृष्टिरन्नं ततः प्रजाः" (मैत्र.उ. 6-37) इति च॥ ५॥

तटि[1]त्वन्तो महामेघाश्चण्डश्वसनवेपिताः।
[2]प्राणिनां जीवनं [3]ह्यम्बु मुमुचुः करुणा इव॥ ६॥

तपःकृशा देवमीढा [4]आसीद्वर्षीयसी मही।
यथैव काम्यतपसस्त[5]नुस्सम्प्राप्य तत्फलम्॥ ७॥

निशामुखेषु खद्योतास्तमसा भान्ति न ग्रहाः।
यथा पापेन पा[6]षण्डा नहि वेदाः कलौ युगे॥ ८॥

श्रुत्वा पर्जन्यनिनदं मण्डूका व्यसृजन् गिरः।
तूर्ष्णीं शयानाः प्राग्यद्वद्ब्राह्मणा नियमात्यये॥ ९॥

आसन्नुत्पथवाहिन्यः [7-]क्षुद्रनद्योऽनुशुष्यतीः[-7]।
पुंसो यथा स्वतन्त्रस्य [8]गेहे द्रविण सम्प[9]दः॥ १०॥

---

1. A,B,G,J,M,Ma °डि° 2. A,B,G,J प्रीणनं; V प्राणनं 3. A,B,G,J ह्यस्य; V चास्य 4. V ह्यासी° 5. A °नू° 6. G,J,M,Ma °ख° 7- -7. K,T,W° ऽम्बुपूरिताः 8. A,B,G,J,K देह°; M,Ma देहो; T,W गेह° 9. M,Ma °दा।

**श्रीध० तटित्वन्त** इति। अस्य विश्वस्य, [1]प्राणनं आप्यायनकरं, जीवनमुदकं मुमुचुः। कृपालवः यथा तप्तं जनं निरीक्ष्य अनुकम्पमानाः तदाप्यायनाय स्वजीवनमपि त्यजन्ति। तद्वन्महान्तो मेघाः तटिन्नेत्रैः तप्तं विश्वं निरीक्ष्य, वायुभिर्वेपिताः जीवनं मुमुचुरिति॥ ६॥

तत इति। तपसा ग्रीष्मेण कृशा देवमीढा पर्जन्यसिक्ता। '[2-]मिह सेचने' इति धातु[-2]ः। वर्षीयसी उच्छूना पुष्टा काम्यं तपो यस्य तस्य। तनुः कामान् संप्राप्य यथेति सा[3-]ऽपि देवैः फलदानेन सिक्ता[-3] ॥ ७,८॥

**श्रुत्वेति**। [4-]नियमात्यये[-4] नित्यकर्मावसाने आचार्य[5]निनदं श्रुत्वा तच्छिष्याः यथा अधीयते तद्वदिति॥ ९॥

**आसन्निति।** अनुशुष्यती: अनुशुष्यन्त्य:। अस्वतन्त्रस्य इन्द्रियपरतन्त्रस्य स्वतन्त्रस्य [6-]इति च्छेदे[-6] निरङ्कुशस्ये[7]त्यर्थ: ॥१०॥

---

1. A,B,J प्री° 2- -2. A,B,J omit 3- -3. B,J,P,V omit 4- -4. A,B,J omit 5. P.V निगमं 6- -6. A,B,J omit 7. A,B,J °स्येति वा॥ २०॥

**वीर० त[1]टित्वन्त** इति। चण्डश्वसनेन तीव्रवायुना कम्पिता: मेघा: प्राणिनां जीवनं जीवनसाधनं अम्बु जलम्। करुणा इत्यर्श आद्यजन्त: करुणावन्त इव मुमुचु:, प्राणस[2]ञ्जीवनं ह्यस्य [3]मुमुचुरिति पाठान्तरम्। तदा अस्य विश्वस्य प्राण[4]सञ्जीवन करं जीवनं जलं करुणा इव मुमुचु: इत्यर्थ:। अनेन दु:खितं जनमवलोक्य मेघवच्छ्वासेन कम्पित[5]गात्रा: करुणावन्तश्च स्वजीवन पर्यन्तदानेन उपकुर्यु[6]रिति शिक्षा कृता॥ ६॥

**तप:**कृशेति। तपसा ग्रीष्मेण कृशा शुष्का देवेन पर्जन्येन मीढा सिक्ता भूमि: वर्षीयसी प्रवृद्धा बभूव। सस्यादि सम्पन्ना बभूवेत्यर्थ:। यथा काम्यं तपो यस्य तस्य पुंस: तनु: तावत् तपोदशायां कृशा सती तत्फलं काम्यतप:फलं प्राप्य परिपुष्टा भवति[7]। अनेन काम्[8]यस्य तपस: केवलं देवसुखसाधनत्वमेव, न तु आत्मसुखसाधनत्वमिति शिक्षितम्॥ ७॥

**निशामुखेष्विति।** निशामुखेषु [9-]सायंकालेषु[-9] खद्योता [10-]तेजोविशिष्टा कीटविशेषा[-10] एव भान्ति [11-]त त्र हेतु: तमसेति। एतेन दिवसे तेषां शोभा नास्तीति भाव[-11]:। न तु ग्रहाश्चन्द्रगु[12]रुशुक्रादय: मेघकृततमोवृतत्वात् गगनस्येत्यर्थ:। यथा कलौ युगे पापेन [13]पापप्रचुरेण पाषण्डा वेदविरुद्धा आगमा एव भान्ति, न तु वेदा:[14] अनेन वैदिकधर्माभासरुचि: पापहेतुकेति सूचितम्॥ ८॥

**श्रुत्वेति।** पर्जन्यस्य निनदं गर्जितम् आकर्ण्य मण्डूका: [15]भेका: गिरं व्यसृजन् ध्वनिं चक्रु:। यथा ब्राह्मणा: शिष्या:, आचार्यस्य नित्यकर्मण: प्राक् तूष्णीं शयाना: तस्य नियमात्यये नित्यकर्मावसाने तस्य ध्वनिं श्रुत्वा अधीयते तद्वत्। अनेन आचार्यसन्निधौ अध्ययनावसरं प्रतीक्षमाण[16] असीतेति सूचितम्॥ ९॥

**आसन्निति।** अम्बुभि: वर्षजलै: पूरिता क्षुद्रनद्य: उत्पथवाहिन्य: आसन् "क्षुद्रा नद्य: न शुष्यती:" इति पाठे शोषरहितास्सत्य: उत्पथवाहिन्य; आसन्नित्यर्थ:। 'अनुशुष्यती:' इत्यपि पाठ:। तदा आसन्नशोषा इत्यर्थ:। उभयत्रापि विभक्तिव्यत्यय आर्ष:। यथा अस्वतन्त्रस्य इन्द्रियपरवशस्य पुंसो गेहद्रव्यसमृद्धय:, न शुष्यन्त्य: दानभोगयोरभावात्। यद्वा अनुशुष्यन्त्य: धर्मानुपयुक्तत्वेनेति भाव:। जितेन्द्रियस्य तु दानभोगाभ्यां शुष्यन्त्य: धर्मोपयोगद्वारा आसन्न शोषाश्च।

द्रव्यसम्पदां शोषो नाम, तद्व्यय एव। अम्बुपूरिता इति पाठे तु अजितेन्द्रियस्य, यथा द्रव्यसम्पदः वराटिकापर्यन्तैः अप्यार्जनैः पूरिताः ततः पुनः वृद्ध्यादिभिः निन्दितैः वर्धन्त एव। अपात्र गामिन्यो वा, तद्वदित्यर्थः। अनेनैवास्वतन्त्रेन्दियसम्पदश्चला व्यर्थाश्चेति सूचितम्॥ १०॥

---

1. A,B तडि° 2. K °नं जी° 3. A,B omit मुमुचुः 4. K °नं जी° 5. A,B °तान्तःकरणाः 6. W शीक्षा 7. A,B,K add तद्वत् 8. A,B °म्यत° 9- -9. T,W omit 10- -10. T,W omit 11- -11. T.W omit 12. A,B omit गुरु 13. K,T,W omit पापप्रचुरेण 14. A,B add भान्ति। तद्वत् 15. T,W omit भेकाः 16. A,B add तूष्णीं

**विज०** प्रचण्डश्वसनवेपिताः कम्पिताः जीवनं जीवनसाधनम्। करुणयन्तीति करुणाः। यद्वा कृष्णस्य करुणा इव। अनेन भक्तिसामग्रीमतां ज्ञानाम्बु वर्षन्ति कृष्णकटाक्षा इति सूचितं भवति॥ ६॥

ग्रीष्मे तपःकृशा सूर्यातपेन कार्श्यं गता, देवेन सवित्रा मीढा सेचिता वर्षीयसी वृद्धा अतिवृद्धिं गता। का इव? काम्यतपसः पुंसः तनुः तत्फलं काम्यतपःफलं प्राप्य सम्पदा वर्धते। अनेन प्रवृत्तिप्रकारमार्गो दर्शितः॥ ७॥

निशामुखेषु सन्ध्यासु सूर्यादिग्रहाः न भान्ति पापेन कर्मणा। अनेन दुर्जनवृद्ध्या सज्जनाभिभवो दर्शित ः॥ ८॥

पर्जन्यनिनदं मन्दगर्जन्मेघनादं प्राक् पूर्वं तूष्णीं शयानाः मण्डूकाः नियमो नाम मौनेन जपादिकः तस्यात्यये अवसाने वेदाध्ययनशीला भवन्ति। अनेन विष्ण्वनुग्रहम् आकाङ्क्षमाणैः कालो वन्ध्यो न कर्तव्य इति दर्शितम्॥ ९॥

ग्रीष्मे शुष्यन्तीः शोषं गच्छन्त्यः क्षुद्रनद्यः फल्गुजलाः अनु ग्रीष्मानन्तरं वर्षासु उत्पथवाहिन्यः जलाभिवृद्ध्या तीरमुद्रिच्य स्यन्दमाना[1] बभूवुः। अस्वतन्त्रस्य विषयरागादिवशङ्गतस्य पुंसो देहो वनितादिभोगेन वर्धते। अनेन रजोगुणस्वभाव ः सूचितः॥ १०॥

---

1. A,B स्य°

**हरिता[1] हरिभिश्शष्पैः इन्द्रगोपैश्च लोहिता।**
**उच्छिलीन्ध्रकृतच्छाया नृणां श्रीरिव भूरभूत्॥ ११॥**

**क्षेत्राणि सस्यसम्पद्भिः कर्षकाणां मुदं ददुः।**
**मानिनाम्[2]नु[3]ता[4]पञ्च[5] दैवाधीनमजानताम्॥ १२॥**

जलस्थलौकसस्सर्वे नववारिनिषेवया।
अबिभ्रन्[6] रुचिरं रूपं यथा हरिनिषेवया॥ १३॥

सरिद्भिः सङ्गतः[7] सिन्धुश्चुक्षोभ[8] श्वसनोर्मिमान्।
अपक्वयोगिनश्चित्तं कामार्त्तं[9] गुणयुग्यथा॥ १४॥

गिरयो वर्षधाराभिः हन्यमाना न विव्यथुः।
अभिभूयमाना व्यसनैः यथाऽधोक्षजचेतसः॥ १५॥

---

1. T,W °तो 2. B,G,J ध° 3. A,B,G,J मुप° 4. M,Ma °पं वा 5. M,Ma विपत्तिं तदजा° 6. A,B,G,J °त् 7. K,T,W संश्रितः 8. B,G,J °श्रुक्षुभे° 9. A,B,G,J,K,V °क्तं°

**श्रीध०** **हरितेति**। हरिभिः नीलैः शष्पैः बालतृणैः नीलवर्णा क्वचित्[1] क्वचिदिन्द्रगोपैः लोहितवर्णा[2] कीटविशेषैः लोहिता आरक्ता[3] तत्र तत्र उच्छ्लीन्ध्रैश्छत्राकारैः उद्भिदैः[4]। कृतच्छाया भूनृणां[5] राज्ञां श्रीः सेनारूपा[6] सम्पदिव॥ ११॥

**क्षेत्राणीति**। तथा हि वृष्टेरविच्छेदे लसन्तः प्रियङ्ग्वादयः मुदं ददुरिति[7] विच्छेदे शुष्यन्तो अनुतापं चेति॥ १२॥

**जलेति**। अबिभ्रन्[8] अभिभरुः यथा हरिनिषेवयेति। हरिनिषेवायां[9] प्रवृत्ता हि सद्य एव सर्वे रुचिरा भवन्ति। तस्याः परमधर्मत्वात् परमसुखत्वाच्च तद्वदिति॥ १३॥

**सरिद्भिरिति**। कामाक्तं कामवासनायुक्तमिति श्वसनोर्मि साम्यं, गुणैः विषयैः युज्यत इति सरित्सङ्गतिसाम्यम्॥ १४॥

**गिरय** इति। अधोक्षज एव चेतो येषां ते॥ १५॥

---

1. A,B,J omit क्वचित् 2. B,J,P,V omit लोहितवर्णा 3. A,B,J omit आरक्ता 4. P,V पुष्पैः 5. B,J,P,V omit भू 6. B,J,P,V omit रूपा 7. A,B,J ददति 8. A,B,J °त् 9. A,B,J °सेवा°

**वीर० हरितेति।** भूमिः हरिभिः हरित् वर्णैः शष्पैः बालतृणैः हरित वर्णा इन्द्रगोपैः कीटविशेषैः लोहिता, उद्गतैः शिलीन्ध्रकुसुमैः कृतच्छाया, लोहितपीतवर्णा च बभूव। नृणां श्रीरिव, यथा नृणां राज्ञां श्रीः सेनासम्पत् हरितलोहितपीतवर्णपटैः विचित्र वर्णा भवति, तद्वत् इदं वास्तवार्थकथनम्। यद्वा नृणां स्वदेहालङ्कारमात्रपराणां श्रीः वस्त्राभरणादि सम्पत् तथेत्यर्थः। अनेन मूर्खाणां सम्पत् स्वोपकारमात्र पर्यवसन्ना न तु परोपकारार्थेति सूचितम्॥ ११॥

**क्षेत्राणीति।** क्षेत्राणि सस्यसमृद्धिभिः कृषीवलानां मुदं फलमदृष्टाधीनमित्यजानतां मानिनां फलसमृद्धिद्वेषिणां अनुतापं च ददुः। अनेन पर[1-]समृद्धिं दृष्ट्वा हर्षवता[-1] भवितव्यमिति शिक्षितम्॥ १२॥

**जलस्थलौकस** इति। जलौकसः स्थलौकसश्च [2] सर्वे नवस्य [3] वारिणो निषेवया रुचिरं रूपं अबिभ्रन् अभिभरुः। संज्ञापूर्वकविधेः अनित्यत्वात् आर्षत्वाद्वा अभ्यस्तलक्षणजुसभावः यथा हृदय कमलस्थ हरिनिषेवया रुचिरं रूपं बिभ्रति तद्वत्। "वसतिहृदि सनातने च तस्मिन् भवति पुमान् जातोऽस्य सौम्यरूपः इति वचनार्थोऽत्रोक्तः। [4]अनेन हरिसेवया विना न सौम्यतेति सूचितम्॥ १३॥

**सरिद्भिरिति।** सिन्धुस्समुद्रस्सरिद्भिः सङ्गतो वातोद्धूत तरङ्गश्च। [5]चुक्षोभ सञ्चचाल, यथा अपक्वयोगिनः अनिष्पन्नसमाधेः पुंसः चित्तं विषयस्पृहायुक्तं गुणयुक्च गुणैर्विषयै र्युज्यत इति तथा भूतं च सत् क्षुभ्यति तद्वत्। कामासक्तमिति श्वसनोर्मिसाम्यं, गुणयुगिति श्वसनोर्मिसरित्सङ्गसाम्यं चित्तचाञ्चल्यनिमित्तकामाञ्जनगुणयोगनिवर्तक भगवत्तमाधिविपाकार्थं यतितव्यमिति सूचितम्॥ १४॥

**गिरय** इति। वर्षधाराभिरभिहन्यमाना [6]अपि गिरयो न विव्यथुः यथा अधोक्षजे एव चेतांसि येषां ते, व्यसनैः आध्यात्मिकादि तापैः पीड्यमाना अपि न व्यथन्ति तद्वत्। भगवद्भक्तिरेव तापत्रयविघातिनीत्युक्तं भवति॥ १५॥

---

1- -1. T,W ° द्धिमता ° 2. A,B add ते 3. A,B add नूतनस्य 4. T,W omit अनेन 5. A,B चुक्षुभे 6. K,T,W omit अपि

**विज०** हरिभिः श्यामैः शष्पैः बालतृणैः हरिता श्यामला इन्द्रगोपैः आषाढसमये उत्पद्यमानैः जपाकुसुमवर्णैः कृमिविशेषैः लोहिता रक्ता च उत्कृष्टैः उत्पलैः शिलीन्ध्रैः गुल्मविशेषपुष्पैः छत्राकै र्वा कृतच्छाया कृतशोभा भूः नृणां श्रीरिव सम्पदिव बहुविधाऽभूत् इत्यर्थः। अनेन भूमिवदेक एव चेतनो गुणविकारेण नानास्वभावमापन्न इव प्रतीयत इति संसारस्य असारत्वज्ञानेन हेयत्वेन हरौ भक्तिः कर्तव्येति सूच्यते॥ ११॥

कर्षकाणामुल्लेखनादि क्रियया वर्तमानानां क्षेत्राणि केदाराः सस्यानां सम्पद्भिः फलोद्रेकाभिमुखलक्षणाभिर्मुदं ददुः। वाशब्दः चार्थे। तदजानतां कृषिक्रियाविशेषमजानतां मानिनां कृष्याद्यभिमानवतां पुंसां तान्येव क्षेत्राणि अतिवृष्ट्यनावृष्टि

मेदुरसामग्र्याद्यभावादिना सस्यनाशेन विपत्तिमनुतापञ्च ददुः। पुनरुत्पत्तिनाशेन बीजं नष्टमित्यनुतापम्। इन्द्रियाणि विषय जलादाकृष्य हरिचरणारविन्द एव मनो निदधतां क्षेत्राणि पुण्यस्थानानि सस्यसम्पद्भिः ज्ञानसमुद्रेकैः मुदं ददति, तान्येव पुण्यस्थानानि तदजानतां स्नानादिक्रियाविशेषमबुध्यमानानां मानिनां अहङ्कारिणां पुंसां अयोग्यानां विपत्तिं दुःखलक्षणां बहुलवित्तव्ययेन न किमपि फलं प्राप्तं इत्यनुतापं च ददतीत्यतो मुमुक्षुणा स्वयं विचक्षणेभ्यो वा श्रुत्वा ज्ञात्वा हरिचरणसरोजे भक्तिः कर्तव्येति सूचितम्॥ १२॥

जलौकसः पातालवासिनः, स्थलौकसः भूलोक वासिनः, किञ्च सर्वे अन्तरिक्षादिलोकवासिनः। सर्वेषां संसारदुःखं निवारयतीति वारि ज्ञानं नवं निर्दोषं वारि तस्य नितरां सेवया अभ्यासलक्षणया रुचिरं निर्दोषं रूपमबिभ्रन् बिभ्रति कथङ्कारं जातया यथा यथावद्धरिनिषेक्या जातया॥ १३॥

अपक्वयोगिनः अपक्वः परिपाकमप्राप्तः योगोऽस्यास्तीति अपक्वयोगी तस्य, गुणयुक् रजोगुणयुक्। यद्वा गुणेषु विषयेषु युङ्क्ते इति। अत एव कामार्तम्॥ १४॥

न विव्यथुः न विलीना बभूवुः। कुतः? गिरयः गिरणोद्गिरणसमर्थत्वात् यथाभावमात्रे निदर्शनं न तु बुद्धिमत्वाबुद्धिमत्त्वविवक्षायाम्। अनेन सर्वसहनशक्तिः हरि भक्तानामेवेति दर्शितम्॥ १५॥

**मार्गा बभूवुस्सन्दिग्धास्तृणैश्छन्ना असंस्कृताः[1][2]।**
**नाभ्यस्यमानाः श्रुतयो द्विजैः कालहता इव[3]॥ १६॥**

**लोक बन्धुषु मेघेषु विद्युतश्चल सौहृदाः।**
**स्थैर्यं न चक्रुः कामिन्यः पुरुषेषु गुणिष्विव॥ १७॥**

**धनुर्वियति माहेन्द्रं निर्गुणं च गुणिन्यभात्।**
**व्यक्ते गुणव्यतिकरेऽगुणवान्[4] पुरुषो यथा॥ १८॥**

**स रराजोडुपभ्छन्नः स्वज्योत्स्नाराजितैर्घनैः[5]।**
**अहम्मत्या भासितया स्वभासा पुरुषो यथा॥ १९॥**

**मेघागमोत्सवा हृष्टाः प्रत्यनन्दन् शिखण्डिनः।**
**गृहेषु तप्ता[6] निर्विण्णा यथाऽच्युतजनागमे॥ २०॥**

---

1. A,B,G,J ह्यसं° 2. M,Ma °श्रिता: 3- -3. K. कालेन चाऽहता ; T.W कालाहता इव। 4. M,Ma °रे गु° 5. V °रञ्जि° 6. K,T,W तम

**श्रीध० मार्गा** इति। असंस्कृता: अक्षुण्णा:, नाभ्यस्यमाना इत्यसंस्कृतसाम्यं, कालोन[1] हता इति तृणाच्छादनसाम्यम्॥ १६॥

**लोकबन्धुष्विति।** यथा कामिन्य: पुंश्चल्य:॥ १७॥

**धनुरिति।** निर्गुणं ज्यारहितं [2] गुणिनि [3]गर्जनशब्दवति [4]वियति। अभात् अशोभत। गुणव्यतिकरात्म[5]के व्यक्ते प्रपञ्चे अगुणवान् निर्गुण: पुरुषो यथेति॥ १८॥

**नेति।** स्वभासा भासितया अहम्मत्येति। स्वचैतन्येनैव प्रकाशितेनाहङ्कारेण च्छन्नो जीवो यथा यद्वा [6]तद्वत् अहं विद्वान् दाता वेत्ता शूर इति, स्वप्रतीत्यैवारोपितयेति॥ १९॥

**मेघेति।** मेघागमेनोत्सवो येषां ते अतो हृष्टा:॥ २०॥

---

1. A,B,J °न चाऽहता 2. A,B,J add अपि 3. A,B,J गर्जित 4. A,B,J omit वियति। 5. V °ने 6. A,B,J omit तद्वत्

**वीर० मार्गा** इति। तृणै: छन्ना: असंस्कृता अक्षुण्णा: वर्षासु पथिकानां प्रायशो गमनाभावादिति भाव:। [1-]अत एव[-1] सन्दिग्धा [2-]सन्देहजनका[-2] बभूवु: यथा श्रुतयो वेदा: द्विजै: नाभ्यस्यमाना अनावर्त्यमाना इत्यसंस्कृतसाम्यं, यतो नाभ्यस्यमाना: अत एव कालेन केनचित्कालेन आहता विस्मृताश्च भवन्ति, कालेन चाहता इति तृणाच्छादनसाम्यम्। अनेनाधीतानां वेदानां आवृत्तिं कुर्वतैव स्थेयं, अन्यथा तु प्रत्यवाय इति सूचितम्। तथा च स्मर्यते "अधीत मपि यद्वेदं नानुपालयति द्विज:। स जीवन्नेव शूद्रत्व माशु गच्छति सान्वय:॥" इति॥ १६॥

**लोकबन्धुष्विति।** सर्वप्राणिजीवनभूतजलप्रदानेन महोपकर्तृत्वाल्लोकानां बन्धुषु मेघेषु विद्युतस्तटित:। चलं सौहृदं यासां तथा भूता बभूवु: अनियतदेशमल्पकालं च सङ्गं चक्रुरित्यर्थ: यद्वा स्थैर्यं न चक्रुरित्यपि दाष्टर्यान्तिकान्वयि, चल सौहृदास्सत्य: स्थैर्यं न चक्रु:। यथा कामिन्य: पुंश्चल्य: गुणिषु सौन्दर्य सौशील्यादि गुणाश्रयेष्वपि निर्धनेषु पुरुषेषु चलसौहृदा: स्थैर्यं न कुर्वन्ति [3]तथा। अनेन यत्नत: [4]कामिनीसङ्ग: परिहार्य इति सूचितम् [5] ॥ १७॥

**धनुरिति।** गुणिनि शब्दगुणके वियत्याकाशे माहेन्द्रं धनु: निर्गुणं मौर्वीरहितमभाद्बभौ यथा गुणव्यतिकरे गुणत्रयपरिणामात्मके व्यक्ते देहे अगुणवान् गुणत्रयरहित: पुरुष: जीवो भाति तद्वत् वियद्धनुषोरिव देहात्मनो: विलक्षणस्वरूपस्वभावत्व मुक्तम्॥ १८॥

**नेति।** उडुपः चन्द्रः स्वज्योत्स्नया राजितैः प्रकाशितैः **घनैः मेघैः छन्नो न रराज।** घनेभ्यो विलक्षणतया न रराजेत्यर्थः। यथा पुरुषः प्रत्यगात्मा स्वभासा स्वापृथक्सिद्धधर्मभूतज्ञानेन भासितया समुन्नतया अहम्मत्या देहात्मभ्रान्त्या देहात्पृथङ् न प्रकाशते तद्वत् देहात्मभ्रान्तिरात्मस्वरूपापह्नवहेतु[6] रिति सा यत्नेन परिहार्येत्युक्तम्॥ १९॥

**मेघेति।** मेघागमे उत्सवः येषामतो **हृष्टाः शिखण्डिनः मयूराः प्रत्यनन्दन्। यथा गृहेषु तप्ताः** त्रिभिः तापैरिति शेषः। अत एव निर्विण्णाः जनाः अच्युतभक्तानां आगमने सति प्रतिनन्दन्ति तद्वत्। तापत्रयतप्तैः अवश्यमच्युत जनसङ्गतिः कार्येत्युक्तम्॥ २०॥

---

1- -1. A,B omit 2- -2. T,W omit 3. A,B तद्वत् 4. A,B °नीनां 5. A,B add भवति 6 A,B °पाच्छादन°

**विज०** असंश्रिताः जनैः अनाक्रान्ताः। अनेन सच्छास्त्रं निरन्तरमभ्यसनीयं ज्ञानोत्पत्तये इति व्यतिरेकनिदर्शनम्॥ १६॥

चलसौहृदाः चञ्चलस्वभावाः विद्युतः लोकोपकारित्वाल्लोक बन्धुषु मेघेषु स्थैर्यं स्थिरस्थितिं न चक्रुः नापुरित्यन्वयः। कामिन्यः गुणिषु विविधेषु पुरुषेषु इव यथा स्थैर्यं न कुर्वन्ति तथा। विद्युद्वत् चञ्चलभक्ति र्न कर्तव्या, किन्तु पूर्ववत्स्थिरा इति भावः। चलसौहृदाः चलस्नेहाः मानुषस्वभावो दर्शित इति वा॥ १७॥

गुणिनि शब्दगुणोपेते नीलिमगुणयुक्ते वा वियति महेन्द्रस्य विद्यमानं निर्गुणं ज्यारहितं धनुः अभात् भाति। कथमिव? गुणव्यतिकरे जगत्सर्जने व्यक्ते प्रवृत्ते पुरुषो नारायणो यथा गुणवान् सत्त्वादिगुणैः प्रवर्तमानो भाति सृष्टेः पूर्वं निर्गुणः सत्त्वादिगुणप्रवृत्तिशून्यः गुणवान् प्रशस्तज्ञानानन्दादिगुणपूर्णो वा निर्गुणः देहरहितः गुणव्यतिकरे गुणवान् देहवान् पुरुषो हिरण्यगर्भो यथेति वा॥ १८॥

स्वया ज्योत्स्नया राजितैः सन्ध्यारागं प्राप्तैः घनैः छन्नः उडुपः चन्द्रः न रराज स्वरूपाभिव्यक्तिं नाऽऽप स्वभासा स्वयं प्रकाशज्ञानेन भासितया अभिव्यक्तया अहम्मत्या अहङ्काराख्याया पुरुषः संसारी यथा अभिव्यक्तस्वरूपो न भवति भगवत्प्रसादानुगृहीतज्ञानलक्षण प्रकाशेनाभिव्यक्तरूपः पुरुषः स्यात् यथा तथा शरदादिलक्षणप्रकाशेन प्रकाशितमण्डलः चन्द्र इति सूचितं भवति॥ १९॥

शिखण्डिनो मयूराः मेघानां आगम एवोत्सवः तेन हृष्टाः रोमाञ्चत्वं प्राप्ताः कुटुम्बभरणादिना तप्ताः सज्जन दर्शनाभावाग्निना वा। अत एव निर्विण्णाः विरक्ताः संसारहेयबुद्धियुक्ताः॥ २०॥

**पीत्वाऽपः पादपाः पद्भिः आस न्[1]नानात्ममूर्तयः।**
**[2]प्राक् क्षामास्तपसा श्रान्ता यथाकामानु सेवया॥ २१॥**

सरस्[3]वशान्तरोधस्सु न्यू[4]षुरङ्गापि सारसाः।
गृहेष्वशान्तकृत्येषु ग्राम्या इव दुराशयाः॥ २२॥

जलौघैर्निरभिद्यन्त सेतवो वर्षतीश्वरे।
पाष[5]ण्डिना[6]मसद्वादैः वेदमार्गाः कलौ [7]यथा॥ २३॥

व्यमृञ्चन् वायु[8]भिर्नुन्ना भूतेभ्यो[9] ह्यमृतं घनाः।
[10]य थाऽऽशिषो विश्प[11] तयः काले काले द्विजेरिताः॥ २४॥

एवं वनं तद्वर्षिष्ठं पक्व खर्जूरजम्बुमत्।
गोगोपबालैः वृतो र[12]न्तुं सबलः प्राविशद्धरिः॥ २५॥

---

1. M,Ma °न्नम्रात्म° 2. V क्षुत् 3. K,T,W तोयेषु 4. M.Ma ह्यू° 5. G,J पाखण्डि 6. M,Ma वामशैवाद्यैः 7. M.Ma युगे 8. A °रि° 9. A,B,G,J °भ्योऽथामृतं 10. M.Ma यथाविशो 11. M,Ma °ट्प° 12. K वस्तुं

**श्रीध०** **पीत्वेति।** नानात्ममूर्तयः अनेकरूपदेहाः॥ २१॥

**सरस्स्विति।** अशान्तानि पङ्ककण्टकादियुक्तानि, रोधांसि तटानि एषां ते, तेष्वपि न्यूषुः नितरामवसन्। सारसाः चक्रवाकाः अशान्तानि घोराणि अनुपरतानि वा कृत्यानि येषु तेष्वपि गृहेषु॥ २२॥

**जलौघैरिति।** ईश्वरे इन्द्रे॥ २३॥

**व्यमुञ्चन्निति।** नुन्नाः प्रेरिताः आशिषः कामान् विश्पतयो राजानः वणिजां पतयो वा। द्विजेरिताः पुरोहितैरुक्ताः॥ २४॥

प्रावृषि कृ[1]ताः क्रीडाः[2] वर्णयति सप्तभिः **एवमिति।** वर्षिष्ठं समृद्धं [3-]अतिशय वर्षयुक्तं वा[-3]॥ २५॥

---

1. A,B,J °तां 2. A,B,J °डां 3- -3. A,B,J omit

**वीर०** **पीत्वेति।** पादपाः वृक्षाः पद्भिः मूलैः अपो जलानि पीत्वा नानात्म मूर्तयः नानाविधा आत्मनां मूर्तयः शाखापल्लवपुष्पफलादिरूपाः येषां तथा भूताः बभूवुः। यथा प्राक्काम्यतपःफलरूपकामानुसेवात: प्राक्तपश्चर्यादशायां तपसा श्रान्ताः क्षामाः कृशाश्च। जनाः कामानुसेवया नानात्ममूर्तयो भवन्ति [1-]कलत्रपुत्रपौत्रादि परिजनरूपेणेति तद्वत्। अनेन काम्यतपसः शरीरावयव [2] पुष्टिफलकत्वमात्रं सूचितम्। यद्वा फलाभिसन्धिरहितभगवदाराधनात्मक तपश्चर्यादशायां तपसा

श्रान्ताः कृशाश्च तत्फलानुभवात्मकमुक्तिदशायां काम्यन्त इति कामाः, भगवतः कल्याणगुणास्तेषां अनुसेवया "स एकधा भवति द्विधा भवति त्रिधा भवति" (छान्दो.उ. 7-26-2) इत्यादि श्रुत्युक्तरीत्या नानात्ममूर्तिमन्तो भवन्ति तद्वत्। अनेन भगवदाराधनात्मक तपसः स्वेच्छानु रूपाप्राकृतानेकशरीरपरिग्रहेण भगवता भोगसाम्यसाधनत्व मुक्तम्॥ २१॥

**सरस्स्विति।** अङ्ग! हे राजन्! अशान्तानि अनिर्मलानि कलुषितानि इति यावत्। तानि तोयानि येषु तथा भूतेष्वपि सरस्सु सारसाः चक्रवाकाः गोनर्दा[3]ख्यपक्षिविशेषा वा न्यूषुः नितरामुषितवन्तः। 'अशान्तरोधस्स्विति' पाठे अशान्तानि सलिलाकुलानि पङ्ककण्टकादियुक्तानि रोधांसि तटानि येषां तेष्वपि सरस्स्वित्यर्थः। अशान्तान्यनुपरतानि कृत्यानि येषु। तेष्वपि गृहेषु दुराशयाः वैषयिकसुखाभासलेशलिप्सवो, ग्राम्याः पामरा इव, ते यथा निवसन्ति तद्वत्। अनेन ग्राम्याणां विषयाः दुःखप्रचुरा अल्पसुखाश्चेत्युक्तं भवति॥ २२॥

**जलौघैरिति।** ईश्वरे पर्जन्ये वर्षति सति जलपूरैः उत्कटैः सेतवः जलनिरोदार्था[4] मृत्पाषाण[5]निर्मिताः, निरभिद्यन्त त्रुटिता बभूवुः। यथा कलौ युगे प्रवृत्ते सति पाषण्डानां वेदबाह्यानां असद्वादैः वेदमार्गा वर्णाश्रमधर्मा[6] निर्भिद्यन्ते तद्वत्। अनेन पाषण्डवादानां अश्रोतव्यत्व मुक्तम्॥ २३॥

**व्यमुञ्चन्निति।** वायुना नुन्नाः प्रेरिताः सन्तो घना मेघा भूतेभ्योऽमृतवज्जीवनहेतुं जलं व्यमुञ्चन्, यथा द्विजैः पुरोहितादिभिः ईरिताः प्रेरिताः विश्पतयो जनाध्यक्षा राजानः उचितकालेषु आशिषः कामानर्थिभ्यो विमुञ्चन्ति तद्वत्। राजभिः एवं भवितव्यमित्युक्तं भवति॥ २४॥

तदेवं वर्षर्तुमनुवर्ण्यथ तदा कृतानि कानिचिद्भगवच्चेष्टितानि वर्णयति **एवमित्यादिभिः** सप्तभिः। इत्थं पक्वानि खर्जूरादिफलान्यस्मिन् सन्तीति तद्वत्। तद्वर्षिष्ठं वृद्धं प्रभूतमिति यावत्। वनं हरिः सबलदेवो गोपालै स्सह रन्तुं प्राविशत्॥ २५॥

---

1- -1. T.W omit 2. A,B add परिकरादि 3. A,B °र्दकाख्य° 4. A,B °र्थं 5. A.B °णादि नि° 6. T,W °र्माणि भि°

**विज०** पद्भिः मूलैः फलैः पुष्पैः नम्रात्ममूर्तयः शाखोपशाखाभिः नतस्वरूपाः प्राक् ग्रीष्मे तपसा तपोमासोर्जिततापेन क्षामाः कृशाः यथाकामानामनुसेवया जातेन श्रमेण श्रान्ताः इन्द्रियदौर्बल्यमाप्ताः प्राक् कुटुम्बव्यवस्थायां क्षामाः पादेन ग्रासेन आत्मानं पान्ति रक्षन्तीति पादपाः। तपस्विनः गतिसाधनत्वात्पाद्भिः शास्त्रैः अपः पुरुषार्थावाप्तिहेतुत्वात् ज्ञान रसान् पीत्वा स्वाद्यनम्रावरुद्धा वशीकृतात्मनः परमात्मनो मूर्तिर्विग्रहविशेषो यैस्ते तथेति भावः। यद्वा प्राक् क्षामा वनिताद्यभावेन तपसा कामाग्नितापेन श्रान्ता जनाः कामानुसेवया पश्चादेव वनितादि लाभेन निरन्तर कामभोगेन पुत्रतत्पुत्रपुष्पफलादिना नम्रात्ममूर्तयः परायणनिजशरीरा यथा भवन्ति तथेति॥ २१॥

अङ्ग! हे परीक्षित्! सारसाः चक्रवकाः अशान्तानि जलैः पूर्णानि रोधांसि तीराणि येषां तानि तथा तेषु सरस्स्वपि ऊषुर्हि जलप्रावाहाभिभूततीरवासस्याशक्यत्वेपि तत्रैवोषुरित्यर्थः। दुराशयाः ग्राम्याः प्राकृतजनाः अशान्तकृत्येषु अनुपरतकर्तव्येषु गृहेष्विव यथा वसन्ति। अनेन नित्यसंसारिस्वभावो दर्शितः॥ २२॥

पाखण्डादिमत[1]ज्ञानं नरक साधकमिति ज्ञातव्यम्॥ २३॥

वायुभिः नुन्नाः प्रेरिताः अमृतं जलं द्विजैरीरिताः प्रेरिताः विट्पतयो राजानः विशः प्रजा उद्दिश्य काले काले कालगुणं ज्ञात्वाऽमृतं हेम विमुञ्चन्ति प्रयच्छन्ति। "अमृतं व्योम्नि देवान्ने यज्ञशेषे रसायने। अयाचिते जले दुग्धे मोक्षेऽन्ने हेम्नि गोरसे" (वैज.को 7-5-7) इति यादवः। यद्वा षष्ठमंश इति ब्राह्मणोक्तं विशो वैश्या विश्पतिभ्यो राजभ्यः यथा कालममृतं करात्मकं धनं ददतीति॥ २४॥

वर्षिष्ठं प्रभूतवर्षोपेतम्॥ २५॥

---

1. °ष°

धेनवो मन्दगामिन्यः ऊधोभारेण भूयसा।
ययुर्भगवता[1]ऽऽहूता द्रुतं[2] प्रीत्या[3] स्नुतस्तनीः॥ २६॥

वनौकसः प्रमुदिता वनराजीर्मधुच्युतः।
[4-]जलधारा गिरेर्नादानासन्ना ददृशे गुहाः[-4]॥ २७॥

क्वचिद्वनस्पतिक्रोडे गुहायां चाभिवर्षति।
[5]निर्विशन् भगवान् रेमे कन्दमूल[6] फलाशनः॥ २८॥

दध्यो[7]दनमुपानीतं शिलायां सलिलान्तिके।
सम्भोजनीयैर्बुभुजे गोपैस्सङ्कर्षणान्वितः॥ २९॥

[8]शाद्वलोपरि संविश्य[9] चर्वतो मीलितेक्षणान्।
[10]तृप्तान्[11] वृषान् वत्सतरान् गाश्च स्वोधोभरश्रमाः॥ ३०॥

1. T,W °ता सार्धं 2. T,W भीत्या 3. V °ना: 4- -4. M,Ma गिरेर्गम्भीरसन्नाद सन्नादा दद्दशुर्गुहा: 5. B,G,J,V निर्विश्य 6. M,Ma °नै: 7. B,G,J °नं समा° 8. V °ञ्च° 9. M,Ma स° 10. A,B,G,J तृप्तान्; M,Ma वृषान् 11. M,Ma वत्सान्

**श्रीध०** **वनौकस** इति। वनौकसः पुलिन्दाः[1] प्रमुदिताः भगवान् ददृशे। तथा वनराजीः [2-]वनपरम्पराः[-2] मधुच्युतः मधुस्रवाः ददृशे गिरेस्सकाशात् जलधाराः तासां नादांश्च आसन्नाः निकटवर्तिनीर्गुहाश्च। यद्वा वनौकसः प्रमुदिता आसन्। तथा वनराजीर्वनराजयः[3] मधुच्युत आसन्, गिरेर्जलधारा आसन्। तानेवम्भूतान् आददृशे सर्वतो ददर्श, भगवान् तथा [4]जलधाराणां नादान् गुहाश्चेति॥ २६ - ३०॥

1. A,B,J ° न्दीः 2- -2. A,B,J omit 3. A,B,J add वनपरम्पराः 4. A,B,J omit जल

**वीर०** भूयसा ऊधसः पयःकोशस्य भारेण मन्दगामिन्योऽपि धेनवो भगवता आहूताः स्नुतस्तन्यस्सत्यो द्रुतमेव ययुः॥ २६॥

वनौकःप्रभृतीन् [1]ददर्शेत्यन्वयः। प्रमुदिताः मधुच्युत इति च वनराजी इत्यस्य विशेषणं, मधुच्युतः मधूनि स्रवन्त्यः प्रमुदिताः फलपुष्पसमृद्धिभिः मुदिता इव स्थिताः[2] वनौकसः पुलिन्दीरिति वा। गिरेः सकाशात् जलधारास्तासां नादान् आसन्ना निकटवर्तिनीः गुहाश्च ददृशुः इत्यर्थः॥ २७॥

कदाचित् पर्जन्ये अभितो वर्षति सति वनस्पतिक्रोडे वृक्षमूले गुहायां वा प्रविशन् [3]भगवान् कन्दानि मूलानि फलान्येव अशनं यस्य तथा भूतो रेमे॥ २८॥

कदाचित् गृहादानीतं दध्यन्नं सलिलसमीपे स्थितायां शिलायां पात्रभूतायां सहभोजनीयैः गोपैःस्सह बुभुजे॥ २९॥

क्वचित् शाद्वलोपरि हरिततृणाकीर्णप्रदेशे उपविश्य वृषादीन्वीक्ष्य भगवान् सर्वभूतानां मुदमावहतीति तथा तां आत्मशक्त्या स्वसङ्कल्पात्मिकया उपबृंहितां प्रवर्धितां तां प्रावृट्श्रियं पूजयाञ्चक्रे बहुमन्येतेत्यन्वयः। चर्वतो मीलितेक्षणान् दृप्तानिति च वृषानित्यस्य विशेषणम्, चर्वतः तृणानि खादतः मीलितानीक्षणानि यैस्तान् दृप्तान् गर्वितान् स्वोधसां भरेण[4] श्रमो यासां ताः गाश्च॥ ३०॥

1. A,B,K ददृशे इत्य° 2. A,B add प्रमुदिताः 3. T,W omit भगवान् 4. A,B add भारेण

**विज०** स्नुतस्तनीः क्षरितस्तन्यः ॥ २६ ॥

वनौकसो गावः मृगादयो वा गुहाः ददृशुरित्यन्वयः। कथम्भूताः? प्रमुदिताः प्रकृष्टानन्दाः वने राजी राजनं यासां ताः वनराज्यः। मधुश्श्रुतः मधुवन्मधुरं क्षीरं श्च्यवन्तीति मधुश्च्युतः। गम्भीरश्चासौ सन्नादश्च गम्भीरसन्नादः तेन सन्नादेन सह वर्तमानाः। यद्वा वृष्ट्यभावसमये मधुश्च्युतः वनराजीः वनपंक्तीः ददृशुः। वृष्टौ सत्यां गुहाद ददृशुरिति। वनौकसः किराता वा। गिरेः हेतोः सन्नादाः राक्षसाः। सन्नादाः भावप्रधानो निर्देशः। नष्टराक्षसत्वेन नादसहिताः ॥ २७ ॥

अभिवर्षति सति वनस्पतिक्रोडे गुहायां चैव निर्विशन् उपभुञ्जानः ॥ २८ ॥

सम्भोजनीयैः सहभोक्तव्यैः ॥ २९,३० ॥

प्रावृट्श्रियं च तां वीक्ष्य सर्वभूतमु[1]दावहाम्।
भगवान् पूजयाञ्चक्रे [2]आत्मशक्त्युपबृंहिताम् ॥ ३१ ॥

शरदृतु वर्णनम्

एवं निवसतो[3]स्तस्मिन् रामकेशवयोर्व्रजे।
शरत्सम भवद्[4]व्यभ्रा [5-]स्वच्छाम्ब्व परुषानिला[-5] ॥ ३२ ॥

[6-]शरदा नी[-6]रजोत्पत्त्या नीराणि प्रकृतिं ययुः।
[7-]भ्रष्टानामिव[-7] चेतांसि पुनर्योगनिषेवया ॥ ३३ ॥

व्योम्नो[8]ऽब्दं भूतशाबल्यं भुवः पङ्कमपां मलम्।
शरज्जहाराश्रमिणां [9]कृष्णभक्तिर्यथाऽशुभम् ॥ ३४ ॥

सर्वस्वं जलदा हित्वा वि[10]रेजुः शुभ्रवर्चसः।
यथा त्यक्ते[11]षणाश्शान्ता मुनयो मुक्तक[12]ल्मषाः ॥३५॥

1. A,V सुखा° 2. V स्या° 3. M,Ma °स्तत्र 4. K,T,W °भ्र° 5- -5. M,Ma °म्बु प्रुषितानिला 6- -6. K,T,W शारदानि; M,Ma शारद्या नी° 7- -7. K यथा भ्रष्टानि 8. M,Ma °ऽब्दमभ्रशा° 9. A,B,G,J,V कृष्णे 10. V न 11. A,B,G,J,M,Ma °कै° 12. A,B,G,J,V किल्बिषाः

**श्रीध०** ततः शरदं वर्णयत्यष्टादशभिः - **एवमिति।** विगतानि अभ्राणि यस्यां सा। स्वच्छानि अम्बूनि यस्यां सा। अपरुषः शान्तोऽनिलो यस्यां सा[1] ॥ ३१,३२ ॥

**शरदेति।** नीरजानामुत्पत्तिर्यया तया। शरदा कृतानां नीरजानां उत्पत्त्या वा॥ ३३ ॥

**व्योम्न** इति। व्योमादीनां चतुर्णां चतुरो [2]मेघादीन् मलान् शरदहरत् आश्रमिणां चतुर्णां कृष्णे जाता भक्तिर्यथा अशुभमसुखं हरति। तथाहि - ब्रह्मचारिणो गुर्वर्थोदकाहरण[3-]कुम्भश्रमं[-3] यथा भक्तिर्हरति [4]तथा पूर्णस्य, तेनानुपयोगात्। गुरुभिरपि कृतार्थस्य तस्यानियोगात्। एवं व्योम्नोऽब्दं [5]मेघं शरज्जहार, यथा च गृहिणोऽपत्यादि साङ्कर्यं भक्तिर्हरति विविक्तवासरुच्युत्पत्तेः तथाभूतानां शाबल्यं साङ्कर्यं शरत् वर्षासु [6-]वृष्टिभिः यानि सङ्कु[-6]लानि वसन्ति, यथा च वनस्थस्य मलधारणक्लेशं भक्तिर्हरति एवं भुवः पङ्कं शरत् यथा च यतीनां कामादिवासनामलं श्रीकृष्णभक्तिर्हरति एव मपां मलम् [7]शरदिति॥ ३४ ॥

**सर्वस्वमिति।** त्यक्तैषणाः त्यक्ताः पुत्र वित्त [8]दारैषणा यैस्ते॥ ३५॥

1. A,B,J add च सा च। 2. A,B,J omit मेघादीन् 3- -3. A,B,J °णादिकष्टं 4. A,J,P,V तथा 5. A,J जलदं; B omits मेघं 6. A,B,J °भिया सङ्कु° 7. V omits शरदिति 8. A,B,J लोकै°

**वीर०** अथ शरदागममाह - **एवमिति।** तस्मिन् व्रजे इत्थं निवसतोः [1-]रामकेशवयोः[-1] [2]समभवत् सम्यक्प्रावर्तत। कथम्भूता? विगतानि अभ्राणि यस्यां स्वच्छान्यम्बूनि यस्यां, अपरुषस्सुखस्पर्शोऽनिलो [3]वायुः यस्यां, ततस्त्रयाणां कर्मधारयः ॥ ३१,३२ ॥

अथ मुमुक्षूणां हितं दर्शयन्निव समीचीनैः दृष्टान्तैः शारदान् धर्मान् अनुवर्णयति **शारदानीत्यादिना** यावदध्यायसमाप्ति। **पूर्वं** शारदानि [4-]शरत्सम्बन्धीनि[-4] नीराणि जलानि [5]निर्मलान्येव स्थितानि अन्तरा प्रावृषि रजोत्पत्त्या पङ्कप्रादुर्भावेन, भ्रष्टानि इत्युत्तरस्या[6]रस्या दध्याहर्तव्यम्। पुनः प्रकृतिं स्व स्वभावं ययुः। यथा योगिनां चित्तानि निर्मलान्येव क्वचित् [7]योगभ्रष्टान्यपि, पुनरपि पुनर्योगनिषेवया प्रकृतिं यान्ति तद्वत्। योगभ्रंशेन चित्तकालुष्ये सति पुनर्योगमेव सेवेतेति

शिक्षितम्। "शरदा नीरजोत्पत्त्या" इति पाठान्तरम्। नीरजानां उत्पत्ति र्यस्यां तया शरदा हेतुभूतया नीराणि प्रकृतिं स्वच्छत्वा[8]विकारत्वशान्तत्वादिरूपां ययुः उत्तरार्धं तु पूर्ववत्॥ ३३॥

**व्योम्न** इति। क्रमेण व्योमभूतपृथिवी जलानां चतुर्णां अभ्रशाबल्यपङ्कमलानि चत्त्वारि शरदहरत्, यथा चतुर्णामाश्रमिणां अशुभं कृष्णभक्तिः हरति तद्वत्। तत्राब्दं मेघं भूतानां ज्योतिस्सलिलमरुतां शाबल्यं सम्पर्कं वर्षासु तेषां मिथस्सम्पर्काच्छरदितन्निवृत्तेरिति भावः। यथा कृष्णभक्तिः ब्रह्मचारिणो गुरूपदिष्टार्थग्रहणप्रतिबन्धक मज्ञानात्मकमशुभं हरति, यथा च गृहस्थस्य विषयसङ्गदोषं यथा वनस्थस्य कदाचिदशक्त्या स्वाश्रमोचित धर्मानुष्ठानप्रयुक्त प्रत्यवायं, यथा च यतिनः कृष्ण प्राप्ति प्रतिबन्धकं पुण्यपापात्मकं [9-]सवासनं कामादि दोषरूप[-9] मशुभं हरति तथेत्यर्थः। अनेनावश्यं चतुर्भिरपि आश्रमिभिः कृष्णभक्तिः कार्येत्युक्तम्॥ ३४॥

**सर्वस्वमिति**। जलदा मेघाः सर्वस्वत्वभूतं जलं हित्वा शुभ्रं वर्चो येषां तथाभूताः विरेजिरे, यथा मुनयो भगवन्मननशीलाः त्यक्ताः दारधनपुत्राणां ईषणाः यैः तथाभूताः निवृ[10]त्तपापा विराजन्ते तद्वत्। अ[11]नेन अवश्यं मुनिभिः ईषणा स्त्याज्या इत्युक्तम्॥ ३५॥

---

1- -1. K,T,W omit 2. K,T,W omit समभवत् 3. K,T,W omit वायुः 4- -4. T,W omit 5. T,W °लानि अव° 6. A,B,K °स्मादध्या° 7. A,B °गात्भ्र° 8. A,B °त्वाप्रकृतिवि° 9- -9. T,W omit 10. A,B °रस्त° 11. T,W omit अनेन

**विज०** आत्मशक्त्युपबृंहितां संवर्धिताम्॥ ३१॥

व्यभ्रा विगतमेघा स्वच्छाम्बु तस्य विप्रुषितेन विप्रुषा बिन्दुना युतः अनिलः स्वच्छाम्बुप्रुषितानिलः स यस्यां सा तथा॥ ३२॥

शारद्या शरत्सम्बन्धिन्या नीरजानां पद्मानां उत्पत्त्या। प्रकृतिं स्वच्छतां योगभ्रष्टानां पुनर्योगनिषेवया योगाभ्यासेन॥ ३३॥

शरत् व्योम्नः अब्दं अर्थिभ्यो जलस्य दातारं मेघं जहार। वर्षाकालो विरत इत्यर्थः। ततोऽभ्रशाबल्यं अभ्रं जलं दधत् मेघः न तु वर्षणं कुर्वन् तन्निमित्तं शाबल्यं व्योम्नः निस्रवणं जहार अभ्रच्छायाभावात् भुवः पङ्कं कर्दमं, अपां मलं कालुष्यं च अहरत्। तत्तदाश्रमोक्तानुष्ठानयथावस्थिति सूचनाय आश्रमिणामित्युक्तम्। अशुभं पातकम्॥ ३४॥

सर्वस्वं जलं शुभ्रवर्चसः धवलवर्णाः त्यक्ताः पुत्रादि दुष्टैषणा यैस्ते तथा॥ ३५।

गिरयो मुमुचुस्तोयं क्वचिन्न मुमुचुश्शिवम्।
यथा ज्ञानामृतं काले ज्ञानिनो ददते [1-]न वा[-1]॥ ३६॥

नै वा[2]विन्दन् क्षीयमाणं जलं गाधजलेचराः।
यथाऽऽयुरन्वहं क्षी[3]णं नरा मूढाः कुटुम्बिनः॥ ३७॥

गाधवारिचरास्तापमवि[4]न्दन् शरदर्कजम्।
यथा दरिद्रः कृपणः कुटुम्ब्यविजितेन्द्रियः॥ ३८॥

शनैः शनैः जहुः पङ्कं स्थलान्याम[5]श्च वीरुधः।
यथाऽहम्ममतां धीराः शरीरादिष्वनात्मसु॥ ३९॥

निश्चलाम्बु[6]रभूत्तूष्णीं समुद्रश्शरदागमे।
आत्मन्युपरते [7]यद्वत् मुनिर्व्युपरतागमः॥ ४०॥

---

1- -1. T,W सदा 2. A,B,G,J,V °विदन् 3. A,B,G,J,M,Ma क्षय्यं 4. M,Ma °विदन् 5. M,Ma °संश्च 6. K,T,W धरस्तू° 7. A,B,G,J,V सम्यक्

**श्रीध०** **गिरय** इति। अयं भावः न ह्युपाध्यायाः कर्मविद्यामिव ज्ञानिनो ज्ञानामृतं सर्वतो वितरन्ति। अपि तु कृपया क्वचिदेव। एवं गिरयश्शिवं निर्मलं तोयं क्वचिन्मुमुचुः क्वचिन्न, न पुनः प्रावृषीव सर्वत इति॥ ३६॥

**नेति**। गाधे क्षुद्रे जले चरन्तीति तथा ते मीनादयः॥ ३७॥

**गाधेति**। अविन्दन् लेभिरे॥ ३८॥

**शनैरिति**। तत्र ममतामिव पङ्कम्। अहन्तामिव आमतामपक्वतां जहुरिति॥ ३९॥

**निश्चलेति**। आत्मन्युपरते त्यक्त क्रियो मुनिरिव। निश्चलाम्बुः स एवं व्युपरतागमः निवृत्त वेदघोष इव तूष्णीमभूदिति॥ ४०॥

**वीर०** **गिरय** इति। पर्वताः क्वचिन्निर्मलं जलं मुमुचुः क्वचिन्न मुमुचुश्च ज्ञानिनो यथा क्वचित् तत्त्वत्रययाथात्म्य ज्ञानात्मक ममृतं केभ्यश्चित् शुश्रूषुभ्यो ददते [1-]केभ्यश्च न ददते[-1]। अनेन सर्वेभ्योऽपि प्रष्टृभ्यो नोपदेष्टव्यं ज्ञानिभिः

ज्ञान मित्युक्तम्। [2-]तथा चोक्तं[-2] भगवता - "तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया। उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिन स्तत्त्वदर्शिनः" (भ.गी.4-34) इति॥ ३६॥

**नैवेति।** गाधजलेचराः अल्पजल चारिणः क्षीयमाणं जलं नैवाविन्दन् नैव ज्ञातवन्तः, यथा मूढाः अज्ञाः कुटुम्बपोषणरता नरा अल्पायुषस्तथाऽप्यन्वहं क्षीयमाणमायु र्न जानन्ति तद्वत्। अनेन कुटुम्बिभि रपि देहात्मनोर्याथात्म्यं परिशीलयद्भिः अन्वहमायुःक्षयानु सन्धाननिमित्तपरितापवद्भिश्च भवितव्य मित्युक्तं भवति॥ ३७॥

**गाधेति।** गाधवारिचराः क्षुद्रजलचरा शरदि योऽर्कस्तज्जं ताप मविन्दन् लेभिरे यथा अजितेन्द्रियः इन्द्रियपरतन्त्रः कुटुम्बी दरिद्रः धनधान्यहीनः कृपणः दीनः क्षुत्प्रयुक्तं तापं जानाति तद्वत् जितेन्द्रियेण भवितव्य मिति सूचितम्॥ ३८॥

**शनैरिति।** स्थलानि शनैः शनैः पङ्कं जहुः वीरुधस्तु आममपक्वतां [3]जहुः, यथा धीरा ज्ञानिनः शरीरादिषु देहेन्द्रियादिषु अनात्मसु आत्मव्यतिरिक्तेषु अहम्ममतां अहन्तां ममतां च जहति, तद्वत्। तत्र अहन्ता साम्यं पङ्कस्य, ममतासाम्यं आमस्येति विवेकः। अवश्यं ज्ञानिभिः अहङ्कारममकारौ यत्नेन परिहर्तव्यावित्युक्तं भवति॥ ३९॥

**निश्चलेति।** शरदागमे शरदः प्रवृत्तौ सत्यां समुद्रो निश्चलाम्बुधरः तूष्णीं बभूव यथा मुनिश्शुभाश्रय मननशीलः व्युपरतः आगमः अन्नपानाद्यागमो यस्य सः, अनुपनतान्नपानोऽपि आत्मनि शरीरे उपरतेऽपि आदिकर्मणि क्तः उपरन्तु मारब्धवत्यपि देहविपत्तिपर्यन्तदशाया मपि निश्चलस्तूष्णीं आस्ते, तद्वत्। मुनिनैवं भवितव्यमिति शिक्षा॥ ४०॥

---

1. T,W omit 2- -2. A,B तथैवोक्तं 3. T,W omit जहुः

**विज०** शिवं जलं जान्वान नूपानूपस्थल भेदाभिप्रायेण निरीक्षेणाजन मोक्षामोक्षौ ज्ञानिनां ज्ञानदानादाने योग्या-योग्य मुहूर्तामुहूर्त्त कालभेद विवक्षयेति ज्ञातव्यम्॥ ३६॥

गाधजलेचराः अल्प जलनिवासिनो मत्स्यादयः प्राणिनः क्षीयमाणं शुष्यमाणं जलं दृष्ट्वा सुखं नैवाविन्दन् अन्वहं क्षय्यं क्षीयमाणं अन्तं गच्छदायुः। अनेन संसारस्य अनित्यत्वेन असारत्वं संसूचितवान्॥ ३७॥

शरदर्कः शरदृतुसम्बन्धी सूर्यः तस्माज्जातः शरदर्कजः तं कुटुम्बसम्बद्धं तापम्॥ ३८॥

वीरुधः आसन् अङ्कुरिताः अनात्म व्यतिरिक्तेषु जडेष्वित्यर्थः॥ ३९॥

उपरते उपरतविषयव्यापारे आत्मनि मनसि। यद्वा, उपे शर्वाधिपे हरौ रते सति उपरतागमः निवृत्तशास्त्र श्रवणादिकः समाधिस्थ इत्यर्थः॥ ४०॥

केदारेभ्य स्त्वपोऽगृह्णन् कर्षका दृढसेतुभिः।
यथा प्राणैः [1-]स्रवज्ज्ञानं[-1] तन्निरोधेन योगिनः॥४१॥

शरदर्कांशु[2-]जं तापं[-2] भूतानामुडुपोऽहरत्।
देहाभिमानजं [3]बोधो मुकुन्दो व्रज योषिताम्॥४२॥

खमशोभत निर्मेघं शरद्विमलतारकम्।
सत्त्वयुक्तं यथा चित्तं शब्दब्रह्मार्थदर्शनम्॥४३॥

अखण्डमण्ड[4]लो व्योम्नि रराजोडुगणैश्शशी।
यथा यदुपतिः कृष्णो वृष्णि [5]चक्रावृतो भुवि॥४४॥

आश्लिष्य समशीतोष्णं प्रसूनवनमारुतम्।
जनास्तापं जहुर्गोप्यो न [6]कृष्णहृत चेतसः॥४५॥

---

1- -1. M,Ma स्वविज्ञानं 2- -2. A,B,G,J °जांस्तापान् 3. A दुःखं 4. M,Ma °ल° 5. M,Ma चक्रैर्वृतो 6. M,Ma °ष्णा°

**श्रीध०** केदारेभ्य इति। [1]केदारेभ्यः बद्धसेतु शालि दात्रेभ्यः दृढैस्सेतुभिः अपोऽगृह्णन्। ततः[2]परं वृष्ट्यभावात् प्राणैरिन्द्रियैः तन्निरोधेन इन्द्रिय प्रत्याहारेण [3]द्वारेण॥४१॥

**शरदिति।** देहाभिमानजं बोध इव। व्रजयोषितां [4]तापं मुकुन्द इव चेत्यर्थः॥४२॥

**खमिति।** शरदा विमलाः तारकाः यस्मिन् तत्। [5-]खमाकाशं[-5] शब्दब्रह्मणो वेदस्यार्थान् पूर्वोत्तरमीमांसा [6]प्रणीतान् दर्शयतीति तथा [7]तदिव॥४३,४४॥

**आश्लिष्येति।** समः [8]अन्यूनानधिकः [9]शीतश्च उष्णश्च तं न तु गोप्यः कृष्णापहृत चेतस्त्वेन तासां [10]सन्तापो दुःसह इति, यद्वा नकार उपमार्थः तथा च कृष्णहृत चेतस इवेति। चेतसा कृष्णमाश्लिष्य [11-]आ लिङ्ग्य[-11] यथेत्यर्थः॥४५॥

1. P.V omit केदारेभ्यः 2. P.V omit परं 3. A,B,J omit द्वारेण 4. B,P,V omit तापं 5- -5. A,B,J omit 6. A,B,J निर्णीतान् 7. A,B,J तद्वत् 8. A,B,J °नाधि° 9. P.V °तोष्णश्च 10. P.V omit सन्तापो 11- -11. A,B,J omit.

**वीर०** केदारेभ्य इति पञ्चमी। कृषीवलाः शालिक्षेत्रेभ्यः प्रवहन्तीः अपः जलानि दृढैः सेतुभिः बन्धनैः अगृह्णन् निरुद्धवन्तः ततः परं वृष्ट्यभावादिति भावः। यथा योगिनः प्राणैरिन्द्रियैः तद्द्वारा स्रवत् बाह्यविषयग्रहण प्रवणी- भवत् ज्ञानं धर्मभूत ज्ञानं तन्निरोधेन प्राणनिरोधेन आत्मस्वरूपगोचरं कुर्वन्ति, तद्वत्, इन्द्रिय निरोधपरेणात्मस्वरूप परिशीलन परेण च भवितव्यमिति सूचितम्॥४१॥

**शरदिति।** उडुपः चन्द्रः भूतानां शरदि योऽर्कः तस्यांशुभ्यो जातान् तापान् जहार। उत्तरार्धस्य यथेत्यादिः। यथा देहाभिमानेन जातं तापं परकृतनिन्दादिप्रयुक्तं देहयाथात्म्यगोचरो बोधो हरति यथा च व्रजयोषितां तापं मन्मथप्रयुक्तं मुकुन्दो जहार, तद्वत्। 'देहाभिमानजं तापम्' इति पाठे बोध इति कर्तृ पदमध्याहर्तव्यम्। यथोक्त एवार्थः। अनेन हेयत्वज्ञानार्थं देहयाथात्म्य परिशीलनमपि कर्तव्यमित्युक्तं भवति॥४२॥

**खमिति।** निर्मेघं मेघरहितं शरदि विमलास्तारका यस्मिन् तथाभूतं सत् [1]खमशोभत, यथा सत्त्वयुक्तं सत्त्वगुणयुक्तं, सत्त्वप्रचुरमिति यावत् तच्चित्तं शब्द ब्रह्मणो वेदस्य योऽर्थो अर्थ पञ्चकरूपः तं पश्यतीति [2]तथा। नन्द्यादित्वात् कर्तरि ल्युः। यद्वा शब्दब्रह्मार्थो [3]दृश्यतेऽनेनेति तथा करणे ल्युट्। सत्त्वप्रवणं चेतो रागाद्यकलुषितं सत् निर्मल मतीन्द्रिय वेदार्थप्रकाशकं भवति तद्वदित्यर्थः। सत्त्वप्राचुर्याय आहारशुद्ध्या भवितव्यमिति सूचितम्। अत्र तारकास्थानीयाः वेदार्थाः परमात्मतदाराधनाराधकादि स्वरूपात्मकाः, आकाशस्थानीयं चेतः, मेघस्थानीयं रजः तमश्चेति विवेकः॥४३॥

**अखण्डेति।** शशी चन्द्रो व्योम्नि आकाशे निर्मेघे अखण्डं पूर्णं मण्डलं यस्य तथा भूतो नक्षत्रसमूहैः सह, यथा यदुपतिः श्रीकृष्णो भुवि वृष्णीनां समूहेनाऽऽवृतो रराज तद्वत्। अनेन यदुपतेश्चन्द्रवत्सर्वलोकाह्लादकरत्वमभिप्रेतम्॥४४॥

**आश्लिष्येति।** जनाः समं मितं शीतं उष्णं च यस्य तं, प्रकृष्टानि सूनानि कुसुमानि यस्य तस्य वनस्य मारुतमाश्लिष्य अनुभाव्य तापं जहुः। ग्रीष्मशैत्यप्रयुक्तं दुःखं जहुरित्यर्थः। गोप्यस्तु तापं मन्मथ तापं न जहुः। तत्र हेतुं वदन् विशिनष्टि - कृष्णेन हृतानि चेतांसि यासां तथाभूताः। अनेन कृष्णस्य यौवनावस्था गोपीचित्तसमाकृष्टिश्च सूचिता॥४५॥

1. T,W सम° 2. A omits तथा 3. A,B लक्ष्यते°

**विज॰** केदारेभ्यः केदारार्थं, प्राणैः इन्द्रियैः, तेषां इन्द्रियाणां निरोधेन प्रत्याहारेण॥ ४१॥

अहं देह इति देहाभिमानो देह विषयं ज्ञानं, तस्माज्जातं देहाभिमानजं तापं, बोधः आत्म ज्ञानं मुकुन्दो यथेति शेषः दृष्टान्तद्वयम्॥ ४२॥

खमाकाशं शरदा विमलानि विशदानि तारकाणि यस्मिंस्तथा, सत्त्वेन व्यवसायेन युक्तं सत्त्वगुणोपेतं वा, शब्दात्मकं ब्रह्म वेदः तस्य मुख्यवाच्यः श्रीनारायण स्तं दर्शयतीति शब्दब्रह्मार्थ दर्शनं, शब्दब्रह्म हिरण्यगर्भः तस्यार्थो हेतुः कारणमिति वा॥ ४३॥

अखण्डमण्डलं पूर्णमण्डलम्॥ ४४॥

मारुतं शारदमिति शेषः अर्कजनितं तापं गोप्यः, कामार्कजनितं तापं न जहुः तत्र निमित्तं कृष्णेनाऽऽहृत चेतसः कृष्णेनाऽऽहृतं चेतो यासां ता स्तथा॥ ४५॥

**गावो मृगाः खगा नार्यः पुष्पिण्यश्शरदा[1]ऽभवन्।**
**अन्वीयमानास्स्वव[2]वृषैः फलैरीश[3]क्रिया इव॥ ४६॥**

**[4]उदहृष्यन् वारिजानि, [5-]सूर्योण कुमुदं विना[-5]।**
**राज्ञा तु निर्भया लोका[6] यथा[7] दस्यून् विना नृप॥ ४७॥**

**पुरग्रामे [8-]ष्वाग्रयणैरैन्द्रियैश्च[-8] महोत्सवैः।**
**बभौ भूः पक्वसस्याढ्या कलाभ्यां नितरां हरेः॥ ४८॥**

**[9-]वणिग्यतिनृपस्नाता[-9]ः निर्गम्यार्थान् प्रपेदिरे।**
**वर्षरुद्धा यथा सिद्धाः स्वपिण्डान् काल आगते॥ ४९॥**

इति श्रीमद्भागवते महापुराणे श्री वैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीव ब्रह्मविद्यायां पारमहंस्यां संहितायां दशम स्कन्धे पूर्वार्धे
प्रावृट् शरद्वर्णनं नाम विंशोऽध्यायः॥ २०॥

1. K,T,W °दागमो° 2. M,Ma ऋषभैः 3. M,Ma °षत्क्रि° 4. V उपा° 5- -5. A,B,G,J,V सूर्योत्थाने कुमुद्विना 6. M,Ma °को 7. V आसन् 8- -8. M,Ma °च्चाश्रमिणामिन्द्रयाग 9- -9. A,B,G,J,K वणिङ्मुनि नृपस्नाताः ; M,Ma वणिजो नगरात्स्वीयात्

**श्रीध०** **गाव** इति। पुष्पिण्यो गर्भिण्यः अन्वीयमानाः स्ववृषैः स्वपतिभिः अनिच्छन्त्यो[1]ऽपि बलादनुगम्यमानाः ईश्वराराधनार्थाः क्रियाः बलात्फलैरनुगम्यमानाः समस्तभोग गर्भा यथेति॥ ४६॥

**उदहृष्यन्निति।** कुमुत् कुमुदं कुत्सिता[2-] मुत्[-2] यस्य तदिति दस्यु साम्यम्॥ ४७॥

**पुरेति।** आग्रयणैः नवान्नप्राशनार्थैः वैदिकैः कर्मभिः[3] ऐन्द्रियै इन्द्रियार्थैः लौकिकैश्च महोत्सवैः कलाभ्यां रामकृष्णाभ्यां दर्शनादिमहोत्सवाभ्याम्॥ ४८॥

**वणिगिति।** वणिजः यतयः नृपाः स्नातकाश्च दृष्टादृष्टाभ्यां वर्षरुद्धास्सन्तः निर्गम्य अर्थान् वाणिज्य स्वाच्छन्द्य दिग्विजय विद्यादीन् प्रपेदिरे प्रापद्यन्त। यथा मन्त्र योगादि सिद्धाः आयुषा रुद्धाः काले आगते स्वपिण्डान् योगादि प्राप्यान् देवादि देहानिति॥ ४९॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिविरचितायां भावार्थ दीपिकायां
व्याख्यायां विंशोऽध्यायः॥ २०॥

1. A °च्छत्यो° 2- -2. P,V °ताः मुदः 3. A, omits कर्मभिः ; B,J यागैः

**वीर०** **गाव इति।** गवादयः स्ववृषैः स्वस्वप्रियैः अन्वीयमानाः शरदा निमित्तभूतया पुष्पिण्यो गर्भिण्यो बभूवुः। यथा ईश्वराराधनात्मिका[1]ः क्रियाः स्वसाध्यैः फलैः धर्मादिपुरुषार्थैः अन्वीयमाना समस्त भोग गर्भा भवन्ति, तद्वत्। अनेनेश्वरक्रियाणां फलाऽविनाभावित्वमुक्तम्॥ ४६॥

**उदहृष्यन्निति।** कुमुदमिति जात्यभिप्रायमेकवचनम्। कुमुदान्युत्पलानि विना सर्वाणि वारिजानि सूर्येणोदहृष्यन् विकासेन हृष्टा इव लक्षिता बभूवुः। यथा हे नृप! दस्यून् चोरव्याघ्रादीन् विना इतरे सर्वे जनाः राज्ञा हेतुना निर्भया हृष्यन्ति, तद्वत्। अनेन राज्ञा दस्यू नुद्वेजयता भवितव्यमित्युक्तम्॥ ४७॥

**पुरग्रामेष्विति।** पुरेषु ग्रामेषु चाग्रयणैः नूतन व्रीहयादि भक्षणाभ्यनुज्ञानार्थैराग्रयणाख्य यागरूपैः ऐन्द्रियैः इन्द्रिय प्रीत्यर्थैः अन्यैश्च महद्भिः उत्सवैः सर्वसस्याढ्या भूः बभौ हरेः कलाभ्यां रामकृष्णाभ्यां तु नितरां बभौ छवि न्यायेन कलाभ्यामित्युक्तिः॥ ४८॥

**वणिगित्यादि।** वणिगादयः तावद्वर्षेण रुद्धाः शरदि निर्गम्यार्थान् प्रयोजनानि प्रपेदिरे। तत्र वणिजः क्रयविक्रयादि व्यापारिणः, मुनयः सन्न्यासिनः, नृपाः जयिनः, स्नाताः तीर्थ यात्रा पराः एते वाणिज्यस्वच्छन्द सञ्चार[2] विजयतीर्थस्नानादिरूपानर्थान् प्रपेदिरे इत्यर्थः। यथा[3] सिद्धास्तपस्सिद्धाः फलकाले आगते सति अस्माल्लोकात् निर्गत्य स्वपिण्डान् स्वस्वतपस्साध्य भोग्य जातं प्रतिपद्यन्ते तद्वत्। अनेन तपसः फलाऽविनाभावित्वमुक्तम्॥ ४९॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्र चन्द्रिकायां
व्याख्यायां विंशोऽध्यायः॥ २०॥

---

1. A,B,T,W °का° 2. A,B omit सं 3. A,B यद्वा

**विज०** पुष्पिण्यः गर्भिण्यः ऋषभैः इति पाठः। वृषभैरिति पाठे मातृ सहोदरी विवेक ज्ञान शून्यत्वात्तथोक्तमित्यर्थः। फलैर्बीजैः अन्वीयमानाः उप्यमानाः, ईषत्क्रियाः शनैः क्रियमाणाः, कृषिक्रिया इव फलैः स्वर्गादि लक्षणैः अनुगता ईष त्क्रिया ऊनातिरेकपरिहारार्थाः, विलम्बमान याग क्रिया इव "लाभनिष्पत्ति भोगेषु बीजे फाले धने फलम्" (वैज.को 6-5-52) इति वा॥ ४६,४७॥

इन्द्रयागमहोत्सवैः इन्द्रदैवत्याग्रायणेष्टि लक्षणोत्सवैः हरेः कलाभ्यां नितरां बभौ, आश्रमिणां अग्निव गृहस्थमात्राणां वा॥ ४८॥

प्रावृषि वर्षेण रुद्धाः शरदि स्वीयात् नगरात् पत्तनात् निर्गत्य अर्थान् देयादेयविषयान् प्रपेदिरे वर्षेणाब्देन तल्लक्षित कालेनेत्यर्थः। रुद्धाः साधन सामग्री सम्पत्ति पर्यन्त कालेन प्रतिबद्धाः सिद्धाः मन्त्रौषध तपस्सम्पन्नाः पुरुषाः काले फलदानाभिमुखलक्षणे आगते आसन्ने स्वीयात् नगरात्स्वत्वेनाभिमतादेहान्निर्गत्य

स्वपिण्डान्निजफलानभावयोग्यान्देहान् यथा प्रपद्यन्ते इत्यन्वयः। "वर्षोऽस्त्री भारताद्यम्बुवृष्टिषु प्रावृषि स्त्रिया (वैज. को. 6-5-79)" इति यादवः॥४९॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
दशमस्कन्धे पूर्वार्धे विंशोऽध्यायः॥२०॥

(विजयध्वजरीत्या अष्टादशोऽध्यायः)

# एकविंशोऽध्यायः

## (विजयध्वजरीत्या एकोनविंशोऽध्यायः)

श्रीशुक उवाच

इत्थं शरत्स्वच्छजलं पद्माकर सुगन्धिना।
न्यविशद्वायुना[1] वातं स[2]गोगोपालकोऽच्युतः॥१॥

कुसुमितवनराजिशुष्मि[3] भृङ्गद्विजकुलघुष्ट[4]सरस्सरिन्महीध्रम्।
[5]यदुपतिरवगाह्य चारयन् गास्सह पशुपालबलश्चुकूज वेणुम्॥२॥

तद्व्रजस्त्रिय आश्रुत्य वेणुगीतं स्म[6]रोदयम्।
काश्चित्परोक्षं कृष्णस्य स्वसखीभ्यो[7]ऽन्ववर्णयन्॥३॥

तद्वर्णयितुमारब्धाः स्मरन्त्यः कृष्णचेष्टितम्।
नाशकन् स्मरवेगेन, विक्षिप्तमनसो नृप!॥४॥

बर्हापीडं नटवरवपुः कर्णयोः कर्णिकारं बिभ्रद्वासः कनककपिशं वैजयन्तीं च मालाम्।
रन्ध्रान्वेणोरधरसुधया पूरयन्गोपबृन्दैर्बृन्दारण्यं स्वपदरमणं प्राविशद्गीतकीर्तिः॥५॥

---

1. M,Ma °ना वीतं; V °नोपेतं 2. K,T,W सह गोपा° 3. G °ष्म° 4. A °जु° 5. A,B,G,J,M,Ma °मधु° 6. M,Ma महो° 7. M,Ma न्यवेदयन्

## श्रीधरस्वामिविरचिता भावार्थदीपिका

एकविंशे शरद्रम्यबृन्दावनगते हरौ।
तद्वेणुस्वन माकर्ण्य गोपीभिर्गीतमीर्यते॥

**इत्थमिति।** इत्थमेवम्भूतं वनम्। तदेवाऽऽह - शरदा स्वच्छानि जलानि यस्मिन् तत्। वायुनो[1]पेतं अनुगतं [2]वनम्। [3]तद्देशव्याप्तमित्यर्थः॥१॥

**कुसुमितेति।** ततश्च कुसुमितवनराजिषु शुष्मिणो मत्ताः भृङ्गाः द्विजाः [4] च तेषां कुलानि तैर्घुष्टा(नि)स्सरांसि सरितः महीध्राश्च यस्मिन् तद्वनं कृष्णः अवगाह्य प्रविश्य वेणुमवादयत्॥ २॥

**तदिति।** तत् कृष्ण[5] वेणु गीतं, **स्मरस्य उदयो यस्मात्तत्।** आश्रुत्य [6]**श्रुत्वा परोक्षं** यथा भवति तथा व्रजे स्थितत्वात्॥ ३॥

**तदिति।** विक्षिप्तमनसः व्याकुल चित्ताः॥ ४॥

[7]यादृक् [8]कृष्णस्य स्मरणं, तासां मनसः क्षोभकं जातं तदाऽऽह **बर्हेति।** नटवत् वरं वपुः बिभ्रत्। बृन्दावनं प्राविशत्। कथम्भूतं तद्वनम्? स्वपदाङ्कितैः रमणं रतिजनकं गोपबृन्दैः गीतकीर्तिः, तथा बर्हम[9]यापीडं शिरोभूषणं बिभ्रत्। बर्हमापीडो यस्मिन्निति वपुषो विशेषणं वा। वेणुवादनमुत्प्रेक्षते रन्ध्रान्वेणोरिति। अतो नूनम्। अधरसुधैव पूर्णाद्वेणोरुच्छलन्ती गीतवत् [10-]प्र सर्पतीति[-10] भावः॥ ५॥

---

1. A,B,J ° ना वातं, 2. B,J omit वनम् 3. A,B,J तदेक° 4. A,B,J add खगाः 5. P.V °ष्णस्य 6. P.V omit श्रुत्वा 7. A,B,J यादृशं 8. A,B,J ° ष्ण स्म° 9. A,B,J °यमापी° 9- -9. A,B,J प्रसर्पितुमर्हतीति

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

इत्थं शारदमनुवर्ण्याथ तदा बृन्दावने क्रीडतो वेणुं रणयतो भगवतो गोपी चित्तापहारिणः कांश्चिद्विहारान् स्ववेणुगीतान् गोपीभिर्मिथोऽनुवर्णितानाह एकविंशेन **इत्थमिति।** इत्थमेवम्भूतं शारदगुणसम्पन्नं वनमिति विशेष्य मध्याहर्तव्यम्। इत्थमित्यनेनाभिप्रेतं प्रकाशयन् विशिनष्टि। शरदा स्वच्छानि जलानि यस्मिन्, पद्माकरैः शोभिनो गन्धो यस्य तेन [1]वायुना वातं व्याप्तं वनं गोभिर्गोपालैश्च सहितोऽच्युतो न्यविशत्॥ १॥

ततश्च कुसुमितवनराजिषु, शुष्मिणां मत्तानां भृङ्गाणां द्विजानां पक्षिणां च कुलैर्घुष्टाः(नि) [2]शब्दिताः(नि) सरांसि सरितः, महीध्राः पर्वताश्च यस्मिन् तद्वनं विगाह्य प्रविश्य यदुपतिः कृष्णः पशुपालैः बलदेवेन च सहितः गाश्चारयन् वेणुं चुकूज अवादयत्॥ २॥

स्मरस्योदयो यस्मात् तत् कृष्णस्य वेणुगीतमाकर्ण्य काश्चिद्व्रजस्त्रियः तस्य [3]कृष्णस्य परोक्षमसमक्षं स्वसखीभ्योऽन्ववर्णयन्॥ ३॥

तत् कृष्णस्य वेणुगीतं चेष्टितं वर्णयितुम् आरब्धाः आरब्धवत्यः तत्स्मरन्त्यो, हे नृप! स्मरवेगेन व्याकुलितचित्ताः तावत् वर्णयितुमेव नाशक्नुवन्, शक्ता न बभूवुः, कृष्णश्च तच्चेष्टितं च तयोस्समाहारः, कृष्ण चेष्टितम्। यादृशस्तदा कृष्णः चेष्टितं च तदुभयं स्मरन्त्यो नाशक्नुवन्नित्यर्थः॥ ४॥

कीदृशं कृष्णचेष्टितमित्यत्राऽऽह **बर्हेति**। बर्हात्मकमापीडं शिरोभूषणं द्वितीयान्तानां बिभ्रदित्यनेनान्वयः[4]। कर्णयोः श्रोत्रसन्ध्योः कर्णिकारं लाङ्गलीकुसुमात्मकं कर्णपूरं च [5]तथा कनकवत्कपिशं पिशङ्गं वासः वैजयन्तीं मालां नटात्मकवरस्येव वपुश्च बिभ्रत्। नटवरवपुरिति बहुव्रीहिणा कृष्णविशेषणं वा। तस्य तत्पुरुषपक्षे तद्विशेषणत्वमपि बर्हापीडमित्यस्य बहुव्रीहिणा सम्भवति, अधरस्य सुधया वेणोरन्ध्रान्पूरयन् साधरसुधेन मुखवायुना वेणुं [6]नादयन्नित्यर्थः। गोपानां बृन्दैः गीता कीर्तिर्यस्य तथाभूतः[7]सन् स्वपदैरङ्कितैः रमणं रतिजनकं बृन्दावनं प्राविशत्। उक्त वेषं कृष्णं बर्हापीडादिधारणवेणुरन्ध्रपूरणबृन्दारण्य-प्रवेशनात्मकं चेष्टितं च स्मरन्त्यो नाशक्नुवन्निति [8-]पूर्वेणान्वयः[-8] ॥५॥

---

1. A,B वातेन 2. T,W omit शब्दिताः 3. T,W omit कृष्णस्य 4. T,W °त्यन्वयः 5. T,W omit तथा 6. K. वा° 7. K,T,W omit सन् 8- -8. K,T,W भावः

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

स्वयोग्यतानुसारेण हरौ ज्ञानसाधनं भक्तिः कर्तव्येत्यभिप्रेत्य अस्मिन्नध्याये तत्र गोपस्त्रीणां कृष्णे स्नेहातिशयं वक्तुमुपक्रमते - **इत्थं शरत्स्वच्छजलमित्यादिना**। पद्माकराणां सुगन्धोऽस्यास्तीति पद्माकरसुगन्धी, तेन वायुना वीतं परिवृतं, इत्थमुक्तविधिना शरदा स्वच्छं निर्मलं जलं यस्मिन् तत्तथा। अनेन वायोः शैत्यं सूचितम्। न्यविशत् वनमिति शेषः। "नेर्विश" (अष्टा 1-3-17) इति सूत्रेण लौकिकस्याऽऽत्मनेपदविधानम्, न तु छान्दसस्य। अच्युत इत्यनेन वनक्रीडाद्यभावेऽपि सुखच्युतिः नास्तीति सूचयति॥१॥

अत्र वनशब्देन वृक्षसमुच्चय उच्यते। कुसुमिताः पुष्पितोपेताः, वनराजयः वृक्षपङ्क्तयो यस्मिंस्तत्तथा। शुष्मिभिः मत्तैः स्वजातिश्रेष्ठैर्वा, भृङ्गैः द्विजगणैः पक्षिगणैश्च; घुष्टानि शब्दितानि, सरांसि अखाततटाकाः सरितः स्यन्दमाना नद्यः, महीध्राः पर्वता यस्मिन् तत्तथा। मधुपतिः माधवः, एवंविधं वनमवगाह्य वेणुं चुकूजेत्यन्वयः। कूजनं सुरतमन्त्रणं कामवर्धनं सीत्कारोद्भवं, श्रोत्रीणां गोपीनां कर्षणार्थमेवमुक्तम्॥२॥

महः कामः, तस्योदयः अङ्कुरीभावः यस्मात् तन्महोदयं, स्मरोदयमिति केचित् पठन्ति। तद्वेणुं गीतमाश्रित्य काश्चिद्व्रजस्त्रियः परोक्षं कासांचिददृष्टश्रुतं कृष्णस्य चरितं स्वसखीभ्यो न्यवेदयन्नित्यन्वयः॥३॥

वर्णयितुं कीर्तयितुम्॥४॥

हरेस्तदाकारदर्शनं च सुखहेतुरिति भावेन तस्य स्वरूपप्रकारं वक्ति **बर्हापीडमित्यादिना**। बर्हं पिच्छमेवापीडं शेखरोत्तंसं [1-]यस्मिन् तत्[-1]। [2-]नटवत् वरवपुः[-2] शुभाकारं[3] बिभ्रदिति प्रत्येकं सम्बन्धयितव्यम्। स्वपदेन स्वपादेन रमत इति रमणं रमयत् रन्ध्रान् सुषिराणि॥५॥

---

1- -1. Ma यस्य सः तं 2- -2. Ma नटवरवपुः 3. Ma °रः

★ बर्हापिञ्छो वनचरवपुः कर्णबो कर्णिकारः सव्येबाहौ निहितवदनः सज्जमन्यत्रहस्ते।
भ्रूविन्यासाङ्गुलिभिरणवन्नाधयन्गोपवृन्दान् भूतग्रामं तर्हि रमयन् ब्रह्मगान्धर्वमेव ॥ ६ ॥

इति वेणुरवं राजन्सर्वभूतमनोहरम्।
श्रुत्वा व्रजस्त्रियस्सर्वा वर्णयन्त्योऽभिरेभिरे[1] ॥ ७॥

गोप्य ऊचुः

अक्षण्वतां फलमिदं न परं विदामस्सख्यः! पशू[2]ननुनिवेशयतोर्वयस्यैः।
वक्त्रं व्रजेशसुतयोरनुवेणु जुष्टं यै[3]स्तैर्निपीतमनुरक्तकटाक्षमोक्षम् ॥ ८ ॥

चूतप्रवालबर्हस्तबकोत्पलाब्ज मालानु[4]रक्तपरिधानविचित्रवेषौ
मध्ये विरेजतुरलं पशुपालगोष्ठ्यां रङ्गे यथा नटवरौ क्व च गायमानौ ॥ ९ ॥

गोप्यः किमाचरदयं कुशलं स्म वे[5]णुदामोदराधरसुधा[6-]मपि गोपिकाना[-6]म्।
भुङ्क्ते स्वयं यदव[7-]शिष्टरसं ह[-7]दिन्यो [8]हृष्यत्त्वचोऽश्रु मुमुचुस्त[9-]रवो यथाऽऽर्या[-9]ः ॥ १० ॥

बृन्दावनं सखि! भुवो वितनोति कीर्तिं यद्देवकीसुतपदाम्बुजलब्धलक्ष्मि।
गोविन्दवेणुमनु मत्तमयूर[10]नृत्तं प्रेक्ष्या[11-]द्रि सान्वपरता[-11]न्य समस्तसत्त्वम् ॥ ११ ॥

---

★ This extra verse is found in B.M.Ma edn and its commentary of Vijayadwaja is found in A,B,M,Ma editions.
1. A,B,G,J,Ma °भि° 2. A,B,G,J °ननुवि° ; M,Ma °नभिनि° 3. A,B,G,J यैर्वानि° ; M,Ma यैर्यैर्नि° 4. A,B,G,J,V °पृक्त; K,T,W °युक्त 5. T,W रे° 6- -6. M,Ma °सरसाम्प्रगेयम्; V मपि गोपिभोग्याम् 7- -7. M,Ma °रसौघमार्गे 8. M,Ma हृष्टत्व° 9. M,Ma °वस्सदर्भाः। 10. A,B,G,J,M,Ma नृत्यं 11. M,Ma °दतानुचरितान्य

**श्रीध०** **इतीति**। अभिरेभिरे। वर्णयन्त्यः[1]सत्यः। पदे पदे परमानन्दमूर्तिं कृष्णं परिरब्धवत्यः ॥ ६,७॥

अनुवर्णनमेवाह **अक्षण्वतामिति** त्रयोदशभिः। अक्षण्वतां चक्षुष्मतां, तावदिदमेव फलं प्रियदर्शनं, परमन्यत् न विदामः न विद्म इत्यर्थः। तच्च फलं सखिभिस्सह पशून् [2]वने प्रवेशयतो रामकृष्णयोर्वक्त्रं यैर्निपीतम् [3-]सादरं[-3] दृष्टं तैरेव जुष्टं सेवितम् नान्यैरित्यर्थः। कथम्भूतं वक्त्रम्? अनुवेणु, वेणु मनुवर्तमानं, तं वादयत्। तथा अनुरक्तकटाक्षमोक्षं स्निग्धकटाक्षविसर्गं, अथवा यैर्निपीतं तयोर्वक्त्रं तैः[4] जुष्टम्। इदमेवाक्षण्वतामक्ष्णोः फलमिति ॥ ८ ॥

अन्या आहुः **चूतेति**। चूतप्रवालादीनां [5]विचित्राभिर्मालादिभिः अनुपृक्ते ईषदन्तरान्तरतस्संयुक्ते परिधाने नीलपीताम्बरे, ताभ्यां विचित्रो वेषो ययोस्तौ। क्वच कदाचित् पशुपालगोष्ठ्यां गोपालसभायां मध्ये, अलमत्यर्थम्। विरेजतुः। अहो! [6]गोपालानां पुण्यमिति भावः ॥९॥

अन्या ऊचुः **गोप्य** इति। हे गोप्यः! अयं वेणुः किं स्म पुण्यमाचरत् कृतवान्। कथम्? यत् यस्मात् गोपिकानामेव भोग्यां सतीमपि। दामोदराधरसुधां स्वयं स्वातन्त्र्येण, यथेष्टं भुङ्क्ते [7]कथमवशिष्टस्सं केवलमवशिष्टं[-7] रसमात्रं यथा भवति तथा। यतः यासां [8]ह्रदिनीनां पयसा पुष्टः [9]वेणुः ताः मातृतुल्या ह्रदिन्यः हृष्यत्त्वचः विकसितकमलवनमिषेण रोमाञ्चिताः लक्ष्यन्ते। येषां वंशे जातास्ते तरवो मधुधारामिषेण आनन्दाश्रु मुमुचुः। यथा आर्याः कुलवृद्धाः स्ववंशे भगवत्सेवकं दृष्ट्वा हृष्यत्त्वचोऽश्रुमुञ्चन्ति तद्वदिति॥१०॥

काश्चिदाहुः **बृन्दावनमिति**। हे सखि! बृन्दावनं भुवः कीर्तिं स्वर्गादपि विशेषेण तनोति। कथम्भूतम्? यद्देवकीसुतस्य पदाम्बुजाभ्यां लब्धा लक्ष्मीः शोभा संपत् येन तत्। किञ्च, गोविन्दस्य वेणुमनु वेणुनिनादं शृत्वा अनन्तरं मन्दगर्जितं नीलमेघं तं मत्वा, मत्ता, ये मयूराः [10]तेषां नृत्यं प्रेक्ष्य, सङ्घशः तत्र तत्रै[11]व अद्रिसानुषु उपरतानि उपरतक्रियाणि अन्यानि समस्तानि सत्त्वानि यस्मिन् तत्। न एतदन्येषु लोकेषु विद्यते, अतो [12]लोकान्तरापेक्षया[-12] भुवः कीर्तिं वितनोतीत्यर्थः ॥११॥

---

1. A,B,J omit सत्यः 2. A,B,J वनं 3- -3. B,J,P,V omit 4. A,B,J add यत् 5. A,B,J omit वि 6. B,J °पानां° 7- -7. P.V omit 8. P.V omit ह्रदिनीनां 9. A,B,J omit वेणुः 10. A तैः आचरितं 11. A,B,J omit एव 12- -12. P,V omit.

**वीर०** एवं तावद्वर्णयितुमशक्ताः ततश्शनैः लब्धाश्वासा वर्णयामासुरित्याह **इतीति**। हे राजन्! इति इत्थं तावदेवम्भूता व्रजस्त्रियः सर्वभूतानां मनोहरं [1]वेणुरवमाकर्ण्य तमेव सचेष्टितं वर्णयन्त्यः अभिरेभिरे, तद्वर्णनात्मकं विहारं चक्रुः, 'अभिरेमिरे' इति पाठे [2]वर्णयितुं [3]बुद्धौ सन्निधापितं, मन्मथ मन्मथं [4]भगवन्तं परिरेभिरे इत्यर्थः ॥६,७॥

वर्णनामेवाऽऽह - **अक्षण्वतामित्यादिना** यावदध्याय[5]परिसमाप्ति। इतीत्यस्य वक्ष्यमाणप्रकारेणेति [6]वाऽर्थः। तदा तमेव प्रकारमक्षण्वतामित्यादिना दर्शयति, हे सख्यः! चक्षुष्मतां जनानां चक्षुषामिदमेव फल मन्यत्तु न विद्मः, किं तत्? यद्व्र जेशस्य नन्दस्य सुतयोः रामकृष्णयोः वक्त्रं मुखं यैः नितरां पीतमनुभूतं दृष्टमिति यावत्, तदेतत् "यैर्वा निपीतम्" इति पाठः। "यैस्तैर्निपीतम्" इति च पाठो दृश्यते। तदा यैश्चक्षुर्भिस्साधनैः तैरक्षण्वद्भिः कर्तृभिः [7]निपीतमित्येतदित्यर्थः। कथम्भूतयोः? वयस्यैः [8]समानवयस्कैः गोपैस्सह पशूननुनिवेशयतोः वनं प्रति प्रवेशयतोः, कथम्भूतं वक्त्रम्? अनुवेणु वेणुमनुवर्तमानं वेणुं वादयदित्यर्थः। जुष्टं पश्यतां, निरतिशयप्रीतिविषयम् अनुरक्तानां स्निग्धानां कटाक्षाणां मोक्षो विसर्गो यस्मिन् तथाभूतम्॥८॥

अन्यास्त्वाहुः **चूतेति**। एवम् उत्तरत्रापि। अत एव सर्वत्र वक्तृभेदान्नातीव सङ्गतिरपेक्षिता। चूतपल्लवादीनां मालाभिरनुयुक्ते ईषदन्तरान्तरा संयुक्ते। "अनुपृक्ते" इति पाठे स एवार्थः। परिधाने नीलपीताम्बरे ताभ्यां

विचित्रौ वेषौ ययोः तौ, क्व च कदाचित् गायमानौ गोपसभायां मध्ये नितरां विरेजतुः यथा रङ्गे नटश्रेष्ठौ तथा। अहो पश्यतां गो[10]पानां म[11]हत् भाग्यमिति भावः॥९॥

**गोप्य** इति। हे गोप्यः! अयं कृष्णकरस्थः वेणुः किं स्म कुशलं पुण्यमाचरच्चकार? कुतः? यत् यस्मात् गोपिकानामपि, अपिशब्दो दौर्लभ्यद्योतकः, गोपिकानाम् अस्माकमपि दुर्लभां दामोदरस्याधरसुधां स्वयं भुङ्क्ते, अनेकोपभोग्यां स्वयमेक एव भुङ्क्ते, अवशिष्टरसं तु ह्रदिन्यो नद्यस्तरवश्च भुञ्जते। कृत्स्नायामधरसुधायां वेणुनैकेन पीयमानायां यद्गलितमधरसुधात्मक रसकणजालं ह्रदिन्यस्तरवश्च भुञ्जते, अश्रु इति जात्यभिप्रायकमेकवचनम्। अवशिष्टरसभोगप्रयुक्तहर्षाश्रूणि मुमुचुः, हृष्यत्त्वचश्च। तत्र ह्रदिन्यो विकसितकमलव्याजेन हृष्यावचः उदञ्चितरोमाण इव लक्ष्यन्ते। तरवस्तु मधुमिषेणऽऽनन्दाश्रूणि मुमुचुरिवेति भावः। थथा आर्या भागवतशेषरसाभिज्ञास्तद्भुक्तावशिष्टमुपभुज्य हृष्यावचोऽश्रूणि मुञ्चन्तश्च भवन्ति तद्वत्[12] ॥१०॥

**बृन्दावनमिति।** हे सखि। बृन्दावनं भुवः कीर्तिं वितनोति अनितरलोकसाधारणीं कीर्तिं जनयतीत्यर्थः। अत्र हेतुं वदन्त्यो विशिंषन्ति। यद्बृन्दावनं देवकीसुतस्य पदाम्बुजाभ्यां लब्धा लक्ष्मीः सौन्दर्यं सम्पत् येन, किञ्च गोविन्दस्य वेणुमनु वेणुगीतमनुसृत्य मन्दगर्जितनीलमेघभ्रान्त्या मत्ता ये मयूरास्तेषां नृत्तमवलोक्याद्रिसानुष्वपरतानि वेणुगीततदनु रूपमयूरनृत्तदिदृक्षया निवृत्तस्वस्वव्यापाराणि, अन्यानि मयूरव्यतिरिक्तानि समस्तानि सत्त्वानि जन्तवो यस्मिन् तथाभूतम्, न ह्यन्योऽस्त्येवंविधो लोक इति भावः॥११॥

---

1. A,B °शब्द° 2. A,B वर्णितुं 3. K बुध्या 4. A,B add बुध्या 5. A,B omit परि 6. T omits वा 7. A,B,K °दर्थः 8. T,W सवय° 9. A,B वि° 10. T,W omit गोपानां 11. K,T,W omit महत् 12. A,B add इत्यर्थः

**विज०** बर्हमेवाऽपिच्छो यस्य स तथा। वनचरवपुः किराताकार इव आकारो यस्य स तथा। "शुभाकारे तनौ वपुः" (वैज.को. 6-3-30) इति च। वनचरा गोपा वा। कर्णयोःकर्णिकार इत्येकंपदं कण्ठेकाल इतिवत्। भ्रुवोर्विन्यासः भ्रूभङ्गविशेषः, तेन सह अङ्गुलीभिः, अन्यत्र हस्ते सज्जं सक्तं रणयन् वेणुमिति शेषः। अङ्गुलीभीरणयन् इति वक्तव्ये ह्रस्वत्वं छन्दोभङ्गभयात्कृतम्। गान्धर्वं ब्रह्मैव भरतशास्त्रोक्तप्रकारमेव। गोपबृन्दान् गापयन् इति द्विकर्मकोऽयं धातुः। भूतग्रामं प्राणिसमूहं रमयन् बृन्दावनं प्राविशत् इति पूर्वेणान्वयः॥६॥

अभिरेमिरे इत्यत्र या रतिः सा मु[1]ख्यतः श्रिय एव तद्गीतरसविशेषज्ञत्वात् तदन्यासां तदभावात् तस्मादौपचारिकमभिरमणम्। तदुक्तम् "श्रीदेवीवेणुमाश्रित्य रेमे कृष्णमुखाम्बुजे" (तन्त्रभागवते) इत्यादि। 'सुरा इतरभाण्डगा' इत्यत्र इतरभाण्डानि वेणुमन्तरेणान्यभूषणानि गता आविष्टा इत्यर्थः। इतरेषां रामादीनां वा। "वणिङ्मूलधने मूलधने पात्रे भाण्डं भूषाश्वभूषयोः" (वैज.को.6-3-23) इति यादवः। वनचरा गोपा वा॥७॥

गोपस्त्रीणां वर्णनप्रकारं दर्शयति अक्षण्वतामित्यादिना। यैर्व्रजेशसुतयोः रामकृष्णयोः वक्त्रं नितरां पीतं दृष्टिभिरिति शेषः। तेषां तेषामक्षण्वतां चक्षुष्मतां चक्षुषामिदं फलं लाभं विदामो न परं नान्यत्

फलं, अन्यस्य नरकदुःखफलहेतुत्वात्। हे सख्यः! कीदृशयोः? वयस्यैः पशूनभिनिवेशयतोः अनुसन्ध्यं गोष्ठे इति शेषः। अनुवेणोः पश्चाद्भागे जुष्टं चुम्बितं अनुरक्तः स्निग्धः कटाक्षमोक्षो यस्मिन् तत्तथा॥८॥

चूतस्य प्रवलादिभिः अनुरक्तपरिधानेन विचित्रः नानाविधः वेषो ययोस्तौ तथा। अनुरक्तं अनुरागोपेतं पशुपालगोष्ठ्यां, गोपगोष्ठ्यां मध्ये "गवां समष्टिः संवार्ता, गोष्ठ्यशाला च कथ्यते" इत्युत्पलमाला क्व च क्वचित् स्थले गायमानौ तिष्ठत इति शेषः॥९॥

हे गोप्यः! अयं वेणुः किं कुशलं तपोलक्षणं आचरत् स्म स्मरणं कर्तव्यं किमप्यस्तीति वृत्तं पूर्वजन्मनि चीर्णं वा। "स्मृतौ वृत्ते निषेधे स्म" (वैज.को.8-7-7) इति च। यो वेणुः दामोदरस्याधरोष्ठः स एव सुधा तया सरसं सरागमग्रयं गेयं यस्मिन्सः, सरागमग्र्यगेयः तं, रसं भुङ्क्ते आस्वादयति,[2] सदर्भाः दर्भाङ्कुरैः सहिताः तरवः हृष्टत्वचः अस्मद्वंश्योऽयमिति रोमाञ्चितसर्वगात्राः येन वेणुना पीतावशिष्टो यो रसः तस्यौघः प्रवाहो यस्मिन् स यदवशिष्टरसौघः तस्मिन् मार्गे कृष्णेन सञ्चरितेऽध्वनि अश्रु आनन्दजलं ममुचुरित्यन्वयः। सदर्भाः सकुशा वा॥१०॥

भुवो भूमेः हे सखि! यद्वृन्दावनं देवकीसुतस्य पादाम्बुजाभ्यां लब्धा लक्ष्मीः श्रीः येन तत् देवकीसुत पदाम्बुजलब्धलक्ष्मि। लक्ष्मेति केचित्। लक्ष्म चिह्नं गोविन्दस्य वेणुमनु वेणुस्वरानुकूलमेघनादशङ्कया वेणुस्वरानुकारेण वा, मत्तानां मयूराणां नृत्यं दृष्ट्वा आदृताः सादराश्च अनुकूलं चरितं येषां ते तथा, कृष्णचरितानुकूलचरिताश्चान्ये मनुष्यविजातीयाः समस्ताः सत्वा जन्तवो यस्मिन् तत् आदृतानुचरितान्यसमस्तसत्त्वं "सत्त्वोऽस्त्री" (वैज.को. 6-5-93) इति वचनात् पुलिंगोप्ययंशब्दः। आदृतौ सादरार्चितौ इति च॥११॥

---

1. Ma मुख्या अत एव श्रि° 2. A,B तोऽ°

धन्यास्स्म[1] मूढमतयो[2]ऽपि हरिण्य एता या[3] नन्दनन्दनमुपात्तविचित्रवेषम्।
[4]आकर्ण्य वेणुरणितं[5] च [6-]सकृष्णसाराः[-6] पूजां[7] दधुर्विरचितां प्रणयावलोकैः॥१२॥

कृष्णं निरीक्ष्य वनितोत्सवरूपशीलं[8] श्रुत्वा च तत्क्वणितवेणु[9]विचित्रगीतम्।
देव्यो विमानगतयस्स्मरनुन्नसारा भ्रश्यत्प्रसूनकबरा मुमुहुर्विनीव्यः॥१३॥

गावश्च कृष्णमुखनिर्गतवेणुगीत[10]पीयूषमुत्तभितकर्णपुटैः पिबन्त्यः।
[11-]शावास्स्तनस्नुतपयः[-11] कबलास्स्म तस्थुर्गोविन्दमात्मनि दृशाऽश्रु[12-]कलाः स्पृशन्त्यः[-12]॥१४॥

प्रायो बताम्ब! मुनयो विहगा वनेस्मिन् कृष्णेक्षितं[13] तदुदितं कलवेणु गीतम्।
आरुह्य ये द्रुमभुजान् रुचिरप्रवालान् शृण्वन्ति[14] मीलितदृशो विगतान्यवाचः॥१५॥

नद्यस्तदा[15] तदुपधार्य मुकुन्दगीतमावर्तलक्षितमनोभव भग्नवेगाः।
आलिङ्गनस्थ[16-]गितमूर्मि[-16] भुजैर्मुरारेर्गृह्णन्ति पादयुगलं कमलोपहाराः॥१६॥

---

1. A °स्तु; M,Ma °स्सु; K,T,W °श्च 2. K,T,W °ग° 3. M,Ma यन्नन्द 4. M,Ma आपीय 5. M,Ma °चि° 6- -6. A,B,G,J सहकृष्णसाराः; K,T,W सहकृष्णसारैः 7. V ददुः 8. A चारुवेषं; K चारुशीलं M,Ma रूपसारं; 9. K,T,W विविक्त 10. M,Ma °तं 11- -11. A,B,G,J शाबाः स्नुतस्तनपयः M,Ma सानन्दनम्रतनवः 12- -12. M,Ma °कणान्स्रवन्त्यः 13. M,Ma °क्षणास्त° 14. B,G,J °न्त्यमी° 15. K,T,W °था° 16. M,Ma °प्रमुदितोर्मि°

**श्रीध०** अपरा आहुः **धन्या** इति। हे सखि! मूढमतयः तिर्यग्जातयोऽपि। एता हरिण्यः धन्याःकृतार्थाः। याः वेणुरणितं वेणुनादं आकर्ण्य नन्दनन्दनं प्रति प्रणयसहितैरवलोकनैर्विरचितां पूजां, सम्मानं ददुः कृतवत्यः। किञ्च कृष्णसारैः स्वपतिभिस्सहिता एव ददुः[1]। अस्मत्पतयस्तु गोपाः क्षुद्राः समक्षं तन्नसहन्ते इति भावः॥१२॥

अन्या ऊचुः **कृष्णमिति**। हे गोप्यः! आश्चर्यं शृणुत। वनितानामुत्सवो यस्मात्तद्रूपं शीलं च यस्य तम् श्रीकृष्णं निरीक्ष्य तेन वादितवेणोरसंकीर्णं गीतं च शृत्वा विमानैर्गच्छन्त्यो देव्यो देवानामङ्केषु स्थिता अपि स्मरेण नुन्नसाराः परिक्षिप्तधैर्याः मुमुहुः। मोहलिङ्गमापुःभ्रश्यत्प्रसूनाः कबराश्चूडाः यासां ताः। विगता नीव्यो यासां ताः। अत्र सर्वत्र वक्तृभेदा ज्ञातीव सङ्गतिर्वक्तव्या॥१३॥

**गाव** इति। क्षरणशङ्कयैव उत्तभितैः उन्नमितैः कर्णपुटैः पिबन्त्यस्सत्यः तथा शाबाश्च वत्साः। स्तन्यपाने प्रवृत्ताः समनन्तरमेव गीतं शृत्वा। तदेव पीयूषमुत्तभितकर्णपुटैः[2] पिबन्तः, स्तनस्नुतपयःकबलाः[3] केवलं स्तनेभ्यः क्षरितक्षीरग्रासाः मुखेषु एषां ते तस्थुः विस्मृतक्रिया बभूवुरित्यर्थः। तत्र हेतुः गोविन्दं दृशा मर्गेण आत्मनि मनसि, स्पृशन्त्यः[4]। अत एव अश्रुणां कला लेशा, लोचनयोर्यासां ताः गावः ते च शाबाः वत्साः[5]॥१४॥

**प्राय** इति। भो अम्ब! मातः! अस्मिन् वने ये विहगाः पक्षिणः ते प्रायेण मुनयो भवितुमर्हन्ति। कुतः? कृष्णेक्षितं कृष्णदर्शनं पुष्पफलाद्यन्तरं विना यथा भवति तथा। रुचिराः प्रवालाः येषां तान्। द्रुमभुजान् वृक्षाणां शाखा आरुह्य। तेन श्रीकृष्णेन उदितं प्रकटितं कलवेणुगीतं, केनापि सुखेन निमीलितदृशः[6] त्यक्तान्यवाचस्सन्तो ये शृण्वन्तीति। तथाहि मुनयः श्रीकृष्णदर्शनं यथा भवति तथा। वेदोक्तकर्मफलपरित्यागेन वेदद्रुमशाखारूढाः रुचिरप्रवाल - स्थानीयानि कर्माण्येवोपाददानाः सुखिनस्सन्तः, श्रीकृष्णगीतमेव शृण्वन्ति, अतस्त एवैते भवितुमर्हन्तीति भावः॥१५॥

**नद्य** इति। आस्तां चेतनानां कथा। नद्योपि[7] आवर्तैः परिभ्रमैः लक्षितेन सूचितेन मनोभवेन कामेन भग्नो वेगो यासां ताः, आलिङ्गनेन स्थगितमाच्छादितं यथा भवति तथा। ऊर्मय एव भुजास्तैः कमलोपहाराः कमलानि उपहरन्त्यः मुरारेः पादयुगलं गृह्णन्ति धारयन्ति॥१६॥

---

1. A,B,J °धुः 2. A,B,J °त्तम्भि° 3. A,B,J स्नुतस्तन° 4. A,B,J आलिङ्गन्त्यः 5. A,J,P,V omit वत्साः 6. A,B,J अनिमी° 7. V omits नद्योपि

**वीर०** **धन्या** इति। मूढगतयः तिर्यग्गतयोऽपि, 'मतय' इति पाठे सुन्दरासुन्दरवस्तुविवेकरहिता अपि। 'गतय' इति पाठेऽपि अयमप्यर्थः[1] सम्भवति। "गत्यर्था बुद्ध्यर्थाः" इति न्यायात् एता हरिण्यो धन्याः कृतार्थाः। एवं कुत इत्यत्र विशिंषन्ति। याः हरिण्यः वेणुगीतमाकर्ण्य उपात्तः स्वीकृतः बर्हादिभिः विचित्रो वेषो येन तं नन्दस्य नन्दनं प्रति प्रणयसहितैः अवलोकैः पूजां सम्मानं दधुः कृतवत्यः। किञ्च कृष्णसारैः स्वपतिभिस्सहिता एव दधुः। अस्मत्पतयस्तु गोपाः क्षुद्राः तन्न सहन्ते[2]ऽसमक्षमिति भावः॥ १२॥

अन्यास्तु - हे गोप्यः! इदमप्यद्भुतं शृणुतेत्याहुः - **कृष्णमिति**। वनितानामुत्सवो यस्मात्ततत्[3-] रूपं[-3] शीलं च यस्य तं कृष्णं निरीक्ष्य तेन वादितस्य वेणोरसङ्कीर्णं गीतमा[4]कर्ण्य विमानैः गच्छन्त्यो देवानाम् अङ्केषु स्थिताः स्मरापहृतधैर्या मुमुहुः, मो[5-]हे लिङ्गमाहुः[-5]। भ्रश्यत्प्रसूनाः कबराश्चूडाः यासां ताः, विगता नीव्यो यासां ताः शिथिलनीवीबन्धनाः॥ १३॥

**गाव** इति। कृष्णमुखान्निर्गतं वेणुगीतमेव पीयूषममृतं उत्त[6]म्भितैरवनमने क्षरणशङ्कयैवोन्नमितैः कर्णपुटैः पिबन्त्यः तस्थुः। त[7]दा शाबा वत्साश्च स्तन्यपानप्रवृत्ता गीतं श्रुत्वा तदेव पीयूषमुत्त[8]म्भितकर्णपुटैः पिबन्तः स्नुतपयः कबलाः केवलं स्तनेभ्यो गलित क्षीरग्रासाः मुखेषु येषां ते तस्थुः, विस्मृतस्व[9]व्यापारा बभूवुरित्यर्थः। अत्र हेतुः गोविन्दं दृशा दृष्टिमार्गेणाऽऽत्मनि चित्ते स्पृशन्त्यः आलिङ्गन्त्यः, अत एव अश्रूणां कला लेशाः लोचनयोः यासां ताः गावः ते च शाबाः॥ १४॥

**प्राय** इति। अम्ब! हे मातः! अमातरमपि पूजार्थं सम्बोधयन्ति अ[10]म्बेति। अस्मिन् वने विहगाः पक्षिणः प्रायशो मुनयो भवितुमर्हन्ति। कुतः? ये विहगाः रुचिराः प्रवालाः पल्लवाः येषां तान् द्रुमभुजान् तरुशाखाः आरुह्य स्वभोज्यं फलादिकं विहाय केवलं कृष्णस्येक्षितं दर्शनं यस्मिन् तद्यथा भवति तथा, तेनोदितं प्रकटितं मधुरं वेणुगीतं केनापि सुखेन मीलितदृशः त्यक्तान्यवाचस्सन्तः शृण्वन्ति। तथाहि - मुनयः वेदद्रुमशाखाश्रिताः कृष्णदर्शनं यथा भवति तथा वेदोक्तकाम्यकर्मफलप[11]रित्यागेन भगवदेकदृष्टयः सुखिनः तन्महिमानमेव शृण्वन्ति। अतः त एवैते भवितुमर्हन्तीति॥ १५॥

आस्तां चेतनानां कथेत्यभिप्रायेण काश्चिदाहुः **नद्य** इति। तथा यथा चेतनास्तद्वदचेतना नद्योऽपि तन्मुकुन्दस्य गी[12]तं वेणुगीतमुपधार्य श्रुत्वा, उत्प्रेक्षामात्राभिप्रायकमिदम्। आवर्तैः परिभ्रमैः लक्षितेन सूचितेन मनोभवेन का[13]मेन भग्नो

वेगो यासां ताः, आलिङ्गनेन स्थगितमाच्छादितं यथा भवति तथा, ऊर्मय एव भुजास्तैः कमलान्युपहरन्त्यः मुरारेः पादयुगलं गृह्णन्ति धारयन्ति॥ १६॥

---

1. A,B °मर्थः 2. A,B °न्ते न स° 3- -3. A,B तत् चारु; K तं चारु° 4. A,B °श्च श्रुत्वा 5- -5. T,W omit 6. A,B,T,W °त्तम्भि° 7. A,B तथा 8. A,B °त्तम्भि° 9. A,B omit स्व 10. A,B omit अम्बेति 11. A,B omit परि 12. T,W omit गीतं 13. A,B मन्मथेन

**विज०** सुष्ठु मूढा विवेकरहिता मतिर्यासां ताः तथा। कृष्णसारानुसारेण पुंमृगेण कान्तमृगेण वा सहिताः, नन्दस्य नन्दनं वेणोरचितं निस्सृतं स्वरं च आपीय आस्वाद्य प्रणयेन सहितैः अवलोकनैः दर्शनैः उन्नतमस्तकत्वाद्धुरिति॥ १२॥

वनितानामुत्सवभूतं रूपसारं स्थिरसौन्दर्यं यस्य स तथा तं (रूपं) "सौन्दर्ये च स्वभावे च" (वैज. को. 6-3-28) इति "सारो बले स्थिरांशे" (वैज. को. 6-5-97) इति यादवः। तेन क्वणितात् वातेन शब्दितात् वेणोर्वीतं निर्गतं चित्रं सप्तस्वरमिश्रगीतं "वी गतौ" इति धातुः। "चित्रमाश्चर्यलेख्ययोः" (वैज. को. 6-5-30) इति यादवः। देव्यो देवस्त्रियः स्मरेण नुन्नं नष्टं सारो धैर्यं यासां तास्तथा, भ्रश्यत्प्रसूनकबराः विगलितपुष्पकेशभराः विगताः त्रस्ताः नीव्यः वस्त्राणि वस्त्रग्रन्थयो वा यासां तास्तथा। "नीवी वस्त्रांशुकग्रन्थ्योः" इति च॥ १३॥

उत्तभितकर्णपुटैः निश्चलकर्णरन्ध्रभागैः कबलाः कबलसहिताः गोविन्दमात्मनि हृदि स्मरन्त्यः दृशा नेत्रेण अश्रुबिन्दून् स्रवन्त्यः शाबस्नुतस्तनपयः कबला इति केचित्, शाबा वत्साः तेषां स्मरणेन स्नुताः संस्रुताः क्षीराणि कबलाः, शष्पग्रासाः यासां तास्तथा तस्थुरित्यन्वयः। कबलाः आसां सन्तीति कबलाः अर्श आद्यच् "अजाद्यतष्टाप्" (अष्ट 4-1-4) इति टाप्प्रत्यये कृते कबलेति रूपं सिद्धं भवति जायाशब्दवदिति वा॥ १४॥

विगताः त्यक्ताः स्वजातिसिद्धा वाचो यैस्ते, विगतान्यवाचो धृतमौना इत्यर्थः। बत आश्चर्यमिदं, हे अम्ब! पक्षिणां मुनीनां च मौनत्वसामान्यादेवमुच्यते॥ १५॥

यद्यदा मुकुन्देन गीतं तदा तदुपधार्य हृद्यवधार्य आवर्तेन अम्भसां भ्रमेण लक्षितेन मनोभवेन कामेन भग्नो वेगो यासां तास्तथा। ऊर्मय एव भुजाः आलिङ्गनेन स्पर्शलक्षणेन प्रमुदिता ऊर्मिभुजाः आलिङ्गन प्रमुदितोर्मिभुजाः तैः, कमलमेवोपहारो यासां तास्तथा॥ १६॥

[1]दृष्ट्वाऽऽतपे व्रजपशून्सह रामगोपैस्सञ्चारयन्तमनुवेणुमुदीरयन्तम्।
प्रेमप्रवृद्ध [2]उदितः कुसुमावलीभिस्सख्युर्व्यधात्स्ववपुषाऽम्बुद आतपत्रम्॥ १७॥

**पूर्णाः पुलिन्द्य उरुगायपदाब्जरागश्रीकुङ्कुमेन दयितास्तनमण्डितेन।**
**तद्दर्शनस्मररुजस्तृणरूषितेन लिम्पन्त्य आननकुचेषु जहुस्तदाधिम्॥ १८॥**

**हन्तायमद्रिरबला! हरिदासवर्यो यद्रामकृष्णचरणस्पर्शप्रमोदः।**
**मानं तनोति सहगोगणयोस्तयोर्यत् पानीयसूयवसकन्दरकन्दमूलैः॥ १९॥**

**गा गोपकैरनुवनं नयतोरुदारवेणुस्वनैः कलपदैस्तनुभृत्सु सख्यः[3]।**
**आस्पन्दनं गतिमतां पुलकस्तरूणां[4] निर्योगपाशकृतलक्षणयोर्विचित्रम्॥ २०॥**

**[5-]श्रीशुक उवाच[-5]**

**एवंविधा भगवतो या बृन्दावनचारिणः।**
**वर्णयन्त्यो मिथो गोप्यः क्रीडास्तन्मयतां ययुः॥ २१॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादश साहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे पूर्वार्धे वेणुगीतं नाम एकविंशोऽध्यायः॥ २१॥

---

1. K,T,W दृष्ट्वा तटे 2. M,Ma हृषितः 3. M,Ma सख्यम्। 4. M,Ma °कन्त° 5- -5. A,B,G,J,Ma omit

**श्रीध० दृष्ट्वेति।** लोकार्तिहरणशीलत्वादिसाम्यात् सख्युः श्रीकृष्णस्य अम्बुदः तदुपरि उदितः पुनः प्रेम्णा प्रवृद्धस्सन् कुसुमावलीभिः पुष्पसमूहैः तत्तुल्यैर्तुषारैर्वा सह स्ववपुषा छत्रं विहितवान्॥ १७॥

[1]ससीत्कारमाहुः **पूर्णा** इति। पूर्णाः कृतार्थाः पुलिन्द्यश्शबराङ्गनाः। कथमित्यत आह[2] प्रथमं दयितानां स्तनेषु मण्डितेन अनुलिप्तेन पुनश्च रतिसमये उरुगायस्य श्रीकृष्णस्य पदाब्जयोः रागेण आरुण्येन श्रीः कान्तिर्यस्य तेन कुङ्कुमेन पुनस्तस्य [3]वतृणेषु रूषितेन लग्नेन, तद्दर्शनेन तथाभूतस्य कुङ्कुमस्य दर्शनेन, स्मरकृता रुक् तापो यासां ताः, तेन कुङ्कुमेन! आननेषु कुचेषु च कामतप्तेषु लिम्पन्त्यः तदाधिं कामव्यथां जहुः। अतस्ताः कृतार्थाः। धिक्! अन्या मादृशीः[4] याः एवम्भूतमपि आधिशमनं न लभन्ते इति॥ १८॥

**हन्तेति।** हन्तेति हर्षे। हे सख्यः! अयमद्रिर्गोवर्धनः ध्रुवं हरिदासेषु श्रेष्ठः। कुत इत्यत आह[5] यस्माद्रामकृष्णयोः चरणस्पर्शेन प्रमोदो यस्य सः, तृणाद्युद्गम[6]मिषेण रोमहर्षदर्शनात्। किञ्च यत् [7]यस्मात् मानं तनोति। सहगोभि र्गणेन सखिसमूहेन च, वर्तमानयोरपि तयोः। कैः पानीयैः सूयवसैः शोभनतृणैः कन्दरैः कन्दमूलैश्च, यथोचितम् अतोऽयं अतिधन्य इत्यर्थः॥ १९॥

**गा** इति। हे सख्यः! इद न्त्वतिचित्रं, गोपैस्सह [8] वने गाः सञ्चारयतोः तयोः रामकृष्णयोः मधुरपदैः महावेणुनादैः, शरीरेषु ये गतिमन्तस्तेषां अस्पन्दनं, स्थावरधर्मः, तरूणां पुलकः, [9] जङ्गमधर्म इति। निर्युज्यन्ते गावः [10] एभिरिति निर्योगाः पादबन्धनरज्जवः। अधृष्यगवां कर्षणार्थाः पाशाश्च तैः कृतं लक्षणं चिह्नं ययोः, शिरसि निर्योगवेष्टनेन स्कन्धस्थ पाशेन च। गोपपरिबृढश्रिया विराजमानयोरित्यर्थः॥ २०,२१॥ ★

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां एकविंशोऽध्यायः॥ २१॥

---

1. A,B,J साहङ्कारमाहुः 2. A,B,J °हुः 3. P,V वक्षः° 4. A,B,J °श्यो 5. A,B,J °हुः 6. A,B,J निभेन 7. P,V omit यस्मात् 8. A,B,J add वने 9. A adds रोमाञ्चश्च 10. A,B,J आभि° ★ गोपीनां कामतः कृष्णे निस्सीमप्रेमसङ्गमः। कात्यायन्यर्चनोद्भूत तत्प्रसादमहोदयः This extra verse is found in A edn. only.

**वीर०** दृष्ट्वेति। तटे यमुनातीरे। 'आतपे' इति पाठान्तरम्। तदा तस्मिन् रामेण गोपैश्च सह व्रजपशून् सञ्चारयन्तम् अनु गवां पश्चाद्भागे वेणुमुदीरयन्तं [1] वादयन्तं श्रीकृष्णं दृष्ट्वा अम्बुदः [2] मेघः उदितः पुनः प्रेम्णा प्रबुद्धः, सख्युः कृष्णस्य लोकार्तिहरत्वनीलवर्णत्वादि साम्यात् सखित्वव्यपदेशः उपरि इति शेषः। कुसुमसमूहतुल्यैः तुषारैस्सह स्ववपुषा आतपत्रं व्यधात् चकार॥ २७॥

शबराङ्गनानामपि भाग्यं वयं न [3] लेभिमहे इति ससीत्कारमाहुः **पूर्णा इति।** पुलिन्द्यः शबराङ्गनाः [4] पूर्णाः कृतार्थाः, कुतः तत्राहुः उरु अधिकं गीयते मुनिभिरित्युरुगायः कृष्णः। तस्य पदाब्जयोः रागेणाऽरुण्येन श्रीः औज्ज्वल्यं यस्य तेन कुङ्कुमेन। कथम्भूतेन? दयितायाः महालक्ष्म्याः स्तनयोर्मण्डितेन अलङ्कृतेन [5] [6] क्रीडासमये [7] [8] लक्ष्म्यास्तनयोः निहितत्वात् उरुगायपदाब्जयोः कुङ्कुमसम्बन्धः, उरुगायपदाब्जाभ्यां वनसञ्चारदशायां तृणेषु रूषितेन लिप्तेन आनेनेषु कुचेषु च लिम्पन्त्यः, कथम्भूतास्सत्यः? तस्य कुङ्कुमस्य दर्शनेन स्मरकृता रुक् यासां तथाभूतास्सत्यः आननेषु कुचेषु च लिम्पन्त्यः तदाधिं कामव्यथां जहुः। अतस्ताः पूर्णा इति भावः॥ १८॥

**हन्तेति।** हे अबलाः! अयमद्रिः हरिदासश्रेष्ठः। अहो! अचराणामपि हरिदास्याभिरुचिरिति विस्मीयते हन्तेति। कुतः? यत् यस्मात् रामकृष्णयोः चरणस्पर्शेन प्रमोदो यस्य सः! उदञ्चितैः तृणैरोमहर्षमालक्ष्य तेन रामकृष्णचरणस्पर्शप्रमोद आलक्ष्यते। किञ्च गोभिः सखिगणैस्सहितयोः तयोः रामकृष्णयोः यः गोवर्धनाद्रिः पानीयादिभिर्यथोचितं मानं पूजाम् आतिथ्यात्मिकां करोति [9] तत्र सूयवसानि शोभनानि तृणानि, सुशब्दे दीर्घ आर्षः। संयवसेति पाठान्तरम्। तदाऽपि स एवार्थः। कन्दरेषु कन्दानि मूलानि च तैः॥ १९॥

हे गोप्यः! इद न्त्वतिचित्रमिति काश्चिदाहुः **गा** इति। हे सख्यः! गोपैस्सह प्रतिवनं गाश्चारयन्तः, निर्योगाः

निर्युज्यन्ते गावः एभिरिति निर्योगाः, दोहनवेलायां गवां पादबन्धनार्थं रज्जवः पाशास्तु दुष्टगवाकर्षणार्थाः तैः कृतं चिह्नं लक्षणं ययोः शिरसि निर्योगवेष्ट[10]नेन स्कन्धयोः पाशध[11]रणेन च गोपश्रिया बिराजमानयोरित्यर्थः। एवम्भूतयोः तयोः रामकृष्णयोः कलान्यव्यक्तमधुराणि पदानि शब्दाः येषु तैः, [12-]उदारवेणुस्वनैः[-12] महावेणुरवैः हेतुभिः देहिनां मध्ये चरणामस्पन्दनमीषदप्यचलनं तरूणां स्थावराणां तु पुलको रोमाञ्चश्चेति चित्रम्। जङ्गमानां स्थावरधर्मः, स्थावराणां जङ्गमधर्मश्चेत्येतदतिचित्रमित्यर्थः ॥ २० ॥

क्रीडा[13]नुवर्णनामुपसंहरति - **एवमिति।** बृन्दावनचारिणो भगवत इत्थम्भूता अन्याश्च याः क्रीडाः ताश्च मिथो वर्णयन्त्यो गोप्यः तन्मयतां कृष्णप्रचुरतां, कृष्णविषयबुद्धिप्राचुर्यं ययुरित्यर्थः ॥ २१ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां एकविंशोऽध्यायः ॥ २१ ॥

---

1. A,B,K omit वादयन्तं 2. T,W omit मेघः 3. K लभामहे 4. A,B,T,W पुण्याः 5. A,B add तया 6. T,W omit क्रीडा 7. A,B add उरुगाय पदाब्जराग श्रीकुङ्कुमस्य भक्त्या 8. A,B omit लक्ष्म्या 9. A,B omit तत्र 10. A,B,T,W °ष्टन स्क° 11. K धा° 12- -12. T,W omit 13. A,B omit अनु

**विज०** अम्बुदः श्यामवर्णसाम्यात् सख्युः मुरारेः स्ववपुषाऽऽतपत्रं व्यधात् कुसुमावलीभिः नन्दनवनपुष्पराजिभिस्सह यद्वा जलकणनिकरैस्सह "पुष्पं मेघपुष्पम्" इत्यभिधानात्। प्रेम्णा प्रवृद्धं समुद्रिक्तं हृषितं हर्षणं रोमाञ्च लक्षणं यस्य स तथा। अभिमान्यपेक्षयैतत् ॥ १७ ॥

पुलिन्द्यः शबरस्त्रियः तस्मात् कामादुत्पन्नमाधिं मनोदुःखं जहुरित्यन्वयः[1]। कीदृशः ? पूर्णाः कृतकृत्याः तस्य कृष्णस्य दर्शनेन जातस्मर एव रुक् रोगो यासां ताः। क्रीडासमये तृणेषु रूषितेनाऽऽदिग्धेन दयितायाः प्रियतमायाः गोप्याः स्तनमण्डितेन स्तनयोः घट्टितेन उरुगायस्य हरेः पादाब्जयोः स्वतः अरुणयोरपि रागजननार्थं लिप्तेन श्रीमता कुङ्कुमेन आननकुचेषु लिम्पन्त्य [2]इति ॥ १८ ॥

हन्त आश्चर्यं, अयमद्रिः गोवर्धनो हरिदासवर्यः भगवद्भक्तश्रेष्ठः, कुतः ? ययोः रामकृष्णयोः चरणस्पर्शादाविर्भूतप्रमोदो योऽद्रिः सहगोगणयोः तयोः पानीयादिभिः मानं पूजां तनोति। यद्यस्मादिदमेव हि भक्तश्रेष्ठत्वं सूयवसं शोभनो ग्रासः, दैर्घ्यं छान्दसं, सूयवसाद्भगवती हीति दर्शनात्। कन्दरं गुहा गृहं, वृष्टौ स्थातुं योग्यं, कन्दं सूरणं, मूलं अकण्डूयमानं दीर्घाकारं कन्दम् ॥ १९ ॥

गोपकैस्सह अनुवनं गाः नयतोः सञ्चारयतोः तनुभृत्सु शरीरिषु जन्तुषु सख्यं, विचित्रमिदं चित्रमपि चित्रं,

किं तदिति **कलपदैः उदारवेणुस्वनैः** विवशानां गतिमतां जङ्गमानां अस्पन्दनं स्थावरधर्मभजनं, तरूणां स्थावराणां पुलकं, **जङ्गमधर्मं, रोमाञ्चभजनं विचित्रां पश्यतेति शेषः। कथमेतद्युज्यत** इति तत्राह निर्योगेति। नितरां योगपाशेन योगशक्तिलक्षणपाशेन कृतं लक्षणं अस्पन्दनस्पन्दमानाख्यं ययोस्तौ तयोः। यद्वा निर्योगपाशः क्षेपणाख्यः तेन कृतं योगचिह्नं ययोः ॥ २० ॥

बृन्दावनचारिणो हरेः एवंविधाः याः क्रीडास्तास्ताः मिथो वर्णयन्त्यो गोप्यः तन्मयतां तत्स्वामितां ययुरित्यन्वयः ॥ २१ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
दशमस्कन्धे पूर्वार्धे एकविंशोऽध्यायः ॥ २१ ॥

(विजयध्वजरीत्या एकोनविंशोध्यायः)

---

1. A,B °न दि 2. A,B omit इति

# द्वाविंशोऽध्यायः

## (विजयध्वजरीत्या विंशोऽध्यायः)

### -: गोपीवस्त्रापहरणकथारम्भः :-

श्रीशुक उवाच

हेमान्ते प्रथमे मासि नन्दव्रज[1]कुमारिकाः।
चेरुर्हविष्यं भुञ्जानाः [2]मासं कात्यायनी[2] व्रतम्॥१॥

आप्लुत्याम्भसि कालिन्द्या जलान्ते चोदितेऽरुणे।
कृत्वा प्रतिकृतिं देवीमानर्चुर्नृप! सैकतीम्॥२॥

गन्धैर्माल्यैस्सुरभिभिर्बलिभिर्धूपदीपकैः।
उच्चावचै[3]श्चोपहारैः! प्रवालफल त[4]ण्डुलैः॥३॥

कात्यायनि! महामा[5]ये! महायोगिन्यधीश्वरि!
नन्दगोपसुतं देवि! पतिं मे कुरु ते नमः॥४॥

इति मन्त्रं जपन्त्यस्ताः पूजां चक्रुः कुमारिकाः।
एवं मासं व्रतं चेरुः कुमार्यः कृष्णचेतसः।
भद्र[7]कालीं समानर्चुः [8]भूयान्नन्दसुतः पतिः[8]॥५॥

---

1. A गोप 2- -2. A,B,G,J,M,Ma कात्यायन्यर्चन° 3. M,Ma °चारैः 4. M,Ma तन्दुलैः 5. A °भोगे 6. M,Ma °स 7. V °लिं 8- -8. भूया नन्दस्नुषा इति।

## श्रीधरस्वामिविरचिता भावार्थदीपिका

द्वाविंशे गोपकन्यानां वस्त्राहरणलीलया।
वरं दत्वा गतः कृष्णो यज्ञशालामितीर्यते॥

★ गोपीनां कामतः कृष्णे निस्सीमप्रेमसम्भवः[1] ।
कात्यायन्यर्चनोद्भूततत्प्रसादमहोदयः ॥

हेमान्त इति। प्रथमे मासि मार्गशीर्षे॥ १ - ४॥

महामायेत्यादिसम्बोधनैस्तव न किञ्चिदशक्यमिति सूचयन्त्यः [2-] ताः स्वैरं[-2] प्रत्येकं प्रार्थयन्ते **इतीति।** कृष्णचेतस्त्वमेवाह भूयान्नन्दसुतः पतिरिति [3-] आ नर्चुरिति[-3]॥ ५॥

---

★ A omits this verse 1. B,J सङ्गमः 2- -2. A,B,J omit 3- -3. P,V omit.

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं गोपीभिर्मिथोऽनु[1] वर्णितानि शारत्कालिकानि कानिचिद्भगवतश्चेष्टितान्युक्तानि[2][3]। अथ कानिचिद्विवक्षुस्तावदन्तरा सिंहावलोकितन्यायेन पौगण्डवयसो भगवतः कानिचिच्चेष्टितानि हैमन्तकालिकान्यनुवर्णयति[4][5] सप्तभिरध्यायैः। तत्र किञ्चिच्चेष्टितं वक्तुमुपोद्घातमाह - **हैमन्त** इति। हेमन्ते ऋतौ तत्रापि प्रथमे मासे मार्गशीर्षे[6] नन्दव्रजस्थाः गोप कुमारिकाः कात्यायन्याः दुर्गायाः अर्चनात्मकं व्रतंचेरुः अनुष्ठितवत्यः। कथम्भूताः ? हविष्यं भुञ्जानाः नियताहारा इति भावः॥ १॥

कथं चेरुरित्यत्राऽऽह - **आप्लुत्येति।** अरुणे उदिते सति[7] अरुणोदयवेलायां यमुनाया अम्भसि स्नात्वा जलान्ते तटे प्रतिकृतिं वालुकामयीं कात्यायनीप्रतिमां विधाय, हे नृप!॥ २॥

गन्धादिभिस्सम्यगानर्चुः सुरभिभिः गन्धैः माल्यैः पुष्पैश्च धूपैः[8] दीपकैश्चान्यैः नानाविधैः बलिभिः पूजासाधनैः नानाविधैः उपहारैः नैवेद्यैः पल्लवादिभिश्च॥ ३॥

तथा कात्यायनीत्यादिमन्त्रं जपन्त्यस्ताः कुमारिकाः पूजां चक्रुः, हे महामये अत्याश्चर्यशक्त्यधिष्ठात्रि! महायोगिनि! स्वाराधनात्मकमहायोगिनिर्वाहिके! अधीश्वरि! आराधकसमीहितफलदानसमर्थे! हे देवि! नन्दगोपसुतं मम कुरु।[9] नम इति प्रत्येकाभिप्राय[10] मेकवचनम्। एवम्भूतायास्तव न किञ्चिदपि अशक्यमिति सम्बोधनानामभिप्रायः॥ ४॥

इत्थं मासं व्रतं [11-] कृष्णचित्ताः कुमार्यः[-11] चेरुश्चक्रुः। मासमित्यत्यन्तसंयोगे द्वितीया। कृष्णचेतस्त्वमेवाऽऽह भूयान्नन्दसुतः पतिरित्यानर्चुरिति॥ ५॥

---

1. K,T,W omit अनु 2. A,B °वचे° 3. A,B,T,W °क्त्वा 4. A,B, °न्तिक 5. A,B°न्युप 6. A,B,K add मासि 7. T,W omit सति 8. T,W पैश्च° 9. A,B add तुभ्यं 10. A,B °यक° 11. T,W omit.

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

भक्तिरेव भगवत्प्रसादजननीति दर्शयितुं गोपकुमारीणां कृष्णे भक्तिं निरूपयति अस्मिन्नध्याये। तत्र तासां हरेः सर्वकार्याणामन्तरङ्गं कात्यायनीति तदर्चव्रतकरणेन श्रीकृष्णः प्रसन्नो भवतीति तदर्चनाविधिं कथयति **हेमन्त** इति! कार्तिकमार्गशीर्षमासौ हेमन्तऋतुः। तत्र प्रथमे मासि कार्तिकमासे व्रतं नियमम्॥ १॥

कालिन्द्याः यमुनायाः जलान्ते जलसमीपे चशब्दः एवार्थः। उदिते अरुणे अरुणोदय एव सैकतीं सिकतानिर्मितां प्रतिमाम् आनर्चुः पूजां चक्रुः॥ २॥

बलिभिः परिवार देवताविषयपूजाभिः॥ ३॥

कात्यायनि कृत्यानामुत्पादके महती माया माहात्म्यं यस्यां सा तथा तस्याः सम्बुद्धिः महामाये! महान् योग उपायोऽस्या अस्तीति महायोगिनी तत्सम्बोधनं महायोगिनि! [1-]अधीश्वरि[-1]! अधिगतेश्वरि! ते तुभ्यं नमोऽस्तु॥ ४॥

इति समाप्तं एवं प्रकारं वा। उषसि ब्राह्मे मुहूर्ते॥ ५॥

---

1- -1. B,M,Ma omit.

**उषस्यु[1]त्थाय [2-]गोत्रैस्स्वैः अन्यो[-2]न्याबद्ध[3]बाहवः।**
**कृष्णमुच्चैर्जगुर्यान्त्यः कालिन्द्यां स्नातु[4]मन्वहम्॥ ६॥**

**[5]नद्यां कदाचिदागत्य तीरे निक्षिप्य पूर्ववत्।**
**वासांसि कृष्णं गायन्त्यो विजह्रुस्सलिले मुदा॥ ७॥**

**भगवांस्तदभिप्रेत्य कृष्णो योगी[6]श्वरेश्वरः।**
**वयस्यै[7]रावृतस्तत्र [8]गतस्त[9]त्कर्मसिद्धये॥ ८॥**

**तासां वासांस्युपादाय नीपमारुह्य सत्वरः[10]।**
**हसद्भिः प्रहसन् बालैः परिहासमुवाच ह॥ ९॥**

**अत्राऽऽगत्या बलाः! कामं स्वं स्वं वासः प्रगृह्यताम्।**
**सत्यं [11]ब्रवाणि नो नर्म यद्यूयं व्रतकर्शिताः॥ १०॥**

---

1. K स्युत्थाप्य; M,Ma स्यभ्यर्च 2- -2. K ता गौव्रैर°; M,Ma °तास्स्वैरमन्यो° 3. T,W °सक्त 4. K,T,W मुषताः 5. M,Ma नदी° A,B,G,J,K,M,Ma °गे° 7. A,M,Ma,V °रागत° 8. A,M,Ma,V वृत° 9. A द्वत 10. A °रम् 11. A,B ब्रु°

**श्रीध०** व्रतस्य पूर्वाङ्गमाह - **उषसीति**। गोत्रैर्नामभिः अन्योन्याबद्धबाहवः परस्परं गृहीतपाणयः ॥ ६,७॥

**भगवानिति**। योगी[1]श्वराणाम् ईश्वरः इति प्रत्येकं तादृङ्मनोरथपूरणसामर्थ्यं दर्शयति। तासां कर्मणः सिद्धये फलदानायेति ॥ ८॥

**तासामिति**। नीपं कदम्बम्। बालैस्सह ॥ ९॥

**अत्रेति**। हे अबलाः! नो नर्म न परिहासः। यस्मात् यूयं [2-]व्रतकर्शिताः[-2] व्रतश्रान्ताः ॥ १०॥

---

1. A,B,J ° गे ° 2- -2. A,B,J omit.

**वीर०** इत्थं मासं व्रतं चरित्वाऽथ कदाचिदुषसि गोत्रैर्नामभिः प्रबोध्य परस्परं गृहीताः पाणयो याभिस्ताः कालिन्द्यां स्नातुमुद्यताः ॥ ६॥

आगत्य पूर्ववन्नद्याः तीरे वा[1]सांसि निक्षिप्य कृष्णमेव गायन्त्यस्सलिले मुदा विजह्रुः ॥ ७॥

तदा सर्वज्ञो भगवान् तत्कर्म तासां विहरणं च ज्ञात्वा तासां कर्मणो व्रतस्य सिद्धये तत्कर्म सफलीकर्तुं वयस्यैस्सह तत्राऽऽगतस्सन् ॥ ८॥

तासां वासांसि गृहीत्वा सत्वरो[2] नीपं कदम्बमारुह्य हसद्भिर्बालैस्सहितः प्रहसन् परिहासवाक्यमुवाच ॥ ९॥

तदेव दर्शयति - **अत्रेति**। हे अबलाः! इदं सत्यमेव ब्रुवाणि, नो नर्म न परिहासं, यत् यस्माद्यूयं व्रतेन कर्शिताः श्रान्ताः ॥ १०॥

---

1. A,B वस्त्राणि 2. A,B ° रं

**विज०** नन्दस्नुषा भूयास्म इत्येवं सङ्कल्प्य नदीमागत्य नदीं प्राप्य। भूयान्नन्दसुतः पतिरित्यपि पाठः ॥ ६,७॥

योगेश्वरेश्वर इत्यनेन दूरश्रवण दर्शनादिशक्तिः सूच्यते, तासां कर्मसिद्धये संकृप्तव्रतसिध्यर्थम् ॥ ८॥

नीपमर्जुनं परितो हासो यस्मिन् तद्वचनं परिहासम् ॥ ९,१०॥

**न मयोदितपूर्वं वा[1] अनृतं[2] तदिमे विदुः।**
**एकैकशः प्रतीच्छध्वं[3] स[4-]हैवोत[-4] सुमध्यमाः ॥ ११॥**

तस्य तत्क्ष्वेलितं दृष्ट्वा गोप्यः प्रेमपरिप्लुताः।
व्रीडिताः प्रेक्ष्य चान्योन्यं जातहासा न निर्ययुः॥१२॥

एवं ब्रुवति गोविन्दे नर्मणाऽऽक्षिप्तचेतसः।
आकण्ठमग्नाश्शीतोदे वेपमानास्तमब्रुवन्॥१३॥

मा[5-]ऽनयं भोः कृथास्त्वां[-5] तु नन्द[6]राजसुतं प्रियम्।
जानीमोऽङ्ग व्रजश्लाघ्यं देहि वासांसि वेपिताः॥१४॥

[7]श्यामसुन्दर! ते दास्यः करवाम तवोदितम्।
देहि वासांसि धर्मज्ञ[8]! ★ नो चेद्राज्ञे ब्रुवाम हे[9]॥१५॥

1. M,Ma वै 2. V ह्य 3. M,Ma °च्छन्तु 4- -4. V सह वा तनु° 5- -5. M,Ma मानयन्त्यो वयं त्वां 6. A,B,G,J,T,W गोप 7. M,Ma स्याम 8. V सर्वज्ञ! ★ The following two more extra padas are found in M,Ma Edns. वेपितानां महाबल शीतार्दितानां बालानां 9. V °है

**श्रीध०** **नेति**। एकैकशो वा आगत्य वासांसि[1] स्वीकुरुत, सहैव वा। न तत्र अस्माकमाग्रह इत्यर्थः॥११॥

**तस्येति**। क्ष्वेलितं परिहासः। प्रेमपरिप्लुताः प्रेमरसमग्नाः[2]॥१२,१३॥

तत्र मग्ना[3] ऊचुः **मेति**। अङ्ग! भो कृष्ण! अनयम् अन्याय्यम्। मा कृथाः॥१४॥

प्रौढा ऊचुः **श्यामेति**। नो चेत् राज्ञे नन्दाय कंसाय वा। [4-]ब्रुवामहै[-4]॥१५॥

1. B,J,P,V omit वासांसि 2. A,B,J निम° 3. A,B,J मुग्धा 4- -4. A,B,J ब्रुवाम, ब्रुवाम हे कृष्ण! इति

**वीर०** स्ववचनप्रामाण्यं ससाक्षिकमाह **नेति**। मया अनृतं नोदितपूर्वं नोक्तपूर्वं कदाऽप्यनृतं मया नोक्तमित्यर्थः। तदनृतस्य अनुक्तपूर्वत्वमिमे गोपा विदुः, अतो हे सुमध्यमाः! एकैकशो वा आगत्य स्वीकुरुत, सह वा, नास्माकमाग्रहः॥११॥

एवं कृष्णस्य क्ष्वेलितं परिहासं दृष्ट्वा [1-]प्रेम्णा परितो व्याप्ताः अन्योन्यं[-1] प्रेक्ष्य व्रीडिताश्च हसन्त्यो न निर्ययुः॥१२॥

[2-]गोविन्दे[-2] एवं ब्रुवति सति नर्मणा परिहासेनाऽऽक्षिप्तं गृहीतं चेतो यासां ताः, शीतोदके आकण्ठमग्नाः अत एव कम्पमानाः कृष्णमब्रुवन्॥१३॥

[3]किमब्रुवन्नित्यपेक्षायां सामादिचतुर्विधोपायपूर्वकं भगवज्ज्ञानसम्पन्नं गोप्युक्तमाह द्वाभ्याम्[-3]। भोः कृष्ण! अनयम् अन्यायं मा कृथाः, त्वां नन्दराजस्य सुतम् अत एव तस्य प्रियं च जानीमः। नन्दराजोऽपि प्रेम्णा त्वामनयकारिणमपि न शिक्षयतीति भावः। नवनीतचौर्यादिषु धौर्त्ये प्रसिद्धमेवेत्यभिप्रायेण विशिंषन्ति श्लाघ्यमिति। यद्वा अस्मदनुष्ठितव्रतेन नन्दराजसुतं त्वां श्लाघ्यं प्रियं भविष्यन्तं जानीम एव। किन्तु अधुनैवानयं मा कृथाः। वयं तु शीतोदकवेपिताः, अतो वासांसि प्रयच्छ॥ १४॥

हे श्याम! सुन्दर! ते तव दास्यो वयं तवोदितं त्वयोक्तमन्य[4]त्किञ्चित्करवाम। भावगर्भमिदम्। निरतिशयत्वत्सौन्दर्यादिभिः त्वद्दास्यस्सत्यः त्वदभिप्रेतं करवामैवेत्यभिप्रायः। हे धर्मज्ञ! अनेनैकान्ते नग्नस्त्रीदर्शनाकरणरूपधर्मज्ञ! स्त्रीणां लज्जास्वभावरूपधर्मं जानाति[5] तथेति, वा, वासांसि प्रयच्छ, मुग्धभावादनुपपन्नमपि त्रासयन्त्य इवाऽऽहुः, नो चेन्न प्रयच्छसि चेद्राज्ञे नन्दाय कंसाय वा, ब्रुवामहे॥ १५॥

---

1- -1. A omits 2- -2. T,W omit 3- -3. T,W omit 4. A,B omit यत् 5. A,B add इति

**विज०** क्ष्वेलितं सिंहवन्नादितं परिहासेनोदितं वा न निर्ययुः जलादिति शेषः॥ ११, १२॥

नर्मणा गर्हितस्नेहविनोद वचनेन॥ १३॥

शीतजले स्थित्या वेपिताः वयम्॥ १४॥

ते तव दास्यः स्याम भवाम राज्ञे नन्दगोपाय॥ १५॥

**[1]श्रीकृष्ण उवाच**

**भवत्यो[2] यदि मे दास्यो मयोक्तं वा करिष्यथ।**
**अत्राऽऽगत्य स्ववासांसि प्रतीच्छ[3]त शुचि[4]स्मिताः।**
**★ नोचेन्नाहं प्रदास्ये किं क्रु[5]द्धो राजा करिष्यति॥ १६॥**

**ततो जलाशयात्सर्वा दारिकाश्शीतवेपिताः।**
**पाणिभ्यां योनिमाच्छाद्य प्रोत्ते[6]रुस्तीरमङ्गनाः[-6]॥ १७॥**

**भगवा[7]नाहता वीक्ष्य शु[8]द्धभावप्रसादितः।**
**स्कन्धे निधाय वासांसि प्रीतः प्रोवाच सस्मितः[9]॥ १८॥**

यूयं विवस्त्रा यदपो धृतव्रताः व्यगाहतैत[10]त्तदु देवहेलनम्।
बद्ध्वाऽञ्जलिं मूर्ध्न्यपनुत्तयेंऽहसः कृत्वा नमोऽ[11]धो वसनं प्रगृह्यताम्॥ १९॥

★ इत्येतद्वचनं श्रुत्वा धर्मयुक्तं महात्मनः।
एकेन पाणिना नेमुरेकेनाऽऽच्छाद्य चाङ्गनाः॥ २०॥

---

1. A,B,G,J,V,M,Ma श्रीभगवान् 2. M,Ma °न्त्यो 3. A,B,G,J °च्छन्तु 4. M,Ma,V सुमध्यमाः ★ M,Ma,V editions add this half verse 5. V वृ° 6- 6. A,B,G,J °श्शीतकर्शिताः 7. M,Ma °नथ ता 8. M,Ma मुग्ध 9. A,B,G,J,K,T,W °तम् 10. K,T,W °तदुत 11. A,V वो ★ A,G,J omit this verse, but M,Ma omit only this half verse.

**श्रीध० तत** इति। प्रोत्तेरुः निर्गताः॥ १६,१७॥

**भगवानिति।** आहताः ईषदक्षतयोनीः वीक्ष्य॥ १८॥

**यूयमिति।** धृतव्रतास्सत्यो विवस्त्राः अपो व्यगाहत अप्सु स्नाता इति यत् तदेतत्। उ एव। देवहेलनं अपराध एवेत्यर्थः। व्रतवैगुण्यभीतानां प्रायश्चित्तमिवाह - अस्य अंहसः पापस्य, [1-]अपनुत्तये[-1] निवृत्तये मूर्ध्नि अञ्जलिं बध्वा, ओन्नम इति प्रणामं कृत्वा॥ १९,२०॥

---

1- -1. A,B,J omit.

**वीर०** एवमुक्तो भगवान् यदुक्तं 'नो चेद्राज्ञे ब्रुवामहे' इति, तदिदमनुपपन्नम्। न हि जलान्निर्गत्य वासांसि ग्रहीतुमेव[1] लज्जन्तीनां राज्ञे ब्रुवामहे इत्युक्तिरुपपन्ना। नग्नानां राजसन्निधौ गमनासम्भवात्, न चान्यप्रेषणया निवेदनसम्भवः प्रेषणीयस्य जनस्य अत्राभावादिति तदुक्तेरुत्तरं न देयमेवेत्यभिप्रेत्य 'ते दास्यः करवाम तवोदितम्' इत्यस्योत्तरमाह - **भवत्य** इति। हे शुचिस्मिताः न हि स्वामिनोक्तं किञ्चिदेव स्वसम्मतं दासीभिः कर्तव्यमिति नियमः। किन्तु सर्वमपि तदभिमतं कर्तव्यमेवे[2]ति भावः॥ १६॥

स्वाम्यभिमतकरणं दासीनामुचितमेवेत्यभिप्रेत्य शीतेन कम्पिताः कुमारिकाः कालिन्दीह्रदात् प्रोत्तेरुः निर्जग्मुः॥ १७॥

ततो भगवानाहताः ई[3]षदक्षतयोनीः बाल्ययौवनसन्धिस्थाः ताः कुमारिका अवलोक्य शुद्धभावेन निष्कपट भावेन यथोक्तानतिक्रमशीलेन भावेन हेतुना प्रसादितः प्रसादः[4] अनुग्रहः अस्य सञ्जात इति तथा अनुग्रहयुक्तः [5-]स्कन्धे वृक्षशाखायां वासांसि निधायाऽऽरोप्य[-5] प्रीतः सस्मितश्च पुनरुवाच॥ १८॥

तदेवाऽऽह - **यूयमिति।** धृतव्रताः सत्यो विवस्त्राः यूयमपो व्यगाहत अप्सु स्नाता इति यत्तदेतद्देवहेलनमुत अपराध एवेत्यर्थः। व्रतवैगुण्यभीतानां प्रायश्चित्तविधानमाह। अस्यांहसः पापस्य अपनुत्तये अपनोदनाय मूर्ध्नि अञ्जलिं बद्ध्वा नमस्कृत्य वसनं प्रगृह्यताम्॥ १९॥

इत्थमच्युतेन अभिहिताः अङ्गनाः एकेन वामेन पाणिना योनिमाच्छाद्य इतरेण पाणिना नेमुः॥ २०॥

---

1. A,B °यज° 2. A,B omit एव 3. A,B °दप्यक्ष° 4. A,B add अत्र 5- -5. T,W omit.

**विज०** दारिकाः कुमार्यः॥ १६,१७॥

मुग्धभावेन मधुरस्वभावेन प्रसादितः **प्रसादं गमितः**॥ १८॥

यूयं वस्त्रहीना अपो जलं व्यगाहतेति यत्तदेतत् उ तापकारणं देवहेलनं देवतापराधः। अतः तस्यांहसः अपराधस्य परिहाराय "उ तापेऽव्ययमीशे च" (**वैज. को. 8-7-10**) इति यादवः॥ १९,२०॥

△ ता वीक्ष्योवाच भगवान् **भूयो धर्म्यमिदं वचः।**
एकेन पाणिना यो वै **प्रणमेद्देवमच्युतम्।**
तस्य दण्डः **करच्छेद इति वेदविदो विदुः**॥ २१॥

तस्मादुभाभ्यां पाणिभ्यां **प्रणमेत्स्वामिनं नरः।**
तथा च यूयं कुरुत **तन्मे प्रियतरं भवेत्॥ २२॥**

★ इत्यच्युतेनाभिहिता[1] **व्रजाबला मत्वा विवस्त्राप्लवनं** व्रतच्युतिम्[2]।
तत्पूर्तिकामास्तदशेष **कर्मणां साक्षात्कृतं नेमुरवद्यमुग्यतः**॥ २३॥

तास्तथाऽवनता[3] **दृष्ट्वा भगवान्देवकीसुतः।**
वासांसि ताभ्यः **प्रा**[4]**यच्छत्**[-4] **करु**[5]**णः स्ने**[6]**हतोषितः**॥ २४॥

[7]**दृढं प्रलब्धास्त्रपया च हापिताः**[8] **प्रस्तोभिताः क्रीडनवच्च कारिताः।**
**वस्त्राणि चैवापहृताव्यथाप्यमुं**[9] **ता नाभ्यसूयन् प्रियसङ्गनिर्वृताः**॥ २५॥

---

△ A,G,J omit 21st and 22nd slokas. ★ **Here V adds this verse:- अहंस्तूभयमेतत्तु परिमार्जयितुं यदि। इच्छावः पाणियुगलैर्नमस्कृत्य** प्रगृह्यताम्॥ 1. B,G,J,V °तं 2. A,B,G,J °मृग्यतः; **M,Ma** °मुज्झितुम्; V °मुद्धृतः 3. K °दाऽ° 4- -4. V **सम्प्रादात्** 5. K,T,W त° 6. A,B,G,J तेन 7. K,T,W इत्थं 8. K,T,W °मूः 9. K,T,W तं नाभ्य; **M,Ma नैवाभ्य**

**श्रीध० इतीति।** इति दोषत्वेन अच्युतेनाभिहितं, विवस्त्राप्लवनं व्रतस्य च्युतिहेतुं मत्वा तस्य व्रतस्य[1] पूर्तिकामाः तदशेषकर्मणां तस्य व्रतस्य अन्येषामशेष कर्मणा च साक्षात्कृतं फलभूतं तमेव नेमुः। यतः[2] स एव अवद्यमृक्[3] पापमार्जकः ॥ २१-२३ ॥

**(इत्थमिति) दृढमिति।** दृढम् अत्यर्थम्।[4] प्रलब्धाः वञ्चिताः 'यूयं विवस्त्रा' इत्यादिना त्रपया लज्जया च।[-4] हापिताः त्याजिताः। अत्राऽऽगत्य स्ववासांसि प्रतीच्छत इत्याग्रहेण प्रस्तोभिता उपहसिताः। "सत्यं ब्रवाणि नो नर्मेत्यादिना (भाग 10-22-10) क्रीडनवच्च कारिताश्च। बध्वाऽञ्जलीत्यादि, प्रायश्चित्तच्छलेन[5] ताः नाभ्यसूयन्। दोषदृष्ट्या नापश्यन् ॥ २४,२५ ॥

---

1. A,B,J omit व्रतस्य 2. A,B,J omit यतः 3. V मृद् 4- -4. A,B,J omit 5. V adds एवमपराधेऽपि

**वीर०** पुनरपि भगवान् ता वीक्ष्य इदं वक्ष्यमाणं धर्म्यं धर्मादनपेतं वाक्यमाह। तदेवाऽऽह एकेनेति सार्धेव। एकेन पाणिना नेमुरित्यादिसार्धश्लोकद्वयं क्वचिन्न दृश्यते। तस्मादिति। हस्तद्वयसम्पुटस्यैवाञ्जलिशब्दार्थत्वादिति भावः ॥ २१,२२ ॥

इत्थमच्युतेनाभिहिताः व्रजकुमारिकाः विवस्त्रस्नानप्रयुक्तां व्रतच्युतिं व्रतभ्रंशं मत्वा तस्य व्रतस्य पूर्तिमवैगुण्यं कामयमानास्तस्य व्रतस्यान्येषां कर्मणां च साक्षात्कर्तारमच्युतं नेमुः। हस्तद्वयेन मूर्ध्न्यञ्जलिं बद्ध्वा नेमुरित्यर्थः। कुतः? यतः केवलमशेषकर्मणां न साक्षात्कृदेव। अपि तु अवद्यमुक् अवद्यं कर्मवैगुण्यापादकं पापं तस्मात् मोचयतीति तथा। ण्यर्थगर्भोऽत्र मुचिः, अतः प्रणेमुरित्यर्थः ॥ २३ ॥

अथ भगवान् तदा अवनतास्ता दृष्ट्वा तेन प्रणामेन तोषितः तरुणश्च। 'करुण' इति पाठे करुणावान् ताभ्यः कुमारिकाभ्यो वासांसि प्रददौ ॥ २४ ॥

इत्थमिति। यद्यपि इत्थं प्रलब्धाः 'यूयं विवस्त्रा' इत्यादिनाऽधिक्षिप्ताः, त्रपया लज्जया हापिताः। 'बद्ध्वाऽञ्जलीन्' इत्यादिना प्रायश्चित्तव्याजेन यन्त्रपाञ्चालिकावत्प्रवर्तिताः। वासांसि चापहृतानि। तथाऽप्यमूः कुमारिकाः तं कृष्णं नाभ्यसूयन्। गुणेषु सत्स्वपि उक्तान् दोषान्नाऽऽविश्चक्रुः। तत्र हेतुः, निरतिशयप्रियस्य कृष्णस्य सङ्गेन निर्वृताः सुखिताः तत्सङ्गनिर्वृत्या विस्मृतदोषा इति भावः, नाभ्यसूयन् ॥ २५ ॥

**विज०** विसस्त्राप्लवनं दिगम्बरस्नानं व्रतच्युतिं नियमभ्रंशं तत्पूर्तिकामाः तस्य व्रतस्य पूर्णतां कामयमानाः तासामशेषकर्मणां साक्षात्कृतं साक्षीभूतं कृष्णं नेमुः। अनेन किं प्रयोजनमत्राह - अवद्यमिति। उज्झितुं उन्मूलयितुम् ॥ २१ - २३ ॥

करुणः दयाशीलः ॥ २४ ॥

तासां कृष्णे भक्त्यतिशयं कथयति - **दृढमिति**। प्रलब्धाः वञ्चितवत्कारिताः हापिताः त्याजिताः मुक्तलज्जाः कारिताः प्रस्तोभिताः चाटुवचनजालं प्रापिताः, क्रीडनवत् दारुयन्त्रवत् अथापि तथापि अमुं कृष्णं प्रति गुणेषु दोषाविष्करणमसूया। तत्र हेतुमाह - प्रियेति। प्रियेण कृष्णेन सह सङ्कथनलक्षणसङ्गेन निर्वृताः ॥ २५ ॥

**परिधाय स्ववासांसि प्रेष्ठसङ्गमसज्जिताः।**
**गृहीतचित्ता नो[1]चेलुस्तस्मिन् [2]लज्जायितेक्षणाः ॥ २६ ॥**

**तासां विज्ञाय भगवान् स्वपादस्पर्शकाम्यया।**
**धृतव्रतानां सङ्कल्[3]पमाह दामोदरोऽबलाः ॥ २७ ॥**

**सङ्कल्पो विदितस्साध्व्यो भवतीनां मदर्च[4]नं।**
**मयाऽनुमोदितस्सोऽसौ सत्यो भवितुमर्हति ॥ २८ ॥**

**न मय्यावेशितधियां, कामः कामाय कल्पते।**
**भर्जिता[5] क्व[6]थिता धाना[7] प्रायो बीजाय नेष्य[8]ते ॥ २९ ॥**

**याता[9]ऽबला व्रजं सिद्धा मयेमा रंस्यथ क्षपाः।**
**यदुद्दिश्य व्रतमिदं चेरुरार्यार्चनं सतीः ॥ ३० ॥**

---

1. A,B,G,J नो चे° 2. M,Ma लज्जेषिते° 3. K,T,W °ल्पं प्राह 4. A °नात्; B,G,J °नं 5. A,K,T,V,W °ताः 6. T,W क्वां 7. K,T,V,W °नाः 8. A,J °श° 9. K °त बाला!

**श्रीध०** **परिधायेति**। प्रेष्ठसङ्गमेन सज्जिताः वशीकृताः। अतो गृहीतचित्तास्सत्यो [1-]नो चेलुः[-1]। गृहीतचित्तत्वमाह[2] — तस्मिन् कृष्णे लज्जायितेक्षणाः लज्जाविलसितं ईक्षणं यासां ता इत्यर्थः ॥ २६ ॥

**तासामिति**। दामोदर इति भक्तवात्सल्यं दर्शयति अबलाः प्रति ॥ २७ ॥

**सङ्कल्प** इति। भो साध्व्यः! भवतीनां [3-]मदर्चन एव[-3] सङ्कल्पः मनोरथः। [4-]स च[-4] लज्जया युष्माभिरकथितोऽपि मया विदितः स मयानुमोदितः, अतः सत्यो भवितुमर्ह[5]तीति सम्भावनो[6]क्त्या आत्यन्तिको न भविष्यतीति सूचितम् ॥ २८ ॥

तत्कृत इत्यत आह **नेति।** कामाय पुनः कामभोगाय विषयमहिम्ना कामस्यापि शान्तिहेतुत्वादिति भावः। कामाप्ररोहे दृष्टान्तः भर्जिताः[7-] दग्धाः, क्वथिताः, पक्का, धनाः यवादयः[-7], बीजयाय अङ्कुरोद्गमाय, प्राय इति स्वेच्छया पुनः प्ररोहमपि सूचयति[8] ॥ २९॥

**यातेति।** सिद्धाः पूर्णमनोरथाः तदाह इमाः आगामिनी रात्रीः। मया रंस्यथेति आर्या कात्यायनी। सती सत्यः ॥ ३०॥

---

1- -1. A,B,J नो चेलुः 2. B °मेवाह 3- -3. A,B,J °नमेव 4- -4. P.V omit स च 5. A,B,J °ति। अर्हतीति° 6. A °नामात्रोक्त्या° 7- -7. A,B,J °ता दग्धा, क्वथिता पक्का, धाना यवादि 8. A,B,J add ध्रुवादीनां तथा दर्शनात्

**वीर०** किन्तु स्ववासांसि परिधाय धृत्वा प्रेष्ठस्य सङ्गमेन वशीकृताः अत एव तदपहृतचित्ता नोच्चेलुः न चलितवत्यः। गृहीतचित्तत्वमेवाह - तस्मिन् कृष्णे लज्जायितं लज्जाविलसितं ईक्षणं यासां ताः ॥ २६॥

ततो भगवान् दामोदरः स्वपादस्पर्शकाम्यया स्वपादस्पर्शशब्देन अत्र तात्पर्यतः स्वेन सह क्रीडा विवक्षिता, तत्काम्यया धृतमनुष्ठितं व्रतं कात्यायन्यर्चनात्मकं याभिः तासां सङ्कल्पमभिसन्धिविशेषं विज्ञाय प्राह। तदेवाऽऽह अबला इत्यादिना। हे अबलाः! हे साध्व्यः! मदर्चने[1] मया सह क्रीडात्मके अर्चने निमित्ते यो भवतीनां सङ्कल्पः, स मया विज्ञातः, अनुमोदितोऽभ्यनुज्ञातश्चेत्यर्थः। सोऽसौ सङ्कल्पः सत्य एव भवितुमर्हति॥ २७,२८॥

केनापि व्याजमात्रेणानुजिघृक्षैकशीलत्वात् [2-]महोदारत्वात्[-2] च देहान्ते तासां मुक्तिमपि सङ्कल्पयति। मय्यावेशिता धीः याभिः तासां भवतीनां कामः मद्विषयकोऽभिलाषः कामाय केवलं विषयभोगायैव न कल्पते न भवति, किन्तु मुक्तयेऽपीत्यर्थतोऽत्र विवक्षितम्। विषयवैलक्षण्यमहिम्ना मद्विषयककामस्यापि संसृतिबीजभर्जनद्वारा मुक्तिहेतुत्वादिति भावः, यद्वा मय्यावेशिताया धियो विषयवैलक्षण्यादविप्लुतत्वेन यावद्देह पातानुवर्तित्वात् तदा संसृतिबीजभर्जनद्वारा मुक्ति हेतुत्वात् मद्विषयकः कामः केवलं न कामायैव कल्पत इति भावः। निर्वीर्यं संसृतिबीजं न पुनस्संसृतये भवतीत्यत्र दृष्टान्तमाह। प्रायो भर्जिताः भ्राष्टे निष्टप्ताः[3] क्वथिताः[4] निष्पक्वाश्च धानाः बीजाय नेष्यते अङ्कुरोद्गमाय नेष्यते नेष्यन्ते! वचनव्यत्यय आर्षः। प्राय इत्यस्य भर्जिताः क्वथिता[5] इत्याभ्यामन्वयः ॥ २९॥

यत एवमतो हे बालाः! यूयं सिद्धाः पूर्णमनोरथाः व्रजं यात गच्छत। सिद्धत्वमेवाऽऽह। मया सह इमाः आगामिनीः रात्रीः शारदीः रंस्यथ। देवताराधनं न मुधा भवितुमर्हतीत्यभिप्रायेणाऽऽह यदिति। सतीः हे सत्यः! यन्मया सह क्रीडनात्मकं प्रयोजनमुद्दिश्य भवत्यः इदमार्यायाः कात्यायन्याः व्रतं चेरुः चक्रुः ॥ ३०॥

1. A,B °नं 2- -2. K,W omit 3. A,B °क्षि° 4. A,B,K °ऋ° 5. K ऋ°

**विज०** प्रेष्ठस्य कृष्णस्य सङ्गमे सज्जिताः सन्नद्धाः न उच्चेलुः स्थितप्रदेशादिति शेषः। लज्जया ईषन्निमील्य प्रेषितानि ईक्षणानि यासां ताः। यद्वा लज्जया इषितानि गतानि ईक्षणानि यासां तास्तथा। "इषु गतौ" इति धातुः ॥ २६ ॥

पादं शरीरम्। "उत्तमानां शरीरं तु पादशब्देन भण्यते" इति ॥ २७ ॥

यन्मदर्चनं तस्मिन् कृतः नन्दसुतः पतिर्भूयादिति सङ्कल्पः अनुमोदितः अनुज्ञातः ॥ २८ ॥

मत्सम्भोगलालसानां भवतीनां विषयौत्सुक्यं पुनः संसारवर्तनाय स्यात्। अतोऽस्मत्सङ्कल्पो निन्द्य इति शङ्का माभूदित्याशयेनाह **नेति**। कामाय विषयेच्छाप्ररोहाय, तत्र दृष्टान्तमाह भर्जितेति। धाना बीजं बीजाय अङ्कुरोत्पादनशक्तिमते ॥ २९ ॥

आर्यार्चनं कात्यायनीपूजां सतीः सत्यः ॥ ३० ॥

[1-] श्रीशुक उवाच [-1]

इत्यादिष्टा भगवता लब्धकामाः कुमारिकाः।
ध्यायन्त्यस्तत्पदाम्भोजं [2]कृच्छ्रान्निर्विशुर्व्रजम् ॥ ३१ ॥

अथ गोपैः परिवृतो भगवान्देवकीसुतः।
बृन्दावनाद्गतो दूरं चारयन्गास्सहाग्रजः ॥ ३२ ॥

निदाघार्कातपे [3]तीक्ष्णे छायाभिस्स्वाभिरात्मनः।
आतपत्रायितान्वीक्ष्य द्रुमानाह व्रजौकसः ॥ ३३ ॥

हे स्तोककृष्ण! हे अंशो! श्रीदामन्सुबलार्जुन।
विशाल[4]वृषभौजस्विन् देव[5]प्रेष्ठ। वरूथप ॥ ३४ ॥

पश्यतैतान्महाभागान्परा[6]र्थैकान्तजीवितान्।
वातवर्षातपहिमान् सहन्तो वारयन्ति नः ॥ ३५ ॥

---

1- -1. K,T,V,W omit 2. V °वि° 3. A,B,G,J,M,Ma तिग्मे K,T,W ग्रीष्मे; V. तस्मिन् 4. A,B,G,J,M,Ma °लर्षभ तेज° 5. A,B,G,J,M,Ma,V प्रस्य 6. A जीवनान्, M,Ma जीविनः

**श्रीध०** **इतीति।**★ ''भक्त्यानुकम्प्यकन्यास्तास्तद्विवर्जितयज्वनाम्। पत्न्यनुग्रहतस्तेषामहन्कर्ममहामदम्'' ॥ ३१-३३ ॥

द्विजभार्याया[1-] अनुग्रहाय[-1] यज्ञवाटं गच्छन् विप्राणां काठिन्यमभिप्रेत्य तेभ्योपि द्रुमाश्श्रेष्ठा इति तानभिनन्दति[2] हे **स्तोककृष्णेति** चतुर्भिः। स्तोककृष्णादयो गोपाः ॥ ३४ ॥

**पश्यतेति।** एतान् द्रुमान् पश्यत। परार्थमेकान्तेन[3] जीवितं येषां तान्। तदाह वातवर्षादीन् स्वयं सहन्तः[4] सहमानाः नः[5] अस्माकं वारयन्ति ॥ ३५ ॥

---

★ श्रीधरीयोऽयं श्लोकः। 1- -1. A,B,J विप्रभार्यानु 2. P,V नन्दयति 3. A,B,J °मेवैकान्तेन 4. P,V omit सहन्तः 5. A,B,J omit नः

**वीर०** इत्थं भगवता[1- -1] कृष्णेनाऽऽदिष्टाः कुमारिकाः लब्धप्रायाः कामा इष्टार्था याभिः तथाभूतास्तस्य भगवतः पदाम्भोजं ध्यायन्त्यः तमेवानुचिन्तयन्त्य इत्यर्थः। कृच्छ्रात् कथञ्चित् व्रजं निर्विविशुः, तद्विश्लेषासहिष्णुत्वादिति भावः ॥ ३१ ॥

चरित्रान्तरमाह **अथेति।** कदाचित् बृन्दावनाद्दूरं गतः साग्रजो गाश्चारयन् तीक्ष्णे निदाघार्कस्य ग्रैष्मार्कस्याऽऽतपे आत्मनः स्वस्य स्वाभिश्छायाभिरातपत्रवदाचरितान् द्रुमानवलोक्य व्रजौकसो गोपानाह ॥ ३२,३३ ॥

तदेवाऽऽह **हे स्तोककृष्णेत्यादिभिः** पञ्चभिः[2]। स्तोककृष्णाख्यः कश्चिद्गोपबालः, एतान् द्रुमान् पश्यत। कथम्भूतान्? परार्थं परोपकारार्थमेव[4] एकान्तं[5] नियतं जीवितं येषां तान् तदेवाऽऽह वातेति। स्वयं वातादीन् सहमानाः नोऽस्माकं तान् वारयन्ति, हिमानिति पुंस्त्वमार्षम् ॥ ३४,३५ ॥

---

1- -1. K,W omit 2. T,W omit पञ्चभिः 4. T,W omit एव 5. T,W ऐ°

**विज०** **व्रजौकसः** आहेत्यन्वयः। तिग्मे तीव्रे ॥ ३१ - ३४ ॥

परार्थाय परोपकाराय एकान्तेन नियमेन जीवनं स्वायूरक्षणं येषां ते तान्, नः वारयन्ति क्षुधितानस्मान् तर्पयन्ति॥ ३५॥

अहो! [1]ह्येषां [2]परं जन्म सर्वप्राण्युपजीवनम्।
सुजनस्येव येषां वै विमुखा यान्ति नार्थिनः॥ ३६॥

पत्रपुष्पफलच्छायामूलवल्कलदारुभिः।
गन्धनिर्यासभस्मास्थि[3]तोकैः कामान्वितन्वते॥ ३७॥

एतावज्जन्मसाफल्यं देहिनामिह देहिषु।
प्राणैरर्थैर्धिया वाचा श्रेय [5-]आचरणं[-5] सदा॥ ३८॥

इति प्रवालस्तबकफल[6]पुष्पदलोत्करैः।
तरूणां [7]नम्रशाखानां मध्येन यमुनां [8]गतः॥ ३९॥

तत्र गाः पाययित्वाऽपः सुमृ[9]ष्टाश्शीतलाश्शिवाः।
ततो नृप! स्वयं गोपाः कामं स्वादु पपुर्जलम्॥ ४०॥

तस्या उपवने कामं चारयन्तः पशून्नृप!
कृष्णरामावुपाग[10]म्य क्षुधाऽऽर्ता इदमब्रुवन्॥ ४१॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे पूर्वार्धे गोपीवस्त्रापहारोनाम द्वाविंशोऽध्यायः॥ २२॥

---

1. A,B,G,J,M,Ma,V एषां 2. A,B,G,J,M,Ma वरं 3. A,B,G,J,M,Ma तोक्मैः 4. V सामग्रचं 5- -5. A,B,G,J एवाऽऽचरेत् 6. M,Ma मूल 7. K रम्य 8. T,W गताः 9. V °ह्°  10. K °मन्त्र्य

**श्रीध०** **अहो** इति। सुजनस्य कृपालोरर्थिन इव॥ ३६॥

**पत्रेति।** निर्यासो घनरसः [1]तोकाः पल्लवाद्यङ्कुराः॥ ३७, ३८॥

**इतीति।** इत्य[2]भिनन्दन् प्रवाला[3]दिसमूहैर्नतशाखानां तरूणां [4]मध्यतो यमुनां प्राप्तः॥ ३९, ४०॥

**तस्या** इति। कुमारिकाभ्यः पूर्वमेव तत्कर्माकुलतया। अगृहीतभोज्यानामेव निर्गमात् क्षुधार्ता इत्युक्तम्॥ ४१ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां द्वाविंशोऽध्यायः ॥ २२ ॥

---

1. A,B,J तोक्माः 2. P,V नन्दयन् 3. A °दीनां 4. A,B,J मध्येन

**वीर०** अहो! सर्वप्राणिन उपजीवयतीति तथा तदेषां द्रुमाणां जन्म पर[1] मनुष्यजन्मनः श्रेष्ठम्। किञ्च सुजनस्य वदान्यस्येव येषामर्थिनो विमुखा न यान्ति। किन्तु छायाफलादिभिस्सत्कृता एव भवन्ति॥ ३६ ॥

तदेवाऽऽह **पत्रेति**। पत्रादिभिः अर्थिनां कामान् वितन्वते विस्तरेण ददते इत्यर्थः। निर्यासः घनीभूतरसः अस्थीनि शान्ताग्नयोऽङ्गाराः तोकाः पल्लवाद्यङ्कुराः ॥ ३७ ॥

अनुपकारिणां जन्म वृथे[2]त्यभिप्रयन्नाह **एतावदिति**। इहलोके देहिषु मध्ये देहिनां जन्मनः साफल्यमेतावदेव। कियत्? प्राणादिभिः श्रेय आचरणं भूतहितधरणमित्येतावत्॥ ३८ ॥

इति इत्थमभिनन्दन् प्रवालादीनामुत्कैः समूहैः रम्यास्शाखा येषां तेषां तरूणां मध्येन यमुनां गताः ॥ ३९ ॥

तत्र यमुनायां मधुरास्शीतला निर्मलाश्च अपः जलानि गाः पाययित्वा हे नृप! गोपाः कृष्णादयः स्वयमपि [3]मृष्टं जलं पपुः ॥ ४० ॥

ततस्तस्य यमुनायाः समीपे वने पशूंश्चारयन्तो गोपाः हे नृप! कृष्णरामौ उपामन्त्र्य आहूय सम्बोध्य वा। 'उपागम्य' इति पाठे समीपमेत्य इदं वक्ष्यमाणमब्रुवन्। कथम्भूताः? क्षुधाऽऽर्ताः प्रातर्भुक्तवन्तोऽपि विप्रपत्नीरनुजिघृक्षता भगवतोत्पादितया क्षुधा पीडिता इति भावः ॥ ४१ ॥

---

1. A,B,K वरं 2. A,B ० थैवेत्य 3. A,B शुद्धं

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां द्वाविंशोऽध्यायः ॥ २२ ॥

**विज०** सुजनस्य जन्मनः साफल्यमेतावत् अर्थिनो येषां विमुखा न यान्तीति ये अस्थ्ना सारेण तोक्मैः अङ्कुरैः साफल्यमेतावत्॥ ३६ - ४१॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
दशमस्कन्धे पूर्वार्धे द्वाविंशोऽध्यायः॥ २२॥

(विजयध्वजरीत्या विंशोऽध्यायः)

# त्रयोविंशोऽध्यायः

## (विजयध्वजरीत्या एकविंशोऽध्यायः)

### -: विप्रपत्न्यनुग्रहघट्टः :-

★ [1-] गोपा ऊचुः [-1]

राम राम महा[2]बाहो! कृष्णदुष्टनिबर्हण !
एषा वै बाधते क्षुन्नः तच्छान्तिं कर्तुमर्हथः ॥ १ ॥

[3-] श्रीशुक उवाच [-3]

इति विज्ञापितो गोपैः भगवान् [4-] जगदीश्वरः [-4] ।
भक्ताया विप्रभार्यायाः प्रसीद न्निद मब्रवीत् ॥ २ ॥

△ प्रयात देवयजनं ब्राह्मणा ब्रह्मवादिनः ।
सत्रमाङ्गिरसं नाम ह्यासते स्वर्गकाम्यया ॥ ३ ॥

तत्र गत्वौदनं गोपा याचताऽस्मद्विसर्जिताः ।
कीर्तयन्तो भगवत आर्यस्य ममचाऽभिधाम् ॥ ४ ॥

इत्यादिष्टा भगवता गत्वाऽयाचन्त ते [5]तथा ।
कृताञ्जलिपुटा विप्रान्दण्डवत्पतिता भुवि ॥ ५ ॥

---

★ The following extra matter is found in V edition — श्रीशुक उवाच - तत्र गत्वोपविष्टास्ते गोपाला यमुनातटे। ऊचुर्बुभुक्षिता राजन् कृष्ण रामौजगत्पती ॥ 1- -1. M,Ma श्रीशुक उवाच 2. A,B,G,J,K,T,W °वीर्य 3- -3. M,Ma omit 4- -4. A,B,G,J देवकीसुतः △ M,Ma add श्रीकृष्ण उवाच 5. V तदा

## श्रीधरस्वामि विरचिता भावार्थदीपिका

त्रयोविंशे ततो गोपै रन्नयाच्वापदेशतः।
तत्पत्न्यनुग्रहात्कृष्णो दीक्षिता नन्वतापयत्॥

**इतीति।** भक्ताया इत्येकवचनम् सद्यः **साधुब्याभिप्रायेण**॥ १-३॥

**तत्रेति।** अस्म द्विसर्जिताः आवाभ्यां प्रहिता स्सन्तो याचध्वम्। युष्माकं का तत्र का लज्जा? ननु तथाऽपि अपात्रत्वा दस्मभ्यं किमिति दास्यन्तीति चे त्तत्राऽऽह कीर्तयन्त इति॥ ४,५॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

इत्थ मब्रुव न्नित्युक्तम्। किं तत्? इत्यत्राऽऽह - **राम रामेति।** नोऽस्मान् एषा क्षुद्बाधते, तस्याः क्षुधः शान्तिं कर्तुमर्हथः॥ १॥

विप्रभार्याया इत्येकवचनं जात्यभिप्रायकम्, विप्रभार्याणां, प्रसीदन् ता अनुजिघृक्षुः इद मब्रवीत्॥ २॥

तदेवाऽऽह - **प्रयातेति।** ब्रह्मवादिनो ब्राह्मणाः। देवा इज्यन्तेऽस्मिन्निति देवयजन मङ्गिरसाख्यं सत्र मासते अनुतिष्ठन्ति॥ ३॥

हे गोपाः! तत्र सत्रवाटे[1] गत्वा अस्मद्विसर्जिताः आवाभ्यां प्रेषिताः वय मिति वदन्तोऽन्नं याचत याचध्वम्। अस्मद्विसर्जिता इत्येतदेवोपपादयति। भगवत आर्यस्य अग्रजस्य रामस्य मम च अभिधां नामधेयं कथयन्तो याचतेत्यन्वयः॥ ४॥

भगवता इत्थ मादिष्टा स्ते गोपा स्तत्र गत्वा यथोक्तमयाचन्त। याच्ञा प्रकार मेव दर्शयति कृताञ्जलिपुटा इति। ताव द्विप्रानुद्दिश्य भुवि दण्डवत्पतिताः कृतान्यञ्जलिपुटानि यै स्तथा भूता स्ते गोपाः॥ ५॥

1. A,B यज्ञ°

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

कृष्णभक्तौ योग्यतैव बलीयसी न शास्त्रज्ञान मित्येतत्कथयति अस्मिन्नध्याये। तत्र गोपानां कृष्णस्य च प्रश्न प्रतिवचने कथयति शुक इति। दुष्टनिबर्हण! दुष्टजनोन्मर्दन! क्षुत् भोक्तु मिच्छा बाधते क्लिश्नाति। अस्याः क्षुधः शान्तिं प्रशमम्। "शान्तिः प्रशममङ्गले" (वैज.को.6-2-39) इति यादवः॥ १॥

विप्रभार्यायाः पतित्यक्तायाः, जाता वेकवचनम्। भक्ता याः इति च्छेदो वा॥ २॥

देवयजनं यज्ञवाटं, सत्रं बहुकर्तृकम्, आङ्गिरसं अङ्गिरसा बृहस्पतिना कथितं बृहस्पतिसवन मित्यर्थः। आसते कुर्वते, अनेकार्थत्वा द्धातूनाम्। हिशब्दो हेतौ यस्मात्। सत्रे अन्नं देयम् तस्मात् प्रयात॥ ३॥

अस्मद्विसर्जिताः नियुक्ताः निर्मुक्ता वा। [1-]युष्माकं का वा तत्र लज्जा? ननु अस्माकं गोपालत्वेन अपात्रत्वात् किमिति दास्यन्तीति तत्राऽऽह - कीर्तयन्त इति[-1]। आर्यस्य श्रेष्ठस्य रामस्याऽ भिधानं नाम॥ ४॥

निराधारो दण्डो यथा पतति॥ ५॥

---

1- -1. Ma omits.

हे भूमिदेवाः शृणुत कृष्णस्याऽऽदेश कारिणः।
[1]प्रामान् जानीत भद्रं वो गोपान्नो राम चोदितान्॥ ६॥

गाश्चारयन्ता व[2]विदूर ओदनं रामाच्युतौ [3-]वो लषतो[-3] बुभुक्षितौ।
तयोर्द्विजा ओदन मर्थिनो यदि श्रद्धा [4]च वो यच्छत धर्मवित्तमाः॥ ७॥

दीक्षायाः पशुसंस्थायाः सौत्रामण्याश्च सत्तमाः।
अन्यत्र दीक्षितस्याऽपि नाऽन्नमश्नन्हि दुष्यति॥ ८॥

इति ते भगवद्याच्ञां शृण्वन्तोऽपि न शुश्रुवुः।
क्षुद्राशा भूरिकर्माणो बालिशा वृद्धमानिनः॥ ९॥

[5-]देशः कालः पृथग्द्रव्यं[-5] मन्त्रतन्त्रर्त्वि[6]गग्नयः।
देवता यजमानश्च क्रतुर्धर्मश्च यन्मयः॥ १०॥

---

1. A आ° 2. M,Ma °श्रि° 3- -3. V यलुषतो 4. V °त° 5- -5. M,Ma देशकालपृथग्द्रव्य 6. A द्विजाग्नयः ; B,G,J,M,Ma °र्त्विजोऽग्नयः।

**श्रीध०** अविदूरे वर्तमानौ सन्तौ वो यत् ओदनम्[1] अन्नम्। तत् लषतः अभिलषतः वः[2] ओदनं श्रद्धा च यद्यस्ति तर्हि यच्छतेति॥ ५ - ७॥

दीक्षिता वय मभोज्यान्ना इति वदिष्यन्तीति स्वय मेवाऽऽशङ्क्याऽऽहुः - **दीक्षाया** इति। दीक्षाया आरभ्य अग्निष्टोमीयपश्वालम्भा त्पूर्वं दोषः ; न ततोऽन्यत्र। तथा सौत्रामण्याश्च अन्यत्र अन्यदा॥ ८॥

**इतीति**। क्षुद्रे स्वर्गादा वाशामात्रं येषां ते। भूरीणि क्लेशाधिकानि कर्माणि येषां ते। अतः अज्ञाः [3-]वृद्धमानिनः ज्ञान वृद्धा[-3] इति मानवन्तः॥ ९॥

ननु कर्मक्रम मुलङ्घ्य अदेशकाले अन्यार्थमन्न मन्यस्मै कथं देयम्? तत्राऽऽह - **देश** इति। पृथक् चरुपुरोडाशादि द्रव्यम्। तन्त्रं प्रयोगः। धर्मोऽपूर्वम्॥ १०॥

---

1. A,B,J omit ओदनम् 2. P,V omit वः 3- -3. A वृथाज्ञानाः वृद्धाः ; B,J वृथाज्ञानवृद्धाः

**वीर०** हे भूमिदेवाः! शृणुत! किम्? कृष्णस्याज्ञाकरणशीलान् रामेण चोदिता निह प्राप्ता नस्मान् गोपालान् जानीत। वो युष्मभ्यं भद्र मस्तु॥ ६॥

किमर्थं चोदिता इह प्राप्ताश्च इत्यत्राऽऽह **गा** इति। इतोऽविदूरे समीपे गाश्चारयन्तौ रामकृष्णौ बुभुक्षितौ क्षुधितौ[1] वः युष्माक मोदनं लषतः अभिलषतः वाञ्छत[2] इति यावत्। 'यल्लुषत' इति पाठे यत् यस्मात् लषतः। अतो हे द्विजाः! वः युष्माकं श्रद्धा वर्तते चेत्[3] अर्थिनो स्तयोः ओदनं यच्छत। दीक्षिताना मस्माक मन्नं न भोज्य मिति[4] शङ्कां निराकुर्वन्तः सम्बोधयन्ति हे धर्मवित्तमाः इति॥ ७॥

तदेवोपपादयन्ति **दीक्षाया** इति। हे सत्तमाः! दीक्षायाः दीक्षापूर्विकायाः [5-]अग्नीषोमीय[-5] पशुसंस्थायाः ऊर्ध्वं सौत्रामण्या अन्यत्राऽनन्तरे च दीक्षितस्य यजमानस्य अन्न मश्नन् न दुष्यति। बुभुक्षु रिति कर्तृपद मध्याहर्तव्यम्। दीक्षितशब्दः [6]यजमानपरः सौत्रामण्यां दीक्षणीयेष्टिपूर्वकसङ्कल्पाभावात्॥ ८॥

इत्थं भगवतो याच्ञां ते[7] ब्राह्मणाः शृण्वन्तोऽपि नाद्रियन्त। तत्र हेतुं वदन् विशिनष्टि **क्षुद्रे** स्वार्गादावाशामात्रं येषां तदर्थं भूरीणि क्लेशावहानि कर्माणि येषां ते। स्वयं बालिशा मूर्खा अपि [8-]वृद्धमानिनः[-8] वृद्धं ज्ञानाधिक मात्मानं मन्यन्त इति तथा॥ ९॥

देशादि र्यन्मयः यत्प्रचुरो भवति[9] तं कृष्णं साक्षात्परब्रह्मभूतं षाड्गुण्यपूर्ण मधोक्षजं न मेनिरे, किन्तु म[10-] नुष्यबुद्ध्या[-10] केवलं प्राकृतं मनुष्य मेवाऽमन्यन्त। तत्र हेतुः- दुष्प्रज्ञाः कर्ममीमांसोपचितज्ञानाः मर्त्यात्मानः मर्त्ये मरणशीले देहे आत्मा आत्मबुद्धि र्येषां ते, तत्र देशः "समे यजेत" इत्याद्युक्तः। काले वसन्तादिः पृथग्द्रव्यं चारुपुरोडाशादिकम्। धर्मोऽपूर्वम्। एतेषां भगवत्प्राचुर्यं तच्छरीरत्वेन तन्निर्वाह्यत्वेन चेति ज्ञेयम्॥ १०॥

---

1. T,W omit क्षुधितौ 2. A,B इच्छतः ; T,W omit वाञ्छतः 3. A,B add तर्हि 4. A,B add इमां 5- -5. A,B अग्निष्टोमीय 6. A,B add अत्र 7. T,W omit ते 8- -8. J omits 9. T,W omit भवति 10- -10. T,W omit.

**विज०** हे भूमिदेवाः! ब्राह्मणाः! "भूमिदेवो द्विजोत्तमः" (हला०. को. 2-236) इति हलायुधः॥ ६॥

लषतोऽभिलषतः इच्छतः, श्रद्धा आस्तिक्यं अभिलाषो वा। "श्रद्धाऽऽस्तिक्याभिलाषयोः" (वैज.को. 6-2-38) इति यादवः॥ ७॥

ननु दीक्षितान्नं न भोक्तव्यम् इति शास्त्रविरोधं परिहरति **दीक्षाया** इति। दीक्षाया व्रतसङ्कल्परूपायाः वर्तमानाया स्सत्याः पशुसंस्थाया अग्नीषोमीयपश्वालम्भादूर्ध्वं दीक्षितस्य अन्न मश्नन् सौत्रामण्याः तथा सौत्रामणीनाम्न्याः इष्टेश्चान्यत्र कर्मान्तरे दीक्षितस्य चान्नं न दुष्यति॥ ८॥

इति हेतुपूर्वां भगवद्याच्ञाम्। अश्रवणे तेषां बुद्धिविशेष माह — **क्षुद्राशा** इति। क्षुद्राशाः तुच्छफलेच्छवः, तदर्थं भूरि कर्माणः। किमेते भ्रान्ताः इति, सत्य मित्याह बालिशा इति। बालिशा मूर्खाः। "बालिशो बाल मूर्खयोः" (वैज.को. 7-4-20) इति। एतदेव द्रढयति बुद्धीति। वृद्धा इत्यभिमानो येषा मस्तीति॥ ९॥

देशः कृष्णसारसञ्चारविषयः[1], कालः वसन्तादिः[2] पृथग्द्रव्यं चरुपुरोडाशादि, मन्त्रो देवताप्रसादप्रकाशक ओंकारादिः तन्त्र मनुष्ठानविधिः, ऋत्विजोऽध्वर्युप्रभृतयः, अग्नय आहवनीयादयः, देवता इन्द्रादि शब्दवाच्याः क्रतु स्सङ्कल्पः, यजमानोऽधिकारी, धर्मोऽदृष्टं, यन्मयः यत्प्रधानप्रतिपाद्यः॥ १०॥

---

1. Ma adds अभिमानो वा 2. Ma °दिकालः।

तं[1] ब्रह्म परमं साक्षाद्भगवन्त मधोक्षजम्।
मनुष्यदृष्ट्या दुष्प्रज्ञा मर्त्यात्मानो न ते[2] विदुः ॥ ११ ॥

न ते तदोमिति[3] प्रोचुः न नेति च परन्तप!
गोपाः निराशाः प्रत्येत्य त[4]थोचुः कृष्णरामयो[-4]ः॥ १२ ॥

तदुपाकर्ण्य भगवान् प्रहस्य[5] जगदीश्वरः।
व्याजहार पुनर्गोपान् दर्शयन् लौकिकीं गतिम्॥ १३ ॥

मां ज्ञापयत पत्नीभ्य स्ससङ्कर्षण मागतम्।
दास्यन्ति काम मन्नं वः स्निग्धा मय्युषिता धिया॥ १४॥

[6]गत्वा[7] च पत्नीशालायां दृष्ट्वाऽऽसीना स्स्वलङ्कृताः।
नत्वा द्विजसती[8] गोपाः प्रश्रिता इद मब्रुवन्॥ १५॥

---

1. A,V,T,W तद्ब्रह्म 2. A,B,G,J,M,Ma मेनिरे 3. A,B,G,J,M,Ma य° 4- -4. K,T,W तदूचू रामकृष्णयोः 5. K,T,W °हसन् 6. V adds श्रीशुक उवाच 7. A,B,G,J,K,M,Ma °त्वाऽथ 8. T,W °वधू°

**श्रीध० तदिति**। मनुष्योऽयमिति दृष्ट्या मर्त्यात्मानो [1-]देहाभिमानिन[-1]ः ब्राह्मणा वयं महान्त इति मन्यमानाः ॥ ११,१२ ॥

**तदिति**। लौकिकीं गति मिति नहि कार्यार्थिनो निर्विद्यन्ते। को वा याचको न पराभूयत इत्यादि लोकस्थितिं दर्शयन्॥ १३ ॥

**मामिति**। केवलं देहेन गृहे वसन्ति धिया च मय्येवोषिताः। यतो मयि स्निग्धा, अतो दास्यन्तीति॥ १४,१५॥

---

1- -1. A,B,J omit.

**वीर०** शृण्वन्तोऽपि न शुश्रुवुः इत्येतदेव विशदयति **नेति**। ते ब्राह्मणाः हे परन्तप! ओमिति न प्रोचुः। नाऽपि नेति। ओमित्यङ्गीकारद्योतकमव्ययम्। ततो गोपाः निराशाः प्रत्यागत्य तद्विप्राणामनादरणं रामकृष्णयोरूचुः ॥ ११, १२ ॥

ततो भगवान् लौकिकीं गतिं नहि कार्यार्थिनो निर्विद्यन्ते, "तृणा दपि लघु स्तूल स्तूला दपि च याचकः" (शार्ङ्गधरपद्धतिः 400) इत्युक्तरूपां लोकपरिपाटीं दर्शयन्निव पुनर्गोपान् व्याजहार उवाच॥ १३॥

तदेवाऽऽह मामिति। सङ्कर्षणेन[1] सहितं मा मागतं पत्नीभ्यः, द्विजाना मिति शेषः। ज्ञापयत। ताश्च केवलं देहेन गृहे वसन्ति, धिया तु मय्येवोषिताः मयि स्निग्धाः। अतः कामं यथेष्ट मन्नं दास्यन्ति॥ १४॥

अथ गोपाः पत्नीशालायां गत्वा स्वलङ्कृता आसीनाश्च द्विजसती र्दृष्ट्वा प्रश्रिता नम्रा स्सन्तः इदं वक्ष्यमाण मब्रुवन्॥ १५॥

---

1. A,B °णस°

**विज०** मर्त्यात्मानः देहोऽह मिति बुद्धियुक्ताः न मेनिरे न ज्ञातवन्तः॥ ११।

तथोभयं, ओमिति, न नेति च॥ १२॥

लौकिकीं गतिं लोकसिद्धां रीतिम्॥ १३॥

दाने कारण माह मयीति। धिया मय्युषिताः मामेव चिन्तयन्त्य इत्यर्थः॥ १४॥

द्विजसतीः द्विजपत्नीः॥ १५॥

**नमो वो द्विजपत्नीभ्यो[1] निबोधत वचांसि नः।**
**इतोऽविदूरे चरता कृष्णेन[2] प्रेषिता वयम्॥ १६॥**

**गाश्चारयन्स गोपालैः सरामो दूरमागतः।**
**बुभुक्षितस्य तस्यान्नं सानुगस्य प्रदीयताम्॥ १७॥**

**श्रुत्वाऽच्युत मुपायातं[3] नित्यं[4] तद्दर्शनोत्सुकाः।**
**तत्कथाऽऽक्षिप्तमनसो बभूवुर्जातसम्भ्रमाः॥ १८॥**

**चतुर्विधं बहुगुण मन्नमादाय भाजनैः।**
**अभिसस्रुः प्रियं सर्वा स्समुद्र मिव निम्नगाः॥ १९॥**

**निषिध्यमानाः पतिभिः [5-]भ्रातृभिः पितृभि स्सुतैः[-5]।**
**भगवत्युत्तमश्लोके दीर्घश्रुत[6]धृताशयाः ॥ २० ॥**

---

1. A,B,G,J,K विप्र 2. B,G,J °नेहेषिता 3. A,J,T,V,W यान्तं 4. K,T,W तास्तु 5- -5. A,G,J,M,Ma भ्रातृभि र्बन्धुभिस्सुतैः ; B पितृभि र्भ्रातृबन्धुभिः 6. M,Ma भृ°

**श्रीध० नम** इति। [1]प्रेषिताः प्रेरिताः ॥ १६ ॥

**गा** इति। स कृष्णो गोपालै स्सह॥ १७॥

**श्रुत्वेति**। तत्कथाक्षिप्तमनस[2]ः, अत एव तद्दर्शनोत्सुकाः [3-]तं कृष्ण मागतं[-3] श्रुत्वा जातसम्भ्रमा बभूवु [4]रिति॥ १८॥

**चतुर्विध** मिति। भक्ष्यभोज्यलेह्यचोष्यभेदै श्चतुर्विधम्। बहुगुणं संस्कार विशेषैः बहवो गुणाः रससौरभ्यादयो यस्मिंस्तत्। भाजनै रमत्रै र्भाण्डैर्वा। पत्यादिभि र्वार्यमाणा अपि प्रियं श्रीकृष्णम् अभिसस्रुः अभिजग्मुः। अप्रतिबन्धे दृष्टान्तः समुद्रं निम्नगा नद्य इवेति॥ १९॥

**निषिध्यमाना** इति। [5]तत्र हेतुः भगवतीति। दीर्घं बहुकालम् श्रुतेन श्रवणेन धृतः आशयो याभि स्ताः ॥ २० ॥

---

1. A,B,J ईषिताः 2. A,B,J °स्त्वात् 3- -3. A,B,J तमुपागतं 4. A,B,J omit इति। 5. A,B,J अत्र।

**वीर०** विप्रपत्नीभ्यो वो युष्मभ्यं नमः, नोऽस्माकं वचांसि निबोधत शृणुत। किम्? इत स्समीपे सञ्चरता कृष्णेन [1]वयं प्रेषिताः ॥ १६ ॥

[2]स तु स रामो गोपै स्सह दूर मागतः, व्रजादिति शेषः। अधुना बुभुक्षितस्य [3-]सानुगस्य गोपसमूह सहितस्य तस्य श्रीकृष्णास्य[-3] [4-]वो यदि श्रद्धा तर्हि[-4] अन्नं प्रदीयतां [5-]प्रकर्षेण दीयतां, न त्वस्माक माशाभङ्गः कार्यः इति भाव[-5]ः॥ १७॥

पूर्वमेव तस्य कृष्णस्य कथया आक्षिप्ता न्याहृतानि मनांसि यासां ताः। अत एव तद्दर्शन तत्परा स्तदा तमागतं श्रुत्वा [6-]जातसम्भ्रमा[-6] बभूवुः ॥ १८॥

चतुर्विधं भक्ष्यभोज्यलेह्यपेयात्मकं बहुगुणं रस सौरभ्यादि बहुगुणक मन्नं पात्रै रादाय सर्वाः विप्रपत्न्यः[7] प्रियं निरतिशयप्रीतिविषयं भगवन्त मभिजग्मुः। कथम्भूताः ? पत्यादिभिः निवार्यमाणा अपि भगवति दीर्घं बहुकालं श्रवणेन धृत आशयो यासां ताः। अत एव नद्यः समुद्रं प्रति इव अप्रतिबन्धा प्रियम् अभिसस्रु रित्यन्वयः॥ १९, २०॥

---

1. A,B omit वयं 2. K,T,W omit स तु 3- -3. T,W सानुचरस्य तस्य 4- -4. K,T,W omit 5- -5. T,W omit 6- -6. A,B जातोत्सवाः 7. A,B द्विज

**विज०** चरता बुभुक्षितेन ताच्छीलिक स्तृन्प्रत्ययः। 'चर गति भक्षणयोः इति धातुः'॥ १६ - १८॥

चतुर्विधं भक्ष्य भोज्य लेह्य चोष्य पानात्मकं बहुगुणं मधुरादिगुणोपेतम्॥ १९॥

दीर्घश्रुतेन बहुकालश्रवणेन भगवति भृत आशयो या भि स्ताः। कदाऽनु द्रक्ष्याम इत्यभिप्रायः आशयः॥ २०॥

यमुनोपवनेऽशोकनवपल्लवमण्डिते।
[1]विचरन्तं वृतं गोपै र्ददृशु स्साग्रजं स्त्रियः॥ २१॥

श्यामं हिरण्यपरिधिं वनमाल्यबर्हधातुप्रवाल नट वेष मनुव्रतांसे।
विन्यस्त हस्त मितरेण धुनान मब्जं कर्णोत्पलालककपोलमुखाब्जहासम्॥ २२॥

[2]प्राय श्श्रुतप्रियतमोदय कर्ण पूरैर्यस्मिन्निमग्नमनस स्तमथाक्षिरन्ध्रैः।
अन्तः प्रवेश्य[3] सुचिरं परिरभ्य तापं प्राज्ञं यथाभिमतयो विजहुर्नरेन्द्र!॥ २३॥

तास्तथा[4] त्यक्तसर्वाशाः प्राप्त आत्मदिदृक्षया।
विज्ञायाऽखिलदृग्द्रष्टा[5] प्राह प्रहसिताननः॥ २४॥

[6-]श्री भगवानुवाच[-6]

स्वागतं वो महाभागाः! आस्यतां करवाम किम्?
यन्नो दिदृक्षयाऽभ्येता[7] उपपन्न मिदं हि वः॥ २५॥

[8-]न न्वद्धा मयि[-8] कुर्वन्ति [9-]कुशला स्स्वार्थ दर्शिनाः[-9]।
अहैतुक्यव्यवहितां भक्तिमात्मप्रिये यथा॥ २६॥

1. M,Ma प्र 2. M,Ma दीर्घश्रु° 3. M,Ma °वि° 4. K,T,W °दा 5. A,B,G,J,V °म्द्रष्टा; M,Ma °म्दृष्ट्वा 7. A,B,G,J °या प्राप्ता; K,T,W °याऽऽयाता 8- -8. M,Ma न श्रद्धा मधि 9- -9. M,Ma °लार्थनिदर्शना ः; V लास्स्वार्थदर्शिन ः।

**श्रीध०** **यमुनेति।** तथाऽऽगतास्सत्यो ददृशुः ॥ २१ ॥

**श्याम मिति।** हिरण्यवत्परिधिः परिधानं यस्य तं पीताम्बरमित्यर्थः। **वनमाल्यैः बर्हैः धातुभिः प्रवालैश्च** नटव द्वेषो यस्य तम्। अनुव्रतस्य सख्यु रंसे विन्यस्तो निहितो हस्तो येन तम्। इतरेण हस्तेन लीलया अब्जं धुनानं भ्रामयन्तम्। कर्णयो रुत्पले यस्य। अलकाः कपोलयो र्यस्य। मुखाब्जे हासो यस्य तञ्च, तञ्च ॥ २२ ॥

वृत्ते रपि लयेन [1-]सामरस्य माह[-1] **प्राय** इति। [2]प्रायो बहुशः श्रुता ये प्रियतमस्योदया उत्कर्षाः त एव कर्णपूराः कर्णौ पूरयन्ति कृतार्थौ कुर्वन्तीति तथा तैः कर्णाभरणै रिति वा यस्मिन् श्रीकृष्णे निमग्नमनस आविष्ट चेतसः, तं लोचनद्वारैः अन्तःप्रवेश्य सुचिर [3]मुपगुह्य तापं जहुः। अभिमतयोऽहंवृत्तयः प्राज्ञं सुषुप्ति साक्षिणं परिरभ्य तस्मिन् लयं प्राप्य यथेति ॥ २३ ॥

**ता** इति। अखिलदृशां द्रष्टा सर्वबुद्धिसाक्षी। ता स्तथा प्राप्ता विज्ञायापि। तथेत्येतद्विवृणेति [4-]त्यक्तसर्वाशा[-4]ः त्यक्तास्सर्वा आशा याभिस्ताः। केवल मात्मनः स्वस्यैव दिदृक्षयेति ॥ २४ ॥

**स्वागत** मिति। हे महाभागाः! वः स्वागतं शुभ मागमनम्। तदेवाऽऽह - यद्यस्मात् प्रतिबन्धतिरस्कारेण अस्माकं दिदृक्षया प्राप्ता इति। इदं व उपपन्नं सम्पन्नं युक्त मिति वा ॥ २५ ॥

युक्तत्व[5]मेवाऽऽह - **नन्विति।** आत्मप्रिये आत्मा चाऽसौ प्रियश्च तस्मिन्मयि कुशला विवेकिनः, अत एव स्वस्याऽऽत्मनोऽर्थे [6-]पुरुषार्थे[-6] पश्यन्ति, ये ते यथा यथावत् भक्तिं कुर्वन्ति। यथावत्त्वमाह - अद्धा साक्षात्। अत्र हेतुः अहैतुक्यव्यवहितां फलाभिसन्धिरहिताम् अत एव अव्यवहितां निरन्तराम् ॥ २६ ॥

1- -1. B साम्य माह 2. A,B,J omit प्रायः 3. P,V गृह्य 4- -4. P,V omit 5. B,J माह 6- -6. V omits.

**वीर०** यमुनासमीपवने कथम्भूते? अशोकानां तरूणां नवैः पल्लवैः मण्डिते विचरन्तम् अग्रजेन सहितं गोपैश्चाऽऽवृतं कृष्णं स्त्रियो, द्विजपत्न्यः ददृशुः ॥ २१ ॥

कथम्भूतम्[1]? श्यामं हिरण्यवत्परिधिः परिधानं यस्य तम्, पीताम्बर मित्यर्थः। वनमाल्यैः वन्यैः पुष्पैः बर्हैः धातुभिः गैरिकादिभिः प्रवालैः पल्लवैश्च नटव द्वेषो यस्य अनुव्रतस्य सख्युः अंसे स्कन्धे विन्यस्तो हस्तो वामकरो येन, इतरेण[2] अब्जं धुनानं लीलया भ्रामयन्तं, कर्णयो रुत्पले यस्य, अलकाः कपोलयो र्यस्य, मुखाब्जे हासो यस्य तं, तथाविधं ददृशुरित्यन्वयः॥२२॥

बहुश आकर्णिताः प्रियतमस्योदया उत्कर्षाः त एव कर्णौ पूरयन्ति कृतार्थौ कुर्वन्ति तथा तैः, कर्णाभरणै रिति वा। यस्मिन् कृष्णे निमग्नमनस आविष्टचित्ता[3] स्तं कृष्णम् अथ दर्शनानन्तरम् अक्षिरन्ध्रैः लोचनद्वारैः अन्तःप्रवेश्य सुचिरं परिरभ्य उपगूह्य[4] तापं तद्दर्शनाभावजं जहुः। हे नरेन्द्र! अभिमतयः भगवद्भक्तानां तद्दिदृक्षात्मिका बुद्धयः प्राज्ञं परमात्मानं "प्राज्ञेनात्माना सम्परिष्वक्तः" (बृह.उ.4-3-21) "प्राज्ञेनात्मनाऽन्वारूढः" (बृह.उ.4-3-35) इति श्रुतेः। तं दृष्ट्वा यथा तद्दर्शनाभावजं[5] ताप माध्यात्मिकादिकं वा जहति तद्वत्। 'अतिमतय' इति पाठे ज्ञानाधिकाः॥२३॥

तदा भगवानात्मनः स्वस्य दिदृक्षया प्राप्ताः ता दृष्ट्वा त्यक्ताः सर्वा[6] आशाः पत्यादिविषयाः याभिस्तथा भूताः विज्ञाय, तत्र हेतुः अखिलं पश्यतीति। तथा प्रहसित माननं यस्य स प्राह॥२४॥

तदेवाऽऽह - **स्वागतमित्यादिभिः पञ्चभिः**। हे महाभागाः! अस्मदनुग्रहविषयतारूपमहाभाग्यशालिन्यः! वः स्वागतं शोभनमागमनं भवद्भिरिदिभि रनिर्बद्धाः कुशल मागताः[7]? आस्यताम् उपविश्यताम्। वो युष्माकं किं कार्यम्? अत्राऽऽगमनप्रयोजनं किमिति प्रश्नः। यदि किञ्चि दस्ति तदवश्यं वयं करवाम। सर्वज्ञत्वा त्तदभिप्रेतं विज्ञाय तस्यौचित्य माविष्करोति यदिति। नोऽस्माकं दिदृक्षया अभ्यागता इति यत्तदिदं वो युष्माकम् उपपन्नमुचितमेव॥२५॥

औचित्य मेवोपपादयति **नन्विति**। ननु हे द्विजपत्न्यः! कुशला आत्महिताहितविवेकिनः स्वार्थ दर्शनाः सर्वप्रयोजनाभिज्ञा जनाः आत्मनः स्वस्मादपि प्रिये मय्यद्धा मय्येव। अद्धेति स्फुटावधारणयोः। अहैतुकीं फलाभिसन्धिरहिता मव्यवहिता मविच्छिन्नां भक्तिं यथावत्कुर्वन्ति। [8-]विवेकिनो यथा मयि[-8] [9] [10-]भक्तिं कुर्वन्ति तथा भवत्योऽपि कृतवत्य इति वार्थः[-10]॥२६॥

---

1. A,B कीदृशम्? 2. A,B add हस्तेन 3. T,V °दि° 4. K °गु° 5. A,B add जहुः 6. T,W omit सर्वाः 7. A,B add किम्? 8- -8. T,W omit 9. A,B add महानुभावाः 10- -10. T,W omit.

**विज०** किङ्गुणविशिष्टं ददृशुः इति तत्राऽऽह श्यामं हिरण्य परिधिं सुवर्णमेखलं, सुवर्णव न्पीताम्बरं वा। वनमाल्येन वनपुष्पेण बर्हेण मयूरपिच्छेन, धातुना गैरिकेण, प्रवालेन नटवेषवद्वेषो यस्याऽसौ तथा तम्, अनुव्रतांसे कस्यचि द्वयस्यस्य स्कन्धे, कर्णयो रुत्पले, अलकः कुन्तलं कपोले च, मुखाब्जे हासो यस्य स तथा तं, धुनानं परिकम्पयन्तम्॥२१,२२॥

दीर्घकाल मारभ्य श्रुतः प्रियतम स्योदयो दीर्घश्रुतप्रियतमोदयः स एव कर्णपूराः कर्णालङ्करणानि तैः यस्मिन् कृष्णे निमग्नमनसः अवगाह्य दृढबद्धहृदयाः पूर्वं ताः स्त्रियोऽथ तं कृष्णं अक्षिविवरैः अन्तः प्रविश्य सुचिरं परिरभ्य आलिङ्ग्य तापं स्मरनिमित्तं ज्वरं जहुः। कथमिव? यथा प्राज्ञाः सुषुप्त्यवस्था साक्षिणः प्राज्ञं प्राप्ताभिमतयः इन्द्रियवृत्तयः तापं त्यजन्ति "सता सौम्य तदा सम्पन्नो भवति" (छान्दो.उ. 6-8-1) इति श्रुतेः। यद्वा भगवत्तत्वज्ञाननिपुणाः प्राज्ञाः। प्राज्ञमिति पाठे परिरभ्येति सम्बन्धः ॥ २३ ॥

त्यक्तसर्वाशाः त्यक्तसर्वातितृष्णाः, "आशा दिगतितृष्णयोः" (वैज. को. 6-2-3) इति च। दृष्ट्या अपरोक्षज्ञानेन तासां भक्तिं विज्ञाय अखिलदृक् अखण्डज्ञानी॥ २४ ॥

अभ्येता अभ्यागताः, यद्यस्मात् इदं वः उपपन्नं युक्तम्॥ २५॥

एवं कुशलं पुण्यमेवार्थः कुशलार्थः, तस्य नितरां दर्शनं येषां ते, कुशलार्थनिदर्शनाः। "अर्थी समर्थो विद्वानधिक्रियते" इति वचनात्। कुशला निपुणाश्च अर्थनिदर्शनाश्च ते तथा। यद्वा कुशलार्थो भगवन्निदर्शन मुदाहरणं येषां ते तथा। 'कुशलाः स्वार्थ दर्शनाः' इति पाठः। एते श्रद्धां विषयाभिलाषं न कुर्वन्ति, किन्तु आत्मप्रिये भगवति अहैतुकीं निर्निमित्तां अव्यवहितां निरन्तरीभूतां भगवद्भक्तिमधिकुर्वन्ति अधिकां कुर्वन्ति। कथ मिव? यथाऽऽत्मप्रिये स्वभर्तरि, भगवतीति शेषः। यथाशास्त्रविहित प्रकारेण "तदेत त्प्रेष्ठः" इति श्रुतेः। देहादिभ्योऽपि प्रियत्वं हरे रेवेति प्रतिपादयति। यद्वा स्वार्थदर्शनाः स्वर्गादिफलार्थदृष्टयः कुशलाः यज्ञविद्यानिपुणाः अहैतुक्यव्यवहितां श्रद्धा मास्तिक्यबुद्धिं अधि अधिके ईश्वरे न कुर्वन्ति। व्यतिरेकदृष्टान्त माह - अहैतुकी इति। भक्ता आत्मप्रिये मयि यथा भक्तिं कुर्वन्ति न तथेति॥ २६॥

**प्राणबुद्धिमनस्स्वात्म दारापत्यधनादयः।**
**यत्सम्पर्का त्प्रिया आसं स्ततः कोन्वपरः प्रियः[1] ॥ २७॥**
**तद्यात देव[2] यजनं पतयो वो दिजातयः।**
**स्वसत्रं पारयिष्यन्ति युष्माभि र्गृहमेधिनः ॥ २८॥**

**विप्रपत्न्य[3] ऊचुः**

**मैवं विभोऽर्हति भवान् गदितुं नृशंसं सत्यं कुरुष्व निगमं तव पादमूलम्।**
**प्राप्ता वयं तुलसिदाम पदाऽवसृष्टं केशै र्निवोदुमतिलङ्घ्य समस्तबन्धून्॥ २९॥**
**गृह्णन्ति नो न पतयः पितरौ सुता वा न भ्रातृबन्धुसुहृदः कुत एवचाऽन्ये।**
**तस्मा[4] द्भवत्प्रपदयोः पतितात्मनां नो नाऽन्या भवेद्गति ररिन्दम तद्विधेहि॥ ३०॥**

श्रीभगवानुवाच[5]

पतयो ना[6]ऽभ्य सूयेरन् पि[7]तृ भ्रातृ सुतादयः।
लोकाश्च वो मयोपेता देवा अप्यनुमन्वते॥ ३१॥
न प्रीतयेऽनुरागाय ह्यङ्गसङ्गो नृणा मि[8]व।
तन्मनो मयि युञ्जाना अचिरान्मा मवाप्स्यथ ॥३२॥ ★

---

1. T,W स्त्रियः (याः) 2. M,Ma,T,W साध्व्यो 3. A,B,G,J omit विप्र; M,Ma द्विज 4. M,Ma °त्प्रसीद पद° 5. M,Ma श्रीकृष्णः 6. V न ह्य° 7. M,Ma °नित्यं 8. A,B,G,J,K,M,Ma °ह ★ The following extra verse is found in B,K,T,V,W and there is no commentary on the same. श्रवणा द्दर्शना द्ध्याना न्मयि भावोऽनुकीर्तनात्। न तथा सन्निकर्षेण, प्रतियात ततो गृहान्॥

**श्रीध०** आत्मनः सर्व[1]तः प्रेष्ठत्व मुपपादयति - **प्राणेति**। स्वाज्ञातयः आत्मा देहः एते सर्वे यत्सम्पर्कात् यस्य [2]अध्यासेन उपकरणत्वेन वा॥ २७॥

**तदिति**। तत्तस्मात् कृतार्था यूयं देवयजनं यज्ञवाटं यात गच्छत। न[3]नु कृतार्थाः किमिति यास्यामः इति चेत् [4]अत आह पतय इति। पारयिष्यन्ति समापयिष्यन्ति, पतीनामनुग्रहायेत्यर्थः ॥ २८॥

**मेति**। नृशंसं पुरुषम्। निगमं प्रतिज्ञां "न मे भक्तः प्रणश्यति" (भ.गी. 9-31) इति। वेदं वा "न स पुन रावर्तते" (निरा.उ.33) इति। पदावसृष्टमवज्ञयाऽपि दत्तम्। बहुमानेन केशैर्निर्वोढुं दासीभवितुम्॥ २९॥

**गृह्णन्तीति**। किञ्च, न गृह्णन्ति नोऽस्मान्। हे अरिन्दम! कामलो[5]भादिदमन! भवतः [6-]प्रपदयो[-6], पादाग्रयोः पतितदेहानाम् अन्या स्वर्गादि गतिरपि न भवेत् मा भूत्। तत्तस्मात् दास्यमेव विधेहीति॥ ३०॥

**पतय** इति। मयोपेता अनुज्ञाताः प्रत्यक्षं देवान् प्रदर्श्याऽऽह देवा अपीति॥ ३१॥

तथाऽपि त्वां त्युक्तुं न शक्नुम इति चेत्तत्राऽऽह **नेति**। [7-]नृणां मद्भक्तानां[-7] प्रीतये [8]सुखाय अनुरागाय स्नेहवृद्धये अङ्गसङ्गोऽङ्गाभ्यां सङ्गः ॥ ३२॥

---

1. V °त्र 2. P,V आध्यानेन 3. P,V omit ननु 4. A तत्राह 5. A,B,J °भपापादि 6- -6. P,V omit 7- -7. A,B,J omit 8. B omits सुखाय

**वीर०** आत्मप्रिये इत्येतदेव काक्कोपपादयति **प्राणेति**। स्वाऽऽत्मा स्वदेहः स्वो जीवः आत्मा देहो वा। प्राणादयो यत्सम्पर्कात् यत्सम्बन्धात् प्रिया भवन्ति, ततो मत्तः प्रियेऽन्यः को नु? न कोऽपि; निरतिशयप्रियोऽहमेव।

इत्थम्भूते मयि अहैतुक्यव्यवहिता भक्ति र्भवतीना मुचितैवेति तत्कारिता मद्दिदृक्षोचितैवेति भावः। यत्सम्पर्कात् प्रिया इत्यनेन "न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय" (बृह.उ. 2-4-5) इत्यादि श्रुत्यर्थो विवक्षितः। तदर्थस्तूक्तः पुरस्तात्॥ २७॥

[1]तत् तस्मा दागमन प्रयोजनस्य मद्दर्शनस्य जातत्वात् देवयजनं सत्रवाटं गच्छत। वो युष्माकं पतयो ब्राह्मणाः गृहमेधिनः गार्हस्थ्यधर्मपरायणाः युष्माभिरेव सहायभूताभिः स्वसत्रं पारयिष्यन्ति [2-]समापयिष्यन्ति[-2] दम्पत्यो स्सहाधिकारादिति भावः॥ २८॥

स्वमनोरथाननुगुणोक्तिश्रवणात् निर्विण्णा आहुः[3] **मैवमिति**। हे विभो! भवानेवं 'तद्यात देव यजनं' इत्येवं नृशंसं परुषं वचो वक्तुं नार्हति। किन्तु यो निगमः "प्रियोऽहि ज्ञानिनोऽत्यर्थ महं स च मम प्रियः" (भ.गी. 7-17), "न मे भक्तः प्रणश्यति" (भ.गी.9-31) इत्यादिवचनरूपः, तं सत्यं कुरुष्व। नित्य मिति पाठेऽपि स एवाऽर्थः। वयन्तु समस्तबन्धूनतिलङ्घ्य पदावसृष्टमवज्ञयाऽपि दत्तमिति भावः। तत्तुलसिदाम केशैर्बहुमानेन वोढुं प्राप्ताः, दासीभवितुं प्राप्ता इति भावः॥ २९॥

किञ्च, अतिलङ्घितबन्धू नस्मान् न पत्यादय एव परिगृह्णन्ति, कुतोऽपरे गृह्णीयुः। तस्मात् हे अरिन्दम! भवतः प्रपदयोः पादाग्रयोः पतिता आत्मानो देहा यासां ताः पतिता स्समर्पिताः आत्मानः प्रत्यगात्मानः याभि स्तासां वा। नोऽस्माकं नाऽन्या गतिः, अस्मत्समीहितोपायोऽन्यो नाऽस्ति, अत स्त्वमेव[4] अस्मदभिमतं विधेहि। यद्वा, अन्या गतिः स्वर्गादि रपि मा भूत्, किन्तु त्वदविश्लेषेण[5] त्वद्दासीत्व मेव अस्माकं सम्पादय॥ ३०॥

एव मुक्तो भगवान् तावत् यदुक्तं पत्यादयः केऽपि नाऽऽस्मान् गृह्णन्तीति तत्रोत्तर माह **पतय** इति। वो युष्मान् पत्यादयः अन्ये लोका जनाः किमुत, मयोपेता मत्प्रभृतयो देवाश्च नाऽभ्यसूयेरन् न दोषदृष्ट्या द्रक्ष्यन्ति, किन्तु अनुमन्वते अनुमोदन्ते॥ ३१॥

यदुक्तं तद्विधेहीति, तत्रोत्तर माह **नेति**। इह लोके नृणामङ्गसङ्गः देहयोगः न प्रीतये न वैषयिकसुखाय, अपि तु मय्यनुरागाय, जन्मनः फलं मद्भक्तिरेवेत्यर्थः। यद्वा नृणां चेतनानामङ्गसङ्गः तादात्विकरागाय[6] न तु कालान्तरप्रीतये, विश्लेषस्तु कालान्तरेऽपि प्रीतिवर्धक इत्यभिप्रायः। तस्मात् परोक्षमपि मयि मनो युञ्जानाः अचिरा देव मामवाप्स्यथ संसृतिबन्धान्मुक्ताः नित्यं मद्दास्यं करिष्यथेति भावः [7-]स्मरणादिना यथा मयि भावः, तथा सन्निकर्षेण नेति[-7]॥ ३२॥

---

1. K,T,W omit तत् 2- -2. K,T,W omit 3. A,B add पत्न्यः 4. A,B add तत् 5. T,W °स° 6. A,B,T,W °त्मि° 7- -7. T,W omit.

विज० तव सर्वस्मा दाधिक्यं कुत इत्यत्राऽऽह प्राणेति ॥ २७॥

यस्मा दखण्डेश्वरे मयि भक्तिं कुर्वन्ति, नाऽन्यत्र, तस्मात् मदाज्ञां कुरुतेत्याह - तदिति। गन्तव्ये निमित्तमाह पतय इति। वः पतयः द्विजातय इति। अतः कालक्षेपो नोचितः। निमित्तान्तरमप्यस्तीत्याह - स्वसत्र मिति। पारयिष्यन्ति सम्पादयिष्यन्ति॥ २८॥

यातेति नृशंसं परुषं गदितुं निगमं "न मे भक्तः प्रणश्यति" (भ.गी. 9-31) इति वचनं सत्यं कुरु। पदावसृष्टं श्रीपादच्युतं, तेन दत्तं वा तुलसीदाम श्रीतुलसीमालां केशै र्नितरां वोढुं तव[1] पादमूलं प्राप्ताः ॥ २९॥

कालक्षेपात् द्विजातय अस्मान्न गृह्णन्तीति सूचितम्। तत्र तत्सहायाभावात् पुनर्गमने ते नैव गृह्णन्तीत्याहुः - गृह्णन्तीति। ततः शरणं विधेहि कुरु॥ ३०॥

कुत एव चान्य इत्यत्राऽऽह लोकाश्चेति॥ ३१॥

तव पादमूलं प्राप्ता इत्यत्र अङ्गसङ्ग स्सूचितः तत्राऽऽह - नेति। इह नृणा मङ्गसङ्गो मम प्रीतये न भवति। मम अनुरागाय च न स्यात्[2]। तस्मात् मयि मनो युञ्जानाः यूयं क्षिप्रं मा मवाप्स्यथ इत्यन्वयः। अनेन, अहं भक्त्यैव तुष्टो भवामि नाऽन्येनेति सूचितम्॥ ३२॥

---

1. A,B omit तव 2. A omits स्यत्।

श्रीशुक उवाच

इत्युक्ता[1] द्विजपत्न्य स्ता यज्ञवाटं पुन र्गताः।
ते चाऽनसूयव[2] स्ताभिः स्त्रीभि स्सत्र मपारयन्॥ ३३॥

तत्रैका[3] विधृता भर्त्रा भगवन्तं यथाश्रुतम्।
हृदोपगुह्य[4] विजहौ देहं कर्मानुबन्धनम्॥ ३४॥

भगवानपि[5] गोविन्द स्तेनैवान्नेन गोपकान्।
चतुर्विधेनाऽऽशयित्वा स्वयञ्च बुभुजे प्रभुः ॥ ३५॥

एवं लीला नरवपुर्नृलोक मनुशीलयन्।
रेमे गो गोप गोपीनां रमय[6] न्रूपवाक्कृतैः ॥ ३६॥

[7] अथाऽनुस्मृत्य विप्रा स्ते[8] अन्वतप्यन्कृतागसः।
यद्विश्वेश्वरयोर्याच्ञा म[9]हन्म नृ[9]विडम्बयोः ॥ ३७॥

दृष्ट्वा स्त्रीणां भगवति कृष्णे भक्ति मलौकिकीम्।
आत्मानश्च तया हीन मनुत[10]प्ता व्यगर्हयन्॥ ३८॥
धिग्जन्म न[11] स्त्रिवृद्विद्यां धिग्व्रतं[11] धिग्बहुज्ञताम्।
धिक्कुलं धिक्क्रियादाक्ष्यं विमुखा ये त्वधोक्षजे॥ ३९॥

---

1. B,J मुनि 2. A,B,G,J °स्स्वाभिः 3. V, W °द्वु° 4. A,B,G,J,K,M,Ma,T °गु° 5. K °थ 6. M,Ma °नृप! 7. T,W तदनु 8. V ह्य° 9- -9. M,Ma °महनन्तृ°; K,T,W °महन्मर्त्य° 10. T,W तप्य 11- -11. A,B,G,J,V नस्त्रिवृद्विद्यां धिग्व्रतं, M,Ma नस्तु धिग्बुद्धिं धिग्वृतं

**श्रीध०** **इतीति**। अनसूयवः[1] अदोषदृष्टयः॥ ३३॥

**तत्रेति**। देहमिति। तदीयं देहं तत्र विहाय चैतन्येन भगवन्तं प्रापेत्यर्थः॥ ३४,३५॥

**एव** मिति। अनुशीलयन् अनुकुर्वन्। गोगोपगोपीना मिति कर्मणि पष्ठी। रूपवाक्कृतैः रूपेण वाचा। कृतै श्चरितैश्च रमयन्। ता[2] रामयितुं रेमे इत्यर्थः॥ ३६॥

अनुस्मृति प्रकार माह **अथेति**। नरानुकरणवतोः विश्वेश्वरयोः याच्ञां यत् अहन्म हतवन्तः तत्कृतागसो वय मित्यनुस्मृत्येति॥ ३७॥

तथा[3] च भार्याः गुरूनिव मानयन्तो भगवद्भक्तिरहितमात्मानं अनिन्द न्नित्याहुः[4] - **दृष्ट्वेति**। अलौकिकीम् लोकातीताम्॥ ३८॥

**धिगिति**। त्रिवृत् शौक्लं, सावित्रं, दैक्षमिति त्रिगुणितं जन्म व्रतं ब्रह्मचर्यम्। क्रियाः कर्माणि दाक्ष्यञ्च। क्रियादाक्ष्य मित्येकं वा पदम्। धिगि त्यधिक्षेपि। ये वयं तु[5] अधोक्षजे विमुखा स्तेषां नः[6] जन्मादि यत्[7] तत्सर्वं धिगिति व्यगर्हय[8]न्नित्यर्थः॥ ३९॥

---

1. A adds तासु 2. A,P,V तान् 3. A,B,J तदा 4. A,B,J °ह 5. P,V omit तु 6. A,B,J omit नः 7. A,B,J omit यत् 8. A,J, omit °य°

**वीर०** इत्थं भगवतोक्ता स्ता द्विजपत्नयो यज्ञवाटं पुन[1] र्जग्मुः। तत स्ते द्विजाः अनसूयव एव ताभि स्सह सत्र मपारयन् समापितवन्तः॥ ३३॥

तत्र द्विजपत्नीनां मध्ये काचित् भर्त्रा विधृता[2] निवारिता सती यथाश्रुतं भगवन्तं हृदोपगूह्य[3] संश्लिष्य कर्मानुबन्धनं कर्मायत्तं स्वदेहं तत्याज॥ ३४॥

अथ भगवान् तेनैव द्विजपत्नीसमर्पितेनैव अन्नेन गोपकान् भोजयित्वा तच्चतुर्विध मन्नं स्वय मपि बुभुजे॥ ३५॥

लीलया, न तु कर्मणा नरस्येव वपुर्यस्य स भगवान् इत्थं रूपादिभिः कृतानि चेष्टितानि तैश्च नृलोकमनुशीलयन् अनुकुर्वन् गोगोपपीना मिति कर्मणि षष्ठी। गावादीन् रमयन् स्वय मपि रेमे। यद्वा, नृलोक मनुशीलयन् अनुरञ्जयंश्च गोगोपगोपीनां मध्ये रेमे॥ ३६॥

**अथेति**। अथ विप्राः अनुस्मृत्य भगवान् यदुष्ववतीर्ण इति श्रुतत्वा दनुस्मृत्येत्यर्थः। कृतागसः, हेतुगर्भ मिदम्। तत्त्वा दन्वतप्यन्। किं तदागः. यतोऽन्वतप्यन्, तत्राऽऽह यत् यस्मात् मर्त्य मनुकुर्वतोः विश्वेश्वरयोः याच्ञा-महन् बभञ्जुः, ततः कृतागसः। अहन्निति यत् तदेवाऽगः इति वा॥ ३७॥

तदा भार्याः मानयन्तो भगवद्भक्ति रहित मात्मानं व्यनिन्द न्नित्याह **दृष्ट्वेति**। अलौकिकी मनितर जन साधारणीं तया कृष्ण भक्त्या हीनं रहितम्॥ ३८॥

गर्हाप्रकार मेवाऽऽह **धिगिति**। नोऽस्माकं जन्म धिक्! "उभसर्वतसोः कार्या धिक्" (796 वार्तिक under अष्टा. 1-4-48) इत्यादिवचनेन शेषषष्ठ्यपवादकत्वेन जन्मादीनां द्वितीया। धिक् शब्दो निन्दा द्योतकः। अस्माकं जन्मादयो निन्द्या इत्यर्थः। क्रिया यज्ञादिरूपाः दाक्ष्यं तदनुष्ठानसामर्थ्यम्। तत्र हेतुं वदन्तो विशिंषन्ति ये वयमधोक्षजे विमुखाः। 'त्रिवृत्' इति पाठे तज्जन्मनो[4] विशेषणम्। शौक्लं सावित्रं दैक्ष मिति त्रिगुणीकृतं जन्मेत्यर्थः। 'नस्तु धिग्बुद्धिम्' इति पाठे स्पष्टोऽर्थः। व्रतं ब्रह्मचर्यम्॥ ३९॥

---

1. T,W omit पुनः 2. T,W °द्रु° 3. K °गु° 4. A,B omit तत्।

**विज०** इतिशब्दो हेतौ॥ ३३॥

विधृता पृथक्कृता त्यक्ता इत्यर्थः "वि निषेधे पृथग्भावे" (वैज०.को. 8-7-6) इति यादवः। कर्मानुबन्धनं कर्मानुगम्॥ ३४,३५॥

वाग्भिः कृतैः कर्मभिश्च गोगोपगोपीनां मनांसि रमयन्॥ ३६॥

नन्वेते विप्राः समीचीना, उत असमीचीनाः? नाऽऽद्यः अनुभवादर्शनात्। न द्वितीयः, कृष्णपरायणानां स्त्रीणां पाणिग्रहण सम्बन्ध दर्शनात्। अथ कथं निर्णयः? इति, राज्ञो मानसीं शङ्कां परिहरति **अथेति**। ते विप्राः अथ मङ्गलाः कुतोऽन्वतप्यन् यतः कृतागसः कृतापराधत्वात्। अपराध सद्भावे किं प्रमाण मिति तत्राऽऽह अनुस्मृत्येति।

अनुस्मरणं प्रमाण मित्यर्थः। कोऽसा वपराध इति तत्राऽऽह - यदिति। अहनन् हिंसितवन्तः तिरस्कृतवन्त इति यत् स इत्यर्थः। नृविडम्बयोः मनुष्य मनुकुर्वतोः ॥ ३७॥

तेषा मनुताप: कथ मभूदिति तत्राऽऽह दृष्ट्वेति ॥ ३८॥

किमाकारोऽसौ इति तत्राऽऽह धिगिति। ततो जन्मादिकं धिक् कुत्सितम्। "धिक् भर्त्सने कुत्सने (वैज.को. 8-7-5) इति च॥ ३९॥

नूनं भगवतो माया [1]योगिना मपि मोहिनी।
यद्वयं गुरवो नृणां स्वार्थे मुह्यामहे द्विजाः ॥ ४०॥

अहो पश्यत नारीणा मपि कृष्णे जगद्गुरौ।
दुरन्तभावं [2]योऽ विध्य[2] न्मृत्युपाशा न्गृहाभिधान्॥ ४१॥

[3]नाऽऽसां द्विजाति संस्कारो न निवासो गुरावपि।
न तपो नाऽऽत्म मीमांसा न शौचं [4]न क्रिया श्शुभाः ॥ ४२॥

[5]अथाऽपि ह्युत्तमश्लोके कृष्णे [6]योगेश्वरेश्वरे।
भक्तिर्दृढा न चाऽस्माकं संस्कारादिमता मपि॥ ४३॥

[7]ननु स्वार्थविमूढानां प्रमत्तानां गृहेहया॥
अहो न स्स्मारयामास गोपवाक्यै स्सतां गतिः ॥ ४४॥

अन्यथा पूर्णकामस्य कैवल्या द्याशिषां पतेः।
ईशितव्यैः किमस्माभि रीश स्यैत द्विडम्बनम्॥ ४५॥

---

1. A,M,Ma मायिना° 2- -2. M,Ma यश्छिन्द्या° 3. M,Ma आसां 4. V च 5. T,V,W त° 6. T,V,W °गी° 7. K,T,W स हि।

**श्रीध०** अहो इति। योऽविध्यत् अच्छिनत् तं दुरन्तं भावं भक्तिं पश्यतेति॥ ४०, ४१॥

नेति। द्विजातिसंस्कारः उपन[1]यनम्। क्रियाः सन्ध्योपासनादयः ॥ ४२ - ४५॥

---

1. P,V °यः।

**वीर०** भगवन्माया तरण हेतुः तद्भक्तिरेव, न तु उक्तजन्मादय इत्यभिप्रायेणाऽऽहुः **नून मिति** द्वाभ्याम्। नूनं योगिना[1] मपि मोहिनी, यत् यस्मात् वयं द्विजा अपि उक्तजन्मदिमन्तोऽपि, तत्राऽपि नृणां गुरवोऽपि स्वार्थे स्वहिते विषये मुह्यामहे। भगवन्मायया मोहिता एवेत्यर्थः ॥ ४० ॥

अहो नारीणा मपि उक्तजन्मादिमध्ये केनाऽपि रहिताना मपीति भावः। **कृष्णे** दुरन्तभाव मनवधिक भक्तिं पश्यत। यो दुरन्तभावः गृहाभिधान् मृत्युपाशान् भगवनन्मायाप्रयुक्तान् अविध्यत् अच्छिनत् तं दुरन्तभावं पश्यतेत्यन्वयः ॥ ४१ ॥

द्विजा अपि, नारीणा मपीत्यनेन अभिप्रेतं स्पष्टयन्ति **नाऽऽसा मिति** द्वाभ्याम्। आसां नारीणां न द्विजाति संस्कारः नोपनयनान्त संस्कारः, न च गुरुकुलवासः नाऽपि तप आदयः। आत्ममीमांसा देहविलक्षण प्रत्यगात्मविचारः। क्रियाः सन्ध्योपासनादिरूपाः। अथाप्येषा मभावेऽपि कृष्णे दृढा भक्ति र्विद्यते। द्विजाति संस्कारादि मतामप्यस्माकं सा न विद्यते ॥ ४२,४३ ॥

अस्माकं विवेकोदयार्थ मेव भगवतो याच्ञा। अन्यथा सा[2] अवाप्त समस्तकामस्य असङ्गते त्याहुः स इत्यदिभि स्त्रिभिः। गृहेहया गृहव्यापारेण प्रमत्तानाम् अत एव स्वहितेऽपि विमूढाना मप्यस्माकं अहो सतां गतिः, हेतुगर्भ मिदम्, सतां गतित्वात् गोपवाक्यैः स्मारयामास। साधुपरित्राणार्थ मवतीर्णं निरतिशय पुरुषार्थस्वरूप मात्मानं याच्ञाव्याजेन स्मारयामासेत्यर्थः ॥ ४४ ॥

**अन्यथेति**। कैवल्यादी त्यादिशब्दो भोग मोक्षसङ्ग्राहकः। कैवल्यादि पुरुषार्थदस्य ईशस्य सर्वनियन्तुः ईशितव्यैरस्माभिः किम्? न किञ्चित्प्रयोजन मित्यर्थः। अत एव तद्याचनं विडम्बन मनुकरण मात्रम्। तात्पर्यन्तु अस्म दनुजिघृक्षाया मितिभावः ॥ ४५ ॥

---

1. A,B,T,W मायिना° 2. K असौ

**विज०** शास्त्रज्ञान मप्रयोजकम्, प्राप्ते काले फलाभावात् अतो भगव दनुग्रह एव वरीया नित्याशयेनाऽऽहुः **नून मिति**। मायिनां ज्ञानिना मपि अत्र हेतुमाह यद्वय मिति। गुरवो द्विजातय इत्येतद्द्वयं मोहासम्भवे हेतुः ॥ ४० ॥

दुरन्तभावं अव्यवहित भक्तिं गृहाभिधानान् मृत्यु पाशान् छिन्द्यात् छिनत्ति ॥ ४१ ॥

आसां स्त्रीणां द्विजाति संस्कारः उपनयन लक्षणः गुरौ गुरुकुल निवासो विद्याऽध्ययनार्थ मिति शेषः। आत्ममीमांसा ब्रह्मविचारः शौचं बाह्याभ्यन्तर शुद्धिः शुभाः क्रिया यागादि लक्षणाः ॥ ४२ - ४४ ॥

अन्यथा स्मारयितृत्वेनाऽपि। तर्हि स्त्रीणां किमर्थं कृत मिति, तत्राऽऽह ईशस्येति ॥ ४५ ॥

हित्वाऽन्यान् भजते यं श्रीः पादस्पर्शाशया सकृत्।
स्वात्म[1] दोषापवर्गेण तद्याच्ञा जनमोहिनी॥ ४६॥

देशः[2-] कालः पृथग्द्रव्यं[-2] मन्त्रतन्त्रर्त्विजोऽग्नयः।
देवता यजमानश्च क्रतुर्धर्मश्च[3] यन्मयः॥ ४७॥

स एव[4] भगवान् साक्षा द्विष्णु र्योगेश्वरेश्वरः[5]।
जातो य[6-]दुष्वित्याश्रुत्य[-6] अपि[7] मूढा न विद्महे॥ ४८॥

★ नमस्तुभ्यं भगवते कृष्णायाऽकुण्ठमेधसे।
यन्मायामोहितधियो[8] भ्रमामः कर्मवर्त्मसु॥ ४९॥

स वै न आद्यः पुरुषः स्वमायामोहितात्मनाम्।
अविज्ञातानु भावानां क्षन्तुमर्हत्यतिक्रमम्॥ ५०॥

इति स्वाद्य[9] मनुस्मृत्य कृष्णे[10] ते कृत हेलनाः।
दिदृक्षवोऽ[11]प्यच्युतयोः कंसाद्भीता न चाऽचलन्॥ ५१॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादश साहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे पूर्वार्धे त्रयोविंशोऽध्यायः॥ २३॥

---

1. A,B,G,J आत्म 2- -2. M,Ma देशकालपृथग्द्रव्य 3. T,V,W °ध° 4. A,B,G,J,M,Ma एष 5. T,V,W °गी° 6- -6. A,B,G,J यदुष्वित्यशृण्म; M,Ma भुवीति शृण्वाना 7. A,B,G,J,V ह्य°; M,Ma ये वि° ★ अहो वयं धन्यतमा येषां न स्तादृशीः स्त्रियः। भक्त्या यासां मति र्जाता अस्माकं निश्चला हरौ। This above additional verse is found in A,B,G & J Edns. 8. M,Ma दृशो 9. M,Ma कृष्ण° 10. M,Ma विप्राः 11. A व्रजमथ; K °ऽपि स्वस्थानात्

**श्रीध०** हित्वेति। स्वात्म[1]दोषापवर्गेण चाञ्चल्य गर्वादित्यागेन॥ ४६, ४७॥

स इति। इत्यशृण्म। एवं सर्वत्र श्रुतवन्तो वयं हि, तथाऽपीति॥ ४८ - ५०॥

**इतीति।** नचाऽचलन्, तयो र्दर्शनाय न जग्मुः[2] ॥५१॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामि विरचितायां भावार्थदीपिकायां
व्याख्यायां त्रयोविंशोऽध्यायः ॥२३॥

---

1. A,B,J आत्मनो 2. A adds इत्यर्थः ॥

**वीर०** पूर्णकामत्व मेव व्यञ्जयितु माहुः **हित्वेति।** श्रीः महालक्ष्मीः अन्यान् ब्रह्मादीन् हित्वा यं कृष्णं सकृदपि पादस्पर्शेच्छया स्वात्मदोषापवर्गेण चञ्चलत्वरूपस्वदोषप्रहाणेन भजते। एवं श्रियाऽप्यनुवर्त्यस्य पूर्णकामत्वं किमु वक्तव्य मिति भावः। अतः तस्य एवम्भूतस्य याच्ञा केवलं जनमोहिनी जनाना मश्रुतावताराणा मात्ममहिमाच्छादनी श्रुतावताराणा [1]मस्माकं तु तत्स्मारिणीति भावः ॥४६॥

श्रुतावताराणा[2]मप्यस्माकन्तावत् विमोहिन्येवाऽभूत्, किमुत, अश्रुतावताराणा मित्यभि प्रायेणाऽऽहुः **देश** इति द्वाभ्याम्। देशादयो यन्मयाः स एव भगवान् साक्षा द्यदुषु जातोऽवतीर्ण इत्याश्रुत्याऽपि तावन्न विद्महे न वि[3]ज्ञातवन्तः स्मः ॥४७, ४८॥

इत्थ मनुतप्ताः प्रणाम मन्त्रेण स्वापराधक्षमानिमित्त मनुपलभमाना नमस्कुर्वाणाः क्षमापयन्ति **नम इति** द्वाभ्याम्। अज्ञानकृत मपराधं जानात्येवेत्यभिप्रायेण विशिंषन्ति अकुण्ठमेधस इति। अप्रतिहता मेधा धिषणा यस्य तस्मै। "नित्य मसिच् प्रजा मेधयोः (अष्टा. 5-4-112) इत्यसिच्। स्वयन्त्वकुण्ठमेधाः, वयं तन्माया मोहितधियः। अतः क्षन्तु-मर्हतीत्येवेत्यभिप्रायेणाऽऽहुः यन्मायेति। कर्मवर्त्मसु तद्भक्ति विधुरेषु केवलं यज्ञादि कर्ममार्गेषु भ्रमामः। पुरुषार्थसाधनबुद्धि कुर्मः। यद्वा "ते तं भुक्त्वा स्वर्गलोकं विशालम्" (भ.गी.9-21) इत्याद्युक्तविधगमनागमनमार्गेषु पुण्यपापात्मक कर्मायत्त स्वर्गनरकादिमार्गेषु वा भ्रमामः ॥४९॥

अत स्त्वन्मायया मोहितचित्तानाम् अत एव अविज्ञातोऽनु भावो महिमा यै स्तेषां नोऽस्माकं व्यतिक्रम मपराधं क्षन्तु मर्हति॥५०॥

इत्थं तावत् कृष्णे विषये कृतं हेलन मपराधो यैस्तथाभूताः शनैः स्वकृत मपराध मनुस्मृत्य ततस्तं श्री[4]कृष्णं द्रष्टु मिच्छवोऽपि कंसाद्भीताः स्वस्थाना न्न चलितवन्तः। द्रष्टुं न जग्मुः। किन्तु तं ध्यायन्तः स्वस्थान एव तस्थुः ॥५१॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां त्रयोविंशोऽध्यायः ॥२३॥

1. A,B °मप्यस्माकं 2. T,W omit अपि 3. A,B omit मि 4. K,T,W omit श्रीकृष्णं

**विज०** स्वात्मदोषापवर्गेण अन्यत्र चञ्चलत्वादिस्वकीयदोषपरित्यागेन स्थैर्यस्वभावेनेत्यर्थः ॥ ४६ - ५० ॥

अथापि अनुतप्तापि हरिं दिदृक्षवो द्रष्टुकामाश्च नाचलन् नागच्छन्। कुतः ? कंसाद्भीता इति ॥ ५१ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
दशमस्कन्धे पूर्वार्धे त्रयोविंशोऽध्यायः ॥ २३ ॥

(श्रीविजयध्वजरीत्या एकविंशोऽध्यायः)

# चतुर्विंशोऽध्यायः

## (विजयध्वजरीत्या द्वाविंशोऽध्यायः)

### -: इन्द्रयागभञ्जन गोवर्धनाचलोद्धरणघट्टः :-

श्रीशुक उवाच

भगवानपि तत्रैव बलदेवेन संयुतः
अपश्यन्निवसन्गोपानिन्द्रयागकृतोद्यमान् ॥ १ ॥

तदभिज्ञोऽपि भगवान् सर्वात्मा सर्वदर्शनः।
प्रश्रयावनतोपृच्छद्वृद्धान्नन्दपुरोगमान् ॥ २ ॥

कथ्यतां मे पितः ! कोऽयं सम्भ्रमो व उपागतः।
किं फलं? कस्य चोद्देशः? केन वा साध्यते? मखः[1] ॥ ३ ॥

एतद्ब्रूहि महान्कामो मह्यं शुश्रूषवे पितः ।
न हि गोप्यं हि साधूनां कृत्यं[2] सर्वात्मना मिह[3] ॥ ४ ॥

[4]अस्त्यस्वपरदृष्टीनाममित्रोदास्त[5]विद्विषाम्।
उदासीनोऽरिवद्वर्ज्य आत्मवत्सुहृदुच्यते ॥ ५ ॥

---

1. V °घ° 2. M,Ma कीर्त्यं 3. M,Ma त्विह° 4. A,K,T,W अस्त 5. M,Ma °दास°

### श्रीधरस्वामिविरचिता भावार्थदीपिका

चतुर्विंशे महेन्द्रस्य मखं व्यावर्त्य हेतुभिः।
कृष्णः प्रवर्तयामास गोवर्धनमहो[1]त्सवम् ॥
भूसुराणां क्रियागर्वं निरस्य स्वस्सुरेषु च।
[2]मघवन्मदभङ्गाय तन्मखं समवारयत् ॥

**भगवानिति।** ब्राह्मणाः कंसाद्भीताः स्वाश्रमस्था एव भगवन्तमभजन्। भगवानपि तत्रैव निवसन् इन्द्रयागकृतोद्यमान् गोपानपश्यदिति सम्बन्धः ॥ १,२ ॥

**कथ्यतामिति।** वृथासम्भ्रमो न भवति। मखोऽयमिति[3] चेत् किमत्र फलं, का देवता, केन [4]वाऽधिकारिणा, केन वा साधनेन साध्यते॥ ३॥

**एतदिति।** एतद्ब्रूहि महान्कामो मम श्रवणे वर्तते। यद्वा तव महान्कामो दृश्यत इति तूष्णीं स्थितं प्रत्याह-नेति सर्वात्मनां सर्वत्रात्मदृष्टीनाम्॥ ४॥

**अस्तीति।** अत एव न विद्यते स्वः पर इति दृष्टिर्येषामिति[5]। [6]स्वपरदृष्टचभावादेव [7-]न तद्भवामित्रादयोऽपि एषां सन्तीत्याह[7] - अमित्रेति। न मित्रम् उदास्त उदासीनो विद्विड्येषां तेषां कृत्यं [8]सर्वकर्म न[9] गोपनीयं किञ्चिदस्ति [10-]इ ति पूर्वेणान्वयः[10]। सत्यपि भेद दर्शने उदासीनः शत्रुवद्वर्ज्य आत्मतुल्यत्वात् [11]सुहृत् न वर्जनीय इत्याह उदासीन इति॥ ५॥

---

1 A,B,J °खो° 2. P,V °ख 3. A,B,J add एवं 4. A,B,J omit वा 5. P,W omit इति 6. P,V स्वः पर इतिह° 7- -7. A,B,J तत्तद्भेदा अमित्रादयोऽपि तेषां न सन्तीत्याह - 8. P,V omit सर्वं 9. A adds एव 10- -10. A,B,J इत्यर्थः 11. A,B,J add मन्त्रेषु

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ इन्द्रप्रीतिकरयागभञ्जनं ततस्सङ्क्रुद्धेन्द्रचोदितमहावातवर्षपीडित शरणागतव्रजवासिरिरक्षिषोपयुक्त गोवर्धनाचलोद्धरणात्मकं [1]भगवच्चेष्टितमनुवर्णयति द्वाभ्यामध्यायाभ्याम् **भगवानिति।** तत्रैव बृन्दावन एव निवसन् इन्द्रयागार्थं कृत उद्यमः प्रयत्नो यैस्तान् गोपानपश्यत्॥ १॥

सर्वात्मा सर्वदर्शनश्चेति च हेतुगर्भम्। अतस्तदभिज्ञोऽपि उद्यमस्य इन्द्रयागार्थत्वं जानन्नपि अज्ञ इव अवनतो नम्रः नन्द प्रभृतीन् वृद्धानपृच्छत्॥ २॥

प्रश्नप्रकारमेवाह - कथ्यतामिति। हे पितः। वो युष्माकं कः सम्भ्रमः उपस्थितः सम्भ्रमो न भवति मखोऽयमित्यत्राह किं फलमिति। मखश्चेत्किमत्र फलम्। कस्य सम्बन्धी उद्देशः का देवतेति प्रश्नः, केन साधनेन साध्यते इति साधनप्रश्नः॥ ३॥

हे पितः श्रोतुमिच्छवे मह्यमेतन्मत्पृष्टं ब्रूहि। अत्र महान्कामः शुश्रूषा वर्तते, गोप्यत्वाद्वक्तुं श्रोतुं च न योग्यमित्याशङ्कां निराकरोति - **न हीति।** साधूनां कृत्यं न हि गोप्यम्। तत्र हेतुं वदन् विशिनष्टि। सर्वात्मनां सर्वेप्यात्मान आत्मतुल्या येषां ज्ञानैकाकारत्वेन सर्वेऽप्यात्मान एकरूपा एवेति जानतामित्यर्थः॥ ४॥

अस्तस्वपरदृष्टीनाम् अस्ता रहिता स्वपरेषु स्वपराभिमतदेहेषु दृष्टिः युष्मदस्मद्दर्शनं येषां देहात्मनोर्याथात्म्यज्ञानमित्यर्थः। अत एव मित्रोदासीनशत्रुरहितानां न हि समदर्शिनां गोप्यमस्तीति भावः। विषमदर्शिनामपि सुहृद्विषये न गोप्यमस्तीत्याह

उदासीन इति। अरिवदुदासीनोऽपि वर्ज्य एव, अनेनोदासीनामित्रयोः गोप्यश्रवणनि[2]षेध उक्तः। सुहृत्तु आत्मवत्स्वतुल्य उच्यते। अतस्सुहृदहं श्रोतुं योग्य एवेति भावः॥५॥

---

1. T,W omit भगवत् 2. A,B प्रति

## श्रीविजयध्वजतीर्थ कृता पदरत्नावली

स्वमहिमानं प्रकटयितुमुत्पथवर्ती पुरुषः सन्मार्गोपदेशेन शिक्षणीय इति शास्त्रशासनं पश्यन् कृष्णः सन्मार्गं दर्शयितु मुपक्रमत इत्याह शुक इति। तत्र व्रज एव निवसन्॥१॥

सर्वात्मा सर्वदर्शन इत्येतद्द्वयं तदभिज्ञत्वे हेतुः। प्रश्रयः सेवाशीलता॥२॥

कोऽयम्? किं विषयः? मखविषयश्चेत्तत्राह किं फलमिति। दृष्टम् उत अदृष्टं फलं, यद्वा किमर्थं सम्भ्रमः। अस्य सम्भ्रमस्य किं फलं साध्यं, मखश्चेत् अत्राह कस्येति। कां देवतामुद्दिश्य द्रव्यत्यागलक्षणः, केनाधिकारिणा हेतुना वा॥३॥

तदेतत्पृष्टं सर्वं मह्यं ब्रूहि, किमर्थं? महान्कामः, मम तस्मिन्कार्ये महत्याकाङ्क्षावर्तते। तुशब्दो भेदार्थः। इह वाच्यव्यवहारविशेषे यत्सर्वात्मना कीर्त्यं वक्तुं योग्यं तत्साधूनां गोप्यं न हि, कुत इत्थं सङ्कल्प्यत इत्यतः प्रसिद्धत्वादित्याह हीति॥४॥

कथमेतदवगतमिति तत्राह **अस्तीति**। निरस्तस्वकीयपरकीय बुद्धीनां शत्त्वादिसद्भावेऽयं विशेषो दुर्घट इति तत्राह- अमित्रेति। न विद्यते मित्रं उदासीनः विद्विट् येषां ते तथा तेषां मित्रादिविशेषाभावात् स्वकीयत्वादिबुद्ध्यभावेन साधूनां गोप्यं नास्तीति प्रसिद्धमेवेत्यर्थः। ननु चेतनानां चित्तस्य प्रमितत्त्वेन साधूनां मित्राद्यभाववचनं कण्ठोपरिगतवदौपचारिकं "परोक्ष प्रिया इव हि देवाः प्रत्यक्षद्विषः" (बृह.उ. 4-2-2) इति श्रुतेः। "षट्कर्णो भिद्यते मन्त्रः" (सुबा. 27-18) इति स्मृतेः। अतः कथं गोप्यं नास्तीत्याशङ्क्य योग्यतातिरेकेण मित्रादिकं नास्तीति तत्वं, न तु सर्वात्मना, अतो गोप्यं नास्त्येवेति शत्रुः सर्वथा वर्ज्यः मित्रविषये उदासीनोपि तथा तस्य शत्रौ कथनसम्भवादरिवदसुहृद्वर्ज्यः आत्मवत्सुहृदवर्ज्य इत्यभिप्रायेणाऽऽह उदासीन इति। अतः त्वत्सुहृत्वाद्गोप्यमपि मह्यं ब्रूहीति भावः॥५॥

**ज्ञात्वा ज्ञात्वा च[1] कर्माणि जनोऽयमनुतिष्ठति[2]।**
**विदुषः कर्मसिद्धिस्स्यात् यथा[3] नाऽविदुषो भवेत्॥६॥**

तत्र तावत्क्रियायोगो[4] भवतां[5] किं विचारितः[6] ?
अथवा लौकिकस्तन्मे[7] पृच्छतस्साधुभण्यताम्[8]॥७॥

नन्द उवाच

पर्जन्यो भगवानिन्द्रो मेघास्तस्यात्ममूर्तयः।
तेऽभिवर्षन्ति[9] भूतानां प्रीणनं[10] जीवनं पयः[-10] ॥८॥
तं[11] तात वयमन्ये च वार्मुचां पतिमीश्वरम्।
द्रव्यैस्तद्रेतसा सिद्धैः यजन्ते[12] क्रतुभिर्नराः॥९॥
तच्छेषेणोपजीवन्ति त्रिवर्गफलहेतवे[13]।
पुंसां[14] पुरुषकाराणां पर्जन्यः फलभावनः॥१०॥

---

1. K,T,W हि 2. M,Ma ते 3. A,B,G,J तथा 4. M,Ma °गा 5. M,Ma भवता 6. M,Ma °ताः 7. M,Ma °का° 8. K,T,V,W फ 9. M,Ma,T,Wअभि° 10- -10. M,Ma प्राणनं जीवनं; K,T,W जीवनं प्राणनं; V प्राणसञ्जीवनं 11. A,M,Ma तत्तात; T,V,M तं तथा 12. A °न्ति° 13. V सिद्धये 14. A पुंसः

**श्रीध०** किञ्च सुहृद्भिः सह विचार्य ज्ञात्वैव कर्म कर्तव्यं, न तु गतानुगतिकत्वमात्रेणेत्याह[1] - **ज्ञात्वेति**। अज्ञात्वा च। तत्र विदुषो यथावत्कर्मफलं स्यात्तथा नाविदुषः॥६॥

**तत्रेति**। भवतामयं क्रियायोगः शास्त्रतः[3] किं विचारितः प्रवृत्तो लौकिकाचार[4] प्राप्तो वेति। साधु सोपपत्तिकं भण्यतां[5] कथ्यतामिति॥७॥

आचारप्राप्त ऐवेति सहेतुकमाह - **पर्जन्य** इति। आत्ममूर्तयः प्रियमूर्तयः॥८॥

ततः किमित्यत[6] आह - **तमिति**। तमिन्द्रं वार्मुचां मेघानां पतिं[7] स्वामिनमीश्वरं नियन्तारम्[7]। तद्रेतसा तद्वृष्टिपयसा॥९॥

**तदिति**। उपजीवन्ति[8] जीविकां कल्पयन्ति धर्मार्थकामसिद्धये। ननु कृष्यादिभिर्जीवन्ति, किमिन्द्रेणेत्यत्राह[9] **पुंसामिति**। फलभावनः फलसाधकः। पर्जन्यं विना कृष्यादि वैफल्यादित्यर्थः॥१०॥

---

1. P,V omit °त्व° 2. A,B,J त° 3. A,B,J add अपि 4. A,P,V °क आ° 5. P,V फ° 6. P,V किमत 7- -7. P,V omit 8. A,B,J add प 9. A,B,J °ण तत्राह

**वीर॰** किञ्च सुहृद्भिस्सह ज्ञात्वा ज्ञात्वा पुनः पुनर्विचार्यैवायं लौकिको जनः कर्माण्यनुतिष्ठतीति लोकपरिपाटी प्रदृश्यते। गातानुगतमात्रेणानुष्ठाने त्वन्धपरम्पराप्रसङ्गः इति भावः। किञ्च यथा विदुषः कर्मसिद्धिः नाऽविदुषस्तथा भवेत्॥ ६॥

तत्रैवं सति भवतामयं क्रियायोगः [1-] किं विचारितः [-1]? सुहृद्भिः शास्त्रतः किं विचारित इत्यर्थः। आहोस्वित् केवलं लौकिक एव आचार प्राप्त एव। भ्रान्तिमूलकोऽप्याचारोऽऽस्तीति भावः। तदेत्पृष्टं साधु यथा [2] भवति तथा पृच्छतो मम कथ्यतां कथ्यताम्॥ ७॥

आचारप्राप्त एवेति वदन् तस्य कर्तव्यत्वं सहेतुकमाह नन्दः पर्जन्य [3-] इत्यादिभिश्चतुर्भिः [-3]। पर्जन्यो वर्षाधिदेवता, सा च इन्द्र एव। यद्यपि "अष्टौ मासान्निपीतं यद्भूम्यामुदमयं वसु। स्वगोभिर्मोक्तुमारेभे पर्जन्यः काल आगते" (भाग.10-20-5) इत्यादिषु पर्जन्यस्सूर्य इति प्रतीयते। तथाऽपि इन्द्रशासनानुवर्तिमेघद्वारकं तस्य व[4]र्षकत्वमित्यविरोधः। अस्त्विन्द्रः पर्जन्यः, ततः किमत आह मेघास्तस्येन्द्रस्याऽऽत्ममूर्तयः स्वशरीरतुल्याः तद्वन्नियाम्या इत्यर्थः। ते च मेघाः भूतानां जीवानां जीवनं प्राणधारणसाधनभूतं प्राणनमाप्यायकं प्राणाप्यायनद्वारा तद्धारणसाधनं पयः जलं वर्षन्ति॥ ८॥

ततोऽपि किमित्यत्राह - **तमिति**। हे तात तं वार्मुचां मेघानां पतिं पालकमीश्वरं नियन्तारञ्चेन्द्रम् अस्मत्प्रभृतयः सर्वे नराः तस्य इन्द्रस्य रेतसा रेतःस्थानीयेन जलेन सिद्धैः नानाविधैः द्रव्यैः द्रव्यसाधनकैः क्रतुभिर्यजन्ते॥ ९॥

एवमिष्ट्वा तच्छेषेण [5-] यागावशिष्टेन [-5] द्रव्येणोपजीवन्ति [6-] जना इति शेषः [-6]। जीविकां कल्पयन्ति। किमर्थम्? त्रिवर्गफल हेतवे धर्मार्थ[7]कामहेतवे[8] तं यजन्तीत्यन्वयः। त्रिवर्गफलहेतवे उपजीवन्तीति वा, एवमिन्द्रयागावशिष्टेन जीवनं ततस्त्रिवर्गसिद्धिः इत्युक्तम् ननु वृद्ध्यादिभिरुपजीवनं ततः [9]त्रिवर्गसिद्धिरिति किमिन्द्रेणेत्यत आह - पुंसामिति। पुरुषं कुर्वन्ति त्रिवर्गफलयुक्तं कुर्वन्तीति पुरुषाकारास्त्रिवर्गप्रापका इति यावत्, तेषां मध्ये पर्जन्य इन्द्रएव पुंसां फलभावनः फलप्रापकः स्वायत्तवृष्ट्यादिद्वारेति भावः॥ १०॥

---

1- -1. T,W omit 2. T,W omit भवति 3- -3. T,W इति। 4. A,B °र्षु° 5- -5. A,B यागविशिष्ट°; T,W यागविशिष्टेन 6- -6. T,W omit 7. T,W फल 8. A,B add सिद्धये 9. A,B त्रै°

**विज॰** अस्तु तव वक्तव्यं अथाप्यस्माकं फलज्ञानाभावेऽपि सन्ध्योपासनादिवदनुष्ठानं घटत इत्याशङ्क्य, सत्यं ज्ञानाभावे युष्माकं फलप्राप्तिः न स्यादित्याह - **ज्ञात्वेति**। कश्चित् ज्ञात्वाऽनुतिष्ठते कश्चिदज्ञात्वा। तत्र विदुषः कर्मसिद्धिः अनुष्ठानफलं स्यात्, अविदुषः कर्मानुष्ठानमजानतः पुंसः यथावत्फलं न भवेत्। मन्त्रावृत्त्या द्रव्यसम्पत्या च ऋत्विगनुगुणेन वा किञ्चित्सम्भवेऽपि पूर्णफलं न स्यादित्यर्थः यथाऽविदुषो न स्यात् तथा विदुष इति वा॥ ६॥

अस्त्वन्यत्र प्रकृते किमिति तत्राह **ततेति**। तत्र देवता कर्मणां मध्ये तावत् प्रथमं क्रियायोगाः कर्मानुष्ठानप्रकाराः लौकिकवृद्धव्यवहारादवगताः गतानुगतवद्धा ॥७॥

पर्जन्यशब्दस्य गर्जन्मेघेऽपि वर्तनात्तद्व्यावृत्त्यर्थं इन्द्र इति। तर्हि इन्द्रइत्येवालमिति चेन्न। अस्य पर्जन्यशब्दस्य मेघाभिमानित्व विशेषद्योतनार्थत्वात्, तत्कथमत्राह - मेघा इति। आत्मवत् देहवन्मूर्तयः देहाः स्वदेहो यथाऽभिमन्यमानत्वेन प्रेष्ठः तथा मेघा अपीति भावः। मेघैः किं प्रयोजनं लोकस्य, इत्याशङ्क्य 'मिह सेचने' इति धातु निष्पन्नमेघशब्दार्थसूचनपूर्वकं तत्प्रयोजनमाह - अभिवर्षन्तीति। प्राणनं चेष्टाकरणं जीवनं शरीराप्यायनं, अनेन प्राणशब्दविवरणं कृतम्। प्राणिनामिति पाठे पयसो गतेः हेतुत्वेन पयश्शब्द वाच्यत्वे जलस्य 'पयगतौ' इति धातोरर्थः ॥८॥

यतो मेघा लोकोपकारिणः तत्तस्मात् वार्मुचां जलदानां मेघानामित्यर्थः। इश्वरं अयष्टृणां शिक्षणसमर्थं तेषां मेघानां रेतसा रतिकरलक्षणेन जलेन सिद्धैः उत्पन्नैः अन्येच नराः ॥९॥

तच्छेषेण इष्टावशिष्टेन त्रिवर्गफल हेतवे धर्मार्थकामलक्षणपुरुषार्थ सिद्ध्ये पुरुषकाराणां पराक्रमसिद्धकर्मणां फलभावनः फलसाधकः ॥१०॥

**य एवं[1] विसृजेद्धर्मं पारम्पर्यागतं नरः।**
**कामाल्लोभाद्भयाद्द्वेषात् स वै नाऽऽप्नोति शोभनम्॥११॥**

**श्रीशुक उवाच**

**वचो निशम्य नन्दस्य तथाऽन्येषां व्रजौकसाम्[2]।**
**इन्द्राय मन्युं जनयन् पितरं प्राह केशवः॥१२॥**

**श्री भगवानुवाच**

**कर्मणा जायते जन्तुः कर्मणैव प्रलीयते[3]।**
**सुखं दुःखं भयं क्षेमं कर्मणैवाभिपद्यते[4]॥१३॥**

**अस्ति चेदीश्वरः कश्चित्फलरू[5-]प्यन्यकर्मणाम्[-5]।**
**कर्तारं भजते सोऽपि नह्यकर्तुः[6] प्रभुर्हि सः॥१४॥**

**किमिन्द्रेणेह भूतानां स्वस्वकर्मानुवर्तिनाम्[7]।**
**अनीशे नाऽन्यथा कर्तुं स्वभावविहितं नृणाम्॥१५॥**

---

1. K,T,W एनं 2. K,T,W बनौ° 3. B,G वि; J नि 4. V व प्र 5- -5. K,T,W रूप्यस्यकर्मणाम्; M,Ma रूपस्सकर्मणः 6. V नह्यकर्तुं; T,W नार्हकर्तुः 7. V स्वंस्वं

**श्रीध० वच** इति। इन्द्राय मन्युं जनयन्निति। कोप जननद्वारा गर्वपर्वतादिन्द्रमवतारयितुं देवतानिराकरणं नतु अयमेव [1]भगवतोभिप्राय इत्यर्थः ॥ ११, १२ ॥

प्रथमं तावत् कर्मवादेन देवान्निराकरोति - **कर्मणेति**। ननु जडात्कर्मणः केवलात्कथं फलसिद्धिः स्यात्[2] अहो अ[3]परिशीलितमीमांसानां स्वमतिविलसित श्रद्धा कर्मणः[4] फल[5]करत्वे वचनतोऽवगते किं ततोऽनुपपन्नं ना[6]मेति भावः ॥१३॥

केचित्पुनः अतिसाहसाद्भीताः कर्म परतन्त्रमीश्वरं मन्यन्ते तन्मतमनूद्य निराकरोति - **अस्ति चेदिति**। स्वयं कर्मभिः[7] लिप्तोऽन्येषां जीवानां कर्मणां फलरूपी फलदाता सोऽपि कर्तारं भजते [9]तत्तत्कर्मफलदानेन ॥ १४ ॥

अतः कर्मण एव फलसिद्धेः तत्पारतन्त्र्ये च अजागलस्तन तुल्यत्वान्न देवतया कृत्यमित्याह किमिन्द्रेणेति। ननु कर्मणोऽपि प्रवृत्तिरन्तर्याम्यपेक्षैव कथं सर्वथा देवताया अनुपयोग इत्याशङ्क्याह - स्वभावविहितमिति। स्वभावेन प्राक्तन संस्कारेणैव विहितं यत्कर्म तदन्यथाकर्तुमनीशेन ॥ १५ ॥

---

1. A,B,J omit भगवतः 2. A,B,J add इति चेत् 3. A,B,J omit परि 4. A,B,J °णा° 5. A,B,J कारणत्वे; P. करणत्वे 6. A,B,J omit इति भावः 7. A,B,J °भिर° 8. A,B,J omit सोऽपि 9. P,V omit तत्

**वीर०** अतः तदाराधनात्मकमिदं वृद्धाचार परम्पराप्राप्तं यः पुमान् कामाद्यन्यतमाद्धेतोः त्यजेत्, स शोभनं सुखं नाप्नोति। किन्तु दुःखमेव [1]इति भावः ॥ ११ ॥

इत्थं [2-]नन्दस्य तथा अन्येषां गोपानामपि[-2] वचो निशम्य भगवानिन्द्राय मन्युं जनयन् क्रोधजननद्वारा गर्वं वारयितुं नन्दं प्राह ॥ १२ ॥

यदुक्तं 'पर्जन्यः फलभावनः' (भाग 10-24-10) इति तत्प्रतिक्षेप्तुकामस्तावत् ईश्वराराधनभूतकर्मणामवश्यकर्तव्यतां वक्तुकामः फलसाधनत्वव्युदासाय प्राधान्येन पुण्यपापकर्मणां सुखदुःखादि हेतुत्वमाह **कर्मणेति**। सुखम् ऐहिकम्। क्षेमं पारलौकिकम्। जायते प्रलीयत इति दृष्टान्तार्थम्। यथा कर्मणैव हेतुना जायते प्रलीयते च तथा [3-]सुखं दुःख[-3] च कर्मणैव प्राप्नोति। एवकारेण केवल देवतानिरासो गूढमभिसंहितः ॥ १३ ॥

ननु क्षणिकस्य जडस्य च कर्मणः कथं कालान्तरभाविविचित्रफलहेतुत्वम्? न त्वपूर्वद्वारा तस्य स्थिरत्वेऽपि जडत्वाविशेषात्। अतः "तृप्त एवैनमिन्द्रः प्रजया पुशभिस्तर्पयति" इत्याद्युक्तरीत्या कर्मजनितनिग्रहानुग्रहवती देवतैव सुखदुःखादि हेतुः तत्राऽऽह - **अस्तिचेदिति**। अस्य कर्तुः कर्मणां फलं रूपयति कल्पयतीति तथा फलदाता कश्चिदीश्वरोऽस्ति चेत्तर्हि

हे पितः ! सोऽपि[4] ईश्वरः कर्तारमेव भजते यस्स्वाराधनरूपं कर्मानुतिष्ठति तमेवानुवर्तते, तस्मा एव फलं ददाति, न ह्यकर्तुः प्रभुः फलदः। एवमन्वयव्यतिरेकाभ्यां कर्मण एव फलसाधनत्वम्, ईश्वरस्य तत्तत्कर्मानुवर्तित्वेन तत्पारतन्त्र्यं चोक्तम्। कश्चिदीश्वरोऽस्ति चेदित्यनेन इन्द्रस्यानीश्वरत्वमभिप्रेतम् सम्भावितस्येश्वरस्यैकत्वं हि विवक्षितम्। अयं भावः - क्षणिकत्वा ज्जडत्वाच्च केवलकर्मणः फलदत्वं न सम्भवतीति दैवतैव फलदेति ब्रूषे, तर्हि सा किमिन्द्रवाय्वादिरूपेणानेका? उतैका[5] ? इन्द्रादीनां कार्यत्व[6] कर्मवश्यत्वदुःखित्वादेः प्रतिपन्नत्वेन फलदत्वासम्भवात्, न हि स्वदुःखनिराकरणेष्ट[7] साधनासमर्थस्यान्येष्टानिष्टप्रापणपरिहारसामर्थ्यम् अत इन्द्राद्यन्तर्याम्यकर्मवश्यो निस्समाभ्यधिकः कश्चिदीश्वर एकः फलदः, सोऽप्यन्वयव्यतिरेकाभ्यां कर्मानुवर्तित्वेन तत्परतन्त्र इति। न चैवमीश्वरस्य स्वातन्त्र्यादिभङ्गः जन्ममरणसुखदुःखादेः कर्मायत्तत्वेऽपीश्वरस्य पूर्वपूर्वकर्मवासनानुरोधेन जीवप्रेरकत्वात्तस्य मूलकारणत्वात् ईश्वरस्य हि स्वकेष्वपि व्यापारेषु स्वयं ज्ञानचिकीर्षा[8]प्रयत्नवत्वात्तत्कर्तृत्वम्। चेतनप्रवृतिहेतुत्वात् कारयितृत्वम् चेतनप्रवृत्ति हेतुत्वात् कारयितृत्वम्। स्वयं सर्वकार्यहेतुत्वेन सामान्यकारणत्वादुदासीनत्वम्। प्रवृत्तस्य चेतनस्योत्तरोत्तरं प्रवर्तकत्वादनुमन्तृत्वम्। सर्वव्यापारसाक्षात्कर्तृत्वात्साक्षित्वम्। विशेषकारणभूत तत्तत्कर्मसाहित्येनैव विशेष कार्य हेतुत्वा त्सहकारित्वम्। कर्मभिराराधितस्यैव फलहेतुत्वात्फलदत्वम्। चेतनशेषित्वात् तत्तच्चेतन फलोपभोगस्यापि स्वोपभोगशेषत्वात् फलित्वम्। कर्मानुरोधेनैव फलप्रदानादविषमत्वम्, सहकारिसन्निधिक्रमानुरोधेनैव परदुःखनिराचिकीर्षाशालित्वादनैर्घृण्यम् तत्तत्कर्मानुरोधेन निग्रहानुग्रहसद्भावेऽपि किञ्चिदनुकूल्यमवलोक्य निश्शेष निग्रह प्रणाशेन यावदात्मभाविमोक्षप्रदानादनुग्रहप्राबल्यम्। अत एव परमोदारत्वञ्चेत्यादि सर्वमुपपन्नमेव। तस्मादीश्वरस्य कर्मपारतन्त्र्य कथनमन्वय व्यतिरेकाभ्यां कर्मणः फलसाधनत्वाभावव्युदासार्थम्। न चैतावता ईश्वस्स्य फलदत्वव्युदासः। "कर्तारं भजते सोऽपि" इत्यनेन तस्यापि फलदत्वावगमात्। न चान्यतरसाधनत्वमन्यतरेण प्रतिबद्ध्यते कर्मणामीश्वरानुग्रहनिग्रहद्वारा सुखदुःखादिफलसाधनत्वादीश्वरस्य तु साक्षादिति विरोधाभावात्, चेदिति सम्भावनया ईश्वरास्तित्वे वादिविप्रतिप्रत्तिस्सूचिता। अस्तीति तदभ्युपगमेन तस्य कर्मानुवर्तित्वकथनेन च ईश्वरानभ्युपगमवादो धर्मिग्राहकमानविरुद्ध इति दर्शितम्॥ १४॥

तदेवमीश्वराराधनभूत कर्मणोऽवश्यानुष्ठेयत्वं फलितम्। ईश्वर इत्येकवचनेनेन्द्र वह्न्यादीनामनीश्वरत्वमवगतम्। तदेव व्यञ्जयन्नाह किमिति। स्वस्वकर्मानुवर्तिनां राजसादिस्वस्वभावानुगुणपुण्यापुण्यात्मक[9]कर्मानुवर्तिनां भूतानाम् इन्द्रेण किम्? स्वभावानुगुण कर्मणामेव सुखदुःखादि हेतुत्वे सति इन्द्रस्य न तद्धेतुत्वमिति भावः। स्वस्वकर्मानुवर्तिनामित्यनेन कर्मवैचित्ये तत्तत्कर्तृ स्वभाव वैचित्यमेव निमित्तमित्यभिप्रेतम्। ननुभूतानां स्वस्व कर्मानु वर्तित्वेऽपि स्वस्व कर्मजनितनिग्रहानुग्रहवानीश्वर एव फलद इति चेत् अस्त्वेवमीश्वर किमिन्द्रेणानीशेनेत्याह अनीशेनेति नृणां स्वभाव विहितं स्वभावानुगुण कर्मविहितं सुखदुःखादिकम् अन्यथा कर्तुं अप्रभुणा इन्द्रेण किम्? न कश्चिदपीत्यर्थः। अन्यथा कर्तुमनीशेनेत्यनेन सर्वेश्वरस्तु साध्वसाधुकर्मकारयितृत्वद्वारा अन्यथा च कर्तुं प्रभुरिति सूचितम्॥ १५॥

---

1. A,B add प्राप्नोति 2- -2. T,W omit 3- -3. A,B सुखदुःखादि 4. T,W omit सोऽपि 5. A,B add नाऽधः 6. A,B add कर्मत्व 7. A,B °षुपादना° 8. A,B °र्षायाः प्र° 9. A,B पुण्यपापात्मक

**विज०** विपक्षेबाधकमाह **य एवमिति**। कामाद्धुर्विषयाभिलाषात्, लोभाद्वित्तव्ययशङ्कया, भयात् राजभयात् द्वेषात् देवताद्वेषात्॥ ११॥

मन्युं क्रोधम्॥ १२॥

कर्मफलदातृत्वेन कर्मप्रेरयितृत्वेन कर्मशब्दवाच्यत्वेन च नारायण एव सर्वस्य कर्तेत्यभिप्रेत्य सर्वस्य कारणं कर्मैव इत्याह - **कर्मणेति** ॥ १३॥

ननु प्रवृत्तेर्बुद्धिपूर्वकत्वेन कर्मणोऽचेतनत्वेन तदयोगात् जगत्तदधीनमिति वक्तुं न युक्तं, किन्तु चेतनाधीनमेव चेतनोऽपि न देवदत्तवत्साधारणो भवति, अपि तु विशिष्ट एव कश्चिदिति श्रीकृण हार्दानभिज्ञस्य नन्दगोपस्य मानसीं शङ्कां गूढभिसन्धिः परिहरति - **अस्ति चेदिति**। यदि कश्चिदीश्वरोऽस्तीति मतं तर्हि स ईश्वरः कर्मणः फलं सुखादिलक्षणं रूपयति अनुकूलं करोति ददातीति फलरुपः सहायकल्पः न स्वतन्त्र इत्यर्थः। एतदेव द्रढयति कर्तारमिति। फलरूपत्वेन प्रयोजकत्वात् जगतः तदधीनत्वमायातं इत्यतो वाऽऽह कर्तारमिति। स त्वदभिमत ईश्वरोऽपि कर्म कर्तारं भजते फलदातुत्वेनानुवर्तते ना कर्मकर्तारं कुत इत्यत आह नहीति। स ईश्वरः कर्माकर्तुः फलदाने प्रभुः समर्थो नहि कस्मात्सामर्थ्याभाव इत्यत्राह - हीति। उद्रेके कारणाभावात्॥ १४॥

अवान्तरेवरत्वमभ्युपगम्य इदमुदितम्। इदानीमीश्वर एव त्वदभीष्टो नापेक्षितः। वस्तुतस्तु स्वभावविहित कर्मण एव फलदातृत्वोपपत्रेः पयस्स्यन्दनादिवत् इत्याशयेनेश्वरमाक्षिपति किमिन्द्रेणेति। स्वस्माद्भावः सत्ता यस्य स तथा न पराधीन सत्ताकः यद्वा स्वतन्त्रो भावः स्वभावः तेन नारायणेन विहितं कथितं अन्यथा कर्तुमनीशेनासमर्थेन॥ १५॥

**स्वभाव तन्त्रोहि जनः स्वभावमनुवर्तते ।**
**स्वभावस्थमिदं सर्वं सदेवासुरमानुषम्॥ १६॥**

**देहानुच्चावचान् जन्तुः प्राप्योत्सृजतिकर्मणा ।**
**शत्रुर्मित्रमुदासीनः[1] कर्मैव गुरुरीश्वरः॥ १७॥**

**तस्मात्सम्पूजयेत्कर्म[2] स्वभावस्थः[3] स्वकर्मकृत्[4] ।**
**अञ्जसा येन वर्तेत तदेवास्य हि दैवतम्॥ १८॥**

★ **आजीव्यैकतरं भावं यस्त्वन्यमुपजीवति[5] ।**
**नतस्माद्विन्दते क्षेमं जारं[6] नार्यसती यथा॥ १९॥**

**वर्तेत ब्रह्मणा विप्रो राजन्यो रक्षया भुवः ।**
**वैश्यस्तु वार्तया जीवेच्छूद्रस्तु द्विजसेवया॥ २०॥**

1. T,V W ऊ° 2. M,Ma °त्सुपू° 3. V °तः° 4. T,W °तः★ This verse was been printed as 24th in M,Ma editions. The commentary on this by vijayadhvaja is printed here itself. 5. A,K,M,Ma धा° 6. A,T,W °रात्मा°

**श्रीध०** एतद्विवृणोति **स्वभावतन्त्र** इति। प्रवृत्तेः संस्काराधीनत्वात् किमन्तर्यामिणेत्यर्थः ॥ १६॥

तस्मात्स्वभावतो निष्पन्नस्य कर्मणा एव सर्वकारणत्वात् कर्मैव पूज्यमित्याह **देहानि**[1]ति सार्धेन॥ १७॥

**तस्मादिति।** संपूजयेत् सम्मानयेत्। ननु देवतोद्देशेन द्रव्यत्यागात्मकत्वात् कर्मणः, कथं देवतां विना सिद्धिरित्याशङ्क्याह[2]-कर्माङ्गमात्रं देवतेति पक्षमुपसंहरन्निव। हेतुवादमाश्रित्य अन्यामेव देवतां समर्थयते। अञ्जसेति॥ १८॥

हेतु बलेनैव विपक्षे दोषमाह - **आजीव्येति।** उपजीवति सेवते॥ १९॥

स्ववृत्तिं वक्तुं दृष्टान्तत्वेन वर्णानां वृत्ति भेदमाह - **वर्तेतेति।** ब्रह्मणा वेदाध्य[3]यनादिना॥ २०॥

1. B,V नित्यादि 2. A,J,P,V omit आह 3. A,J °ध्यापना°

**वीर०** स्वस्वकर्मानुवर्तिनामिति स्वभावविहितमिति च भूतानां स्वस्वभावानुवर्तित्वं सूचितम्। तदुपपादयति - **स्वभावतन्त्र** इति। स्वभावस्थं सर्वं जगत् स्वभावानुगुणप्रवृत्तिमदित्यर्थः। अथवा जगदन्तर्भूतं देवादि वस्तु निस्स्वभावं नास्तीत्यर्थः। तथा च गीतं भगवता "नतदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः। सत्त्वं प्रकृतिजैर्मुक्तं यदेभिस्स्यात्त्रिभिर्गुणैः" (भ.गी.18-40) इति॥ १६॥

स्वभावमनुवर्तत इत्यनेन प्रवृत्त्याख्य कर्मणस्स्वभावानुवर्तित्वमुक्तम्। "कर्मणा जायते जन्तुः" (भाग. 10-24-13) इत्यनेन कर्मणोपि जन्मादि निमित्तत्वमुक्तम्। तदुभयमुपपादयन् कर्मैव बहु मन्तव्यमित्याह - **देहानिति।** जन्तुः जीवः कर्मणा स्वभावानुगुणेनेति शेषः। नानाविधान् कर्मानुरूपान् देहान्प्राप्य त्यजति, अरिमित्रादिकं च कर्मैव कर्मकृतमेवेत्यर्थः। ईश्वरः इन्द्रादिगतं सावधिकमीश्वरत्वमपि कर्मकृतमेवेति भावः॥ १७॥

यतः कर्मैव सुखदुःखादि हेतुः, तस्मात् स्वभावस्थः पुमान् स्वकर्मकृत् स्वस्वभावानु रूपकर्मशीलः कर्मपूजयेत् बहुमन्येत। कर्मेति द्वितीयान्तम् अहो! कर्मणो वैभवमितिश्लाघेतेत्यर्थः। किञ्च, वयं केवलं वनौकसः द्विजानामाशिषो गाः पर्वतं चोपजीवामः। ततस्त एव आराध्या इत्यभिप्रयन् अन्यथा सदृष्टान्तमनर्थमाह अञ्जसेति सार्धेन। येन अञ्जसा सुखं वर्तेत जीवेत्। तदेवास्य जिजीविषोः दैवतं दैवतत्वेन द्रष्टव्यं तद्वदाराधनीयमिति यावत्॥ १८॥

यस्त्वेकतरं अन्यतरं भावं पदार्थमुपजीव्या व्यतरमुपधावति अनुवर्तते भजत[1] इति यावत्, स तस्मादुपजीव्य बुध्याराध्यमानात् क्षेमं न विन्दते। असती पुंश्चली नारी पतिमुपजीव्य माराध्य जारमनुवृर्त्य यथा न तस्मात् क्षेमं विन्दते, तद्वत्॥ १९॥

किञ्चास्मद्वृत्तिरिन्द्रियागानपेक्षाचेति विवक्षुस्तावत् स्ववृत्तिं वक्तुं दृष्टान्तत्वेन वर्णानां वृत्तिभेदमाह - वर्तेतेति। विप्रो ब्रह्मणा वेदेन वर्तेत वेदाध्यापनादिनोपजीवेदित्यर्थः राजन्यः भुवः रक्षया वार्तया वैश्यो वर्तेत, द्विजसेवया त्रैवर्णिकसेवया शूद्रो वर्तेत॥ २०॥

1. A,B वर्त्य 2. A,B °ध्ययना° 3- -3. K,T,W omit

**विज०** ननु यदि स्वभावेनैव कर्म क्रियते तर्हि कर्ता मृद्दण्डसलिलादि बाह्यद्रव्यं किमर्थमपेक्षत इत्याशङ्क्य तदपि स्वभावनियत मित्यतः सर्वं स्वभावादीनमित्याह **स्वभावेति**। हि शब्देन पयस्स्यन्दनादिकमपि नारायणकृतमित्यभिप्रैति। "एतस्य वा अक्षरस्य प्रशासने गार्गिप्राच्योऽन्या नद्यः स्यन्दन्ते" (बृह.उ. 3-8-9) इति श्रुतेः। स्वभावादि शब्दवाच्यस्य हरेरधीनमिदं सर्वमित्यभिप्रायेणावान्तरेश्वर एव अत्र निषिध्यते। न तु मुख्येश्वर इत्यत्र आचार्यैः "फलरुप्यन्य ः कर्मणाम्" (भाग 10-24-14) इत्याद्यावान्तरेश्वर विषयमित्यभिधायि। "स्वभावे कर्मणि च यस्सत्त्वादिषु गुणेषु च। स्थितो विष्णुः सर्वकर्ता पृथक्संस्थश्च सर्वगः" (भागवततन्त्रे) इत्यादि प्रमाणं च कृष्णहार्दतात्पर्यार्थं उदाहारि। यद्वा स ईश्वरः कर्मणो हरेः फलरुपो ज्ञानात्मा कर्तारं कर्म भजते। अकर्तुः अकर्मणः प्रभवतीति प्रभुः। तदुक्तम् - "तेन जातं फलं यस्मात्कर्मणः फलमीर्यते" (भागवत तन्त्रे) इति। अस्तु अवान्तरेवरः कर्मफलरुपः। प्रकृते किमायतमिति तत्राह - किमिति। स्वस्वकर्मज्ञानविषयं बिम्बभूतं भगवन्तं अनुवर्तिनां प्रतिबिम्बानां, ननु त्रैलोक्येश्वर मिन्द्रं कथं कर्मफलभागिति तुच्छीकरोषीति तत्राह - अनीशेनेति। अस्मदभिमतं कर्मशब्दवाच्यं वस्तु कर्मफलभाक् न भवतीत्याशयेन स्वावेत्युक्तम्। स्वः स्वाधीनः भावः क्रिया यस्य स्वस्वभावः। तदुक्तम् "न चासौ कर्मफलभाक् नास्य किञ्चिन्न शक्यते" (भागवततन्त्रे) इत्यादि। एतदेवोपपादयति स्वभावतन्त्र इति। हि शब्देन तेषामवान्तरेशानां विष्णुवशत्वमन्तरेणान्यकर्मवशत्वं नास्तीति दर्शयति। "नान्यकर्मवशत्वं तु तेषां विष्णुं विना क्वचित्" (भागवततन्त्रे) इति। "स्वभावस्थमिदं सर्वमि" त्यनेन सर्वशब्द वाच्यत्वं स्वभावस्य हरेरिति सूचितम्। "सच ब्राह्मणगिर्यादिनामा विष्णुरजः परः (भागवततन्त्रे) इत्यादि स्मृतेः॥ १६॥

ननु विष्णोः सर्वनामवत्त्वे एकस्यैवोच्चनीचदेहयोग वियोग प्राप्त्या देवदत्तात् विशेषाभावेन सर्वं तदधीनमिति वक्तुं न शक्यते इति तत्राह **देहानिति**। दुःखयतीति दुःखी तद्दुःखस्वातन्त्र्या तच्छब्दवाच्यत्वं, न तु तदनुभवतः, अतः सर्वनामत्वं युज्यते उत्सृजति त्यजति, सृजति आपादयति। जातस्य शत्र्वादिभावश्च हरिणैवेत्याह शतृरिति। "सुखं दुःखं भवो भावः" (भ.गी. 10-4) इत्यादि स्मृतेः। यद्वा, यथा तत्तच्छक्तिप्रेरकत्वेन ब्राह्मणदिशब्दवाच्यत्वं हरेः तथा शतृत्वादि शब्दवाच्यत्वमित्याह - शतृरिति। कर्मशब्द वाच्यो हरिरेव शतृत्वादिः पूज्यत्वात्तत्वोपदशेन गुरुः ऐश्वर्यादियोगादीश्वरः॥ १७॥

यस्माद्गिरिति सर्वमिदमिति गिर्यादिनामा हरिः तस्मात्स्वविहितकर्मकृत् स्वभावस्थः नारायणार्पितसर्वेन्द्रियवृत्तिः पुरुषः "क्रियापतनयोः (यजनयोः) कर्म" (वैज. को. 6-3-4) इत्यभिधानात्। क्षितिधृत्यादि क्रियाश्रयत्वेन जगत्सर्जनादि क्रियाश्रयत्वेन वा परोक्षापरोक्षज्ञानविषयत्वेन वा कर्मसु पूजयेदित्यन्वयः। तदुक्तम् "एतस्मात्कारणात्कृष्णः शक्रस्य विमदाय च। गिर्यादि स्थितमात्मानं पूजयामास वल्गुवैः" (भागवत तन्त्रे) इति। स्वकर्मकृत् इत्युक्तं विवृणोति - अञ्जसेति। येन अञ्जसा तत्त्वेन यो वर्तेत अस्य तदेव दैवतं कुलदैवं हि लोक प्रसिद्धम्। "अञ्जसा त्वरिते तत्त्वे महदद्भुतखेदयोः" (वैज.को. 8-7-31) इति यादवः। अनेन यच्छास्त्रे विघ्नेश्वरादिनामाख्यातं तदप्यस्य हरेर्नमिति सिद्धम्॥ १८॥

एकतरं बहूनां सिद्धान्तानां मध्ये एकं भावं सिद्धान्तमाजीव्योपजीव्यान्यं भावमुपधावति उपास्ते स पुरुषः तस्माद्भावात् क्षेमं सुखी न लभते। यौवनं जरयतीति जारः असती बहुभर्तृका॥ १९॥

यस्य यत् किमिति तत्राह - **वर्तेतेति**। ब्रह्मणा वेदेन विहितेन यागादिना। यद्वा यो येन कर्मणा अञ्जसा सहितो वर्तेत अस्य तदेव कर्म दैवतं मान्यंहि, तर्हि विप्रादेः किं कर्म विहितमित्यत्राऽऽह - **ब्रह्मणेति**। कृच्छ्र चान्द्रायणादि लक्षणेन तपसा "वेदस्तत्त्वं तपोब्रह्म" (अम.को. 3-271) इत्यमरः। वार्तया कृष्यादिलक्षणया चतुर्विधया॥ २०॥

**कृषिवाणिज्य गोरक्षाः कुसीदं तुर्यमुच्यते ।**
**वार्ता चतुर्विधा तत्र वयं गोवृत्तयोऽनिशम्॥ २१॥**

**सत्त्वं रजस्तम इति स्थित्युत्पत्त्यन्तहेतवः ।**
**रजसोत्पद्यते विश्वमन्योन्यं विविधं जगत्॥ २२॥**

**राजसा चोदिता मेघा वर्षन्त्यम्बूनि सर्वतः ।**
**प्रजास्[1]तैरेव सिध्यन्ति महेन्द्रः किं करिष्यति?॥ २३॥**

**न नः पुरो जनपदा न ग्रा[2]मा न गृहा[-2] वयम् ।**
**वनौकसस्तात नित्यं [3]वनशैलनिवासिनः॥ २४॥**

**तस्माद्गवां ब्राह्मणानामद्रेश्चाऽऽरभ्यतां मख[4]ः ।**
**य इन्द्रयाग सम्भाराः तैरयं साध्यतां मख[5]ः॥ २५॥**

---

1. A स्तेनैव 2- -2. M,Ma ग्रामगृहिणो 3. M,Ma काननाद्रि 4. V °घः 5. V °घः

**श्रीध०** वैश्यवृत्तेश्चातुर्विध्यमाह **कृषीति**। कृषिवाणिज्यसहिता गोरक्षा। एवं त्रयम्। कुसीदं वृद्धिजीवनं चतुर्थम्॥ २१॥

ननु गवामपि वृत्तिः महेन्द्राधीनै वेत्याशङ्क्य निरीश्वर साङ्ख्यमताश्रयेण निराकरोति **सत्त्वमिति** श्लोकद्वयेन। अन्योन्यं स्त्री[1]पुरुष[-1]योगेन॥ २२॥

**रजसेति**। सर्वत इति। समुद्र[2]शैलोषरादि[-2]ष्वपि वृष्टिदर्शनात्र प्रेक्षावत्पूर्वक[3]त्वं वृष्टेरिति भावः। तैरेव मेघैरेव, सिध्यन्ति जीवन्ति[4]॥ २३॥

तथापि योगक्षेमार्थं देवतापेक्षेति चे[5]दत आह **नेति**। पुरः पत्तनानि। जनपदा देशाः। न[6]ः अस्माकं योगक्षेमहेतुर्वनशैलादय एवेति भावः॥ २४॥

ब्राह्मणानपि संगृह्णन्निगमयति - **तस्मादिति**। स्वयमुत्प्रेक्षित याग कल्पमाह य इन्द्रयाग सम्भारा इति सार्धपञ्चभिः। सम्भाराः साधनानि॥ २५॥

---

1- -1. P.V omit 2- -2. P.V. शैलवनादि 3. P.V omit क 4. P.V add इति 5. P.V °त्त° 6. A,B,J omit नः 7. A,B,J प्रयोगकल्पनामाह

**वीर०** वर्णान्तराणामपि प्रतिनियतस्वस्व वृत्त्यलाभे वार्तैव वृत्तिरित्यभि प्रयन्नेतत्स्वरूपं दर्शयितुं तस्याश्चातुर्विध्यमाह- **कृषीति**। कृष्यादीनां द्वन्द्वः, कृष्यादयस्तिस्रः, कुसीदं वृद्धिजीवनं, तुरीयं चतुर्थम्। एवं वार्ता चतुर्विधोच्यते। कृषिगोरक्ष वाणिज्या इति वा पाठः। रक्षाशब्दस्य स्त्रीलिङ्गत्वात्। इत्थं वृत्तीरभिधाय अथ स्ववृत्तिमाह तत्रेति। तत्र वार्ताभेदानां चतुर्णां मध्ये गोवृत्तयः गोरक्षा वृत्तिः येषां तथाभूताः वयम्॥ २१॥

अथ स्ववृत्तेरिन्द्राराधनानपेक्षत्वमाह - **सत्त्वमिति** त्रिभिः। तत्र तावद्गवां वृत्तेः महेन्द्राधीनत्व शङ्कां निराकुर्वन्नाह द्वाभ्याम्। सत्त्वादयो जगतः स्थितिसृष्टचन्त हेतवः, तत्र रजसा हेतुभूतेन अन्योन्यं स्त्रीपुरुषयोगेन[1] जगदुत्पद्यते॥ २२॥

ततः किमत आह **रजसेति**। रजसा रजस्स्वभावेन प्रेरिताः सर्वत्र नदी समुद्रपर्वतादिषु वर्षन्ति। समुद्रेष्वपि वृष्टिदर्शनान्न प्रेक्षावत्पूर्वकत्वं वृष्टेरिति भावः। प्रजाः गवादयः प्रजाः[2] तैरेव[3] मेघैरेव सिध्यन्ति जीवन्ति। व्रजा इति पाठे गोसमूहा इत्यर्थः। एवं सति महेन्द्रः किमप्यनिष्टं न करिष्यति, किञ्चिदपि नोपकरिष्यति चेत्यर्थः॥ २३॥

नोऽस्माकं पुरः पत्तनानि जनपदा देशाः ग्रामा गृहाश्च न सन्ति न पुरादयो वास स्थानानीत्यर्थः। किन्तु हे तात! वयं नित्यं वनादि निवासिनः॥ २४॥

तस्मात् अस्मज्जीवनहेतूनां[4] गवां ब्रह्मणानाम् अस्मत्कुलमाशासानाम् अद्रेस्तृण जलादिभिः नित्यं गोवर्धनश्याद्रेश्च तुष्टचर्थो मखो याग आरभ्यताम्। अनेन "अञ्जसा येन वर्तेत तदेवास्य हि दैवतम्" (भाग 10-24-18) इत्यभिप्रेतं स्पष्टीकृतम्। कथमारम्भनीय इत्यत्राऽऽह - य इति। सम्भाराः साधनानि तैरयं वक्ष्यमाणविधिः साध्यताम्॥ २५॥

---

1. A,B पुंयो° 2. A,B omit प्रजाः 3. A,B omit एव 4. A,B omit अस्मत्

**विज०** कृषिर्भुव उल्लेखनादि क्रिया वाणिज्यं सत्यानृतलक्षण क्रियादि, गोरक्षापशुपालनं, वृद्ध्यर्थं द्रव्यप्रयोगः कुसीदम्। तत्र कृत्यादिषु गोभिः वृत्तिराजीवनं येषां ते तथा॥ २१॥

प्रकारान्तरेण इन्द्रमाक्षिपति - **सत्त्व मित्यादिना**। विश्वं समस्तं अन्योन्यं निमित्तीकृत्येतिशेषः॥ २२॥

मेघानामिन्द्रो नियोजक इत्यत्राह - **रजसेति**। रञ्जयति सर्वमिति रजो भगवानभिहितः। नह्यचेतनस्य रजोगुणस्य मेघे प्रेरकत्वं सङ्घटीति। सिध्यन्ति सम्पन्नकार्या भवन्ति। किं करिष्यति न किमपीत्यर्थः। "प्रश्ने क्षेपे विकल्पे किम्" (वैज.को.8-7-3) इति यादवः॥ २३॥

इतोऽप्यस्मत्कुलदेवतात्वाभावात् इन्द्रयागो नोचित इत्याशयेनाह **न न** इति। पुरः पुराणि ग्रामास्थितिमुपादाय गृहिणः सपत्नीकाः॥ २४,२५॥

**पच्यन्तां विविधाः पाकाः सूपान्ताः[1] पायसादयः।**
**संयावापूपशष्कुल्यः सर्वदोहश्च गृह्यताम्॥ २६॥**

**हूयन्तामग्नयस्सम्यग्ब्राह्मणैर्ब्रह्मवादिभिः।**
**अन्नं बहुगुणं[2] तेभ्यो[4] देयं वो[3] धेनुदक्षिणाः॥ २७॥**

**अन्येभ्यश्च[4] श्व च[5]ण्डालपतितेभ्यो यथार्हतः ।**
**यवसं च गवां दत्वा गिरये दीयतां बलिः ॥२८॥**

**स्वलङ्कृता भुक्तवन्तः स्वनुलिप्तास्सुवाससः ।**
**प्रदक्षिणं च कुरुत गोविप्राऽनलपर्वतान् ॥२९॥**

**एतन्मम मतं तात! क्रियतां यदि रोचते।**
**अयं गोब्राह्मणाद्रीणां मह्यं च दयितो मख[6]ः ॥३०॥**

---

1. M,Ma °न्धः पा° 2. A,B,G,J,V °विधं 3- -3. M,Ma तेभ्योदीयतां; V. देयं तेभ्यो वो 4. A,B,G,J श्चश्व° 5. B,G,J,M,Ma चा°
6. V °घः

**श्रीध० पच्यन्तामिति** सूपं मौद्गम्। पायसं केवले पयसि पक्कम्। संयावादयो गोधूमादि विक्रियाः। क्रमश्च सूपपायसयोः श्रुत्या, दोहस्यार्थतोऽन्येषां पाठतः॥ २६॥

यागशोभार्थं श्रद्धोत्पादनार्थं चाह **हूयन्तामिति।** धेनुदक्षिणाः धेनुसहिता दक्षिणाः, ता एव वा दक्षिणाः। वो युष्माभिः॥ २७॥

**अन्येभ्य** इति। यवसं तृणम्॥ २८,२९॥

**एतदिति।** सर्वान् शिरःकम्पेन अनुमोदयन्नाह - गोब्राह्मणाद्रीणामिति। मह्यं मम च॥ ३०॥

**वीर०** अयमित्यनेनाभिप्रेतं प्रकारं दर्शयति पच्यन्तामित्या[1]दिभिश्चतुर्भिः। पाकाः पच्यन्तां क्रियन्ताम्। सूपपायसादिशब्दाः तत्पाकपराः। यद्वा पाकशब्दोऽत्र बहुलग्रहणात् असंज्ञायमपि "अकर्तरि च कारके संज्ञायाम्" (अष्टा०. 3-3-19) इति कर्मणिघञन्तः पक्तव्याः पच्यन्तामित्यर्थः। 'सूपान्ताः पायसादयः' इति पित्रर्थपाकक्रमविपर्ययद्योतनार्थमुक्तम्। तत्र सूपादयः पायसान्ता हि पच्यन्ते, संयावादयो गोधूमादि विक्रियाः। सर्वदोहः व्रजे कृत्स्नं क्षीरं गृह्यतां पायसाद्यर्थमेकत्र समुद्ध्रियतामित्यर्थः॥ २६॥

यागशोभार्थं श्रद्धोत्पादनार्थं चाऽऽह - **हूयन्तामिति।** ब्रह्मवादिभिः ब्राह्मणैः सम्यक् यथावत् अग्नयः हूयन्ताम्। तेभ्यो ब्राह्मणेभ्यो बहुगुणं षड्रसोपेतमन्नं वः युष्माभिः देयम्। धेनुसहिता दक्षिणाः ता एव दक्षिणा वा देयाः॥ २७॥

श्वादिभ्योऽपि यथायोग्यमन्नादिकं देयम्। श्वपर्यन्ता अन्नादिभिस्तर्पणीया इत्यर्थः। तथा गवां यवसं तृणं दत्वा, गवामिति सम्प्रदानस्य शेषत्वविवक्षया षष्ठी। गिरये गोवर्धनाय बलिः दीयताम्॥ २८॥

शोभनानि वासांसि येषां तथाभूताः गवादीन् प्रदक्षिणं कुरुत॥ २९॥

हे तात! एतदेवंविधं कर्म अस्माभिः कर्तव्यत्वेन मम सम्मतम्। यदीदं रोचते, तर्हि क्रियताम्। अयं मदुक्तो मखो गवादीनां महत्त्वं मम च दयितः प्रियः। गवाद्यन्तरात्मनो मम प्रीतिकर इति [2-]गूढाभिसन्धिः[-2] ॥ ३० ॥

---

1. A,B °मिति च° 2- -2. A,B गूढोऽभिप्रायः

**विज०** सूपो मुद्गान्नं, अन्धः केवलान्नं, संयावः भिन्नयवकृतः मुद्गभिन्नौदनो वा। अपूपं पिष्टकृतं, शष्कुली पैष्टिका मण्डलाकृतिः। सर्वदोहः क्षीरदधितक्रादिकः ॥ २६ ॥

बहुगुणं षड्रसोपेतम् ॥ २७ ॥

यवसं तृणसूचिका, गिरये गिरिसन्निहिताय तन्नाम्ने हरये ॥ २८ - ३० ॥

श्रीशुक उवाच

कालात्मना भगवता शक्रदर्प[1] जिघांसया[2]।
प्रोक्तं निशम्य नन्दाद्याः साध्वगृह्णन्त[3] तद्वचः ॥ ३१ ॥

तथाच व्यदधु[4]स्सर्वं[5] यथाऽऽह मधुसूदनः।
वाचयित्वा स्वस्त्ययनं [6-]तद्द्रव्येण गिरिद्विजान्[-6] ॥ ३२ ॥

उपहृत्य बलीन्[7] सर्वानादृता यवसं गवाम्।
गोधनानि पुरस्कृत्य गिरिं चक्रुः प्रदक्षिणम् ॥ ३३ ॥

अनांस्यनडुद्युक्तानि ते चाऽऽरुह्य स्वलङ्कृताः।
गोप्यश्च कृष्णवीर्याणि गायन्त्यस्सद्द्विजाशिषः ॥ ३४ ॥

कृष्णस्त्वन्यतमं रूपं गोपविस्रम्भणं[8] गतः।
शैलोऽस्मीति ब्रुवन्[9]भूरि बलिमाद[10]द्बृहद्वपुः ॥ ३५ ॥

तस्मै नमो व्रजजनैः [11-]स ह चक्रे महात्मने[-11]।
अहो पश्यत शैलोऽसौ[12] रूपीनोऽनुग्रहं व्यधात् ॥ ३६ ॥

एषोऽवजानतो मर्त्यान् कामरूपी वनौकसः[13]।
हन्ति ह्यस्मै नमस्यामश्शर्मणे ह्यात्मनो[14] गवाम् ॥ ३७ ॥

**इत्यादि गोद्विजमखं वासुदेवप्र[15] चोदिता:।**
**यथाविधाय गो[16]पाला: सहकृष्णा व्रजं ययु:॥ ३८॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीव ब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे पूर्वार्धे चतुर्विंशोऽध्याय:॥ २४॥

---

1. A,B,G,J,K,T,W °र्प° 2. A,B,G,J,K,T,W °ता 3. K,T,W हव्यतद्विद: 4. M,Ma ४वि° 5. M,Ma °र्वे 6- -6. M,Ma द्रव्यैर्गोविप्रभूभृताम् 7. K बलिं 8. A,B,G,J,M,Ma °श्र° 9. A वदन् 10. K,T,W °दन् बृ° 11- -11. A,G,J,T,W सह चक्रेऽऽत्मऽऽनात्मने; B स चक्रे आत्मनाऽत्मने; M स चक्रे ऽऽत्मनाऽऽत्मने; Ma सश्चक्रेह्यात्मनाऽऽत्मने 12. T,W °ऽयं 13. M,Ma वनेचर: 14. A,B,G,J,M,Ma आ° 15. A,B,G,J प्रणो° 16. A,B,G,J,K,T,W ते गोपा:

**श्रीध०** **तथेति।** तद्द्रव्येण ते[1]न महेन्द्र मखद्रव्येण गिरि[2]द्विजान् प्रति यथायथम्॥ ३१, ३२॥

**उपहृत्येति।** बलीनुपहृत्य दत्वा। आदृता: सादरा:॥ ३३॥

**अनांसीति।** अनडुद्युक्तानि [3-]उत्तमानडुद्भि:[-3] युक्तानि। सद्विजाशिषो द्विजाशीर्भि: सहिता:॥ ३४॥

**कृष्ण** इति। गोपविश्रम्भणं गोपानां विश्वासजनकं रुपं गत: प्राप्तस्सन् बलिमुपहारमादत् अभक्षयत्॥ ३५॥

**तस्मै** इति। तस्मै आत्मने आत्मना स्वयं व्रजजनै: सह नमश्चक्रे। अहो [4]इति सार्धश्लोकं पठन्॥ ३६॥

कामरुपी सर्पादिरूप:। अस्मै अद्रये। शर्मणे क्षेमाय॥ ३७,३८॥

★ कर्मैवालं प्राक्स्वभावो गुणा वा कर्माङ्गं वा तद्वशो वा महेश:। वार्ताकत्री देवतेतीयमुक्ता देवक्षोभे षण्मति र्नत्वभीष्टा॥

---

1. P.V omit रिं° 2. J °तेन 3- -3. उत्तमदृषभै: 4. P.V इत्यादि। ★ श्रीधरीयोऽयं श्लोक:

**वीर०** शक्रस्य [1-]दर्पं[-1] निरा चिकीर्षता कालात्मना कालरुपेण बहि: [2-]कालात्मना[-2] अन्त:पुरुष रुपेण च नियमयतेति भाव:। तेन भगवता प्रोक्तं निशम्य अतद्विद: शक्रदर्पजिघांसामजानना अपि नन्दाद्या: तत्साध्वगृह्णन् अभ्युपजग्मु:॥ ३१॥

ततो यथोक्तं चक्रु:, तदेवाऽऽह वाचयित्वेति। स्वस्त्ययनं पुण्याहं तद्द्रव्येण इन्द्रयागार्थद्रव्येण गिरिं द्विजाश्चोद्दिश्य॥ ३२॥

बलिं गवां यवसं च [3]उपहृत्य समर्प्य सर्वे नन्दादय आदरयुक्ता गोधनान्यग्रत: कृत्वा प्रदक्षिणं चक्रु:॥ ३३॥

अनडुद्युक्तानि वृषभयुक्तान्यनांसि शकटान्यारुह्य ते नन्दादयः तथा स्वलङ्कृताः गोप्यश्च द्विजानामाशीर्वादसहिताः कृष्णस्य चेष्टितानि गायन्त्यो गिरिं प्रदक्षिणं चक्रुरित्यन्वयः ॥ ३४ ॥

कथमयमचेतनो गिरिर्बलिं गृह्णाति? कथंतरामस्मानगृह्णाति चेत्यादि रुपां नन्दादीनामाशङ्का मपनुदन् कृष्णः स्वयं गोपानां विश्वासकरं तन्मध्य गतमेकमन्यच्च रुपं प्राप्तः तत्र बृहद्वपुष्मान् गिरेर्मूर्ध्नि स्थित्वा शैलोऽस्मीति ब्रुवन् बलिं स्वीकुर्वन् पुनर्गोप मध्य[4]गतरूपेण अहो इत्यादि सार्धश्लोकं पठन् गोपजनैस्सह महात्मने बृहद्वपुषे स्वस्मा एवतस्मै गिरिरूपाय नमश्चक्रे इत्यन्वयः। अहो! इति। अहो! हे गोपाः पश्यत, असौ शैलः रूपी अस्मदुपहृत बल्यादानोप युक्तरूपधरः नोऽस्माकमनुग्रहं व्यधादकरोत्। एष कामरूपी यथेष्टरूपग्रहण समर्थः गिरिः अवजानतः अवहेलनं कुर्वाणान् वनौकसो मर्त्यान् हन्ति अत आत्मनोऽस्माकं गवां च शर्मणे क्षेमाय अस्मै गिरये नमस्यामः नमः करवाम॥ ३५ - ३७॥

इति इत्थं वासुदेवेन चोदिता गोपाला अद्र्यादीनां मखं यथावद्विधाय कृष्णेन सहिता व्रजं प्रति जग्मुः ॥ ३८ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीविरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां चतुर्विंशोऽध्यायः ॥ २४ ॥

---

1- -1. A,B दर्पनाशं 2- -2. A,B काल रूपेण 3. A,B omit उपहृत्य 4. A,B गतेन

**विज०** शक्रदर्पजिघांसया शक्रादि देवानाम् असुरावेशाद्दर्पादिकं भवति तदनुग्रहार्थं तद्दर्पादिहननेच्छया, तदुक्तम् "अत्यल्पस्त्वसुरावेशो देवानां च भविष्यति" (भागवत तन्त्रे) इति॥ ३१ - ३४॥

गोपविश्रम्भणं गोपानां विश्वासकरं, आदत् भक्षितवान्॥ ३५॥

तस्मै आत्मने पर्वतरूपिणे सङ्कल्प्य नमनमिति तत्राह अहो इति॥ ३६ - ३८॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थ विरचितायां पदरत्नावल्यां टीकायां
दशमस्कन्धे पूर्वार्धे चतुर्विंशोऽध्यायः ॥ २४ ॥

(विजयध्वजरीत्या द्वाविंशोऽध्यायः)

# पञ्चविंशोऽध्यायः

## (विजयध्वजरीत्या त्रयोविंशोऽध्यायः)

श्रीशुक उवाच

इन्द्र स्तदाऽऽत्मनः पूजां विज्ञाय विहतां नृप ।
गोपेभ्यः कृष्णनाथेभ्यो नन्दादिभ्य श्चुकोप ह[1]॥ १ ॥

गणं [2]सांवर्तकं नाम मेघानाश्चान्तकारिणाम् ।
इन्द्रः प्राचो[3]दय त्क्रुद्धो वाक्यश्चाऽऽहेशमा[4]न्युत ॥ २ ॥

अहो श्रीमदमाहात्म्यं गोपानां काननौकसाम् ।
कृष्णं मर्त्य मुपाश्रित्य ये चक्रु र्देवहेलनम् ॥ ३ ॥

यथा दृढैः कर्ममयैः [5-]क्रतुभि र्नाम नौनिभैः[-5] ।
विद्यामान्वीक्षिकीं हित्वा तितीर्षन्ति भवार्णवम् ॥ ४ ॥

वाचालं [6-]बालिशं स्तब्ध[-6] मज्ञं पण्डितमानिनम् ।
कृष्णं मर्त्य मुपाश्रित्य गोपा मे चक्रु रप्रियम् ॥ ५ ॥

एषांश्रियाऽ वलिप्तानां [7]कृष्णेनाऽऽध्मायि तात्मनाम् ।
धुनुत श्रीमदस्तम्भं पशून्नयत संक्षयम् ॥ ६ ॥

अहञ्चैरावतं नाग मारुह्यानुव्रजे व्रजम् ।
मरुद्गणै र्महा[8]वीर्यै र्नन्दगो[9]ष्ठजिघांसया ॥ ७ ॥

---

1. A,B,G,J सः 2. A,V सं° 3. A °णो° 4. M,Ma मन्युना 5- -5. M,Ma कुप्लवैर्ज्ञान मानिनः 6- -6. M,Maमानिनं मत्तं 7. V मत्तानां ध्मा° M,Ma कृष्णेनाऽप्यायि° 8. A,B,G,J °वीर्यैः 9. K,T,W °प°

## श्रीधरस्वामिविरचिता भावार्थदीपिका

पञ्चविंशे रुषा शक्रे व्रजनाशाय वर्षति ।
उद्धृत्य गिरिं मासारा दरक्ष द्गोकुलं प्रभुः ॥

**इन्द्रेति।** कृष्णो नाथो येषां तेभ्यः ॥ १ ॥

**गण मिति।** क्रुद्धश्च सन्निन्द्रः। संवर्तकं[1] नाम, संवर्तः प्रलयः, तत्कर्तारं मेघानां प्रसिद्धं[2] गणं प्राचोदयत् प्रेषयामास। ननु कथं कृष्णनाथानां घाते प्रवृत्त इत्याशङ्क्य आत्मसम्भावनया निरस्तविवेकत्वात् इत्याशयेनाऽऽह वाक्यञ्चाहेत्यादि पञ्चभिः। ईशमानी अहमीश्वर[3] इति गर्ववान्॥ २ ॥

**अहो इति।** देवेहेलनम् देवस्य मम अवज्ञाम्॥ ३ ॥

**यथेति।** अदृढैः असमर्थैः। कर्ममयैः क्रियानिर्वर्त्यैः अत एव नामनौनिभैः नाममात्रेण या नाव[4] इतिव्यवह्रियन्ते[5] तत्सदृशैः। आन्वीक्षिकीमात्मानुस्मृतिरूपाम्॥ ४ ॥

**वाचालमिति।** तथा वाचालं बहुभाषिणं, बालिशं शिशुम् पण्डित मानिनम् [6-]पण्डितोऽह मित्यात्मानं मन्यमानम्[-6], अतः स्तब्धमविनीतमिति। निन्दायां योजिताऽपि इन्द्रस्य भारती श्रीकृष्णं स्तौति। तथा हि - वाचालं शास्त्र योनिम्, बालिशं एव मपि शिशुव न्निरभिमानिनम्, स्तब्धम् अन्यस्य वन्द्यस्याऽभावात् अनम्रम्। अज्ञं नाऽस्ति ज्ञो यस्मा त्तं सर्वज्ञ मित्यर्थः! पण्डितमानिनं ब्रह्मविदां बहु माननीयम् कृष्णम् सदानन्दरूपं परब्रह्म मर्त्यं तथाऽपि भक्तवात्सल्येन मनुष्यतया प्रतीयमान मिति॥ ५ ॥

**एषा मिति।** अवलिप्तानां मत्तानां ध्मायितात्मनां बृंहित देहानां धुनुत अपनयत। श्रीमदेन यः स्तम्भो गर्वः तं भिद्यत ॥ ६ ॥

तान्प्रत्याह **अह** मिति। अनुव्रजे[7] अनन्तर मेवाऽगमिष्यामि, मरुद्गणैः देवगणै स्सह॥ ७ ॥

---

1. A,B,J सां, 2. A, omits प्रसिद्धं; V प्रसिद्ध 3. A,B,J °मेवेश्वर 4. A,B,J नौः 5. A,B,J °यते 6- -6. A,B,J पण्डितम्मन्यं 7. A,B,J add अनु

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

[1-]ततः किं जातम्? तदाह[-1] - **इन्द्र** इति। हे नृप! तदा इन्द्रः स्वस्य पूजां कृष्णेन विहतां ज्ञात्वा। कृष्णो नाथो रक्षिता येषां तेभ्यो गोपेभ्यः चुकोप क्रुद्धवान्॥ १ ॥

तदा क्रुद्धः अन्तकारिणां [2-]प्रलयकारिणां[-2] मेघानां सांवर्तकाख्यं गणं प्राचोदयत्;[3] इदं वक्ष्यमाण वाक्यञ्चाह॥ २ ॥

तदेवाह - **अहो** इत्यादिभिः पञ्चभिः। काननौकसां गोपानां श्रीमदस्य धनसम्पत्तिकृतस्य मदस्य माहात्म्यं वैभवम्। अहो आश्चर्यकरम्। तदेव दर्शयति - ये गोपाः कृष्णं मर्त्यं मरणशीलमुपाश्रित्य देवस्य मम हेलन मपराधं चक्रुः, मद्यागं बभञ्जु रित्यर्थः ॥ ३ ॥

किं त्वद्यागमात्रेणे त्यत आह **यथेति**। [4]आन्विक्षिकीं[4] आत्मविद्यां हित्वा [5]विहाय केवलं दृढैः नौकातुल्यैः कर्मात्मकैः क्रतुभिः अस्मदाराधनात्मकैरेव साधनैः भवार्णवं [6]यथा तितीर्षन्ति [7]तरीतु मिच्छन्ति विवेकिन इति शेषः। अह मेव मुक्तिदोऽपि मद्याग एव तत्साधन मपीति भावः॥ ४॥

एवं सति केवलं वाचालं कुत्सितं बहु च वदन्तं बालिशं मूर्ख, स्तब्ध मविनीतम् अज्ञं पण्डित मात्मानं मन्यमानं मर्त्यं मन्निग्रहा न्मरिष्यमाणञ्च कृष्ण माश्रित्य ये गोपाः ममाऽप्रियं चक्रुः॥ ५॥

श्रिया सम्पदा गर्वितानां कृष्णेनाऽऽध्मायिताः वर्धिता आत्मानो देहाः येषां तेषां गोपानां श्रीमदप्रयुक्त मविनयं धुनुत अपाकुरुत। तथा पशून् संक्षयं नाशं नयत॥ ६॥

बिभ्यत स्तान्प्रत्याह आह - अहमद्य ऐरावतं गज मारुह्य महावेगै र्मरुद्भि स्सह व्रजं प्रति अनुव्रजे, युष्मत्पृष्ठत एव आगमिष्यमि। किमर्थम्? नन्दादयो [8]ये गोपा स्तेषां जिघांसया। हेत्वर्थे तृतीया। सनर्थस्तु अश्वेन जिगमिषतीतिव दविवक्षितः। हननार्थमित्यर्थः॥ ७॥

---

1- -1. T,W omit 2- -2. T,W omit 3. A,B add मन्युमानीशमानीति पाठान्तरम्। (वाक्यश्चाहीशमानी इत्यस्य स्थाने) 4- -4. K,T,W omit 5. K,T,W omit विहाय 6. T,W °थावत्ति° 7. A,B तर्तुं; T तरितुं 8. A,B omit ये।

## श्रीविजयध्वजतीर्थ कृता पदरत्नावली

गोवर्धनोद्धरणेन स्वनाथाः सगोधना गोपालाः इन्द्रकृतापदो रक्षिताः। एवं भक्तिज्ञानसम्पन्नान् संसारार्तान् प्राणिनो रक्षत्येवाऽधोक्षज इति प्रतिपादयितुमयमध्याय आरभ्यते। तत्र मुख्य प्राण मेकमन्तरेण अन्येषां देवादीना मत्यल्पा - सुरावेश स्तस्मिन् गते प्रकृति भावश्चेति उभयं दर्शयितु मुपक्रमते **इन्द्र** इति। विहतां निराकृतां कृष्ण एव नाथो येषां ते तथा, तेभ्यः। "क्रुधद्रुहेर्ष्याऽसूयार्थानां यम्प्रति कोपः" (अष्टा. 1-4-37) इति चतुर्थी। कृष्णं प्रति च कोपं कृतवानिति सूचनायेदं विशेषणम्। असुरावेशं प्रकटयतीति ज्ञायतेऽनेन। हेत्यनेन शक्रकोपेन कृष्ण माहात्म्य मेव प्रकाश्यते॥ १॥

अन्तकारिणां प्रलयं कुर्वता मित्यनेन भगवन्त मन्तरेण अन्यानिवर्त्यत्व माह - सांवर्तक मिति। अमुनैव जगत्क्षयकरत्वे सूचितेऽपि, अन्तकारिणा मिति तदेव विशेषितम्। प्राचोदयत् प्रेरितवा नित्यर्थः। ईशं कृष्ण मुद्दिश्य मन्युना कोपेन अह मेवेशो नाऽन्य इति मन्युना दैन्याभिमानेन वा। "मन्यु र्दैन्येक्रतौ क्रुधि" (वैज.को. 3-309) इति यादवः॥ २॥

मर्त्यं मरणधर्मत्वेनाऽनित्यं कृष्ण मुपाश्रित्य सर्वस्मा दधिकाश्रयोऽय मिति कृत्वा देवस्य त्रैलोक्याक्षेमुः मम हेलन मवज्ञां कृतवन्त इति अनेन ईशमन्युनेत्येत द्विवृतम्॥ ३॥

देवस्वभावत्वा दसुरावेशोऽपि तत्त्वमेव कथ्यत इत्याशयेनाऽऽह **यथेति**। अदृढै रसारैः अन्यत्र क्षरद्दारुकृतैः कर्ममयैः बहुव्यापारसाध्यैः, अन्यत्र तक्षणादि बहुकर्मसाधितैः कुत्सितै रल्पप्रयोजनैर्वा प्लवैः। "कुः पापोऽल्पार्थकुत्सयोः" (वैज.को. 8-7-3) इति यादवः। आन्वीक्षिकीं स्वानुकूलबिम्बदर्शनात्मिकां विद्याम् आत्मज्ञान मित्यर्थः॥४॥

वाचालम् "अस्ति चे दीश्वरः कश्चित्" (भाग 10-24-14) इत्यादि शास्त्र कुत्सित भाषणम्, अत एव "वर्तेत ब्रह्मणा" (भाग. 10-24-20) इत्यादि मानं प्रमाण मस्यास्तीति मानिनम्। "रजसा चौदिता मेघाः" (भाग. 10-24-23) इत्यादिना मत्तत्व मज्ञत्वञ्च लभ्यते। "आजी[10] व्येकतरं भावम्" (भाग. 1-24-19) इत्यादिना पण्डितमानित्वम्॥५॥

अवलिप्तानां दृप्तानां आप्यायितात्मनां वर्धितमनसाम्। धुनुत निराकुरुत॥६॥

नागं गजम्॥७॥

श्रीशुक उवाच

**इत्थं मघवताऽऽज्ञप्ता मेघा निर्मुक्तबन्धनाः।**
**नन्दगोकुल मासारैः पीडयामासु रोजसा॥८॥**

**विद्योतमाना विद्युद्भिः स्तनन्तः[1] स्तनयित्नुभिः।**
**तीव्रैर्मरुद्गणैर्नुन्ना ववृषुर्जलशर्कराः॥९॥**

**स्थूणास्थूला[2] वर्षधारा मुञ्चत्स्वभ्रेष्वभीक्ष्णशः।**
**जलौघैः प्लाव्यमाना भूः नाऽदृश्यत नतो न्नता[3]॥१०॥**

**अत्यासारातिवातेन[4] पशवो जातवेपनाः।**
**गोपा गोप्यश्च शीतार्ता गोविन्दं शरणं ययुः॥११॥**

**शिरस्सुतांश्च कायेन प्रच्छाद्यासारपीडिताः।**
**वेपमाना भगवतः पादमूल मुपाययुः॥१२॥**

---

1. A,M,Ma नदन्तः 2. M,Ma स्थाणु 3. A,B,G,J,M,Ma,T,V,W °तम् 4. V °पा°

**श्रीध० इत्थ** मिति। मघवता इन्द्रेण निर्मुक्तं बन्धनं येषां ते प्रलय[1-]भिया ये बद्धा[-1] आसन् ते[2] निर्मुक्त बन्धना स्सन्तः आसारैः धारासम्पातैः पीडयामासुः॥८॥

**विद्योतमाना** इति। स्तनयित्नुभिः अशनिभिः[3] स्तनन्तः गर्जन्तः मरुद्गणैः आवहप्रवहादिवायुसमूहैः नुन्नाः प्रेरिताः। जलशर्कराः जलोपलाः[4] ॥ ९॥

**स्थूणेति।** स्थूणावत् स्थूलाः अभ्रेषु मुञ्चत्सु[5] नतोन्नतं[6] नतं निम्नम्, उन्नतं तद्विपरीतं यथा भवति तथा भूर्नाऽदृश्यत॥ १०॥

**अत्यासारेति।** जातवेपना जातकम्पाः॥ ११॥

तत्र पशूनां[7] प्रयासं विशिनष्टि **शिर** इति॥ १२॥

---

1- -1. A,B,J °याभिप्रायेण बद्धा 2. A,B,J तदा 3. A °ध्वनिभिः 4. A,B,J °लान् 5. A,B,J add सत्सु 6. A,J omit नतं 7. A,B,J यानं

**वीर०** इत्थ मिन्द्रेणादिष्टा मेघाः मुक्तानि बन्धनानि शृङ्खलानि येषां तथाभूताः आगत्य आसारैः जल धारासम्पातैः यावद्बलं नन्दव्रजं पीडयामासुः॥ ८॥

पीडा मेव प्रपञ्चयति[1] द्वाभ्याम्। तटिद्भिर्विद्योतमानाः स्तनयित्नुभिः अशनिभिः गर्जन्तः। यद्यपि स्तनयित्नुशब्दो गर्जन्मेघपरः तथाप्यौचित्यात् एवं व्याख्यातम्। चण्डवातसङ्घातैः प्रेरिता स्सन्तो जल शर्कराः वर्षोपलान् ववृषुः[2]॥ ९॥

अभीक्ष्णशः अविच्छेदेन स्तम्भवत् स्थूला वर्षधाराः मेघेषु मुञ्चत्सु सत्सु जलप्रवाहैः प्लाव्यमाना सती पृथिवी तिम्नोन्नता नाऽदृश्यनि नतोन्नत मिति पाठे त द्यथा तथा (न) अदृश्यत॥ १०॥

अत्यासारै रत्यन्तवातेन च। अत्यासाराऽऽनिपाते नेति पाठे अत्यासारस्य अत्यन्तपातेन निष्ठुरपातेन् जातकम्पनाः पशवो गोपागोप्यश्च शीतेनाऽऽर्ताः पीडिताः भगवन्तं शरणंप्रापुः। परीता इति पाठे परितो व्याप्ता इत्यर्थः॥ ११॥

शरण याचन प्रकार मेवाऽऽह द्वाभ्याम् - **शिर इति।** जाता वेक वचनम्। शिरांसि स्वस्वसुतांश्च[3] [4-]कायेन प्रच्छाद्य[-4] आसार[5] पीडिताः[6] कम्पमानाः भगवतः पादमूल मुपाययुः॥ १२॥

---

1. K,T,W omit द्वाभ्याम् 2. T,W ववर्षुः 3. A,B omit स्व 4- -4. A,B देहेन आच्छाद्य 5. A,B °रैः 6. A,B omit पीडिताः

**विज०** निर्मुक्तबन्धनाः विगलितनिगडाः त्यक्तजलस्तम्भा इत्यर्थः। आसारै र्धारासम्पातैः,वेगवद्वर्षै रित्यर्थः। ओजसा स्वशक्तिलक्षणबलेन॥ ८॥

स्तनयित्नुभि र्गर्जितैः। "स्तनयित्नुर्हि गर्जितेऽभ्रे" (वैज.को. 8-1-46) इति यादवः। जलान्येव शर्कराः. श्वेतपाषाणशिलाः॥ ९॥

ऋट्यघप्लद्दनड़ड्यङ्क ऋट्यघकञप्ल ः, नतोन्नतं निम्नोच्चस्थलम्॥ १०,११ ॥

स्वकायेन शिरश्च सुतांश्च प्रच्छद्य॥ १२॥

**कृष्ण कृष्ण! महाभाग! त्वन्नाथं गोकुलं प्रभो।**
**त्रातु मर्हसि देवान्नः कुपिताद्भक्तवत्सल!॥ १३॥**
**[1-]शिलावर्षनिपातेन[-1] हन्यमान मचेतनम्।**
**निरीक्ष्य भगवान्मेने कुपितेन्द्रकृतं हरिः॥ १४॥**
**[2]अपर्त्वत्युल्बणं वर्ष मतिवातं शिलामयम्।**
**[3]स्वयागे [4]विहतेऽस्माभि रिन्द्रो नाशाय वर्षति॥ १५॥**
**तत्र प्रतिविधिं सम्यक् [5-]आत्मयोगेन साधये[-5]।**
**लोकेशमानिनां[6] मौढ्यात् हरिष्ये श्रीमदं तमः॥ १६॥**
**नहि [7]मद्भावयुक्तानां सुराणा मीशविस्मयः।**
**[8]मत्तोऽ सतां मानभङ्गः प्रशमा[9]योपकल्पते॥ १७॥**
**तस्मान्मच्छरणं गोष्ठं मन्नाथं मत्परिग्रहम्।**
**गोपाये स्वा[10]त्मयोगेन स्वोऽयं मे व्रत आहितः॥ १८॥**

---

1- -1. M,Ma शीतवर्षातिपातेन; V शिलावर्षातिपातेन। 2. A,M,Ma °र्ता वुल्बणं 3. M,Ma तन्मखे 4. A,B,J नि° 5- -5. A साधये योगमायया ः V ज्ञानयोगेन साधये 6. A,M,Ma °नो 7. A,B,G,J,V स° 8. M,Ma °त्तस्स 9. M,Ma पद्यते 10. V सात्र°

**श्रीध०** गोपगोपीनां प्रार्थना माह **कृष्णेति।** त्वमेव नाथो यस्य तद्गोकुलं गवां कुलं वंशं नः अस्मांश्च [1]कुपितात् देवादिन्द्रात् त्रातुं रक्षितुं अर्हसि॥ १३॥

**शिलेति।** विज्ञापनात्पूर्व मेव कुपितेनेन्द्रेण कृतं तद्वर्षं मेने॥ १४॥

कथं मेने? तदाह - **अपर्त्विति** अपगत ऋतु र्यस्य तद्वर्षं, अतिशयितो वातो यस्मिं स्तत्, अतिवातं शिलामयं शिलाप्रचुरम्॥ १५॥

तत्र प्रतिज्ञापूर्वकं गोवर्धनोद्धरण माह **तत्रेति।** [2]तत्र प्रतिविधिं [3]प्रतीकारं स्वसामर्थ्येन साधयिष्यामि। तेन च मौढ्यात् लोकेशमानिनां श्रीमदलक्षणं तमो हरिष्यामि बहुवचनेन वरुणादी नभिप्रैति॥ १६॥

ननु देवास्सात्विका स्त्वद्भक्ताश्च, कुतस्तेषां तमः? तत्राऽऽह **नहीति**। सद्भावस्सत्त्वम्, मद्भक्तिर्वा; तद्युक्तानां सुराणां ईशा वयमिति विस्मयो गर्वः। हि यस्मात् न घटते, अतोऽसन्तस्ते किञ्च तेषां मानभङ्गोऽनुग्रह एवेत्याह मत्त इति॥ १७॥

**तस्मा** दिति। गोपाये रक्षिष्यामि किञ्च सोऽयं मे मया व्रतो नियमः, सङ्कल्पो वा, आहितो धृत इत्यर्थः॥ १८॥

---

1. A,B,J omit कुपितात् 2. P,V omit तत्र 3. V °ति

**वीर०** हे महाभाग, अस्मद्रक्षोपयुक्तज्ञानरूप महाभाग्यशालिन्, त्वमेव नाथो यस्य तर्जकुलं कुपिता द्देवात्पर्जन्यात्[1] पातु मर्हसि। भक्तवत्सलस्याऽधुना उपेक्षा नोचितेति[2] तत्सम्बोधनाभिप्रायः॥ १३॥

शिलावर्षस्य निष्ठुरपातेन पीड्यमानम्, अत एव [3-]अचेतनं तत्[-3] जडीभूतं गोकुल मवलोक्य आश्रितार्तिहरो भगवान् कुपितेनेन्द्रेण कृत मेतत्कर्म इति मेने॥ १४॥

मननप्रकार मेवाऽऽह अपगतो वर्षऋतु र्यस्य, अत्यन्तो वातो यस्य, तच्छिलामय मुल्बणं वर्ष मस्माभिः स्वयागे विहते सति अस्मान्नाशाय वर्षति॥ १५॥

अथ भगवतः प्रतिज्ञापूर्वकं गोवर्धनोद्धरण माह - **तत्रेति**। तत्रैवं सति प्रतिविधिं वर्षप्रयुक्तपीडाप्रतीकारं स्वसामर्थ्येन साधयिष्यामि। मौढ्याल्लोकेश मात्मानं मन्यमानस्य श्री मदात्मकं तमः अज्ञानं तमोगुणकार्यं श्रीमदं[4] हरिष्यामि॥ १६॥

ननु उपेन्द्रादिरूपेण तद्रक्षणशीलः कथं तदनर्थोद्युक्तइत्यपवादशङ्कया स्वयमेव सोपपत्तिकं तत्समाधातु माह **नहीति**। मद्भावयुक्तानां मयि भक्त्यात्मक भावबन्धयुक्तानां सुराणां सत्त्वप्रचुराणां, ईशा वयमिति विस्मयो गर्वो नहि नास्त्येव। अथाऽपि प्रकृति वशात् कदाचिदसतां [5-]असज्ज्ञानानां[-5] ईशविस्मयवतां तेषां मानभङ्ग ईशविस्मयभङ्गः प्रशमायैवोपकल्पते। तद्रक्षैकशीलस्य मम तन्मानभङ्गद्वारा तदुपशान्त्युपयुक्तोद्योग उचित एवेति भावः॥ १७॥

तस्मा त्तदुद्योगस्य सूचितत्वात् गोकुलस्य शरणागतत्वाच्च, अह मेव नाथो रक्षिता यस्य, अह मेव रक्षणोपायो यस्य, अह मेव परिग्रहः शरण्यः प्राप्यो यस्य, तद्गोष्ठं, स्वात्मयोगेन स्वसामर्थ्येन गोपाये रक्षेयन्, सोऽयं शरणागतरक्षणमद्भक्त विस्मयभङ्गरूपो व्रतो मया आहितो धृतः॥ १८॥

---

1. A,B omti पर्जन्यात् 2. A,B अनुचि° 3- -3. K,T,W omit 4. A,B,K add वा 5- -5. K,T,W omit.

**विज०** अचेतनं निस्संज्ञम्॥ १३,१४॥

अपर्तौ अनृतौ अवृष्टिसमये इत्यर्थः ॥ १५॥

प्रतिविधिं परिहारं, आत्मयोगेन आत्मसामर्थ्येन स्वनिर्मितोपायेन वा, तमोऽज्ञानम्॥ १६॥

अज्ञान हरणेन किं प्रयोजन मित्याशङ्क्य संसार बन्धननिमित्ताहङ्कार नाशनार्थमित्याशयेनाऽऽह - **नहीति।** मद्भावयुक्तानां मद्भक्ति युक्तानाम्। इत्थ मर्थश्चेत्पाठोऽप्येवं किं न स्यादिति चेन्न, भक्तिशब्दार्थविवरणार्थत्वात्। तथा हि "भावो लीला क्रिया चेष्टा भक्त्यादिष्वर्थेषु" भावशब्दप्रवृतेः, भगवल्लीलादिमत्त्च प्रदर्शनेन सर्वकालं भगवत्येन मनोवृत्ति रिति प्रकाशनेन भक्ते स्तिमितत्व मुक्तं स्यादिति। ईशोऽहमिति स्मयोऽत्युल्बण दर्पो नहि। सतां स्वभावमाह मत्त इति। प्रशमांय प्रकृष्ट मन्निष्ठायै॥ १७॥

ममाऽयं जय स्तम्भ इत्याह **तस्मा दिति।** अह मेव परिग्रहो यस्य स तथा। "पत्नी स्वीकार शपथमूलेष्वपि परिग्रहः" (वैज. को 8-1-30) इति। क्रतो नियमो जयस्तम्भः। गोपाये पालयामि॥ १८॥

---

* Ref. वैजयन्ती Which reads - "भावो लीला क्रिया चेष्टा भूत्यभिप्रायजन्तुषु" (6-1-43)

**इत्युक्त्वैकेन हस्तेन कृत्वा गोवर्धनाचलम्।**
**दधार लीलया कृष्ण[1] च्छत्राक मिव बालकः ॥१९॥**

**अथाऽऽह भगवान् गोपान् हेऽम्ब! तात! व्रजौकसः।**
**यथोपजोषं विशत गिरिगर्तं सगोधनाः ॥२०॥**

**न त्रास इह वः कार्यो मद्धस्ताद्रिनिपातनात्[2]।**
**वातवर्षभयेना[3]ऽलं तत्त्राणं विहितं[4] हि वः ॥२१॥**

**तथा निर्विविशु[5] र्गर्तं[6] कृष्णाश्वासितमानसाः।**
**यथाऽवकाशं सधनाः[7] सप्रजा[8] गोपजीवि[9]तः ॥२२॥**

**क्षुत्तृड्व्यथां सुखापेक्षां हित्वा तै र्व्रजवासिभिः।**
**वीक्ष्य[10]माणो दधारा[11]ऽद्रिं सप्ताहं नाऽचलत्पदात्॥ २३॥**

कृष्ण योगोऽनुभावं तं निशा[12]म्येन्द्रोऽतिविस्मितः।
निस्तम्भो भ्रष्टसङ्कल्पः स्वा[13-]न्मेघान्स न्यवारयत्[-13] ॥२४॥

---

1. K,T,W विष्णुः 2. B,G,J °ने 3. M,Ma °यश्चालं 4. A,K,T,W मया 5. A,B,G,J,M,Ma° र्वि° 6. V °गर्ते 7. M,Ma सन्धानाः 8. A,B,G,J °व्र° 9. M,Ma °वनाः 10. T,W °क्ष° 11. A,B,G,J °वद्रिं 12. M,Ma °श° 13- -13. स्वयं मेघानवारयत्।

**श्रीध०** **इतीति**। कृत्वा उद्धृत्य छत्राकं [2-]शिलीन्ध्रं यथा[-2] ॥१९॥

**अथेति**। यथोपजोषं यथासुखम्॥२०, २१॥

**तथेति**। सव्रजाः शकटमाण्डली[3]सहिताः। सोपजीविनः भृत्य पुरोहितादिसहिताः ॥२२॥

**श्रुधिति**। पदात् स्थलात् ॥ २३, २४ ॥

---

1. A,B,J उत्कृत्य 2- -2 A,B,J उच्छिलीन्ध्रम् 3. B,J ◊ल◊

**वीर०** इतीत्थ मुक्त्वा एकेनैव हस्तेन गोवर्धनाचलं कृत्वा उत्कृत्य;- उत्पाट्येति यावत्। स[1-]प्तहा[-1]यनो विष्णुः श्रीकृष्णो लीलया शिलीन्ध्र मिव दधार, वाम करकनिष्ठिकानखाग्रेण दधारेत्यर्थः ॥१९॥

अथ धारणानन्तरं भगवान्गोपा नाह। उक्ति मेवाऽऽह अम्बेत्यादिना तथेत्यतः प्राक्तनेन। हे अम्ब हे तात! हे व्रजौकसः! यथासुखं सगोधनाः सर्वे यूयं गिरि[2]गर्तं [3]विशत॥२०॥

मद्धस्ता द्घोऽद्रेः [4-]पातः[-4] तस्मात् [5-]वः युष्माभिः[-5] इहाऽधुना त्रासो भयं न कर्तव्यः[6]। वातवर्षाभ्यां यद्भयं तेनाऽलम्। तन्नकर्तव्यम् इत्यर्थः तत्त्राणं वातवर्ष भयात्त्राणं मया विहितम्॥२१॥

तथा कृष्णेन समाधापितचित्ता सगोधना स्सपुत्र पौत्राः भृत्यपुरोहितादिवर्गसहितश्च सर्वे व्रजैकसो यथावकाशम् असङ्कीर्णं यथातथा गिरिगर्तं विविशुः॥२२॥

स्वावलोकनजानन्दपूर्त्यैव तेषां क्षुत्तृट्कृतपीडां वारयन् सप्ताहं तथा दधारेत्याह। क्षत्तृड्व्यथां सुखापेक्षां च हित्वा केवल मीक्षमाणो भगवान् सप्ताह मद्रिं दधार। पदा न्नचचाल। यत्र उद्धार समये पदं विन्यस्तं न तत श्चचालेत्यर्थः॥२३॥

तत स्तं कृष्णस्य योगानुभावं सामर्थ्यप्रभावं दृष्ट्वा इन्द्रोऽतीव विस्मितः भ्रष्टसङ्कल्पः अत एव निस्तम्भो निगर्वः मेघान्न्यवर्तयत्॥२४॥

---

1- -1. A,B वर्षो 2. A,B खातं° 3. A,B निर्वि° 4- -4. B निपातनात् 5- -5. K,T,W omit 6. A,B ° व्यम्

**विज०** कृत्त्वा उन्मूल्य। 'कृतीच्छेदने' छत्राकं शिलीन्ध्रं, यथोपजोषं यथासुखं, गर्तं बिलम्॥ १९,२०॥

वातवर्षनिमित्तं भयं अलं निवारितम्। "अलन्तु भूषणे शक्तौ पर्याप्तौ विनिवारणे" (वैज. को. 8-7-13) इति यादवः। तत्राणं तस्मा द्भया द्रक्षणम्॥ २१॥

कृष्णेनाऽऽश्वासितमानसाः आप्यायितमनोरथाः सोपजीवनाः व्रीहितन्दुलादि शरीरयात्रासाधनैः सहिताः ॥२२॥

सुखापेक्षां शयनासनवसनादिसुखसाधन श्रद्धां हित्वा मुक्त्वा॥ २३॥

योगानु भावं योगैश्वर्यम्। अनुभावः प्रभावे स्यान्निश्चये भाव सूचके" (वैज. को. 8-1-8) इति। महापुरुषान्दृष्ट्वा स्थाणुवत्प्रावण्याराहित्यं स्तम्भः, तद्रहितो निस्तम्भः। भ्रष्टसङ्कल्पः गलित मनोरथः॥ २४॥

**खं व्यभ्र मुदितादित्यं वातवर्षञ्च दारुणम्।**
**निशा[1]म्योपरतं गोपान् गोवर्धनधरोऽब्रवीत्॥ २५॥**

**निर्यात त्यजत त्रासं गोपा स्सस्त्रीधनार्भकाः।**
**उपारतं वातवर्षं व्युदप्रायाश्च निम्नगाः॥ २६॥**

**तत स्ते निर्ययु र्गोपाः स्वं[2] स्व मादाय गोधनम्।**
**शकटो[3]ढोपकरणं स्त्रीबाल स्थविरा श्शनैः॥ २७॥**

**भगवानपि तं शैलं स्वस्थाने पूर्ववत्प्रभुः।**
**पश्यतां सर्वभूतानां स्थापयामास लीलया॥ २८॥**

---

1. M,Ma °श° 2. T,W °स्व° 3. A,M,Ma °टाटोप°

**श्रीध० निर्यातेति।** व्युदप्रायाः विगतोदकपायाः स्वल्पजला इत्यर्थः॥ २५,२६॥

**तत** इति। शकटोढोकरणं शकटै रूढ मुपकरणं यथा भवति तथा॥ २७,२८॥

**वीर०** तत उपरतं वात वर्षम्। अत एव विगतान्यभ्राणि यस्मात्, अत एव उदितः प्रकाशमान आदित्यो यस्मिन् तदाकाशञ्चदृष्ट्वा गोवर्धनधरो भगवान् गोपा नाह॥ २५॥

[1]उक्तमेवाह - **निर्यातेति**।हे गोपाः! स्त्रीभिर्धनैः अर्भकैश्च सहिता निर्गच्छत। त्रासं भयं त्यजत। वातवर्षमुपारतं निवृत्तम्। निम्नगाः[2] व्युदप्रायाः निरुदकप्रायाश्च स्वल्पजलाश्चेत्यर्थः॥ २६॥

ततो भगवदुक्त्यनन्तरं सर्वे गोपाः स्त्रियो बालाः स्थविरावृद्धाश्च शनै श्शकटै रूढानि गृहोपकरणानि यस्मिन् तद्यथा भवति तथा। स्वं स्वं गोधन मादाय निर्ययुः गर्तान्निर्जग्मुः ॥ २७॥

अथ [3-]प्रभुःसमर्थो[-3] भगवानपि सर्वभूतानां पश्यतां सतां लीलया [4-]पर्वतं शैलं गोवर्धनं[-4] स्वस्थाने स्थापयामास॥ २८॥

---

1. A,B °क्ति° 2. A,B,K add 3- -3. K,T,W omit 4- -4. K,T,W omit.

**विज०** व्यभ्रं विगतमेघं, वातश्च वर्षश्च वातवर्षम्, एकवद्भावः ॥ २५॥

व्युदप्रायाः विगतजल प्रायाः ॥ २६॥

शकटाटोपकरणं शकट गत मुपकरणं जीवन साधनं शकटाटोपकरणञ्चाऽऽदाय, गतौ शकटपरिवर्तनेन आटोपकरणं सम्भ्रमविधि र्यथा भवति तथा इति वा॥ २७,२८॥

तं प्रेमवेगा न्निभृता [1]व्रजौकसो यथा समीयुः परिरम्भणादिभिः।
गोप्यश्चसस्नेह मपूजयन्मुदा दध्यक्षताद्भि [2]र्युयुजु स्सदाशिषः ॥ २९॥

यशोदा रोहिणी नन्दो रामश्च बलिनां वरः।
कृष्ण मालिङ्ग्य युयुजु राशिषः स्नेहकातराः ॥ ३०॥

दिवि देवगणा [3]स्साध्या स्सिद्धगन्धर्व चारणाः।
तुष्टुवु [4]र्मुमुचु स्तुष्टाः पुष्पवर्षाणि [5]पार्थिव॥ ३१॥

शङ्ख दुन्दुभयो नेदु र्दिविदेव [2]प्रचोदिताः।
जगुर्गन्धर्वपतय स्तुम्बुरुप्रमुखा नृप॥ ३२॥

ततोऽ नुरक्तैः पशुभिः परिश्रितो [7]राजन्स्वगोष्ठं सबलेऽ[8]व्रजाद्धरिः।
तथाविधान्यस्य कृतानि गोपिका गायन्त्य ईयु र्मुदिता हृदि स्पृशः ॥ ३३॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीव ब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे पूर्वार्धे पञ्चविंशोऽध्यायः ॥ २५॥

---

1. A,B,G,J,M,Ma व्रजौ 2. M,Ma °स्तथाऽऽ° 3. M,Ma स्सर्वे 4. M,Ma,T,W °स्सर्वे 5. M,Ma भारत! 6. A,B,G,J °णो° 7. A,B,G,J,M,Ma °न्स° 8. A,B,G,J °व्रज°

**श्रीध० तमिति।** निभृताः पूर्णाः यथा यथोचितं, परिरम्भणादिभिः समीयु रुपजग्मुः। सदाशिषः श्रेष्ठा नाशीर्वादान्॥ २९ - ३२॥

तत इति। ततो गोवर्धनस्थानात्, अस्य कृष्णस्य तथा विधानि गोवर्धनोद्धरणादिरूपाणि [1] कृतानि कर्माणि गायन्त्य ईयु र्ययुः। कथम्भूताः? एवं प्रेम्णा हृदि स्पृशन्तीति हृदिस्पृशः। यद्वा कथम्भूतस्य? प्रेष्ठत्वेन तासां [2] हृदि [3] स्पृशतीति हृदिस्पृक्, तस्य॥ ३३॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामि विरचितायां भावार्थदीपिकायां
पञ्चविंशोऽध्यायः॥ २५॥

---

1. A adds तानि 2. A,B omit हृदि 3. B omits स्पृशतीति।

**वीर०** तं स्थापितवन्तं भगवन्तं प्रेमातिशयात् परिरम्भणादिभिः यथार्हं सञ्जग्मुः निभृता स्सुखिताश्च बभूवुः। तथा गोप्यश्च दध्यादिभिः सस्नेहं यथा भवति तथा मुदा हर्षेण अपूजयन्। सदाशिषः श्रेष्ठाशीर्वादान् प्रयुयुजुः॥ २९॥

**यशोदेति।** [1-] यशोदादयः [-1] स्नेहकातराः स्नेहेन व्याकु[2]लितचित्ताः॥ ३०॥

**दिवीति।** [3] दिवि देवगणादयः तुष्टा स्तुष्टुवुः पुष्पवर्षाणिमुमुचुः। [4] ववृषुश्च। हे पार्थिव!॥ ३१॥

**शङ्खेति।** [5-] शङ्खादयो [-5] नेदुः दध्वनुः हे नृप!॥ ३२॥

ततो राजन्! अनुरक्तैः पशुपालैः परिवृतो बलदेवेन सहितो हरिः स्वगोष्ठं जगाम। गोपिकाश्च तथाविधानि गोवर्धनोद्धरणतुल्यानि अमानुषाणि [6] अस्य भगवतः कृतानि कर्माणि गायन्तः हृदिस्पृशः श्रीकृष्ण हृदयङ्गमास्सत्यः हृदिस्पृश इति भगवद्विशेषणं वा। मुदितास्सत्यः ईयुः व्रजं जग्मुः॥ ३३॥

इति श्रीमद्भागवते दशम स्कन्धे पूर्वार्धे
श्रीवीराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां पञ्चविंशोऽध्यायः॥ २५॥

---

1- -1. K,T, W omit 2. A,B °लचि° 3. K,T omit दिवि 4. T,Wववर्षुश्च 5- -5. K,T,W omit 6. A,B add अन्यान्यपि।

**विज०** प्रेमवेगात्प्रेमोद्रेकात् निभृता निश्चलाः पूर्णानन्दा वा। समीयुः समाजं प्राप्ताः॥ २९॥

स्नेहकातराः स्नेहकलिलान्तःकरणाः ॥ ३०-३२ ॥

हृदिस्पृशः मनोहराः । 'हृद्युभ्या मुपसंख्यानम् (अष्टा. 6-3-8 under वार्तिक) इत्यलुक् ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थ विरचितायां पदरत्नावल्यां टीकायां
दशमस्कन्धे पूर्वार्धे पञ्चविंशोऽध्यायः ॥ २५ ॥
(विजयध्वजरीत्या त्रयोविंशोऽध्यायः)

# षड्विंशोऽध्यायः

## (विजयध्वजरीत्या चतुर्विंशोऽध्यायः)

श्रीशुक उवाच

एवंविधानि कर्माणि गोपाः कृष्णस्य वीक्ष्य ते।
[1]नतद्वीर्यविदः प्रोचुः [2-]नन्द मभ्येत्य वि[-2]स्मिताः ॥ १ ॥

बालकस्य यदेतानि कर्माण्यत्यद्भुतानि वै।
कथ मर्हत्यसौ जन्म ग्राम्येष्वात्मजुगुप्सितम् ॥ २ ॥

यस्सप्तहायनो बालः करेणैकेन लीलया।
कथं बिभ्रद्गिरिवरं पुष्करं गजराडिव ॥ ३ ॥

तोकेना[3]ऽऽमीलिताक्षेण पूतनाया महौजसः।
पी[4]तः स्तन स्सह प्राणैः कालेनेव वय स्तनोः ॥ ४ ॥

हिन्वतोऽधश्शयानस्य मास्यस्य चरणा वुदक्।
अनोऽपत द्विपर्यस्तं रुदतः प्रपदा हतम् ॥ ५ ॥

एकहायन आसीनो ह्रियमाणो विहायसा।
दैत्येन यस्तृणावर्त महन्कण्ठग्रहातुरम् ॥ ६ ॥

क्वचिद्धैयङ्गवस्तैन्ये मात्राबद्ध उलूखले।
गच्छन्नर्जुनयो र्मध्ये बाहुभ्यां तावपातयत् ॥ ७ ॥

---

1. A,B,G,J,V अ° 2- -2. A,B,G,J समभ्येत्य सुवि; M,Ma समुपेत्य सुवि° 3. K,T,W °न मी° 4. M,Ma °तं

## श्रीधरस्वामिविरचिता भावार्थदीपिका

षड्विंशे विस्मितान् गोपान् कृष्णस्याद्भुतकर्मभिः।
नन्दो गर्गोक्ति मा[1]शंस्य तदैश्वर्य मवर्णयत्।

**एवमिति**। [2-]नन्द मभ्येत्य[-2] नन्दं [3-]उपागम्य[-3] ॥ १ ॥

यदूचु स्तदाह - **बालकस्येति**। यत् यस्मात् अद्भुतानि कर्माणि तस्मा दग्राम्येषु गोपालेषु कथं जन्मार्हति? आत्मजुगुप्सितम् आत्मानर्हम् ॥ २ ॥

अद्भुतानि कर्माण्याहुः [4-]द्वादशभिः[-4] **य** इति। [5-]यस्सप्तहायनः[-5] कथं बिभ्रत् स्थित इति। पुष्करं पद्मं गजराट् महागज इव ॥ ३ ॥

**तोकेनेति**। महौजसः महाबलायाः तनोर्वयः आयुः यौवनं वा, कालेन यथा पीयते तद्वत्। कथ मित्यनुवर्तते ॥ ४ ॥

**हिन्वत** इति। अनसोऽधश्शयानस्य मास्यस्य मासाः त्रयः परिच्छेदका यस्य। उदक् ऊर्ध्वं चरणौ हिन्वतः चालयतः प्रपदेन पादाग्रेण आहतं विपर्यस्तं अनः कथमपतत् ॥ ५ ॥

**एकहायन** इति। यः [6]कृष्णः दैत्येन ह्रियमाणस्सन् तं तृणावर्तं दैत्यं कथं अह न्नित्यर्थः ॥ ६ ॥

**क्वचि** दिति। हैयङ्गवस्तैन्ये नवनीतचौर्ये। हैयङ्गवीन मिति वक्तव्ये हैयङ्गव मिति प्रयोग आर्षः। एव मेव सर्वत्राऽपि ज्ञेयम्। "[7-]हैयङ्ग वीनं संज्ञायाम्[-7]" इति। बाहुभ्यां गच्छन् [8]चर न्नित्यर्थः ॥ ७ ॥

---

1. A,B,J °श्राव्य 2- -2. A,B,J समभ्येत्य 3- -3. A समभिगम्य; B,J अभिगम्य 4- -4. A,B,J omit 5- -5. A,B,J omit 6. P,V omit कृष्णः 7- -7. A,B,J omit 8. A,B,J रिङ्ग°

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथामानुष गोवर्धनोद्धरणात्मक चेष्टित स्मारितपूतनाशकटासुरवधादिवृत्तान्तै रतिमानुषैः कृष्ण ममानुषं शङ्कमानैर्गोपैः पृष्टो नन्दो गर्गगीतानुवादेन साक्षादयं नारायणो न केवलं मर्त्य इत्याहेत्याह मुनिः षड्विंशेन **एवमिति**। ते गोपाः कृष्णस्य एवंविधानि गोवर्धनोद्धरणादिव मानुषाणि पूतनादिवधात्मकानि कर्माणि वीक्ष्य अनुस्मृत्य, नतद्वीर्यविदः कृष्णासाधारणजगद्व्यापारादिरूपापार महिमान मजानन्तः केवल मेतै रेव कर्मभिः तं विस्मयपूर्वक माशङ्कमानाः विस्मयप्रयुक्तमुखविकासयुक्ताः नन्द मभिगम्योचुः ॥ १ ॥

उक्त मेवाऽऽह **बालकस्ये** त्यादिभि स्त्रयोदशभिः। यत् यस्मात्, एतानि बालकस्य कर्माणि [1]अद्भुतानि, तस्मा दग्राम्येषु गोपेषु कथमसा वात्मनः स्वस्य जुगुप्सितं अननुरूपं जन्मार्हति ॥ २ ॥

[2]अद्भुतानि [3]कर्माण्येवाऽऽहु द्वादशभिः **य इति**। यः कृष्णः कथं बिभ्रत् स्थितः। पुष्करं पद्मं महागज इव। धारणायोग्यत्व सूचकं बाल स्सप्तहायन इति च विशेषणद्वयम्। साधनत्वायोग्यत्वसूचनाय करेणैकेनेत्युक्तम्। धार्यत्वानर्हत्व सूचनाय गिरिवर मित्युक्तम्। एव मुत्तरत्राऽपि द्रष्टव्यम् ॥ ३ ॥

**तोकेनेति**।[4] महौजसो महाबलायाः पूतनायाः प्राणै स्सह स्तनः तोकेन शिशुना तत्राऽपि मीलिताक्षेण नेत्रोन्मीलनेऽपि असमर्थवयसे[5]ति भावः। कथं पीतः? यथा तनो श्शरीरस्य वयो यौवनं कालेन पीयते तद्वत् ॥ ४ ॥

**हिन्वत** इति। शकटस्याधश्शयानस्य बालस्य। मास्यस्येतिपाठे मासास्त्रयः परिच्छेदका यस्य तस्य उदगूर्ध्वं चरणौ हिन्वतश्चालयतः रुदतश्च प्रपदा पादाग्रेणा[6]ऽऽहतमन श्शकटं विपर्यस्तं सत् कथ मपतत्? सर्वत्र कथंशब्दोऽनुवर्तते॥ ५॥

**एकहायन** इति। यः कृष्णः एकाब्दवयस्को भुवि निषण्णो दैत्येन तृणावर्तेन आकाशमार्गेण नीयमानः तं कण्ठग्रहणेन आतुरं पीडितं तृणावर्तं कथ महन् हतवान्[7]॥ ६॥

**क्वचिदिति।** कदाचिन्नवनीतचौर्ये सति क्रुद्धया मात्रा [8-]यशोदया[-8] उलूखले बद्धो बाहुभ्यामर्जुनयो र्मध्ये गच्छन् रिङ्गन् तावर्जुनौ कथ मपातयत्॥ ७॥

---

1. A,B,K अत्यद्भु° 2. K अत्यद्भु° 3. A,B add अस्य 4. A,B add किञ्च 5. A,B °स्केनेति 6. A,B °ण हत° 7. T,W omit हतवान्
8- -8. K,T,W omit

## श्रीविजयध्वजतीर्थ कृता पदरत्नावली

अनुस्मरणार्थ माप्रेङ्खाश्रितवयः सप्तवर्षपर्यन्तं बालचरित मनुक्रम्यतेऽस्मिन्नध्याये। तत्र श्रीशुको गोपानां सङ्कथन प्रकारं कथयति **एवंविधानीति।** ये गोपाः कृष्णस्यैवंविधानि कर्माणि वीक्ष्य तत्र तत्र साक्षा दृष्ट्वाऽपि तस्य कृष्णस्य वीर्यं माहात्म्यं विदन्ति जानन्ति ते तद्वीर्यविदः न भवन्ति ते, गोपाः समेत्य सम्भूय प्रोचुः व्याकुर्वन्नित्यन्वयः॥ १॥

बालस्यैतानि कर्माण्यत्यद्भुतानि वक्तु मशक्यानि वा इति यत्तस्मा दसौ आत्मनः स्वस्य जुगुप्सितं ग्राम्येषु विषयिजनेषु जन्म कथ मर्हति, निरूप्यमाणे न योग्य इत्यन्वयः॥ २॥

कानि तानि कर्माणीति तत्राऽऽहुः **य** इति बिभ्रत् अबिभ्रत्। पुष्करं पद्मम्॥ ३॥

तोकेन शिशुना आमीलिताक्षेण ईषत्फुल्लनेत्रेण महौजसः महाबलायाः अधृष्यावष्टम्भाया वा। "ओजोऽवष्टम्भ बलयोः" (वैज.को. 6-3-4) इति। स्तनं पीतं वय मद्राक्ष्मेति शेषः। कालेनाऽन्तकेन॥ ४॥

चरणा वुदक् ऊर्ध्वं हिन्वतः उत्क्षिपतः मास्यस्य मासमात्रवयस्कस्य प्रपदेन पादाग्रेणाऽऽहतं पीडितम्॥ ५॥

एक एव हायनो वर्षं वत्सरो यस्य स तथा। तृणावर्तमहन्निति यत्कर्म तदपि॥ ६॥

हैयङ्गवं हैयङ्गवीनं सद्योदधिमन्थने जातं नवनीतं तस्य स्तैन्ये चौर्ये सति। बाहुभ्यां गच्छन्निति सम्बन्धः॥ ७॥

**वने सञ्चारय न्वत्सा न्सरामो बालकै र्वृतः।**
**हन्तुकामं बकं दोर्भ्यां मुखतोऽरि मपाटयत्[1]॥ ८॥**

**वत्सेषु वत्सरूपेण प्रविशन्तं जिघांसया।**
**हत्वा न्यपातयत्तेन कपित्थानि च लीलया॥ ९॥**

**हत्वा रासभदैतेयं तद्बन्धूंश्च बलान्वितः।**
**चक्रे तालवनं क्षेमं परिपक्वफला[2]न्वितम्॥ १०॥**

**प्रलम्बं घातयित्वोग्रं बलेन बलशालिना।**
**अमोचय द्व्रजपशून् गोपांश्चाऽऽरण्य वह्निना॥ ११॥**

**आशीवि[3]षतमाहीन्द्रं दमित्वा विमदं ह्रदात्।**
**प्रसह्योद्वास्य यमुनां चक्रेऽसौ निर्विषोदकात्॥ १२॥**

**दुस्त्यजश्चाऽनु रागोऽस्मिन्सर्वेषां नो व्रजौकसाम्।**
**नन्द ते तनयोऽस्मासु तस्याऽप्यौत्पत्तिकः कथम्॥ १३॥**

**क्व सप्त हायनो बालः क्व महाद्रिविधारणम्।**
**ततो नो जायते शङ्का व्रजनाथ तवाऽऽत्मजे॥ १४॥**

---

1. T,W °त° 2. M,Ma °लोचितम् 3. M,Ma °षं महारौद्रं

**श्रीध० वने** इति। मुखतो हन्तुं कामो यस्य तं बकवेषमरिं बाहुभ्यां मुखतः कथ मपाटयत्॥ ८-११॥

**आशीविषेति।** आशीविषतमः अतिक्रूरविषश्चाऽसौ अहीन्द्रश्च तम्॥ १२॥

**दुस्त्यज** इति। औत्पत्तिकः स्वाभाविकः। कथमिति किं सर्वेषा मय मात्मा स्यादिति शङ्का॥ १३॥

उक्त मपि अनिविस्मयेनाभिनयेन वदन्ति **क्व सप्त हायन** इति॥ १४॥

**वीर० वने** इति। रामेण सहितो बालकैश्च वृतो वत्सान् वने स[1]म्यक् चारयन् जिघांसुं बकासुर मरिं मुखे भुजाभ्यां कथं अ[2]पाटयत् विदारितवान्॥ ८॥

**वत्सेष्विति।** हन्तु मिच्छया वत्सरूपेण वत्सेषु प्रविष्टं वत्सासुरं हत्वा लीलया न्यपातयत्। तेन पातितेन दैत्य[3]कलेबरेण कपित्थानि च न्यपातयत्॥ ९॥

**हत्वेति।** बलदेवेन सहितो रासभासुरं, तद्बन्धूंश्च हत्वा परिपक्वैः फलै रन्वितं तालवनं क्षेमं चक्रे। सर्वैः प्र[4]वेष्टुं क्षेमं चक्रे इत्यर्थः॥ १०॥

**प्रलम्ब** मिति। बलशालिना बलदेवेन उग्रं प्रलम्ब मसुरं घातयित्वा स्वयं व्रजपशून् गोपांश्च दवाग्ने रमोचयत्॥ ११॥

**आशीविषेत्यादि।** आशीविषतमः अतिक्रूरविषः स चाऽऽसौ अहीन्द्रश्च, तम्। बला द्दमित्वा त[5]तो विगतमदं त[6]ं ह्रदा दुद्वास्य निष्कास्य यमुनां निर्विषोदकां चक्रे॥ १२॥

**दुस्त्यज** इति। हे नन्द! ते[7] तव तनयेऽस्मिन् कृष्णेनाऽस्माकं सर्वेषां व्रजौकसा मनुरागः दुस्त्यजः कथम्? तस्यैवंविधातिमानुषचेष्टितस्य अस्मासु औत्पत्तिकः जन्मसिद्धोऽनुरागः कथम्? अतस्सर्वशक्तिः सर्वेषा मात्मा ेव किं तवाऽऽत्मज इति आशङ्कामह इति भावः ॥ १३॥

**अन्यथैतन्न** घटत इत्याशङ्कामेवाऽऽविष्कुर्वन्ति **क्वेति**। हे व्रजनाथ! ततोऽद्रिधारणादेः, तवाऽऽत्मजे शङ्का सर्वशक्तिपरमात्मशङ्का जायते॥ १४॥

---

1. T,W omit सम्यक् 2. T,W omit अपाटयत् 3. A,B देहेन 4. K क्षमं 5. A omits ततो 6. B omits तं 7. K omits ते

**विज०** मुखतः मुखे, गृहीत्वेति शेषः अपाटयत् व्यदारयत्॥ ८॥।

तेन दैत्येन कपित्थानि कपित्थबीजानि। "फले लुक्"॥ ९॥

क्षेमं प्राप्तरक्षम्॥ १०, ११॥

दमित्वा निगृह्य, उद्वास्य उच्चाटयित्वा॥ १२॥

अनुरागो हृदयङ्गमः स्नेहः। औत्पत्तिकः उत्पत्तिसिद्धः, कथम्?॥ १३॥

"ततो नो जायते शङ्का" इत्यादिना नतद्वीर्यविद इति स्पष्टीकृतम्॥ १४॥

**नन्द उवाच**

**श्रूयतां मे वचो गोपाः व्येतु शङ्का च[1] वोऽर्भके।**
**एनं कुमार मुद्दिश्य गर्गो मे य दुवाच ह[2]॥ १५॥**

**वर्णा स्त्रयः किलाऽस्याऽऽसन्गृह्णतोऽनुयुगं तनूः।**
**शुक्लो रक्त स्तथा पीत इदानीं कृष्णताङ्गतः॥ १६॥**

**प्रागयं वसुदेवस्य क्वचिज्जात स्तवाऽऽत्मजः।**
**वासुदेव इति श्रीमा नभिज्ञा स्सम्प्रचक्षते॥ १७॥**

**बहूनि सन्ति नामानि रूपाणि च सुतस्य ते।**
**गुणकर्मानुरूपाणि तान्यहं वेद नो जनाः[3]॥ १८॥**

**एष वश्श्रेय आधास्य द्गोप गोकुलनन्दनः।**
**अनेन सर्व[4] दुर्गाणि यूय मञ्ज स्तरिष्यथ॥ १९॥**

**पुराऽनेन व्रजपते साधवो दस्युपीडिताः।**
**अराजके रक्ष्यमाणा जिग्यु र्दस्यून् समेधिताः[5]॥ २०॥**

1. V ममार्भके 2. K,V तत् 3. M,Ma °नः 4. V बहु 5. V °तान्।

**श्रीध०** प्राक्श्रुत मेवगर्गाचार्यवाक्यं तच्चरित्रपरिशीलनेन निवृत्ताऽसम्भावनस्य नन्दस्य कृष्णतत्त्वावबोधकं जातम्। सइदीनीं तेनैव वाक्येन गोपा नुपदिशति श्रूयता मिति॥ १५-२०॥

**वीर०** एव मापृष्टः प्राक् श्रुत श्रीकृष्ण जातकात्मक गर्गवाक्यो नित्यं तच्चरित्र परिशीलन निवृत्तेश्वरत्वासम्भवनो नन्दस्तेनैव गर्गवाक्येन गोपाना माशङ्का मपनुदति। हे गोपाः! एनं कृष्ण मुद्दिश्य गर्गो यदुवाच तच्छ्रूयताम्, तच्छ्रवणेनैव अस्मिन्नर्भके विषये भवतां शङ्का व्येतु निवर्तताम्॥ १५॥

किं तद्गर्गोक्तं येन शङ्का व्येति इत्यत्र तदेवाऽऽह **वर्णा** इत्यादिभिः इत्यद्धेत्यतः प्राक्तनैः, इमे श्लोकाः पुरस्ता देव व्याख्याताः ॥ १६-२०॥

**विज०** व्येतु विगता भवतु। वः युष्माकं प्रसक्तकथां प्रति अन्तरङ्गत्वेन कथान्तरमारभ्यत इति सूचनाय हकारः। "प्रत्यारम्भे प्रसिद्धौ ह" (वैज.को. 8-7-8), "हा विषादशुगार्तिषु" (वैज.को. 8-7-8) इति च॥ १५॥

वर्णा श्शुक्लाद्याः ॥ १६॥

क्वचि न्मधुराया वसुदेवस्य सकाशात्, अभिज्ञाः वसुदेवस्याऽपत्य मिति तद्धितप्रत्ययज्ञान पटवः ॥ १७॥

न केवल मेत देव नामरूपत्रय मेव, अपितु अन्या न्यपि सन्ती त्याह **बहूनीति।** नारायणादीनि गुणानु रूपाणि मधुसूदनादीनि कर्मानुरूपाणि॥ १८॥

आधास्यत् आधास्यति। यद्वा यदि यूय मस्मिन् भक्त्युद्रिक्तं चित्त मकरिष्यन् तर्ह्ययं वः पुरुषार्थलक्षण माधास्यत्। "लिङ्निमित्ते लृङ्क्रियातिपत्तौ (अष्टा. 3-3-139) इति सूत्रादयं विधिः ॥ १९,२०॥

**स एतस्मिन्महाभागे[1] प्रीतिं कुर्वन्ति मानवाः।**
**नाऽरयोऽभिभवन्त्येता न्विष्णुपक्षा निवाऽसुराः ॥ २१॥**

**तस्मान्नन्द! कुमारोऽयं नारायण समोगुणैः।**
**श्रिया कीर्त्याऽनुभावेन तत्कर्मसु न विस्मयः ॥ २२॥**

**इत्यद्धा मां समादिश्य गर्गे च स्वगृहं गते।**
**मन्ये नारायणस्यांशं[2] कृष्ण मक्लिष्टकारिणम्॥ २३॥**

**इति नन्दवच श्श्रुत्वा गर्गगीतं व्रजौकसः ।**
**★ दृष्ट श्रुतानुभावा स्ते कृष्णस्याऽमिततेजसः ॥**
**मुदिता नन्द मानर्चुः कृष्णश्च[3] गतविस्मया[3]ः ॥ २४ ॥**

**देवे वर्षति यज्ञविप्लवरुषा वज्राश्मवर्षानि[4]लैः**
**सीदद्बाल[5]पशुस्त्रि आ[6]त्मशरणं दृष्ट्वाऽनुकम्प्युत्स्मयन्[7] ।**
**उत्पाटचैककरेण शैल मबलो लीलोच्छिलीन्ध्रं यथा**
**बिभ्र द्गोष्ठ मपान्महेन्द्रमदभि त्प्रे[8]यान्न इन्द्रो गवाम् ॥ २५ ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टा दशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे पूर्वार्धे षड्विंशोऽध्यायः ॥ २६ ॥

---

1. A,B,G,J भागाः 2. K,T,W °णं साक्षात् ★ This half verse is not found in T,V,W edns 3--3. K कृष्णं विगतविस्मयाः ; T,W कृष्णश्च विगतस्मयाः 4. A,B,G,J °प° 5. A,B,G,J त्पा° 6. V चा° 7. M,Ma °यः 8. A,B,G,J,K,M,Ma त्प्री°

**श्रीध० तस्मा** दिति। तस्मा त्तस्य कर्मसु विस्मयो नास्तीति नन्दस्योक्तिः ॥ २१,२२ ॥

**इतीति।** इत्यद्धा साक्षात् मां प्रति समादिश्य गर्गे स्वगृहं गते सति तदानीं तथा अमन्यमानोऽपि इदानीं कृष्णं नारायणस्यांशं मन्ये। अत्र हेतुः अक्लिष्ट कारिण मिति ॥ २३,२४ ॥

गोवर्धनोद्धरणं सपरिकर मनुस्मरन् प्रकटितैश्वर्यस्य कृष्णस्य प्रीतिं प्रार्थयते **देवे** इति। यज्ञविप्लवेन या रुट् तया देवेन्द्रे वर्षति सति वज्राश्मवर्षानिल[1]हः अशनिजल शर्करा[2]तिवृष्टि[2] वायुभिः सीदद्बाल[3] पशुस्त्रि सीदन्तो बाला[4]ः पशवः स्त्रियश्च यस्मिन् तत्तथा। आत्मा स्वयमेव शरणं यस्य तद्गोष्ठं दृष्ट्वा अनुकम्पी उत्स्मयन् हसन् प्रौढि माविष्कुर्वन्[5] शैल मुत्पाटच अबलः बालः लीलार्थं उच्छिलीन्ध्रं यथा एकेन करेण बिभ्रत् दधत् यो गोष्ठ मपात् पालितवान्। एवं महेन्द्र मदभित्। गवामिन्द्र इति उत्तराध्यायार्थं स्मरति।[6] एवम्भूतः श्रीकृष्णः नः प्रेयात् प्रीयतामिति ॥ २५ ॥

★ षड्विंशे दशमेव्यक्तः षड्विंशो दशमो हरिः। व्यनक्तु पञ्चविंशत्यां चतुर्विंशतितः पृथक् ॥

△ अस्यार्थः दशमस्कन्धे षड्विंशतितमाध्याये षड्विंशति तत्त्वात्मकः दशलक्षणलक्षितः हरिः चतुर्विंशतितत्त्वापेक्षया पृथक् जीवसंज्ञं मां व्यनक्तु।

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां षड्विंशोऽध्यायः ॥ २६ ॥

---

1. A,B,J °प° 2. A,B,J °रा तीव्र 3. A,B,J °त्वा° 4. A,B,J पा° 5. P,V add सः 6. A,B,J add सः ★ श्रीधरीयोऽयंश्लोकः ।
△ It is not found in A,B,J edns.

**वीर०** इत्यद्धेति नन्दोक्तिः । इति नन्दवच इत्यादिस्तु शुकोक्तिः । इतीत्थ मद्धा स्फुटं, मां समादिश्य सम्यक् ज्ञापयित्वा गर्गे स्वगृहं गते सति अहं कृष्णं साक्षा न्नारायणं मन्ये। तत्र हेतुं वदन् विशिनष्टि अक्लिष्टकारिणां अक्लिष्टानि क्लेशरहितानि अतिमानुषचेष्टितानिकरोतीति तथा तं, अतो नारायणं मन्ये इत्यर्थः ॥ २१ - २३ ॥

इत्येवं विविधं गर्गगीतं नन्दवचः [1-] नन्देन उदितं [-1] श्रुत्वा सर्वे व्रजौकसौ विगताश्चर्या मुदिताश्च नन्दं कृष्णञ्च आनर्चुः । कृष्णं प्रति गतविस्मयानन्दमानर्चुः बहुमन्यन्तेति वा ॥ २४ ॥

गोवर्धनोद्धरणं सपरिकर मनुस्मरन् प्रकटितैश्वर्यस्य भगवतः स्वविषय प्रीतिं प्रार्थयते शुकमुनिः **देव!** इति। यज्ञविघातेन हेतुना या रुट् तया हेतुभूतया देवे[2] इन्द्रे वर्षति सति, अशनि शिलावर्षवातैः सीदन्तः क्लिश्यन्तो बालाः पशवः स्त्रियश्च यस्मिन् तथा। स्वय मेव शरणं रक्षिता रक्षणोपायश्च यस्य तद्गोष्ठं दृष्ट्वा 'स्त्रियात्मेति' इयङार्षः । अनुकम्पायुक्तः उत्स्मयन् स्वमाहात्म्य माविश्चिकीर्षु स्ताव द्धसन्, अबलः बालोऽपि शैलं लीलार्थ मुत्पाटितं छत्राक मिव एकेन करेण उत्पाट्य बिभ्राणो गोष्ठं यो ररक्ष समहेन्द्रमदभित् गवामिन्द्रो नोऽस्माकं प्रीयात् [3] [4-] प्रीयताम् प्रसन्नो [-4] भवतु । यदुत्तराध्यायस्थं सुरभिवाक्यादि "त्वं न इन्द्रो जगत्पते" (भाग. 10-27-20) इत्यादि तदप्यनुसन्दधता शुकेन विशेषितो गवा मिन्द्र इति ॥ २५ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां षड्विंशोऽध्यायः ॥ २६ ॥

---

1- -1. A,B,K omit 2. A,B °वेन्द्रे 3. A,B omit प्रीयाताम् 4- -4. T,W omit

**विज०** आनर्चुः पूजयामासुः ॥२१ - २४॥

**श्रीशुकः** प्रथमभागसमाप्ति सूचनाय स्वेष्टदेवतां कृष्णमभिष्टुवन् तत आत्मरक्षा माशास्ते **देव** इति। यज्ञविप्लवः यज्ञभङ्ग इत्यर्थः। तस्मा दुत्पन्नया रुषा **वज्राश्मवत्** वज्रपाषाणवत् **कर्कशैर्वर्षैः अनिलैश्च** स्त्रिया सह सीदन्तः कम्पमानाः बालाश्च पशवश्च यस्मिंस्तत् सीदद्बालपशु, आत्मा शरणं रक्षिता यस्य तत्तथा। अनुकम्पी हृदयद्रवीभावयुक्तः उत्स्मयः उद्गतस्मयः निरस्तदर्पः, उत्कृष्टमन्दहासो वा, महेन्द्रस्य मदं गर्वं भिनत्ति निर्मूलयतीति महेन्द्र महेन्द्र मदभित्। अबलोऽस्थूलः अणुर्बालः लीलासाधन मुत्फुल्लशिलीन्ध्रं यथा तथैकेन हस्तेन शैलं शिलोच्चयं पर्वत मुत्पाट्य बिभ्रत् गवा मिन्द्रो गोविन्दोऽस्मभ्यं प्रीयात् प्रीतो भवत्वित्यन्वयः। 'पायान्नः' इति पाठे नोऽस्मान् रक्ष त्वित्यर्थः। "गोस्वामी गोविन्दोऽधिकृतो गवाम्" (वैज.को. 3-4-59) इत्यमरः★ ॥२५॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थ विरचितायां पदरत्नावल्यां टीकायां
दशमस्कन्धे पूर्वार्धे षड्विंशोऽध्यायः ॥२६॥

(विजयध्वजरीत्या चतुर्विंशोऽध्यायः)

---

★ अयं वैजयन्ती पाठः ; (3-4-59) अमरकोशपाठस्तु - "गोष्ठाध्यक्षे तु गोविन्दः" (3-248) इति।

# सप्तविंशोऽध्यायः

## (विजयध्वजरीत्या पञ्चविंशोऽध्यायः)

### -: गोविन्दपट्टाभिषेकघट्टः :-

श्रीशुक उवाच

गोवर्धने धृते शैल आसारा द्रक्षिते व्रजे।
गोलोका दाव्रजन्कृष्णं सुरभिः शक्र एव च ॥१॥

विविक्त उपसङ्गम्य व्रीडितः कृतहेलनः।
पस्पर्श पादयो[1] रेनं किरीटेनाऽर्कवर्चसा॥२॥

दृष्टश्रुतानुभावोऽस्य कृष्णस्यामिततेजसः।
नष्टत्रिलोकेशमद [2-]इद माह[-2] कृताञ्जलिः ॥३॥

---

1. V युगलं 2- -2. A,B,G,J इन्द्र आह

## श्रीधरस्वामिविरचिता भावार्थदीपिका

सप्तविंशे तदालक्ष्य कृष्णस्य प्राभवं परम्।
वर्ण्यते सुरभीन्द्राभ्या मभिषेकमहोत्सवः॥

**गोवर्धन** इति। गोवर्धने धृते शैले इति शक्रस्य भयेनागमने हेतुः, आसारा द्रक्षिते व्रजे इति सुरभे र्हर्षेणागमने॥१॥

तत्रेन्द्र आगत्य किं कृतवांस्तदाह 'विविक्त' इत्यादिना, 'अथाऽऽह सुरभिः' इत्यतः प्राक्तनेन ग्रन्थेन। **विविक्त** इति। विविक्त एकान्ते। पादयोः पस्पर्श नमश्चकार॥२॥

**दृष्टेति**। अस्य श्रीकृष्णस्य श्रुतश्चाऽसा वनुभावश्च श्रुतानुभावः। **दृष्टः** श्रुतानुभावो येन स इन्द्रः। **नष्टः** त्रिलौकशोऽह मिति मदो यस्य सः॥३॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ कृतापराधेनेन्द्रेण स्तुतिपूर्वकं क्षमापितस्य तदनुग्रहप्रकारं सुरभीन्द्रादिकृतक्षीरगङ्गाजलाद्यभिषेकप्रकारं तन्निमित्तं गोविन्द नामधेयं तादात्विकं तुम्बुरुनारद हर्ष प्रयुक्त गानादि प्रकारञ्चाह सप्तविंशेन। तत्र [1-] प्रथमं शक्रागमनं तत्कृत श्रीकृष्ण स्तवनञ्चा[-1]ऽऽह **गोवर्धन** इति। सुरभिः कामधेनुः। [2-]गोवर्धने धृते शैले[-2] इतीन्द्रस्य समयामने हेतुः। 'आसारा द्रक्षिते व्रजे,[3] इति सुरभे स्सहर्षागमने हेतुः ॥ १ ॥

तत्रेन्द्र आगत्य किं कृतवान्, तत्राऽऽह विविक्त इत्यादिना अथाऽऽह सुरभिरित्यतः प्राक्तनेन ग्रन्थेन। कृतं हेलना मपराधो येन, अत एव व्रीडितो लज्जितः, अत एव एकान्ते समीप मेत्य, अर्कस्येव वचो यस्य, तेन किरीटेन एनं कृष्णं पादयोः पस्पर्श नमश्चकार॥ २ ॥

**दृष्टेति।** अमितं तेजः प्रभावो यस्य तस्य कृष्णस्य दृष्टः श्रुतश्च अनुभावो येन तथा भूतः, अत एव नष्टोऽपगतः त्रिलोकेशोऽहमिति मदो यस्य कृतोऽञ्जलिर्येन तथाभूतः। इदं वक्ष्यमाणं स्तुत्यात्मकं क्षमापणात्मकञ्च वाक्यमाह॥ ३ ॥

---

1- -1. T,W omits 2- -2. A,B गोवर्धनाख्ये शैले पर्वते धृते सति कृष्णेन 3. A,B add सति

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

"तस्मिन्नप्यसुरावेशो गते प्रकृति रेवतु" (भागवत तन्त्रे) इति वचनात् देवस्वभाव प्रकटन पूर्वकं सुरभिक्षीराभिषेकेण शक्रस्तुत्या च हरिमाहात्म्यस्य अतिसिद्धत्वात् मुमुक्षुभि स्तस्मिन् अतिशयितं प्रेम विधेय मिति अस्याध्यायस्यारम्भः। तत्र सुरभीन्द्रयो रागमनं कथयति **गोवर्धन** इति। गोलोकाद्गवामधिकृतस्थानात् सुरभिः इन्द्रस्तु स्वर्गलोकात्। "दिग्दृष्टि दीधितिस्वर्गवज्रवाग्बाणवारिषु। भूमौ पशौ च विद्वद्भिर्गोशब्दो दशसु स्मृतः" (हला. को.5-68) इति हलायुधः। यो हरे र्विरोध माचरत् स एवाऽऽव्रज दित्यन्वयः ॥ १ ॥

विविक्ते एकान्ते। 'विजिर् पृथग्भावे' इति धातुः। जनसम्मर्दराहित्यस्थले इत्यर्थः ॥ २ ॥

इदानीं दृष्टः पूर्वं श्रुतः अनुभावो येन स तथा। इन्द्र इद माह॥ ३ ॥

**इन्द्र उवाच**

**विशुद्धसत्त्वं तव धाम शान्तं तपोमयं ध्वस्तरजस्तमस्कम्।**
**मायामयोऽयं गुणसम्प्रवाहो न विद्यते ते[1]ऽग्रहणानुबन्धः ॥४॥**

**कुतो नु तद्धेतव ईश [2]तत्कृता लोभादयो येऽबुधलिङ्गभावाः।**
**[3]अथाऽपि दण्डं भगवा न्बिभर्ति धर्मस्य गुप्त्यै खलनिग्रहाय॥५॥**

**पिता गुरु स्त्वं जगता मधीशो दुरत्ययः काल उपात्तदण्डः।**
**हिताय चेच्छातनुभि[4] स्समीहसे मानं विधुन्व[5]ञ्जगदीश मानिनाम्॥ ६॥**
**ये मद्विधाज्ञा[6] जगदीश मानिन स्त्वां वीक्ष्य कालेऽभय[7] माशु त[8]न्मदम्।**
**हित्वाऽऽर्यमार्गं प्रभजन्त्यपस्मया ईहाखलाना मपि तेऽनुशासनम्॥ ७॥**
**स त्वं म[9]मैश्वर्यमदप्लुतस्य कृता[10]गसस्तेऽविदुषः प्रभावम्।**
**क्षन्तुं प्रभोऽथार्हसि मूढचेतसो मैवं पुनर्भून्म[11]तिरीश मेऽसती॥ ८॥**

---

1. K,T,W ग्र° 2. A,M,Ma मन्युलो° 3. A,B,G,J,K त° 4. A,B,G,J,K त° 4. A,B,G,J,K स्वे° 5. W धू° 6. M,Ma °धाः स्युः 7. K,T,W °लेभ° 8. M,Ma तं म° 9. K,T,W °दै° 10. A कृतांहस° 11. V °दसतीश मे मतिः; K,T,W °न्मति रीश्वरेऽ सती।

**श्रीध०** तत्र ममापराधं क्षमस्वेति वक्तुं तव तावदपरोधो नास्त्येव त्वयाऽनुग्रह एव कृत इत्याह चतुर्भिः **विशुद्धसत्त्वमिति।** तव[1]धाम स्वरूपं शान्तम् एकरूपम्, अतश्च तपोमयं प्रचुरज्ञानं सर्वज्ञ मित्यर्थः। कुतः? ध्वस्तरजस्तमस्कं ध्वस्ते अविद्यमाने रजस्तमसी यस्मिन् अतएवाऽयं अस्मदादिषु दृश्यमानः मायाकार्यरूपः गुणसम्प्रवाहः गुणै स्सम्प्रोह्यत इति तथा, संसार इत्यर्थः। स ते तव न विद्यते यतः अग्रहणेनाज्ञानेनाऽनुबध्यत इति तथा, सः सर्वज्ञस्य ते नास्तीत्यर्थः। अज्ञानसम्बन्धो वा॥ ४॥

यदा अज्ञानतत्कृतदेहसम्बन्धौ न स्तः तदा तत्कृतानां लोभादीनां का वार्ते त्याह **कुत** इति। तत्कृताः देहसम्बन्धकृताः तद्धेतवः पुनरप्यन्यस्य देहस्य हेतवः। ननु ज्ञानिना मपि ते दृश्यन्ते अत आह अबुधलिङ्ग भावाः अज्ञानिनां गमकाः यावद्रागादिमत्त्वम् तावदज्ञानित्व मेव, ज्ञानित्वं न सिद्ध मित्यर्थः। लोभाद्यभावेऽपि मन्मौनभङ्गो दण्डार्थ मित्याह अथापीति॥ ५॥

ननु त्वद्दण्डे च मम गोपपुत्रस्य का शाक्तिः? किं वार कारणम्, को वा दण्डः मया कृत इत्यत आह **पितेति।** जगतां त्वं पिता जनकः गुरु रुपदेष्टा। अधीशः नियन्ता इति दण्डधारणे हेतुत्रयम्। कालत्वात्समर्थः तस्मादुपात्तदण्डो हि[2]ताय कल्याणाय स्वेच्छातनुभिः[-2] लीलावतारैः समीहसे। तव समीहा लीलैव। जगदीशमानिना मस्माकं मानधु[3]नन मित्यर्थः॥ ६॥

कथ मेत दित्यत आह **ये** इति। मद्विधाश्च ते अज्ञाश्च। अतो जगदीशमानिनः काले भयकालेऽपि यथा अधुनैवातिवृष्टौ त्वा मभयं भय मगणयन्तं वीक्ष्य आशु तन्मदं जगदीशा वयमिति मदं हित्वा वी[4]तगर्वा स्सन्तः आर्यमार्गं त्वद्भक्तिलक्षणं प्रभजन्ति। अतस्[5]ते इहैव खलाना मनुशाशनं दण्ड इत्यर्थः॥ ७॥

एवं भगवत्स्वरूपमभिप्रायञ्चाऽनुवर्ण्य क्षमापयति - **सत्वमिति।** एवम्भूता असती मतिः मे पुनर्माभूदिति प्रार्थनोन्तरम्॥ ८॥

1. B,J,P,V omit तव 2- -2. P,V omit 3. A,B विधू° 4. A,B विगत A,B °स्तव 6. P,V °द्रूप°

**वीर०** तत्र स्तुत्यात्मकं वाक्यं ताव द्दर्शयति विशुद्धसत्त्व मित्यादिना। तत्रेतः प्राक् त्रिलोकेशमदाविष्टोऽहम् अधुना यथाश्रुता दैवामानुषत्वन्माहात्म्यावलोकनाध्यवसितनित्य निरुपाधिक त्रिलोकेशत्वं तदसाधारणमिति मत्वा त्यक्तत्रिलोकेशमदोऽभव मित्यभिप्रायेणाऽकर्मायत्तविभूतिद्वय सम्बन्धविशिष्टं स्तौतीन्द्रः **विशुद्धसत्त्व** मिति। तव धाम स्थानं परमव्योमेति यावत्। **विशुद्धं रजस्तमोभ्या मननुविद्धं सत्त्वं सत्त्वमयम्,** अतएव ध्वस्तरज स्तमस्कं निर्धूत रजस्तमोगन्धम्, अत एव शान्तं रागद्वेषादि रहितं केवलं त्वदुपासनात्मकतपस आगतं, ततोऽगम्य मित्यर्थः। तवेति स्वस्वामिभावरूपसम्बन्धे षष्ठी। एवं नित्यविभूतिनायकत्व मुक्तम्। अथ तदेव धाम विशिंषन् लीलाविभूति नायकत्वमाह। ते तव अयं मायामयः मायाया आगतः पूर्वत्राऽत्र च "तत आगतः" (अष्टा.4-3-74) इत्यधिकारे, "मयट् च" (अष्टा.4-3-82) इति मयट्। सङ्कल्पमात्रपरिक्लृप्त इत्यर्थः। सत्त्वादिगुणकार्यरूपस्संसारः तन्मूलकः ग्रहणानुबन्धः शरीरग्रहणकारणभूतः कर्मानुबन्धश्च न विद्यते, यत्रेति शेषः। यत्र गुणसम्प्रवाहः ग्रहणानुबन्धश्च न विद्यते तथाभूतं त्वद्धामेत्यर्थः। तव मायामय इति गुणसम्प्रवाहस्य भगवत्सङ्कल्पायत्तत्वोक्त्या तस्य तादधीन्यलाभात् लीलाविभूति नायकत्वमुक्तं भवति॥ ४॥

न न्वहमेवंविधश्चेत् कथं रागादयः, कथं तन्मूला दण्डादि प्रवृत्ति रित्याशङ्क्य परिहरति **कुतः** इति। यद्यपि [1]त्वद्धामैव गुणसम्प्रवाहग्रहणानुबन्धादिरहितम्। अतो हे ईश, निरुपाधिकसर्वेश्वर, तत्कृताः तेन शरीरग्रहणेन कृताः, तत्प्रयुक्ता इत्यर्थः। तद्धेतवः पुन रन्यस्य शरीर ग्रहणस्य हेतवो ये रागादयः ते कुतो नु, तव न सन्त्येवेत्यर्थः। अत्यन्तासम्भावनायां हेतुं वदन् रागादीन्विशिनष्टि। अबुधलिङ्गभावाः अबुधानां देहात्मभ्रमवतां लिङ्गभावाः चिह्नभूतपदार्थभूताः। रागादिभिरेव हि अबुधत्वं व्यज्यते। नित्यं स्वयाथात्म्यानुभवस्वरूपस्य तव कथं रागादि सम्भावनापीति भावः। तथाऽपि हे भगवन्! पूर्णषाड्गुण्य! भवान् धर्मसंस्थापनाय। खलानां निग्रहाय च दण्डं बिभर्ति। भगवानिति पाठे षाड्गुण्य पूर्णो भवानित्यर्थः॥ ५॥

न च खलनिग्रहेण तव वैषम्य प्रसङ्गः, तन्निग्रहस्यऽपि तद्दमनद्वारा तदनुग्रह हेतुत्वात् इत्यभिप्रायेण खलनिग्रहस्यौचित्यं द्योतयितुं विशिंषन् वैषम्याभाव माह **पितेति**। सर्व जगतां पिता जनकः, गुरु र्हितोपदेष्टा, अधीशो नियन्ता, दुरत्ययः न तु लौकिक नियन्तृत्वात् कथञ्चि दत्येतुं शक्यः। [2]अतः काले उचितकाले उपात्तो दण्डो येन तथा[3], नहि लोके पित्रादयः उत्पथगामिनः [4]पुत्रादीन् शिक्षया सन्मार्गे प्रवर्तयितुं प्रभवोऽप्युपेक्षन्ते। न चैतावता तेषां वैषम्यञ्चेति भावः। अतः सर्वजगत्पितृत्वादिसम्बन्धविशिष्टस्य प्रभोः तव उचित एव खलनिग्रहार्थो, दण्ड इत्यर्थः। अत स्त्वं जगदीश मात्मानं मन्य मानानां मादृशां मानं गर्व विधुन्वन् अस्माकं हितार्थ मेव स्वेच्छोपात्ताप्राकृतदिव्यतनुभि रुपलक्षितः ईहसे चेष्टसे। अतो न वैषम्य मिति भावः॥ ६॥

दण्डस्य हितार्थत्व मेवोपपादयति **ये** इति। ये मादृशाश्च ते अज्ञाश्च जगदीश मात्मानं मन्यामानाः ते उचितकाले भयं भयङ्करं दण्डधरं त्वां वीक्ष्य तन्मदं जगदीशाभिमानप्रयुक्तं मद माशु हित्वा अपस्मयाः अपगतगर्वाः आर्यमार्गं सतां वर्त्म प्रभजन्ति अनुवर्तन्ते। अत स्तव ईहा चेष्टाऽपि खलाना मनुशासनं शिक्षैव॥७॥

तदेवं भगवतः केवलं लोकहितार्थैकप्रवृत्तत्व मभिधाय अथ क्षमापयति **स त्व** मिति। मदैश्वर्येण इन्द्राधिपत्येन यो मदस्तेन प्लुतस्य व्याप्तस्य उत्पथं प्रतिपन्नस्य[5] वा। ममैश्वर्येति पाठान्तरम्। तदा ऐश्वर्येण इन्द्राधिपत्येनेत्येवार्थः। अत एव ते तव प्रभाव मविदुषः, अत एव कृतमार्गोऽपराधो येन तस्य मम अपराध मिति शेषः। [6]सः एवम्भूत स्त्वं क्षन्तुमर्हसि। हे प्रभो! निग्रहीतु मनुग्रहीतुञ्च समर्थ! अथ पुन र्मूढचेतसो मम असती दुष्टा एवंविधा मति र्माभूत्, तथा अनुगृहाणेति प्रार्थना॥८॥

---

1. A,B तव धा° 2. T,W omit अतः 3. A,B, add भूतः 4. W शी° 5. A,B,K add इति 6. T,W omt सः

**विज०** कीदृशं तत्राऽह - **विशुद्धेति।** अहं तव धाम गृहस्थानीयं स्वरूपं शरणं, प्रपद्येति शेषः। अनन्त-पदार्थराशिं गृह्णातीति गृहम्। ननु गृहवत्सत्त्वादिगुणदारुभी रचितश्चेत् कालान्तरे जीर्णं स्या दित्यत्राऽऽह विशुद्धेति। विगतं शुद्धसत्त्वं रजस्तमोमिश्ररहितं केवलसत्त्वगुणो यस्मा त्तथा। चारुतर पदार्थैः कुशल पुरुषेण रचितं, न चेत् नयन सुभगं न स्यात् इत्यत्राऽऽह शान्त मिति। शान्तं मङ्गलम्। "शान्तिः प्रशममङ्गले" (वैज. को. 6-2-39) इति। अत एव सुखनिष्ठं वा क्षोभरहितं वा। नन्वेवञ्चेत् पाषाणकल्प मित्यत्राऽऽह - तपोमय मिति। ज्ञानात्मकं यदा सत्त्व मपि न सम्बध्यते तदा रजस्सम्बन्धो नाऽस्तीति किं वक्तव्यमिति भावेनाऽऽह ध्वस्तेति। अत्र लिङ्गमाह मायामय इति। यत त्वयि अयं मायामयः भगवदिच्छानिमित्तगुणसम्प्रवाहः त्रिगुणसम्बन्धो न विद्यते यस्मा त्तस्मादिति शेषः। 'विद सत्तायाम्' इति धातोः जीववत्त[1]त्सम्बन्धो नाऽस्ति। किन्तु सृष्ट्यादौ प्रेरकत्वसम्बन्धोऽस्तीति कृत्वा न विद्यत इति कीदृशः अग्रहणानुबन्धः, अग्रहण माग्रहः स एकानुबन्धो गुणभूतो यस्य स तथा। यद्वा, यत्र गुणसम्प्रवाहे अग्रहण मज्ञान मनुबध्नाती त्यग्रहणानुबन्धः। अनेन कार्याभावे कारणाभावोऽनुमीयत इति सूचितम्॥४॥

ननु "खलेन पर्षान्प्रतिहन्मि भूरि किं मा निन्दन्ति शत्रवोऽनिन्द्रा" इति श्रुतेः। हरेः काम क्रोधादि दर्शनम् लोभाद्यभावः कथयत इत्यत्राऽऽह **कुत** इति। ते गुणाः हेतवो निमित्तानि येषां ते तद्धेतवः न विद्यन्त इति। कुतो नु? किं वक्तव्य मित्यर्थः। यद्वा तस्य संसारहेतवः कुतः कल्प्यन्ते इति शेषः। अबुधस्य अज्ञानिनः लिङ्गभावाः लक्षणभूताः। अत्र कारणाभावात्कार्याभावानुमानञ्च द्रष्टव्य मित्यर्थः। यद्यपि तव गुणनिमित्ताः कामादयो न सन्ति, तथाऽपि शास्त्रविहिता अदोषकरत्वा त्सन्तीत्याशयेनाऽऽह - अथापीति। दण्डं शासनं हिंसां वा। "दण्डोऽस्त्री शासने राज्ञां हिंसायां लगुडे गुणे" (वैज.को. 6-5-38) इति यादवः। विशुद्धसत्त्वं निर्मलसत्त्वगुणयुक्त मित्या

व्यपव्याख्यानप्रत्याख्यानाय विगतशुद्धसत्त्व मित्यादि व्याख्यात माचार्यैः। सत्त्वगुणाङ्गीकारे "मायामयोऽयं गुणसम्प्रवाहो न विद्यते" इत्येतत् व्याहतं[2] स्यात् इति पश्यद्भि रिति असच्छासनेन धर्मस्थापनं प्रयोजनं सच्छिक्षणेन किं फलं स्यात्? किञ्च उभयेषां शासका उभये तौ नैक इतीयं शङ्का "असताञ्च सताञ्चैव हरि रेवाऽनुशासकः, सतान्तु श्रेयसे सैव ह्यनुशास्ति भविष्यति" (आग्नेये) इत्याग्नेयवचनेन परिहर्तव्येति॥५॥

पितृत्वा द्गुरुत्वा त्स्वामित्वाच्च हरेरेकस्यैव अनुशासकत्वं नाऽन्यस्येत्याशयेनाऽऽह **पितेति।** पुण्य पाप फलवाचकत्वेन उपात्तदण्डः गृहीतशासनः हिताय, सता मिति शेषः। "गुरु रात्मवतां शास्ता शास्ता राजा दुरात्मनाम्। इह प्रच्छन्नपापानां शास्ता वैवस्वतो यमः" (विष्णु.ध. 65-27) इत्येतन्निरस्तमिति ज्ञातव्यम्॥६॥

सतामनुशासनं श्रेयस इत्यभिप्रेतम्। तदिदानीं व्यक्त माह **ये** इति। हे जगदीश, मद्विधा मानिनः स्युः, ते काले असुरावेशनिर्मोकसमये प्राप्ते अभयं त्वां वीक्ष्य अस्मन्मदनिर्मूलनवीर्यं त्वां दृष्ट्वा येन मदेन त्व दपराध मकार्ष्म तन्मदं हित्वा अपस्मयाः निरस्तगर्वाः आर्यमार्गं विद्वज्जनसिद्धान्तं प्रभजन्ति। न केवल मस्माकं तवेहाऽनुशासनं खलानामपीत्याह - इहेति॥ ७॥

तत्र कर्तव्यं प्रार्थयते - **सत्वमिति।** अविदुषः अज्ञस्य॥ ८॥

---

1. A,B omit तत् 2. A adds न

**तवावतारोऽय मधोक्षजेह भुवो[1]भराणा मुरुभारजन्मनाम्।**
**चमूपतीना मभवाय देव भावाय युष्मच्चरणानुवर्तिनाम्॥९॥**

**नम स्तुभ्यं भगवते पुरुषाय महात्मने।**
**वासुदेवाय कृष्णाय सात्त्वतां पतये नमः॥१०॥**

**स्वच्छन्दो[2]पात्तदेहाय विशुद्धज्ञानमूर्तये।**
**सर्वस्मै सर्वबीजाय सर्वभूतात्मने नमः॥११॥**

**मयेदं भगवन्गोष्ठनाशायाऽऽसारवायुभिः।**
**चेष्टितं विहते यज्ञे मानिना तीव्रमन्युना॥१२॥**

**त्वयेशानुगृहीतोऽस्मि ध्वस्तस्तम्भो ह[3]तोद्यमः।**
**ईश्वरं गुरु मात्मानं त्वामहं शरणं गतः॥१३॥**

---

1. B,G,J स्वयं 2. M,Ma °देनात्त 3. A,B,G,J,M,Ma वृथो°

**श्रीध०** महा नयमपराधः, कथं क्षन्तव्य इति चेत् तत आह - **तवेति।** [1-] हे अधोक्षज! इह चमूपतीनां स्वय मेव भुवो भाराणां [-1] पुनश्च उरुभारजन्मनाम् [2] ऊरूणां बहूनां भाराणां जन्म येभ्य स्तेषां अभावय नाशाय, युष्मच्चरण सेविनान्तु भवाय [3] उद्भवाय अतो मम त्वत्सेवकत्वा दत्यन्तापरा[4-]धोऽपि क्षन्तव्य[-4] इति भावः ॥९॥

क्षमापयन्नमस्करोति **नम** इति। तुभ्यं भगवते कृष्णाय नमः पुरुषाय सर्वान्तर्यामिणे महात्मने अन्तस्थत्वेऽपि अपरिच्छिन्नाय। [5-] कुतः वासुदेवाय सर्वनिवासाय[-5] सात्त्वतां यादवानां पतये [6] नमः ॥१०॥

तर्हि किमहं यादवः? [7-] तत्राऽऽह[-7] **स्वच्छन्देति।** स्वच्छन्दोपात्तदेहाय स्वेषां भक्तानां छन्देन इच्छया [8] स्वीकृत देहाय तत्राऽपि विशुद्धं ज्ञान मेव मूर्ति र्यस्य तस्मै। [9] स्वस्य मायया सर्वस्मै [10] सर्वरूपाय, कुतः [11] सर्वबीजाय कारणाय अत एव सर्वभूतात्मने नम इति॥११॥

कृतागस इत्यनेन उक्त मपराधं निवेदयति **मयेति।** आसार[12] वायुभिः गोष्ठनाशाय मयेद मकृत्यं [13] विचेष्टितं कृत [14] मिति॥१२॥

**त्वयेति।** तथाऽपि भो ईश! त्वया अनुगृहीतोऽस्मि। अनुग्रहं दर्शयति ध्वस्तस्तम्भ इति, वृथोद्यम इति च॥१३॥

---

1- -1. A,B स्वयम्भाराणां 2. A,B omit ऊरूणां 3. A,B omit उद्भवाय 4- -4 A,B °धिनोऽपि क्षन्तव्यम् 5- -5. B omits 6. B,J omit नमः 7- -7. A,B न। 8. A adds यादवादिषु 9. A,B omit स्वस्य 10. P.V omit सर्वरूपाय 11. A,B सर्वस्य बी° 12. A °रैः 13. A,B,J omit वि 14. A,B,J omit इति।

**वीर०** [1-] एवं प्रार्थनां कृत्वा भगवतः भूभारावतरणाय कृतावतारस्य[-1] लोकहितार्थैक प्रवृत्तत्व मेवोपपादयति - **तवेति।** हे अधोक्षज! भुवः उरुभारस्य जन्म येभ्यस्तेषां भुवो भरणां भूभृतां चमूपतीनां अभवाय संसाराभावाय दण्डद्वारा मुक्ति प्रदानायेति भावः। हे देव! युष्मच्चरणानुवर्तिनां भवाय विभवाय उत्तरोत्तर मनुवृत्त्यभिवृद्धये चेहलोके तवाऽवतारः ॥९॥

क्षन्तु मर्हसीत्युक्तम्। तत्र "अञ्जलिः परमा मुद्रा क्षिप्रं देवप्रसादनी" (भरद्वाजसं) इत्युक्तरीत्या अञ्जलिबन्धनमस्कृतिपूर्वकतच्छरणागति मन्तरेण नाऽन्योस्ति क्षमाहेतुः इत्यभिप्रयन् शरण्यगुणा नाविष्कुर्वन् अञ्जलिबन्धेन नमस्कुर्वन् स्वापराध मावेदयन् कार्पण्यञ्च प्रकाशयन् शरणं व्रजति नमस्तुभ्य मिति चतुर्भिः। भगवते इत्यादिभि श्शरण्यगुणाविष्कारः। पूर्णषाड्गुण्यमूर्तये महात्मने शरणागतशब्द भाजमवलोक्य अपराधविस्मरणेन केवलमनुजिघृक्षैक प्रवणचित्ताय वासुदेवाय वसुदेवपुत्राय। अनेन सौलभ्यं सौशील्यञ्चाऽभिप्रेतम्। कृष्णायेत्यनेन केवलं क्षेम[2]ङ्करत्वम्। सात्त्वतां भक्तानां पतये इत्यनेन कृतागसा मपि भक्तानां मादृशां पुन श्शिक्षया पालकायेति। पुरुषाय महात्मन इति पदद्वयेन "महान् प्रभु र्वै पुरुष स्सत्यस्यैषप्रवर्तकः (श्वेता.उ. 3-12) इत्युक्तसत्वप्रवर्तकत्वम्॥१०॥

स्वच्छन्देन स्वेच्छयैव, न तु कर्मणा। उपात्तः परिगृहीतो देहो यस्य तस्मै इत्यनेन कर्मोपात्तदेहानां ब्रह्मादीनां प्रपित्सुतुल्यत्वं, भगवत एवाऽऽश्रित कार्यावहनक्षमत्वञ्च। विशुद्धं नित्यं सङ्कोचविकासादि विकाररहितं ज्ञानं मूर्तिराकारः प्रकार इति यावत्। सा यस्य तस्मै। अनेन "ब्रह्मविदाप्नोति परम्" (तैत्ति. उ. 2-1-1) इत्युपक्रम्य "सत्यंज्ञान मनन्तम्" (तैत्ति.उ. 2-1-1) इत्युक्तज्ञानशब्दार्थप्रत्यभिज्ञानात्परत्वमुक्तं भवति। तदेव प्रपञ्चयति - सर्वस्मै सर्वपदार्थानन्यस्मै अनन्यत्वञ्च मृदनन्यो घट इति वन्न स्वरूपाभेदनिबन्धनम्, अपि तु कारणत्वान्तरात्मत्वनिबन्धन मित्यभिप्रायेणोक्तं, सर्वबीजाय सर्वकारणाय सर्वभूताना मात्मन इति॥ ११॥

स्वापराध मावेदयति **मयेति।** यज्ञे विहते सति तन्निमित्त स्तीव्रो मन्यु र्यस्य, तेन [3]मानिना देहात्माभिमानिना मया हे भगवन्! पूर्णषाड्गुण्येन त्वया अनुगृहीतस्य गोष्ठस्य नाशाय आसारवायुभिः इद मकृत्यं चेष्टितं कृतम्॥ १२॥

तथाऽप्यहं हे ईश! त्वया ध्वस्तः अविनयो यस्य सः, मदापनयनद्वारा अनुगृहीत एवाऽस्मि। सम्प्रति हत उद्यमः अपचिकीर्षात्मको यस्य सः। अनेन अधुनापराधचिकीर्षाभिसन्धिराहित्यमावेदितम्। अनेनैव कार्पण्यञ्च प्रकाशितम्। एवम्भूतोहं अधुना त्वां शरणं गतः। शरणागतावपि त्वमेव प्रयोजककर्तेत्यभिप्रायेण विशिनष्टि ईश्वरमिति। शरणागतये मां नियमयन्तमित्यर्थः। आचार्यसान्निध्यभावशङ्का प्रयुक्तशरणागतिवैयर्थ्याशङ्कापरिहाराय विशिनष्टि गुरु मिति। देहात्माभिमानक्रोधादिदुर्गुणापनयनद्वारा हितप्रवर्तकत्वेन आचार्यकृत्यमपि प्राप्त मित्यर्थः। ननु न [4]तवेदं शरणं गतोऽस्मीति वचो निर्व्यलीक मिति शङ्कां निराचिकीर्षु र्विशिनष्टि आत्मान मिति। अन्तरात्मन स्तवाऽविदितं किमस्तीति भावः॥ १३॥

---

1- -1. T,W omit 2. A,B °क° 3. A,B omit मानिना 4. A,B,K तदेव°

**विज०** सतां भवाय पुण्यलक्षण भद्राय देवदत्तवज्जननं भजतो हरेः अवतारः कथं भवाय स्यादितीदम् "आवेशो वसुदेवादौ देहादानं हरेः स्मृतम्" (पाद्मे) इत्यादिपाद्मवचनेन परिहर्तव्यम्॥ ९॥

न केवलं ग्रन्थान्तरसिद्ध मिदम् अत्रापीत्याशयेनाऽऽह **स्वच्छन्देनेति।** स्वच्छन्देन स्वेच्छया सर्वस्मै सर्वव्यापिने सर्वबीजाय सर्वस्य मूलकारणाय॥ १०, ११॥

आसारसहितवायुभिः॥ १२॥

ध्वस्तस्तम्भः निरस्तस्थूणस्वभावः॥ १३॥

**[1-]श्रीशुक उवाच[-1]**

**[2]एवं सङ्कीर्तितः कृष्णो मघोना भगवानमुम्।**
**मेघगम्भीरया वाचा प्रहस न्निद मब्रवीत्॥ १४॥**

श्रीभगवा नुवाच

मया तेऽकारि मघवन्मखभङ्गोऽनुगृह्णता[3]।
मदनुस्मृतये नित्यं मत्तस्येन्द्र श्रिया भृशम्॥ १५॥

मा मैश्वर्य श्रीमदान्धो दण्डपाणिं न पश्यति।
तं भ्रंशयामि सम्पद्भ्यो यस्य वाञ्छाम्यनुग्रहम्[4]॥ १६॥

गम्यतां शक्र भद्रं वः[5] क्रियतां मेऽनुशासनम्।
स्थीयतां स्वाधिकारेषु युक्तै र्वः[6] स्तम्भवर्जितैः ॥ १७॥

अथाऽह सुरभिः कृष्ण मभिवन्द्य[7] मनस्विनी।
स्वसन्तानै रुपामन्त्र्य[8] गोपरूपिण मीश्वरम्॥ १८॥

---

1- -1. M,Ma,T,V,W omit 2. K,T,W इत्थं 3. V यज्ञ 4. A,B,G,J,M,Ma चेच्छा° 5. M,Ma ते 6. M,Ma °र्विस्रम्भ 7. A,V नन्द्य; K,T,W वाद्य 8. K,T,W गत्य; V गम्य।

**श्रीध०** इन्द्रेण स्वाभिप्राये निवेदिते भगवानपि तथैवाऽऽह **मयेति**। इंन्द्रश्रिया देवराज्येन॥ १४ - १६॥

**गम्यतामिति**। वः युष्माभिः। बहुवचनं वरुणाद्यभिप्रायेण। क्व गन्तव्यं स्वर्गेऽपि तवैवेश्वरत्वादिति चेत्तत्राऽऽह- क्रियतामिति। मदनुशासनेन यथापूर्वं तत्र स्थीयता मित्यर्थः। युक्तै रप्रमत्तैः स्तम्भविवर्जितैः[1] निरहङ्कारैः ॥ १७॥

**अथेति**। स्वसन्तानै र्गोभिस्सह[2] ॥ १८॥

---

1. A,B,J omit वि 2. A,B,J add उपामन्त्र्य।

**वीर० इत्थमिति**। इत्थं मघोना इन्द्रेण सङ्कीर्तितः कृष्णः अमुं मघवान मुवाच॥ १४॥

तदेवाऽऽह **मयेति** त्रिभिः। हे मघवन्! अनुजिघृक्षता मया त्वद्यज्ञभङ्गः कृतः। कोऽसा वनुग्रह इत्यत्र तद्दर्शयति। इन्द्रश्रिया इन्द्राधिपत्येन। इन्द्रेति सम्बोधनं वा। नितरां मत्तस्य तव नित्यं मद्विषयकानुस्मृतये मखभङ्गोऽकारीत्यन्वयः मदनुस्मृत्यापादनमेवाऽनुग्रह इति भावः॥ १५॥

मत्तस्य मदनुस्मृतये इत्यनेन मदन्यस्य स्वानुस्मृतिप्रतिबन्धकत्वम्, अत एव तदपनयनस्य हितत्वं सूचितम्। तदेव व्यनक्ति मा मिति। ऐश्वर्यश्रीमदाभ्यां आधिपत्यसम्पन्मदाभ्यां[1] अन्धो विवेकशून्यो जनः दण्डधरं मां न पश्यति। अतो यस्याऽनुग्रह मिच्छामि तत्सम्पद्भ्यो भ्रंशयामि। तस्य सम्पदभिलाषं निवर्तयामीत्यर्थः ॥ १६॥

हे शक्र, वो युष्माक मितः परं मदनुस्मृत्यात्मकं भद्रमेव भवेत्। बहुवचनं वरुणाद्यभिप्रायकम्। किन्तु ममाऽनुशासनं क्रियताम्। किन्त दनुशासनम् यदस्माभिः कर्तव्यम्? तत्राऽऽह[2] अविनयरहितैः युक्तै स्सावधानैः वो युष्माभिः। विभक्तिव्यत्यय आर्षः। स्वाधिकारेष्वेव स्थीयताम् ॥ १७॥

सुरभिरप्याव्रज दित्युक्तम्, साऽऽगता किञ्चकारेत्यत्राऽऽह - अथेति। मनस्विनी तत्तद्वाञ्छितार्थप्रदानप्रवणरूप प्रशास्तमनस्का। पयस्विनीति पाठान्तरम्।[3] तदा प्रभूतपयस्का सुरभिः स्वसन्तानैः स्वापत्यै स्सह आगत्य। गोपस्येव रूपमस्याऽस्तीति तथा। तं साक्षादीश्वरं कृष्णमभिवाद्योवाच ॥ १८॥

---

1. A,B सम्पद्भ्यां 2. A,B add स्तम्भवर्जितै रिति। 3. A,B पाठे।

**विज०** मघोना इन्द्रेण ॥ १४॥

अकारि कृतः। हे भगवन्! इन्द्र! ॥ १५॥

'पण व्यवहारे' इति धातोः हानादिव्यवहारसाधनत्वात्पाणिर्हस्तः, दण्डपाणिं यमं माम्। भ्रंशयामि विस्रस्तं करोमि। चशब्द एवार्थे। अनुग्रह मेव नाऽन्यद्वित्तादिकम् अनुग्रहानन्तरमविनश्वरसम्पदश्चेति समुच्चये वा। ऐश्वर्यमीश्वरत्वं, गवादिसमृद्धिः श्रीः, आभ्या मुद्धतेन[1] मदेनाऽन्धः ज्ञानलक्षणचक्षूरहितः ॥ १६॥

मयि मनसा युक्तैः अनित्यैश्वर्यादौ विस्रम्भवर्जितैः भवद्भिः स्वाधिकारेषु त्रैलोक्यरक्षणादिषु स्थीयताम् ॥१७॥

अथशब्दः कथारम्भे। मनस्विनी शुद्धमनाः स्वसन्तानैः स्ववंशजातगोभिः, सहेति शेषः ॥ १८॥

---

1. A,B °द्धृ°

**[1-]सुरभि रुवाच[-1]**

**कृष्ण कृष्ण महायोगिन् विश्वात्म न्विश्वसम्भव[2] ।**
**भवता लोकनाथेन सनाथा वय मच्युत॥ १९॥**

त्वं[3-] नः परमकं[-3] दैवं त्वं न इन्द्रो जगत्पते ।
भवाय भवगोविप्रदेवानां ये च साधवः ॥२०॥

इन्द्रं न स्त्वाऽभिषेक्ष्यामो ब्रह्मणा चोदिता[4] वयम् ।
अवतीर्णोऽसि वि[5-]श्वात्मन्[-5] भूमेर्भारापनुत्तये ॥२१॥

[6-]श्रीशुक उवाच[-6]

एवं कृष्ण मुपामन्त्र्य सुरभिः पयसात्मनः ।
जलै [7]राकाशगङ्गाया ऐरावतकरोद्धृतैः ॥२२॥

इन्द्र स्सुरर्षिभिस्साकं चोदितो[8] देवमातृभिः ।
[9]अभ्यषिञ्चत दाशार्हं गोविन्द इति चाऽभ्यधात् ॥२३॥

---

1- -1 T,W omit 2. V भावन 3- -3. V त्वमेव परमं 4. A,B,G,J नो° 5- -5. V भगवन् 6- -6. M,Ma,V omit 7. M,Ma °श्रा° 8. A प्रहितो; B,G,J नोदितो 9. T,W अभि

**श्रीध०** **कृष्ण कृष्णेति।** कृष्णेत्यादिना सम्बोध्य इन्द्रेण हता अपि भवता सनाथाः वयं कृताः रक्षिता इत्यर्थः ॥१९॥

**त्वमिति।** त्वं नः परमं दैवं [1] देवता। अतः हे जगत्पते गोविप्रदेवानां येऽन्ये च साधव स्तेषां भवायाऽभ्युदयाय [2]अद्य त्वमेव नः अस्माकं इन्द्रो भव ॥२०॥

ननु भवता मिन्द्रोऽस्तीति चेदत आह - **इन्द्र** मिति। अलं पुरन्दरस्येन्द्रतया इत्यर्थः। ननु देव[3] इन्द्रो [4]भव कथ महं भवेय मिति चेदत आह - अवतीर्णोऽसीति॥२१॥

**एव** मिति। सुरभि रात्मनः पयसा अभ्यषिञ्चत्। इन्द्रश्च आकाशगङ्गाया[5] जलैः अभ्यषिञ्चत [6-]इत्युत्तरेणान्वयः[-6] ॥२२॥

**इन्द्र** इति। देवमातृभि रदित्यादिभिः। देवै र्मातृभिश्चेति वा। गाः पशून्, गां स्वर्गं वा। इन्द्र[7]त्वेन विन्दतीति कृत्वा गोविन्द इत्यभ्यधात्, नाम कृतवा नित्यर्थः ॥२३॥

---

1. B adds दैवतं 2- -2. P,V त्वमेव 3. A,B,J add एव 4. A,B,J,P भवति 5. A adds मन्दाकिन्याः 6- -6. A,B,J omit 7. P,V °त्वे

**वीर०** तदेवाऽऽह - कृष्ण कृष्णेति त्रिभिः। हे विश्वस्यान्तरात्मन्! विश्वस्य सम्भवो यस्मात्तथाभूत! हे महायोगिन्! युज्यत इति योगो धर्मः सोऽस्याऽस्तीति तथा। स्वासाधारणकल्याणगुणशालिन्! वयं लोकनाथेन साक्षाद्भवतैव सनाथाः कृताः नाथाभासेनेन्द्रेण हता अपि त्वया रक्षितत्वात्त्वमेव नो नाथ इत्यर्थः ॥ १९॥

त्व मेव नो[1]ऽस्माकं परो मा न विद्यते यस्मा त्तथाभूतं दैवतम्। हे जगत्पालक! गवां विप्राणां देवानां ये साधवः तेषाञ्च नोऽस्माकञ्च अभ्दुदयाय त्वमेव इन्द्रो भव[2] ॥ २०॥

ननु गवादीना मय मिन्द्रोऽस्त्येवेत्यत्राऽऽह - **इन्द्र मिति।** तत्तदधिकारप्रदेन ब्रह्मणा चोदिता वयं त्वा मेवेन्द्र मभिषेक्ष्यामः। पुरन्दरस्याऽल मिन्द्रतया इति भावः। ननु देव इन्द्रो भवितु मर्हति न त्वहं मर्त्यः। तत्राऽऽह अवतीर्ण इति। भारावतरणाय देवाना मपि देव स्त्वमिति भावः ॥ २१॥

इयं सुरभिः कृष्णं सम्प्रार्थ्य आत्मनः पयोभिः क्षीरैः अभ्यषिञ्चत[3]। तथेन्द्रोऽपि देवमातृभि रदित्यादिभिः चोदितः। देवैः मातृभि श्चेति वा। सुरैः ऋषिभि स्सहितश्च ऐरावतकरोद्धृतैः ऐरावतकरगतघटसमाहृतैः। प्रमाणान्तराविरोधादेवंव्याख्यातम्। आकाशगङ्गाया जलैः दाशार्हं श्रीकृष्ण मभिषिक्तवान्, गोविन्द इत्यभ्यधात्, अभिधां चकार। गाः पशुधनं विन्दति लभत इति वा। गां स्वर्ग मिन्द्रत्वेन विन्दतीति वा। उभयविधशब्दप्रवृत्तिनिमित्ताश्रयत्वा दन्वर्थसंज्ञामकरो दित्यर्थः। गां भुवं विन्दतीति संज्ञा तु स्वाभाविकी त्यभिप्रायः ॥ २२, २३॥

---

1. A,B omit नः 2. A,B add इति 3. A,B °त्

**विज०** विश्वात्मन्! विश्वव्यापिन्! सनाथाः कृताःस्मः इति ॥ १९॥

नोऽस्माकं परमकं अत्युत्तम मिष्ट दैवम् इन्द्रः ईश्वरः देवानां देवजातीनां ये च साधवः ऋष्यादयः तेषां भवाय भद्र लक्षणाय श्रेयसे ॥ २०॥

नः इन्द्रं स्वामिनं त्वाम् ॥ २१॥

सुरभिः आत्मनः पयसा ॥ २२॥

दशार्हं दशार्हकुलतिलकम्। दाशं सुखादिदाम मर्हतीति वा। अभ्यषिञ्चत[1] देवमातृभिः चोदित इन्द्रश्च सुरर्षिभि स्सार्धमाकाशगङ्गाया जलैः कृष्ण मभ्यषिञ्च दित्यन्वयः। गोविन्दः गोःविन्दो लाभो यस्य सः। आलभत इति वा। गोविन्द इत्यभ्यधात्, अभिधानं कृतवांश्च॥ २३॥

1. A,B °त्

तत्राऽऽगता स्तुम्बुरुनारदादयो गन्धर्वविद्याधरसिद्धचारणाः ।
जगुर्यशो लोकमलापहं हरेः सुराङ्गना स्संननृतु र्मुदाऽन्विताः ॥ २४ ॥

तं तुष्टुवु र्देवनिकायकेतवो ह्य[1]वाकिरं श्चाद्भुतपुष्प वृष्टिभिः ।
लोकाः परा न्निर्वृति माप्नुवंस्त्रयो गाव स्तदा गा मनयन् [2]पयःप्लुताम् ॥ २५ ॥

नानारसौघा स्सरितो वृक्षा आसन् मधुस्रवाः ।
अकृष्टपच्यौषधयो गिरयोऽ[3]बिभ्रदुन्मणीन् ॥ २६ ॥

कृष्णेऽभिषिक्त एतानि [4]सर्वाणि कुरुनन्दन!
निर्वैराण्यभवं स्तात! क्रूराण्यपि निसर्गतः ॥ २७ ॥

इति गोगोकुलपतिं गोविन्द मभिषिच्य सः ।
अनुज्ञातो ययौ शक्रो वृतो देवादिभिर्दिवम् ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे श्री वैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीव ब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे पूर्वार्धे इन्द्रस्तुतिर्नाम सप्तविंशोऽध्यायः ॥ २७ ॥

1. A,B,G,J,M,Ma °य° 2. A,B,G,J,K,M,Ma पयोद्रुः ; V पयोवृ° 3. A °यसृदु° M,Ma बिभ्रनु° 4. B,G,J,K,T,W सत्त्वानि।

**श्रीध० तमिति।** देवनिकायेषु केतव इव दर्शनीया, मुख्या इत्यर्थः। गावो गां पृथ्वीं पयोभि र्द्रुता मार्द्रा मनयन् अकुर्वन्नित्यर्थः ॥ २४, २५ ॥

नानारसौघाः क्षीरादिवाहिन्यः अकृष्टपच्याः कर्षणं विनैव पक्का ओषधयो व्रीह्यादय आसन् यद्वा[1] अकृष्टपच्या ओषधयो येषु ते गिरयः उन्मणीन् गर्भगतान्मणीन्[2] उत् उद्गतान् बहिः प्रकटा नबिभ्रत् अबिभरुः ॥ २६-२८ ॥

★ इन्द्र स्त्वमसि देवानां त्वं गवा मिन्द्रतां गतः ।
गोविन्द इति लोके त्वां गास्यन्ति भुवि मानवाः ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वमिविरचितायां भावार्थदीपिकायां
व्याख्यायां सप्तविंशोऽध्यायः ॥ २७॥

---

1. A adds सन्धिरार्षः 2. V omits मणीन् ★ श्रीधरीयोऽयं श्लोकः | This verse is not found in A,B,J edns.

**वीर० तत्रेति।** तत्रेत्यादिग्रन्थस्य कृष्णेऽभिषिक्त इत्यादिः। तुम्बुरुप्रभृतयो हरेः लोकस्य शृण्वतः संस्मरतश्च मलमपहन्तीति तथा। तद्यशो जगुः सुराणा मङ्गना रम्भादयः सम्यक् ननृतुः ॥ २४॥

**तमिति।** देवसङ्घेषु केतुर्व[1] दर्शनीयाः मुख्या इत्यर्थः। अद्भुताभिः पुष्पवृष्टिभिरभितोऽवाकिरन्। त्रयो लोकाः परां निर्वृति मानन्दं प्रापुः। गावो गां पृथ्वीं पयोभिः क्षीरै र्द्रुतां सिक्तामनयन् चक्रुः ॥ २५॥

सरितो नानारसौघाः क्षीरादिवाहिन्यो बभूवुः। वृक्षास्तु मधूनि स्रवन्तीति तथाभूताः ओषधयस्तु अकृष्टपच्याः कृषिं विनैव व्रीह्यादयः फलिता आसन् इत्यर्थः। सन्धि रार्षः। [2-]यद्वा, अकृष्टपच्याश्च (ताः) ओषधयश्च इति कर्मधारयः[-2]। यद्वा अकृष्टपच्या ओषधयो येषु ते गिरयः उन्मणीन् उद्गतान् बहिः [3]प्रकटान् मणीन् अबिभ्रत् अबिभरुः ॥ २६॥

तदा हे कुरु नन्दन! कृष्णेऽभिषिक्ते सति, इन्द्रे [4]कृते सतीति भावः। एतानि स्वभावतः क्रूराण्यपि सर्वाणि भूतानि सर्पव्याघ्रादीनि हे तात! [5-]वैर रहिता न्य[-5]भवन् ॥ २७॥

स इन्द्र इत्थं गवां गोकुलस्य [6-]नन्दव्रजस्य[-6] पतिं गोविन्दमभिषिच्ये त्युक्तार्थोपसंहारः। तेनाभ्यनुज्ञातः कृष्णाधीनस्वाधिकारो भूत्वेति तात्पर्यम्, देवादिभिः परिवृतो दिवं स्वर्गलोकं [7]प्रति ययौ ॥ २८॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां सप्तविंशोऽध्यायः ॥ २७॥

---

1. A,B °व इव द° 2- -2. T,W omit 3. A,B प्रकाशान् 4. K,T,W omit कृते 5- -5. T,W निर्वैराण्य° 6- -6. K,T,W omit 7. K,T,W omit प्रति

**विज०** संननृतुः समीचीनं नृत्यं चक्रुः ॥ २४॥

देवनिकायानां केतवः श्रेष्ठाः गां भूमिं पयसा द्रुतां परिप्लुतां अनयन् प्रापयामासुः ॥ २५॥

मधु मधुररसं स्रवन्त्यः उन्मणी नबिभ्रन् भृतवन्तः ॥ २६-२८॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
दशमस्कन्धे पूर्वार्धे सप्तविंशोऽध्यायः॥ २७ ॥
(विजयध्वजरीत्या पञ्चविंशोऽध्यायः)

# अष्टाविंशोऽध्यायः

## (श्रीविजयध्वजरीत्या षड्विंशोऽध्यायः)

### -: श्रीकृष्णस्य वरुणलोकगमनवृत्तान्तः :-

श्रीशुक उवाच

एकादश्यां निराहारः समभ्यर्च्य जनार्दनम् ।
स्नातुं नन्द स्तु कालिन्द्यां[1] द्वादश्यां जल माविशत् ॥ १ ॥

तं गृहीत्वाऽनयद्भृत्यो[2] वरुणस्याऽसुरोऽन्तिकम् ।
अविज्ञायाऽऽसुरीवेलां प्रविष्ट मुदकं निशि ॥ २ ॥

[3]चुक्रुशु स्त मपश्यन्तः कृष्ण रामेति गो[4]पकाः ।
भगवां स्तदुपश्रुत्य पितरं वरुणाहृतम् ॥
तदन्तिकं गतो राजन् स्वाना मभयदो विभुः ॥ ३ ॥

प्राप्तं वीक्ष्य हृषीकेशं लोकपाल स्सपर्यया ।
महत्या पूजयित्वाऽऽह [5]तद्दर्शनमहोत्सवः ॥ ४ ॥

वरुण उवाच

अद्य मे [6]निभृतो [7]देहोऽद्यैवाऽर्थोऽधिगतः [8]प्रभो !
★ अक्ष्णो र्वाचश्च साफल्यं तव मे दर्शना द्विभो ।
[9]त्वत्पादभाजो भगव न्नवापुः पार मध्वनः ॥ ५ ॥

---

1. A,B,G,J,K,M,Ma °न्द्याः 2. V °द्दूतो 3. M,Ma गोपाला° 4. M,Ma चुक्रुशुः ; V. गोपिकाः 5. T,W त्व° 6. A,M,Ma वि 7. M,Ma देह अद्यार्थी; T,W देह अप्यार्थो; V. देहो ह्यद्यार्थो 8. V मया ★ This half verse is not found in A,G,J,M,Ma,V editions 9. A,M,Ma यत्पा°

## श्रीधरस्वामिविरचिता भावार्थदीपिका

**अष्टविंशे ततो नन्दानयनं वरुणालयात् ।**
**वैकुण्ठदर्शनञ्चा[1]ऽपि गोपाना मनुवर्ण्यते ॥**

**गोवर्धनं समुद्धृत्य वशे कृत्वाऽमरेश्वरम् ।**
**नन्दानयनतः कृष्णो वरुणञ्च वशेऽनयत् ॥**

**एकादश्या** मिति। कलामात्रायां द्वादश्यां पारणाऽऽदराभिनिवेशेनाऽऽसुरीं वेला मविज्ञाय अरुणोदयात्पूर्वमेव शास्त्रबलेन निशि उदकं प्रविष्टं तदनभिज्ञो वरुणस्य भृत्योऽनयदिति। **तथा च शास्त्रम् — "कलार्धां द्वादशीं दृष्ट्वा निशीथा दूर्ध्व** मेव हि। आमध्याह्नाः क्रिया स्सर्वाः कर्तव्याः शम्भुशासनात्" इत्या[2]दि। **वक्ष्यति च वरुणः** "अजानता मामकेन" (भाग. 10-28-7) इति। भगवद्धर्ममजानतेत्यर्थः ॥ १, २ ॥

**चुक्रुशु** रिति। स्वानां भगवद्धर्मपराणा मभयदो मा भैष्टे त्यभयं ददत् ॥ ३ ॥

**प्राप्त** मिति। सपर्ययाऽर्हणेन ॥ ४ ॥

**अद्येति**। अद्य इदानीं मे मया देहो निभृतः धृतः। यद्वा निभृतः पूर्णमनोरथः इत्यर्थः। किञ्च अद्यैवाऽ-र्थोऽधिगतः। सर्वरत्नाकरपतिनाऽपि इतः पूर्वं नैवंविधोऽर्थः प्राप्त इत्यर्थः। किञ्च संसारोऽपि निवृत्त ऐवेत्याशयेनाऽऽह-त्वत्पादभाज इति। अध्वनः पारं मोक्षम् ॥ ५ ॥

---

1. A,B,J °ऽथ 2. P,V इति।

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ वरुणदूताहृत नन्दानयन स्वलोक प्रदर्शनात्मकं कर्माऽनुवर्णय त्यष्टाविंशेन **एकादश्या** मिति। कदाचि न्नन्दः एकादश्यां निराहारो जनार्दनं सम्य गभ्यर्च्य कलामात्रावशिष्टायां द्वादश्यां पारणाभिनिवेशेनाऽऽसुरी मसुरसञ्चार सहचरितां वेलामर्धरात्ररुपा मविज्ञायैव तदा स्नातुं कालिन्द्या[1] य[2-]मुनायाः[-2] जल माविवेश प्र[3]विष्टः ॥ १ ॥

तं निशि उदकं प्रविष्टं नन्दं वरुणस्य भृत्योऽसुरो गृहीत्वा वरुणस्य समीप मनयत् ॥ २ ॥

ततः प्रभाते[4] नन्द मपश्यन्तो गोपाः हे कृष्ण! हे राम! इति चु[5]क्रुशुः रुरुदुः, आजुहुवुर्वा। तदा भगवान् तदाक्रोशनं वरुणाऽऽहृतं पि[6]तरञ्च श्रुत्वा ज्ञात्वा चेति शेषः। हे राजन्! स्वाना मभयदो विभुस्समर्थः, हेतुगर्भमिदम्, एवंविधत्वा त्तस्य वरणस्याऽन्तिकं गतः। तदा लोकपालो वरुणः स्वान्तिकं प्राप्तं कृष्ण मवलोक्य तस्य दर्शन मेव महानुत्सवो यस्य तथाभूतो महत्या सपर्यया पूजया साधनेन पूजयित्वाऽब्रवीत्। तदेवाऽऽह - **अद्येति पञ्चभिः**। हे

प्रभो! अद्य अधुना मे मया देहो निभृतः धृतः। यदा त्वद्दर्शनं जातं तदैव देहसाफल्यं प्राप्त इत्यर्थः। यद्वा निभृतः पूर्ण मनोरथ **इत्यर्थः। किञ्च, अर्थश्चैवाऽधिगतः।** सकल रत्नाकरपतिनाऽपि इतः पूर्वं नैवंविधः पुरुषार्थः प्राप्त इत्यर्थः। तथा ममाऽक्ष्णोः साफल्यं दर्शना ज्ञातम् त्वद्दर्शना न्मम मुक्ति रपि करस्थे त्यभिप्रायेणाऽऽह - हे भगवान्! त्वत्पादं भजन्तीति तथा, तेऽपि संसाराध्वनः पारं त्वा मापुः, किमुत त्वद्दर्शनभागहमिति भावः ॥ ३-५॥

---

1. T,W °न्यां° 2- -2. T,W omit 3. K,T,W omit प्रविष्टः 4. A,B add तं 5. T,W omit चुक्रुशुः 6. A,B नन्दं।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

भक्तजनानुकम्पार्थोऽय मवतारो, नाऽऽत्मार्थम् इति दर्शयितुं वरुणपाशात् नन्दगोपमोचनं नन्दादीनां स्वशोकप्रदर्शनञ्च कथयति अस्मिन्नध्याये शुक इति तत्र वरुणपाशग्रहणं कथं नन्दस्याऽभूत्? इतीदं वक्तु मारभते **एकादश्या** मिति। व्रतघ्नाहारोनाऽस्तीति निराहारः ॥ २ ॥

आसुरीं वेलां निशीथकालम् ॥ २ ॥

वरुणभृत्येनाऽऽहृत मपि वरुणाहृत मिति वचनं वरुणस्य स्वामि भृत्यापराधे स्वामिनो दण्ड इति। यथा तथा युज्यत इत्यर्थः ॥ ३,४ ॥

मे मया विधृतो दण्डोऽद्य सफलो जात इति शेषः। अर्थः पुरुषार्थः। कथं तदिति तत्राऽऽह - यत्पादेति। अध्वनः पारं संसार समुद्रस्य मार्गस्य तीरान्तरम्। अद्धावात्यनेनेत्यध्वा ॥ ५ ॥

**नम स्तुभ्यं भगवते ब्रह्मणे परमात्मने ।**
**न यत्र श्रूयते माया लोकसृष्टि[1]विकल्पना ॥ ६ ॥**

**अजानता [2]मामकेन [3-]मूढेनाऽकार्यवेदिना[-3] ।**
**आ[4]नीतोऽयं तव पिता [5]तत्प्रभो क्षन्तु मर्हसि[6] ॥ ७ ॥**

**★ पितैष ते [7]मयाऽऽनीतो यत्र स्त्वत्पाद दर्शनम् ।**
**गोविन्द नीयता मेष पिता ते [8-]पितृवत्सल[-8] !**
**△ प्रजा वय मनुग्राह्या सापराधा अपि प्रभो! ॥ ८ ॥**

**[9]श्री शुक उवाच[-9]**

**एवं प्रसादितः कृष्णो भगवा [10]नखिलेश्वरः ।**
**आदायाऽगात्स्वपितरं बन्धूनाञ्चाऽऽवहन्मुदम् ॥ ९ ॥**

1. K,M,Ma द° 2. T,W त्वत्तितरं 3- -3. V त्वत्प्रभावं जगद्गुरोः। 4. V °हृतो 5. A,B,G,J तद्भवान् 6. A,B,G,J °ति ★ This half verse is not found in A,B,G,J edns. 7. V य आ° 8- -8. M,Ma,V मामकाहृतः। △ This half verse is not found in A,G,J,M,Ma edns. But in its place another half verse runs thus - 'ममा प्यनुग्रहं कृष्ण कर्तु मर्ह स्यशेषकृत् 9- -9. T,W omit. 10. A,B,G,J °नीश्वरेश्वरः॥

**श्रीध० नम इति।** भगवते निरतिशयैश्वर्याय, बह्मणे पूर्णाय। परमात्मने सर्व जीव नियन्त्रे। तत्र हेतुः - न यत्रेति। लोकसृष्टिं विकल्पयति। या माया सा यत्र न श्रूयते, अविद्यमानेव तिष्ठतीत्यर्थः॥६॥

**अजानतेति।** अजानता मद्भृत्येन त्वत्पित्राऽऽहरणं यत्कृतं तदिति॥७॥

**पितेति।** नन्दं विमुच्य समर्पयति॥८,९॥

**वीर०** एवं स्व[1]कृतार्थता माविष्कृत्य अथ क्षमापयितुकामः क्षमाहेतुः केवल मञ्जलिमुद्रैवे त्यभिप्रयन् असाधारण गुणैः विशिंषन्नमस्करोति **नम** इति। पूर्णषाड्गुण्याय स्वरूपेण गुणैश्च निरतिशय बृहते लोकत्रयान्तः प्रवेशव्याप्यगत धर्मास्पर्शाभ्यां नियन्त्रे भर्त्रे च तुभ्यं नमः। यत्र त्वयि लोकस्य जीवलोकस्य दृष्टिं ज्ञानं विकल्पयति विविधं कल्पयति गुणत्रयोन्मेषानुगुणकर्मरुचिजननद्वारा ज्ञान सङ्कोचविकासादिहेतु र्माया न श्रूयते, नाम्नाऽपि न श्रूयते, न सुतरां स्वकार्यक्षमेति भावः। लोकसृष्टीति पाठे लोकसृष्टिं देवमनुष्यादि शरीर सृष्टिं नानाविधां कल्पयतीति तथा देवमनुष्यादि शरीर रूपेण विक्रियमाणा यत्र त्वयि न श्रूयते, तस्मै अप्राकृत स्वेच्छोपात्तादेहाय तुभ्य मित्यन्वयः॥६॥

अथ स्वापराधं निवेदयन् क्षमापयति - **अजानतेति।** अकार्य वेदिना कार्यविदिना, विवेक शून्येनेति यावत्। मूढेन अज्ञेन त्वत्पितर मजानानेन त्वत्प्रभावानभिज्ञेन वा **मामकेन मद्भृत्येन** तव पिता आनीत इति य त्तदिदं क्षन्तुं त्वमर्हसि। हे प्रभो! निग्रहानुग्रह समर्थ! यद्यस्मादेष तव पिता मया आनीतः, अत एव हि दुर्लभमपित्वद्दर्शनं नोऽस्माकं जातं, भृत्यकृतापराधोऽपि महाफलाय बभूवेति भावः। [2]इत्युक्त्वा नन्दं समर्पयति - गोविन्देति। हे गोविन्द! हे पितृवत्सल! [3-]एष तव पिता नीयताम्[-3]। कृतापराधे स्वस्मि न्ननुग्रहं प्रार्थयते - प्रजा इति। प्रजाः पुत्रप्रायाः वयम्; अत एव हे प्रभो! सापराधा अप्यनुग्राह्या एव [4-]त्वयेति शेषः[-4] इत्थं [5-]वर्णेनेतिशेषः[-5]। प्रसादितः प्रसन्नीकृतः कृष्णः पितर मादाय बन्धूनां मुदं [6]हर्षं आवहन् जगाम॥७ - ९॥

1. K,T,W omit स्व 2. T,W omit इत्युक्त्वा 3- -3. T,W omit 4- -4. T,W omit 5- -5. T,W omit 6. T,W omit हर्षं

